द्वादशाङ्गीप्रणयनपटीष्ठपरमेश्वरपट्टधरप्रथमगणाधीशो गौतमो विजयतेतराम् ।

श्रीमद्भगवदुमास्वातिवाचकवर्यसंदृब्धस्वोपज्ञभाष्यभगवद्धरिभद्रसूरीश्वरविरचितटीकया समलंकृतं

# श्रीतत्त्वार्थसूत्रम् ।



प्रकाशयित्री–श्रीरत्नपुरीय (रतलाम) श्रेष्ठि ऋषभदेवजी केशरीमलजी जैनश्वेतांबरसंस्था।

इदं पुस्तकं 'मोहनलाल मगनलाल बदामी' इत्यनेन स्वकीये श्री जैनानंद प्रि. प्रेस (दरीया महेल सुरत.) इति मुद्रणालये मुद्रितं

वीर संवत् २४६२ }
प्रतयः ५००

विक्रम संवत् १९९२
पण्यम् ३–०–०

{ क्राइष्ट सन् १९३६
प्रथमं संस्करणम्

## ॥ श्रीतत्त्वार्थस्य हारिभद्रीयवृत्तियुतस्य विषयानुक्रमः ॥

इति द्वितीयोऽध्यायः

इति तृतीयोऽध्यायः

---



इति चतुर्थोऽध्यायः

इति पञ्चमोऽध्यायः



इति षष्ठोऽध्यायः

इति सप्तमोऽध्यायः

इत्यष्टमोऽध्यायः



इति श्रीनवमोऽध्यायः





इति तत्त्वार्थे दशमोऽध्यायः समाप्तः

## तत्त्वार्थीयहारिभद्रीयवृत्तौ साक्षिणः



१३ मोक्षमार्गोपदेशेन
,, मोक्षमार्गस्य विज्ञानात्
२३ भरति स नामातीतः
२६ कालो सहाव नियई
३१ जत्थ उ जं जाणिज्जा
,, पुरुष एवेदं
३२ निःस्वभावा भावाः
,, सकांयकिरणैक०
३३ आप एवेदमग्र०
३६ अनुयोगद्वारेषु
५१ अनुयोगद्वारात्

५२ लोकव्यापी चतुर्थे तु
५२ पुव्वभणियं तु जं भण्णइ
५७ जं सामिकालकारण
,, कालविनज्ञयसामित्त
६९ वंजिज्जइ जेणत्थो
११० से णूणं भंते !—अवेयडत्ता
११४ जल्लेस्साइं दव्वाइं
११६ भवजीवाणंपियणं
११७ कइविहे णं भंते ! उवओगे
१२१ फासिंदिए णं भंते
१३१ अपज्जत्तसुहुमपुढवि०

१५४ पुव्विं दुच्चिण्णाणं दुप्प०
१५७ भूयं हुंकारं वा
१५९ णविय फुसंति अलोगं
,, छच्चेव अद्धपंचम
१६० तिभागो गाउयं चेव
,, तेरिक्कारस नवगं
१६२ सम्मत्तसुयं भवासु
१६७ जीवाजीवा द्रव्यं
,, तत्राधोमुखमल्लक०
१६८ जस्स जओ आइच्चो
१६९ अट्ठपएसो रुयगो

३४१. कला अभनदसणं०
,, णो इहलोयट्ठयाए ४८२
३६१. जं णय दुहियं णय दु०
३६९ कोहो य माणो य
,, जं अइदुक्खं लोए ३८७
,, जीवस्तु कर्मबन्धन०
,, संसारानादित्वात्
३७१. इति कर्मणः प्रकृतयः
३७२ तासामेव विपाक०
,, तेषां पूर्वोक्तानां
,, प्रत्येकमात्मदेशाः
३७९. मिथ्यात्वस्य ह्युदये
,, सम्यक्त्वगुणेन ३८०
यत् सर्वथापि तत्र

ननु कोद्रवान् मद०
मिच्छत्ततिमिरपच्छा०
मिच्छादिट्ठी जीवो
पयमक्खरं च इक्कं
अर्हत्प्रोक्तं गणधर०
श्रुतकेवली च तस्मात्
तं मिच्छत्तं जमस०
३८० संयोजनोदयश्चेत्
प्रक्षीणे तर्हि सम्यक्त्वे
संयोजयन्ति यन्नर०
३८१. आवृण्वन्ति प्रत्या०
प्रत्याख्यानावरण०
सर्वं प्रत्याख्यानं
नासंतस्सावरणं

उदए विरइपरिणई
श्रावकधर्मो द्वादश०
संज्वलयंति यति
कुशागमहर्षित्वात्
३८७ स्वानुरूपाश्रवोपात्तं
,, दुष्परिग्रपानो गरी०
३८९. तुलं वित्थडबहुअं
३९५ निच्छयओ सव्वगुरुं
३९८ आहारसरीरिंदिय
४०९ तासामेव विपाक०
संहननं संस्थान०
प्रकृतय एताः
४११. मूलप्रकृत्यभिन्नाः
शिथिलयति दृढं बद्धं

तारीकरणं ताम्र० ४१३
अनुभावांश्च विपर्या०
यद् यद्वा मंदं सत्
तीव्रानुभावयोगो०
४१८ सातं तिर्यग्नृसुरा०
वज्रर्षभनाराचं
४१९ अगुरुलघुपराघातो०
प्रत्येकदेहवादर०
सम्यक्त्वहास्यरतिनर०
केवलवर्जज्ञानावृद्
दृग्ज्ञानावृन्मोहानां
सम्यक्त्वहास्यादीनां
सर्वमष्टविधं कर्म
शुभायुर्नामगोत्राणि
पुण्यं प्रीतिकरं सा च
मोहो रागः स च स्नेहो

४२५ कायक्रियानिवृत्तिः
४२६ अनृतादिनिवृत्तिर्वा
,, तद्गुणपरिशुद्ध्यर्थं
४२७ पुरओ जुगमायाए
ओवायं विसमं थाणुं
जा य सच्चा न वत्तव्वा
४२८ उत्पादनोद्गमैषण०
न्यासाधिकरणदोषात्
४२९ न्यासादानसमित्यां
एवं साधोर्नित्यं
४४५ नाणस्स होइ भागी
४५७ सव्वाइं ठाणाइं असासयाइं
४६१ शय्यातरपिण्ड०
,, आचेलक्यौद्देशिक०

४६२ अस्य तु पुनर्भगवतः
,, आर्जवजडा अनार्जव०
४८४ प्रव्राजको दिगाचार्यः
४९१ देशविरतेरपि ततः
क्षपयत्युपशमयति
छेदोपस्थाप्यं वा
४९३ इक्केइयं दुवालसंगं
४९२ यद्यपि निषेव्यमाणाः
४९४ तत्राधोमुखमल्लक०
निर्ज्ञाता एव तथा
अवगाहते च स श्रुत०
चारणवैक्रियसर्वौ०
४९५ क्षपयति तेन ध्यानेन
क्षीयन्ते हि कषायाः
स ततः क्षपकश्रेणिं
प्रविशत्यपूर्वकरणं

४०.७ अप्रतिपा
आर्द्राम्बराशुशोषव०
आयुष्कस्यापि विरह्ति०
दंडकपाटकरेचक०
विकमनसंकोचन०
शेषे सयोगितायाः
स ततो योगनिरोधं
समये समये कर्मा०
नोकर्मणो हि वीर्यं
बादरतन्वा पूर्वं
सत्यप्यनन्तवीर्य०
सति बादरे च योगे
शेषस्य काययोगस्य
तमपि स योगं सूक्ष्मं
ध्याने दृढार्पिते पर०
ध्यानार्पितोपकरण०

स ततस्तेन ध्यानेन
योगाभावात् समय०
लेश्याक्रियानिरोधो
त्रसबादरपर्याप्ता०
मनुजायुष्कं च स
स ततो देहत्रयतो०
'४९९ यदर्थव्यंजने काय०'
संक्रान्तिरर्थादर्थं यत्
अर्थादिव पृथक्त्वेन
४९९ अविकंपमनस्त्वेन
सूक्ष्मकायक्रियां रुंधन्
५०५ ध्यानं ह्यभिसंधानं
नृसुरगतिप्रायोग्ये
दुर्भगदुःस्वरसुस्वर०
प्रकृतय एता द्विचरम०
तैजसशरीरबन्धोऽपि

५०७ पुलाए णं भंते !
५०८ चउसे पुच्छा
पडिसेवणाकुसीले
५१० सव्वागासपएसग्गं
सव्वगयं सम्मत्तं
सव्वदव्वाणि जमेस
सव्वेविय सद्दहओ
एएण कारणेणं
५१२ तस्य हि तस्मिन् समये
चित्रं चित्रपटनिभं
५१३ वीसमिऊण नियंठो
चरमे णाणावरणं
५२३ समणिं अवगयवेयं



## ॥ श्रीहरिभद्रसूरिसूत्रितवृत्त्याऽलंकृतस्य सभाष्यतत्त्वार्थस्योपक्रमः ॥

शास्त्रमिदं तत्त्वार्थाधिगमाख्यं वर्त्तमानयुगीनानां दिगंबराणां-श्वेताम्बराणां चातितरां महनीयास्पदमिति न कोऽपि विसंवादः। अनेका वृत्तयोऽस्य द्वयेऽपि स्वस्वसंप्रदायाचार्यकृताः सन्तीति मन्यन्ते, इयं च वृत्तिर्मुद्र्यमाणा भगवद्भिः श्रीहरिभद्रसूरिभिर्विहिता, नेयं मुद्रितपूर्वा न च सुलभेति मुद्रणमस्या अत्यावश्यकमेव, यतो न श्वेतांबरसंप्रदाये प्रचलन्तीषु वृत्तिषु न काऽपीतः प्रयत्नेति मुद्रणेऽस्याः प्रवृत्तिर्युक्ततमेति, दिगंबरीया अपि वृत्तयो नातः प्राक्तनाः, न चात एव तासां विचारोऽत्र, किंच-इमे अनेकशः स्वोपज्ञं भाष्यमेतस्य वृत्तितयोल्लिखंति, भाष्यं भाष्यतया तत्कर्त्तारं च भाष्यकारकतया तु स्थाने स्थाने उल्लिखन्त्येव, परमेतस्माद्भाष्यात् न परं तदानीं विवरणमिति भाष्यवृत्त्युभयतयोल्लेखो भाष्यस्य नासंभवी। यद्यपि श्रीहरिभद्रनामानोऽनेके सूरीशाः श्रीजैनशासनान्तरीक्षोद्योतिनोऽभूवन् परमिमे वृत्तिकर्त्तारः श्रीहरिभद्रसूरयश्चतुर्दशशतीं प्रकरणानां ये व्यधुस्त एवेत्यवसीयते, कारणानि च तत्रेमानि—

१ एतस्या वृत्तेः श्रीमद्भिर्हरिभद्राचार्यारब्धत्वेऽपि अर्धषडध्यायीं यावद्विवृत्तं तैः, अत एवार्धषडध्यायीं यावत् समुदायानयवार्थयोः पार्थक्यं, न परतः, तत्रापि विनयसंपन्नतेति सूत्रात् श्रीयशोभद्रसूरिभिरुद्धर्तुमारब्धा, साऽपि दशमाध्यायांतक्षेत्रकालादिग्रन्थात् प्राग्भागं यावदुद्धृता, शेषा च तेषां श्रीयशोभद्रसूरीणामन्तेवासिनोद्धृता, स्पष्टं चेदं तत्रत्यवृत्तिप्रान्तपाठेन, एवं च श्रीसिद्धसेनीयाया वृत्तेः प्राचीनेयं वृत्तिः, श्रीसिद्धसेनसूरिभ्यश्च प्राक्कालीना एत एव चतुर्दशप्रकरणकाराः श्रीहरिभद्रसूरयः।

२ निर्देशादिसूत्रे श्रीमद्भिः सम्यक्त्वावरणीयतायाः ज्ञानावरणीयादीनां निरसनं कृतं श्रीसिद्धसेनैः स्वीकृतं तत्, तथा नारका-

पुषम्याथवे दुणिमाहारादीनां संग्रहः सूरिभिः स्वीकृतः श्रीसिद्धसेनैस्तु तन्निराकरणमकारि, ततः प्रकृताया वृत्तेः प्राचीनत्वं।

३ निश्रितायां यथाऽऽस्तिक्यादीना सम्यक्त्वलक्षणाना पश्चानुपूर्व्या व्याकृता तथाऽत्रापि तत्त्वार्थश्रद्धानसूत्रे ।

४ तिर्यग्लोकगनक्षेत्राणां परिध्यादिमानसूचकाना सूत्राणां केषांचिदुभयैरपि कृत्रिमतोक्ताऽत्र, पर समानशब्दा मा,

५ अन्तरद्वीपकभाष्यस्य सर्वत्रकदुर्विदग्धविनाशितताऽपिचोभयसमता

६ श्रीहरिभद्रसूरिसूत्रितमेन वीर प्रणम्येति मगलं श्रीदेवगुप्तसूरिभिः कारिकाव्याचिख्यासुभिः कृतं, सैव च व्याख्या श्रीसिद्धसेनसूरिभिः स्ववृत्तेरादौ संमतेति

७ अभरगमनिकामात्रफलत्वात् प्रस्तुतप्रारम्भस्येति बहुषु स्थानेषु यदुपलभ्यते तदेव च श्रीमद्भिर्विहिते आवश्यकविवरणादौ

८ श्रीमता जिनेश्वराणां वरबोधिलाभता यथाऽष्टकप्रकरणे ललितविस्तराख्यवृत्तौ च तथाऽत्रापि यः शुभकर्मासेवनेत्यार्याया विवरणे

० बहुषु स्थानेषु विवेचितमन्यत्र निर्णीतमन्यत्रेत्याद्या अतिदेशा अनेकागाधग्रन्थकर्तृतामेव वृत्तिकृतां सूचयन्ति

१० द्वितीयाध्याये जीवभेदाधिकारे प्राभृतकारनाम्ना यद् गाथाद्वयमुद्धृतं तदधुनातनेषु ग्रन्थेष्वनुपलभ्यं न च स ग्रन्थोऽप्युपलब्धिविषय इति ॥

तदेवं विविधहेतुभिरियं वृत्तिः श्रीभवविरहाङ्कैरेव श्रीहरिभद्रसूरिभिः सूत्रितेति निश्शंकं ॥ भाष्यमेतदीयं स्वोपज्ञमेव श्रीउमास्वातिवाचकवर्याणां, एतदपि निम्नोल्लिखितेभ्यो हेतुभ्यो निश्चीयते—

१ मोक्षमार्गकथनोपक्रमो भाष्ये, तदुपक्रमापेक्षं चेत् सूत्रं न स्यात् स्यात् सम्यग्दर्शनज्ञानचारित्रेण मोक्ष इति

२ तत्त्वार्थाधिगमाख्यं ग्रन्थं वक्ष्यामीति, परमिदमेवेति,मोक्षमार्गं प्रवक्ष्यामीति च सूत्रभाष्ययोरेककर्तृकतां व्यनक्ति

३ तत्त्वार्थेत्यभिधान भाष्यकारेण सूचिता।

४ पद्पूर्णस्वरूपताकथनपूर्वं मंगलं श्रीवीरनमस्काररूपं प्रयोजनादि च भाष्यकारैरेवाभापि

५ संग्रहस्याशक्यताप्रतिपादनमपि भाष्यकाराणां स्वोपज्ञत्वमेव भाष्यस्य भापते, अन्यथा संग्रहकारस्य माहात्म्यमेव जेगीयेत

६ पाठान्तरमर्थान्तरमाचार्यान्तरमतं यत्र कुत्रापि भाष्ये तदपि स्वोपज्ञतामूलकं

७ स्थाने स्थाने उक्तं भवतेत्युक्त्वा सूत्रोक्तिस्मारणं न स्वोपज्ञत्वमन्तरेण

८ स्थाने स्थाने वक्ष्यामः उपदेक्ष्यामि इति क्रियापदानामस्मदुपपदार्हाणां न तदन्तरा सत्ता

९ जीवभव्येति सूत्रस्थमादिपदं विहायान्यवचम आलंबनं व्याख्यातं तत्तदैव योग्यं

१० यथोक्तेति सूत्रस्थं पड्विकल्पपदं षड्विकल्पविशदीकरणपूर्वकतयाऽऽख्यातं तदपि भाष्यसूत्रयोरेककर्तृतायामेव जाघटीति

मतस्येतरविधेष्वनेकेषु कारणेषु यत् नग्नाटैः सूत्रस्य स्वीकारेऽपि भाष्यमनंगीकृत्यार्धजरतीयमनुक्रियते तत्र सामायिकपौषधादि विधिः
ौषधातिचारेषु संस्तारस्तत्प्रमार्जनादेः दाने वस्त्रादेर्दानं आदाननिक्षेपसमितौ रजोहरणपात्रचीवरादीनां पीठफलकादीनां च ग्रह
यादि संयमोपकरणसत्तासिद्धिरेवानुमीयते हेतुः, किंचान्यत्–भाष्यस्य स्वीकारे दशवैकालिकोत्तराध्ययनकल्पव्यवहारदशाश्रु-
कन्धनिशीथऋषिभाषितादीनां स्वीकारोऽपि वर्त्तमानानामावश्यकः स्यात्, जिननामहेतुषु साधुवैयावृत्त्याधिकारे संग्रहोपग्रहा-
हकारित्वं यदुल्लिखितं तदपि न तेभ्यो रुच्यं,व्युत्सर्गतपसि बाह्योपधित्यागनिवरणमपि न विवसनानां रुचिकरमिति न स्वीकृतं ॥

तद्भाष्यं, वस्तुतस्तु क्रमेण तैः श्वेताम्बरीयमेव सदात्मसात् कृतं, नग्नाटीयं चेत् सूत्रं स्यादेतत् न द्वादश देवलोकाः तदनुसारेणैव च न लेश्याप्रवीचारस्थितयोऽपि वर्णिता भवेयुः, किंच–एकादश जिने इति परीषहप्रकरणे सूत्रमपि न स्यात्, यद्यपि नग्नाटैर्नेत्यध्याहृत्य व्याख्यायते पर पुरः पश्चाद्विधिसूत्रेषु मध्ये निषेधसूत्रतया विना निषेधं व्याख्या विनाऽऽग्रहं न किमपि ध्वनयति, किंच–परीषहाणां द्वाविंशतेर्भावात् एकादशानां निषेधेऽपि शेषमेकादशानामिति, अन्यच्च तत्त्वार्थसूत्रमेव नग्नाटानामाद्यं सूत्रं मतमूलं चैतत्, तत्र यदि जिने एकादशाना परिषहानां निषेधः तर्हि नाडमुद्घोषणीयमेतद् यदुत एकादशपरीषहाणा सद्भावसाधकं श्वेताम्बरीयमेव शासनं शाश्वतं, यद्यपि दिगम्बरैरात्मसात्कर्तुं परावर्त्तितानि सूत्राण्यनेकानि पर तत्परावर्त्तनं घृत मुषित्वाऽऽतपस्थितस्य शिरोवेष्टने धारकस्य कृतिमनुकुरुते भाष्याच्चेति सूत्राणा परस्पर भेद पर्यालोचयतामिदं स्पष्टं, न च विस्तरभिया प्रदर्श्यते, भाष्यपुस्तकं वृत्तिकारद्वयवचनादेव प्रागनेकधा परावृत्तिमत् पर वृत्तिकरणादनु व्यवस्थितं तत् तत्र वृत्तिप्रभाव एव, यद्यपि संबन्धकारिकासु देवगुप्तसिद्धसेनीयवृत्त्योः अधिकं कारिकाद्वयं नयहाशस्यताऽधिकारे प्रकृताया च वृत्तौ उत्पादव्ययेति सूत्रे भाष्यमधिकं तथापि अन्यः पाठः समानप्राय एव भाष्यस्येति मुग्धं मतं। मुद्रण चास्या वृत्तेः पूर्वकालमेव चिकीर्षितं श्रीसिद्धसेनीयाया वृत्तेः परमन्यग्रन्थानां मुद्रणव्यापृतेरिदानीं यावन्नाभूत् तत्, अतएव नास्याः सुलभा इति यथामति विहितायामपि शुद्धौ नाशुद्धीनामसंभव इति तच्छोधनेनोपकारविधाने सज्जना अभ्यर्थ्या एव। विषयस्त्वस्य यद्यपि प्रारभसूत्रे एव सूचितस्तथापि वृत्तेर्भाष्यस्य चानुक्रमं दृष्ट्वा स सुखेनावधारणीयः, अकारादिक्रमस्तु लघुतमग्रन्थत्वान्नास्यातीवोपयोगीति न तत्रादरः, यथायथमेतत् सवृत्तिकं सभाष्यमनुबुध्य तदुक्तानुष्ठानेन सफलीकुर्वन्तु सज्जनाः श्रममेतदीयमित्यर्थयन्ते आनन्दसागराः

वीरसंवत् २४६२ माघशुक्ला ६ घेटी

# श्रीतत्त्वार्थसूत्रं

## स्वोपज्ञभाष्यानुसारिश्रीमद्हरिभद्रसूरिसूत्रितवृत्तियुतम्

वीरं प्रणम्य तत्त्वज्ञं, तत्त्वार्थस्य विधीयते । टीका संक्षेपतः स्पष्टा, मन्दबुद्धिविबोधिनी ॥१॥

इह मङ्गलादीनि शास्त्राणीति भावमङ्गलाधिकारे इष्टदेवतास्तवकरणं शिष्टसमयः, इष्टदेवता चास्य शास्त्रकर्तुरुत्तमोत्तमपुरुषविशेषः, स च षट्पुरुषीस्वरूपावगमात् ज्ञेयः, षट्पुरुषी च क्रियाभेदात्, सा च क्रिया जन्मनि सम्भवतीति तद् येन यथाभूतं सुलब्धं भवति तथाभूतमपि अभिधातुमाह—'सम्यग्दर्शनशुद्धं यो ज्ञानं विरतिमेव चाप्नोती'त्यादि, (पृष्ठ-१-१) सम्यग्दर्शनं-शुद्धात्मपरिणामरूपं वक्ष्यमाणं तेन शुद्धं-कुग्रहमलाभावेन यथावस्थितविषयपरिच्छेदकं, 'य' इति भवस्थसत्त्वोद्देशः, 'ज्ञानं' मत्यादि वक्ष्यमाणं पंचधा, तत्राद्यत्रयेणाधिकारः, तस्याशुद्धस्यापि मिथ्यादृष्टेरज्ञानसंज्ञितस्य भावात्, उत्तरद्वयं तु तच्छुद्धमेव भवति, मिथ्यादृष्टेरसम्भवात्, तथा 'विरतिः' सामायिकादिरूपा वक्ष्यमाणा पञ्चधैव, तत्राप्याद्यत्रयेणाधिकारः, उत्तरद्वयं च जन्मनो दुःखनिमित्तत्वाभावात्, तां विरतिमेव च, कारणकारणत्वेन तु शुभज्ञानशुद्धाम्, आप्नोति-प्राप्नोति, वक्ष्यति 'विरतिर्नाम

१ उत्तरद्वयेन न, तद्वतो जन्मनो दुःखनिमित्तत्वाभावादिति स्यात्.

ज्ञात्वा अभ्युपेत्याकरण'मिति (तत्त्वा०भा-६-१) एवम्भूतं 'दुःखनिमित्तमपीदं तेन सुलब्धं भवति-जन्म' दुःखयतीति दुःखं, परितापयतीत्यर्थः, तद्धि शारीरादि संसारो वा, निमित्तं हेतुः, दुःखस्य निमित्तं दुःखनिमित्तं, जन्मनि सति रोगशोकादिभावात् संसाराचहत्रिष्टकर्मभावाच्च, दुःखनिमित्तमपि तथाविधविराधनया दीर्घभवानुबन्धित्वेन, आस्तां अविराधनयैव अल्पभवभावाय दुःखनिमित्तमिति, इदमिति मानुषं जन्म प्रत्यक्षं दर्शयति, अन्यत्र समग्रविरतेरभावात्, नारकतिर्यग्देवेषूदग्रदुःखमोहभोगोपपत्तेः, 'तेने'ति यत्तदोर्नित्याभिसम्बन्धात् यच्छब्दोद्दिष्टमेव सत्त्वं निर्दिशति, योऽनंतरमुक्तः सत्त्वः तेनः 'सुलब्धं' सुप्राप्तं भवति 'जन्म' जायतेऽस्मिन्निति जन्म, भवग्रहणमित्यर्थः, अस्य संसारसमुद्रादुत्तीर्णप्रायत्वात्, यद्यपि नोत्तीर्णस्तथापि ग्रन्थिभेदादिभिरुत्तरणशक्तिकरणात्, अत एव तथा (तस्य) सुलब्धमिति षष्ठीं विहाय प्रकृत एवाह, प्रतिहतवक्रत्वाभिधायिना तेन सुलब्धमिति तृतीयामाह ॥२॥ यतश्चैवं अतः 'जन्मनी'त्यादि, (पृ० १-२) 'जन्म' उक्तलक्षणं तस्मिन् जन्मनि, किम्भूत इत्याह-'कर्मक्लेशैरनुबद्धे' क्रियते इति कर्म्म-ज्ञानावरणीयादि सर्वं, क्लिश्नन्ति क्लेशयंति क्लिश्यते वा एभिरात्मेति क्लेशाः, तद्विशेषा एव रागादयः, प्राधान्यख्यापनार्थं भेदेनाभिधानम्, अस्ति चायं न्यायः, यथा-ब्राह्मणा आयाता वशिष्ठोऽपि आयात इति, अथवा क्लेशा औदयिकभावरूपा आत्मधर्मा एवं भावा रागादयो गृह्यन्ते, कर्म्म च तेषां निमित्तं, कर्म्मनिमित्ताः क्लेशाः कर्मक्लेशाः, नेश्वरादिनिमित्ता इति भावः, कर्म्मक्लेशैरनुबद्धे सन्तते वेष्टिते वा; तथाहि-जन्मनि सति कायवाङ्मनोनिमित्तं कर्म्म, तदुदयाद्रागादयः क्लेशाः, तेभ्यः पुनर्जन्मेति सन्ततिः, वेष्टनं तु कर्म्मक्लेशाम्रेडनेन, 'अस्मिन्नि' ति प्रक्रान्तत्वात् कर्म्मक्लेशाभावसाधनत्वाच्च तदेव पूर्वोक्तं

२. यच्छब्दात् देन तेनेति प्र.

मानुषं जन्माह, इदं हि प्रत्यक्षमेण कर्मक्लेशाम्रेडितं दृश्यत इति, 'तथा प्रयतितव्य' मिति.तथा—तेन दर्शनादित्रयलाभोपाय-
पालनप्रकारेणानुकम्पादिगुरुकुलोपासनादिना (प्रवचनोक्तहेतुभ्यः) 'प्रयतितव्यं' प्रयत्नः कार्यः, यथा किमित्याह—'कर्म-
क्लेशाभावो यथा भवति' कर्मक्लेशाः पूर्वोक्तास्तेषामभावः—क्षयः तैर्वियोग इत्यर्थः, स यथा भवति, स चानुकम्पादि-
भ्यः प्रवचनोक्तहेतुभ्यः सद्दर्शनाद्यवाप्तौ सत्यां गुरुकुलोपासनया अध्ययननिरतिचारचारित्रभावनादिभ्यो भवति, 'एष परमार्थ'
इति, वक्ष्यमाणविस्तरमपि समासतोऽवधारयाह—एष परमार्थः, अस्य शास्त्रस्य अयं गर्भ इति भावः, अथवा 'एष' इत्येष कर्मक्ले-
शाभावः, 'परमार्थः' परमः—उत्कृष्टः अर्थः—प्रयोजनं सर्वोपद्रवरहितात्यन्तिकस्वास्थ्यभावेनैतत् प्रधानं प्रयोजनं, मोक्ष इत्यर्थः ॥२॥
प्रकृतत्वेनैतदभावे यत्कार्यं तदभिधातुमाह—'परमार्थे' त्यादि, 'परमार्थलाभे वा' परमार्थस्यालाभः तस्मिन् अशेषपंचोक्तलक्ष-
परमार्थप्राप्तौ वा असत्यां, अप्राप्तिनिबन्धनमाह—'दोषेष्वारम्भकस्वभावेषु' दूषयन्त्याशयमिति दोषा—रागादयः तेषु, आर-
म्भयति—जन्मान्तरबीजोपादानाय अशुभे प्रवर्त्तयतीत्यारम्भकः, आरम्भकः स्वभावो येषामिति विग्रहः तेष्वेवंभूतेषु सत्सु, पर-
साथलाभे सति किं कर्त्तव्यमित्याह-'कुशलानुबन्धमेवे'ति कुशलं शुभस्थानप्राप्तिहेतुः पुण्यं तदनुबध्नाति उत्तरोत्तरहेतुप्राप्तिहेतुत्वेन
तस्मिन् वा अनुबन्धोऽस्येति कुशलानुबन्धं, कुशलप्रयोजनमित्यर्थः, एवकारोऽवधारणे, कुशलानुबन्धमेव नाकुशलानुबंधं, 'स्वा-
दनवद्यं, यथा कर्म' स्यात्-भवेत् अनवद्यं-औचित्येन गुणप्रतिपत्त्या सूक्ष्मेतरनिदानपरिहारेण चापापं यथा कर्म-उक्तलक्षणं तन्निब-
न्धनं वाऽनुष्ठानं, तथा प्रयतितव्यमिति वर्त्तते, किमन्यथापि कश्चित् प्रयतत इति ?, उच्यते, षट् पुरुषविशेषभावात् प्रयतन्ति, षट् पुरुषाः
जघमाधमः अधमः विमध्यमः मध्यमः उत्तमः उत्तमोत्तम इति, अमीषामाद्यत्रयमकुशलानुबंधं प्रति प्रयतते, चतुर्थः कुशलाकु-

कुशलानुबंधं, षष्ठो निरनुबन्धमिति। तत्र अकुशलानुबन्धमभिधित्सुराह—'कर्म्मे'त्यादि, (पृ-१-४) कर्म उक्तलक्षणं 'अहितम्' अनिष्टफलदं, क्वेत्याह—'इह चामुत्र च' इहलोके परलोके च, 'अधमतमो' जघन्यतमः 'नरः' तन्नामगोत्रकर्मोदयमात्रेण पुरुषः, 'समारभते' एकीभावेनाभिविधिना करोति, उदाहरणमत्र व्याधमत्स्यबन्धादयः, ते हीहलोकेऽपि दुःखभाजः परलोकेऽपि दुर्गतिगामिन इति, 'इहफलमेव त्वधमः' इह फलमस्येति इहफलं, कर्म्मेति प्रवर्त्तते, एवकारोऽवधारणे, इहफलमेव, तुशब्दो विशेषणार्थः, अधममारम्भफलमाश्रित्यावधारणं, न त्विहफलमेव तत्, परलोके दुर्गतिफलत्वात्, स ह्यधमो विषयसुखगृध्नुः परलोकमविगणय्य तदनुगुणमिहफलमेवारभते, उदाहरणमत्र कामादिप्रधाना ऐहिकप्रत्यवायपरिहारिणः परलोकनिरपेक्षाः पृथग्जना इति, 'विमध्यमस्तूभयफलार्थं' विमध्यमः—अप्राप्तमध्यमावस्थः, तुः विशेषणार्थः, संसाराभिनन्धेन, उभयस्मिन् फलं उभयफलं तत् अर्थः—प्रयोजनमस्येति उभयफलार्थं, कर्मारभतइति वर्तते, उदाहरणं चात्र विषयेषु सक्ता अमुनापि तद्विशेषार्थिनः दानादिक्रियासु प्रवृत्ताः पृथग्जना एवेति, एवमेतत् पुरुषत्रयमपि संसारबीजोपचयहेतुत्वेन सामान्यतोऽकुशलानुबंधं प्रति प्रयतते॥ इदानीं यः कुशलाकुशलानुबंधं कुशलानुबन्धं च प्रति प्रयतते तान् अभिधातुमाह—'परलोके'त्यादि (पृ.१-५) परलोको—जन्मान्तरं तस्मिन् हितं परलोकहितं तदर्थं परलोकहिताय, एवोऽवधारणार्थो, इहलोकनिरपेक्षं परलोकहितायैव प्रवर्त्तते—प्रयतते, समारभत इति क्रियानुवृत्तावपि प्रवर्त्तत इति क्रियान्तराभिधानमतिशयेन प्रवर्त्तत इति वैशिष्ट्यख्यापनार्थं, 'मध्यम' इति मनागालोचकत्वान्मध्यमबुद्धित्वान्मध्यमो, नर इति वर्त्तते, क्रियासु—अनुष्ठानरूपासु 'सदा' सर्वकालमाप्राणोपरमादिति, उदाहरणं चात्र गृहाश्रमत्यागिनोऽनवगततत्त्वमार्गाः परलोक एव कल्याणार्थिनस्तापसादय इति, 'मोक्षायैव तु'

मोक्षः-अशेषकर्म्मवियोगलक्षणः तदर्थं मोक्षाय, एवकारोऽवधारणे, विवेकान्मोक्षायैव, न संसारार्थं, तुर्विशेषणार्थः, यथोचितक्रियया भावसारं, घटते, उत्तरोत्तरगुणप्राप्तये अनिदानं चेष्टत इत्यर्थः, एतेन प्रवर्त्तेत इति क्रियानिवृत्तेः प्रयोजनमुक्तं वेदितव्यं, 'विशिष्टमति'रिति हेयोपादेयपरिज्ञानाचतुर्भ्यः पुरुषेभ्यो विशिष्टा-शोभना मतिरस्येति विशिष्टमतिः,उत्तमः-प्रधानः पुरुषः, पुरुष इत्यनुवर्त्तमाननरव्यवच्छेदार्थं, अयमेव पुरुषवेदादिपुण्यसंभारवान् पुरुषो नेतर इति, उदाहरणं चात्र गृहाश्रमत्यागिनः सुविज्ञाततत्त्वमार्गा अपेतभवरागा मोक्षार्थिनो यतिश्रावका इति, अमीषां हि कुशलानुबन्धोऽनवद्यश्च मोक्षप्राप्तेरिति गता पञ्चपुरुषवक्तव्यता, साम्प्रतं षष्ठमधिकृत्याह-'यस्त्वि' त्यादि (पृ. १-६) 'यस्तु कृतार्थोऽपि' तुशब्दः पुनःशब्दार्थः, यः पुनः पुरुषः कृतार्थोऽपीति, कृतो-निष्पादितोऽर्थः-इष्टप्रयोजनरूपो येन स कृतार्थः, एवम्भूतोऽपि सन्, श्रुतलाभादिष्वपि कृतार्थशब्दो दृष्टः इत्याह—'उत्तममवाप्य धर्म्मं कृतार्थ' इति, उत्तमं-प्रधानं मोक्षफलमवाप्य-प्राप्यात्मसात्कृत्वा धर्मं—क्षमादिरूपं वक्ष्यमाणं 'परेभ्य उपदिशति' अन्येभ्यः कथयति, स्वफलनिरपेक्षः स्वभावतो, धर्म्ममेवेति गम्यते, 'नित्य'मिति नित्यं-प्रतिदिनमुपदिशत्याकर्मक्षयात्, अयं ह्यागमः—तीर्थकरः प्रतिदिवसमाद्यां चरमां च पौरुषीं धर्म्मकथां करोति, य एवंभूतः स उत्तमेभ्योऽप्यनन्तरोदिष्टेभ्यः अन्येभ्यश्च प्रसिद्धेभ्यः, अपिशब्दात् किमुतेतरेभ्यः, उत्तमः-प्रधानः इति, उत्तमोत्तमत्वात् पूज्यतम एव, एवकारश्चार्थे, उत्तमोत्तमः पूज्यतमश्च, आदरेऽवधारणे वा, उत्तमार्थसिद्ध्यर्थिनामादरेणायं पूज्यतम इत्यर्थः ॥ एवं सामान्येन पूज्यतमत्वमभिधाय विशेषेण स्थापयन्नाह—'तस्मादर्हती' (पृ-१-७) त्यादि, यस्मादिदं पूज्यतमलक्षणं तस्मात् कारणात् 'अर्हति पूजा'मित्यर्हति-भागी योग्यः उत्तमपूजायाः, योग्य उत्तमपूजाया इत्यर्थः, पूजाम्-अर्चनाभिष्टवरूपां, कोऽसावित्याह—

'अर्हन्नेव' देवताविशेषो, न तथाऽन्य', कुत इत्याह—'उत्तमोत्तम' इति, स यस्मादुत्तमोत्तमः, उत्तमोत्तमत्वं च कृतार्थोऽपि धर्ममुपदिशतीति, 'लोक' इति, सर्वस्मिन्नेव जगति पूजामर्हति, नैकदेशे, केभ्य इत्याह—'देवर्षिनरेन्द्रेभ्यः' इन्द्रशब्दः प्रत्येकमभिसम्बध्यते, देवेन्द्रादिभ्यः इत्यर्थः, किंविशिष्टेभ्य ? इत्याह—'पूज्येभ्योऽपि' अर्चनीयेभ्योऽपि अन्यसत्त्वानां, सामान्यदेवादीना, किमुत शेषेभ्यः ?, न हि राजनि समुत्तिष्ठति परिषदुत्थानं प्रति वितर्क इति, वीतरागे तत्कोपप्रसादाभावेनानर्थिका पूजेत्याशङ्कापनोदाय पूजाफलमभिधित्सुराह—'अभ्यर्चनादि' (पृ २-८) त्यादि, अभ्यर्चनं—पूजनं तस्मात् पुष्पार्चनस्तवादेः, केषामित्याह—'अर्हता'मिति, कर्मणि षष्ठी, अर्हतोऽभ्यर्च्येत्यर्थः, किमित्याह—'मनःप्रसाद' इति, तथाविधक्लिष्टकर्म्मविगमात् प्रायः रागास्थातः सुतरां मनः प्रसीदति, 'ततः समाधिश्च' तस्मात्—मनःप्रसादात् समाधिः—उपप्लवनिगमेनैकाग्रतयाऽऽलोचनस्मरत्वं, चशब्दोऽनुक्तसमुच्चये, भवंति हि तस्य शुश्रूषाश्रवणग्रहणेहापोहादिज्ञानधारणातत्त्वाभिनिवेशा इति, ततः किमित्याह—'तस्मादपि निःश्रेयसं' तस्मादपि—समाध्यादेस्तत्त्वाभिनिवेशास्तद्ग्रह(न्तगु)णसमुदयात्, निःश्रेयसमिति सर्वक्लेशप्रहाणात्यं निःश्रेयसं भवति, अतः प्रथमत्तो हि 'तत्पूजनम्' अर्हत्पूजनं 'न्याय्यं' भगवतः कोपप्रसादाभावेऽप्यग्निचन्द्रचिन्तामण्यादेरिवभ्यस्तत्तत्स्वभावतयोत्करात् फलसिद्धेरिति ॥ आह—अस्त्वेतदेवं, यत् पुनरुक्तं कृतार्थोऽपि सत्त्वुपदिशतीति तदयुक्तं, कृतार्थत्वविरोधात्, नैतदेवं,कारणोपपत्तेः, तदाह—'तीर्थप्रवर्त्तने' त्यादि (पृ-२-९) तरन्ति भवसमुद्रमनेनेति तीर्थं—प्रवचनं तस्य प्रवर्त्तनंायना फलं—प्रयोजनमस्येति विग्रहः, किं तदित्याह—यत् प्रोक्तं कर्म्म प्रवचने तीर्थकरनाम दर्शनशुद्ध्यादिनिमित्तं, यस्मिन् पाके तीर्थकरोऽयमिति व्यपदिश्यते 'तस्य' तीर्थकृन्नामकर्मण उदयाद्—विपाकात् 'कृतार्थोऽपि' चरमभवकेवलज्ञानावाप्त्या पर-

मार्थतः निष्ठितार्थोऽपि 'अर्हन्' देवताविशेषः 'तीर्थं प्रवर्त्तयति' उक्तनिर्वचनं प्रवचनं प्रणयति, न च तथाविधकर्मोदयेऽप्य-
स्याकृतकृत्यता,कृतकृत्यस्यैव तत्त्वतः ततकर्म्मवतस्तथास्वभावत्वाद्,अत्रैव निदर्शनमात्रमभिधातुमाह-'तत्स्वाभाव्यादेवे'त्यादि,
(पृ. २-१०) तदेव-प्रकाशनं स्वभावस्तत्स्वभावस्तद्भावस्तत्स्वाभाव्यं तस्मात् तत्स्वाभाव्यादेव, प्रकाशकत्वादेवेत्यर्थः, 'प्रकाशयति'
उद्योतयति 'भास्करः' आदित्यः 'यथा लोक'मित्यत्र लोकैकदेशे लोकोपचारः, 'तीर्थप्रवर्त्तनाय' तीर्थम्-उक्तलक्षणं तत्प्रणय-
नार्थं 'प्रवर्त्तते' प्रभवति स्वयमेव, तीर्थकरनामकर्म्मस्वाभाव्यादेव, तत्क्षयायेत्यर्थः, न च तत्कर्म्मक्षपणमात्रताधिकार्य्यतया
स्वरसप्रवृत्तिः स्याद्वादिनोऽकृतार्थतादोषायेति भावनीयम्,एवं सामान्येन तीर्थकरस्य तीर्थप्रवर्त्तनप्रयोजनमभिधाय वर्त्तमानतीर्थाधि-
पस्तनाभिधित्सया स्वयंभूकल्पनापरकुनयव्यपोहेनादित एव तद्गुणान् कथयितुमाह—"यः शुभे" त्यादि (पृ. २-११) 'य'
इत्युद्देशोऽस्मादेकादश्यामार्यायां तस्मै इति निर्देशापेक्षः, वक्ष्यति 'कृत्वा त्रिकरणशुद्धं तस्मै परमर्षये नमस्कार'मिति, यः किम्भूतः?
इत्याह-'शुभकर्मासेवनभावितभावः' शुभं कर्म्म—भूतव्रत्यनुकम्पादि वक्ष्यमाणं तस्यासेवनम्—अभ्यासः तेन भावितो वा-
सितः, भावितःअन्तरात्मा यस्येति विग्रहः,कियन्तं कालमित्याह-'भवेष्वनेकेषु'वरबोधिलाभादारभ्य जन्मस्वनेकेषु,अन्ते किमित्याह-
'जज्ञेज्ञातेक्ष्वाकुषु' जज्ञे जातवान्, क?—ज्ञाता नाम क्षत्रियविशेषाः तेषामपि विशेषसंज्ञा इक्ष्वाकवस्तेषु, तेऽपि बहव इत्यत आह—
'सिद्धार्थनरेन्द्रकुलदीपः' सिद्धार्थनामा भगवतः पिता स एव नरेन्द्रस्तस्य कुलं—गृहं सन्तानो वा तस्मिन् दीपवद् दीपो,बभूवे-
त्यादिभि (ःस्वयंभुवो निरास इ)ति, किम्भूतो जज्ञे? इत्याह-'ज्ञानै'रित्यादि (पृ. २-१२) ज्ञानैः पूर्वाधिगतैः-जन्मान्तरावाप्तै-
रप्रतिपतितैः-पुनरनावृत्तैः, ज्ञानानां पंचत्वादाह-मतिश्रुतावधिभिः-वक्ष्यमाणस्वरूपैः, तेषामप्येकैकस्य शुद्धितारतम्यसद्भावा-

दाह–'त्रिभिरपि शुद्धैर्युक्तः', नैकेन द्वाभ्यां वा, निदर्शनमाह–'शैत्यद्युतिकान्तिभिरिवेन्दुर्युक्तः, तत्र शैत्यम्—आल्हादकं द्युतिः-अतीव निर्मलता कान्तिः-मनोहरता ॥ अधिकृतदेवताविशेषस्यैव जातस्य यत् स्वरूपं तदभिधित्सुराह-"शुभसारे"त्यादि (पृ-२-१३) अत्र सत्त्वादयो विशेष्याः शुभसारा इति विशेषणं, सत्त्वं च संहननं चेत्यादिर्द्वन्द्वः, तत्र सत्त्वम्–अवैक्लव्यं संहननं–शरीरदृढिमा वीर्यम्–उत्साहो माहात्म्यं–प्रभुशक्तिः रूपं–सुदराङ्गत्वं गुणा-गाम्भीर्यदाक्षिण्यादयः,(ते सत्त्वादयः शुभसा) राः,शुभाः–प्रकृतिसुन्दराः स्वरूपेण साराः–प्रधाना हितप्रयोजनत्वेन, सारशब्दः प्राधान्ये, सारोऽयमत्र गृह इति यथा, एभिः शुभसारसत्त्वादिभिर्युक्तः-संपन्नः सन् 'जगति' पृथिव्यां 'महावीर इति' सूर वीर विक्रान्तौ इति, कषायादिशत्रुजयात् महाविक्रान्तो महावीर इत्येवं 'त्रिदशैः' देवैः 'गुणतः' सङ्गमकोपसर्गजनितदुःखसहननिमित्तेन 'कृताभिख्यः'अभिख्यातिः अभिख्या एवमिति गौणनाम, कृता-प्रतिष्ठापिता अभिख्याऽस्येति कृताभिख्य इति,स च राजधर्ममनुपाल्य प्रवव्राज,कुतः अवगम्य तत्त्वमित्याह-'स्वयमेवे'-त्यादि (पृ-२-१४) स्वयमेव पूर्वसुचरिताभ्यासाद् उपदेशमन्तरेणैव तदा 'बुद्धतत्त्वो' अवगतपरमार्थः सन् 'सत्त्वहिताभ्युद्यताचलितसत्त्वः' सत्त्वहिताय–प्राणिहितार्थमभ्युद्यतं–प्रवृत्तमचलितं–निष्प्रकम्पं सत्त्वम्—उक्तलक्षणं यस्येति विग्रहः,स सत्त्वानां दुःखबहुत्वात् संसारादुद्धरणं न्याय्यं तीर्थप्रवर्त्तनेनेति चिन्तयेत्. 'अभिनन्दितशुभसत्त्वः' अभिनन्दितं–उपबृंहितं सत्त्वार्थप्रवृत्त्या सत्त्वम्–उक्तलक्षणमेव यस्य स तथाविधः, कैरित्याह–सेन्द्रैः, शक्रादिभिर्लोकान्तिकैर्देवैः–सारस्वतादिभिः, एवं बुद्धतत्त्वो यत् कृतवाँस्तदभिधातुमाह–'जन्मे' त्यादि (पृ-२-१५) 'जन्मजरामरणार्त्तं' जन्मजरामरणैरभिद्रुतं जगत् त्रिभुवनमशरणम्–अत्राणमभिसमीक्ष्य–ज्ञानचक्षुषा दृष्ट्वा निःसारं-निःसुखं कदलीगर्भोपमं वा ज्ञात्वा, तथा किं कृतवानित्याह–'स्फीते'-

त्यादि स्फीतं-ऋद्धं अपहाय-त्यक्त्वा राज्यं—जनपदादि, किमित्याह—'शमाय धीमान् प्रवव्राज 'शमाय तीर्थप्रवर्त्तनेन प्रक्रा-
न्तजगतः धीमान्—अतिशयज्ञानवान् 'प्रवव्राज' प्रव्रज्यामभ्युपेतवान् इति, प्रव्रज्याबहुत्वाद्विशेषाभिधानपुरस्सरं विशेषम-
भिधित्सुराह—"प्रतिपद्ये" त्यादि (पृ. २-१६) प्रतिपद्य—गृहीत्वा 'अशुभशमनं' अशुभकर्म्मशमनायेति प्रतिप-
त्तव्यं, संवेगभावादित्यशुभशमनं 'निःश्रेयससाधनं' श्रेयःसद्विधिस्थितस्य ध्यानादिभावात् मोक्षसाधकं, किं तदित्याह
—'श्रमणलिङ्गं' श्रमणचिह्नं, लोचदेवदूष्यसंधारणरूपं, भूयश्च 'कृतसामायिककर्मे' ति, कृतं सामायिककर्म येनासौ कृत-
सामायिककर्म्मा, अधिकृतममत्वभावस्थित इत्यर्थः, किमित्याह— हिंसादिनिवृत्तिरूपाण्यर्थतः 'विधिवत् समारोप्य' सिद्ध-
नमस्कारपूर्वकं विधिनाऽऽत्मस्थानि कृत्वा, अङ्गीकृत्येत्यर्थः, एतच्च स्वतीर्थयतिक्रमोपदर्शनपरं, न पुनरत्रायं स्थितक्रमः, यत एव-
मागमः—"काऊण णमोक्कारं सिद्धाणमभिग्गहं तु सो गिण्हे (ण्हे)। सव्वं मे अकरणिज्जं पावंति चरित्तमारूढो ॥ १ ॥" (कृत्वा
नमस्कारं सिद्धानामभिग्रहं तु सोऽग्रहीत्। सर्वं ममाकरणीयं पापमिति चारित्रमारूढः ॥१॥) भूयश्च प्रतिसमयमप्रमादवृद्ध्या परम-
गुणसमन्वितो विहरत्येव भगवान्, तथा चाह—"सम्यक्त्वे" त्यादि, (पृ.३-१७) सम्यक्त्वं-क्षायिककल्पं क्षायिकमेव वा, अतो ज्ञानं
केवलज्ञानवर्ज्यं चतुर्धा, चारित्रं छेदोपस्थाप्यपरिहारविशुद्धिरहितम्, अवस्थाविशेषभेदेन वृद्धवादः, संवरो निरुद्धसर्वाश्रवत्वात् कृत्स्नः,
तपो बाह्यं षड्विधमपि, आन्तरं तु यथासम्भवं, प्रायः प्रायश्चित्ताद्यभावात्, ध्यानस्य तु भावात्, समाधिः सर्वत्रैकाग्रता, एवमनेन
बलेन युक्तः सन् किमित्याह—मोहादीनि निहत्य—प्रक्षपय्य 'अशुभानि' घातिकर्मत्वेन शेषकर्म्मभ्योऽपि जघन्यानि चत्वारि
कर्म्माणि—मोहज्ञानदर्शनावरणान्तरायाख्यानि, ततः किमित्याह-"केवले"त्यादि (पृ.३-१८) केवलम्-एकं शुद्धं अधिगम्य-प्राप्य,

वेभवतीति विभुः–सर्वगतज्ञानात्मा 'स्वयमेव' स्वशक्त्या,नेश्वरादिसामर्थ्येन, किं तत् केवलमित्याह–'ज्ञानदर्शनं' ज्ञानं च दर्शनं च, एतच्चानन्तत्वात्, एतदधिगम्य, कथमित्याह–'लोकहिताय' लोकहितार्थं, कृतार्थोऽपि मोहजयकेवलावाप्त्या 'देशयामास' देशितवान्, तीर्थमिदं वक्ष्यमाणम् ॥ तदेवाभिधातुमाह–'द्विविध'मित्यादि (पृ. ३–१९) 'द्विविध'मित्यङ्गानङ्गप्रविष्टभेदेन, 'अनेकद्वादशविध'मिति यथार्थमनेकविधमनङ्गप्रविष्टमावश्यकादि द्वादशविधमङ्गप्रविष्टमाचारादि, महान् विषयः सर्वद्रव्याणि सर्वपर्याया अस्येति महाविषयम्, अमितैः–असंख्यैर्नयैर्गमैः वक्ष्यमाणैर्नयैर्वा युक्तं–संयुक्तममितगमयुक्तं, एतदेव विशिष्यते, संसरणं संसारः-नरकादिगमनरूपः स एव प्रचुरभयादर्णवः-समुद्र इव संसारार्णवः तस्य पारं–परं तीरं तद्गमनाय–तन्नयनाय तन्नयनार्थं 'दुःखक्षयायाल'मिति, संसारार्णवपारगमनाय यो दुःखक्षयः तस्मै पर्याप्तं,सर्वदुःखक्षयायेत्यर्थः, एतदेव गुणान्तरद्वारेण प्रतिपादयन्नाह–"ग्रन्थार्थे"त्यादि (पृ. ३-२०) 'ग्रन्थार्थवचनपटुभि'रिति, पटुशब्दः प्रत्येकमभिसंबध्यते, तन्त्रान्तराण्याश्रित्य साकल्येन ग्रन्थार्थवचनदक्षैरित्यर्थः, एवंभूता अपि कदाचिदप्रयत्नवन्तो भवन्ति अत आह–'प्रयत्नवद्भिरपि' ग्रन्थार्थवचनेषु यत्नवद्भिरपीति भावः, त एव विशेष्यंते-'वादिभिर्निपुणैः' वादमार्गकुशलैः, किमित्याह–अनभिभवनीयम्, अभिभवितुं न शक्यते, अन्यैः'नयान्तराश्रितैरेकान्तवादिभिः, निदर्शनमाह–'भास्कर इव' आदित्य इव सर्वतेजोभिर्मण्यादिसंबंधिभिः, सति तस्मिंस्तत्तेजसां तत्रैव प्रवेशात्, एवं नयान्तराण्यपि सर्ववादपरमेश्वरानेकान्तवादप्रवेशानीति भावनीयम्। य एवम्भूतं तीर्थं देशयामास तस्मै किमित्याह—"कृत्वे"त्यादि (पृ. ३. २१) 'कृत्वा'अभिनिर्वर्त्य त्रिकरणशुद्धम्—आगमोक्तविधिना कायवाङ्मनःकरणपरिपूतं 'तस्मै' इति 'यः शुभकर्मासेवने'त्यादिनोक्तः 'परमर्षये' योगीन्द्राय 'नमस्कारं' प्रणामं कृत्वा, परमर्षिरेव विशेष्यते,

विभवतीति विभुः–सर्वगतज्ञानात्मा 'स्वयमेव' स्वशक्त्या,नेश्वरादिसामर्थ्येन, किं तत् केवलमित्याह–'ज्ञानदर्शनं' ज्ञानं च दर्श-
च, एतच्चानन्तत्वात्, एतदधिगम्य, कथमित्याह–'लोकहिताय' लोकहितार्थं, कृतार्थोऽपि मोहजयकेवलावाप्त्या 'देशया-
ास' देशितवान्, तीर्थमिदं वक्ष्यमाणम् ॥ तदेवाभिधातुमाह–'द्विविध'मित्यादि (पृ. ३–१९) 'द्विविध'मित्यङ्गानङ्गप्रविष्ट-
देन, 'अनेकद्वादशविध'मिति यथार्थमनेकविधमनङ्गप्रविष्टमावश्यकादि द्वादशविधमङ्गप्रविष्टमाचारादि, महान् विषयः सर्व-
व्याणि सर्वपर्याया अस्येति महाविषयम्,अमितैः–असंख्यैर्नयैर्गमैः वक्ष्यमाणैर्नयैर्वा युक्तं–संयुक्तममितगमयुक्तं, एतदेव विशिष्यते,
सरणं संसारः-नरकादिगमनरूपः स एव प्रचुरभवादर्णवः-समुद्र इव संसारार्णवः तस्य पारं–परं तीरं तद्गमनाय–तन्नयनाय तन्-
नार्थं 'दुःखक्षयायाल'मिति, संसारार्णवपारगमनाय यो दुःखक्षयः तस्मै पर्याप्तं,सर्वदुःखक्षयायेत्यर्थः, एतदेव गुणान्तरद्वारेण
तिपादयन्नाह–"ग्रन्थार्थे"त्यादि (पृ. ३-२०) 'ग्रन्थार्थवचनपटुभि'रिति, पटुशब्दः प्रत्येकमभिसंबध्यते, तन्त्रान्तराण्याश्रित्य
कल्येन ग्रन्थार्थवचनदक्षैरित्यर्थः, एवंभूता अपि कदाचिदप्रयत्नवन्तो भवन्ति अत आह–'प्रयत्नवद्भिरपि' ग्रन्थार्थवचनेषु यत्न-
रैरपीति भावः, त एव विशेष्यंते-'वादिभिर्निपुणैः' वादमार्गकुशलैः, किमित्याह–अनभिभवनीयम्, अभिभवितुं न शक्यते,
न्यैः'नयान्तराश्रितैरेकान्तवादिभिः, निदर्शनमाह–'भास्कर इव' आदित्य इव सर्वतेजोभिर्मण्यादिसंबंधिभिः, सति तस्मिंस्तत्ते-
सां तत्रैव प्रवेशात्, एवं नयान्तराण्यपि सर्ववादपरमेश्वरानेकान्तवादप्रवेशानीति भावनीयम्। य एवम्भूतं तीर्थं देशयामास
स्मै किमित्याह—"कृत्वे"त्यादि (पृ. ३. २१) 'कृत्वा'अभिनिर्वर्त्य त्रिकरणशुद्धम्—आगमोक्तविधिना कायवाङ्मनःकरणप-
रेशुतं 'तस्मै' इति 'यः शुभकर्मासेवने'त्यादिनोक्तः 'परमर्षये' योगीन्द्राय 'नमस्कारं' प्रणामं कृत्वा, परमर्षिरेव विशेष्यते,

'पूज्यतमाये'ति. अयं च पूज्यः अयं च पूज्यः अयं च अतिशयेन पूज्य इति पूज्यतमस्तस्मै, 'भगवते' समग्रैश्वर्यादिगुणयुक्ताय 'वीराये'ति नाम पूर्ववत्. 'विगतमोहाय' ध्वस्तसंसारबीजायेति भावः ॥ कृत्वा वीराय नमस्कारं किमित्याह— 'तत्त्वार्थाधिगमाख्य'मिति (पृ. ३. २२) तत्त्वम्-अविपरीतोऽर्थः-सुखदुःखहेतुः अधिगम्यतेऽनेनास्मिन्निति तत्त्वार्थाधिगमः,इयमेवाख्या नाम यस्यासौ तत्त्वार्थाधिगमाख्यस्तं, 'बह्वर्थं' बहुरर्थोऽस्येति बह्वर्थस्तं, प्रवचनगर्भाभिधानात् सङ्ग्रहं-समासं, 'लघुग्रन्थं' न महाग्रन्थमिति, 'वक्ष्यामि' अभिधास्ये, शिष्यहितं, अल्पग्रन्थेनैव तत्त्वज्ञानकरणात्, 'इम'मिति बुद्धौ व्यवस्थितस्य परामर्शः, कस्य सङ्ग्रहमित्याह— 'अर्हद्वचनैकदेशस्य' अर्हद्वचनं-द्वादशाङ्गं गणिपिटकं तदेकदेशस्य, न सम्पूर्णस्यैव, अनेन प्रयोजनादित्रयोपन्यासमाह, तत्र तत्त्वार्थाधिगमसंग्रहस्य चेहाभिधानेन शिष्यानुग्रहः शास्त्रकर्तुः प्रयोजनं,जीवादि तत्त्वमभिधेयं,साध्यसाधनलक्षणः संबंधः, एतत् स्वयमेव प्रकटयिष्यति। आह—आस्तां तावदेतत् सङ्ग्रहाभिधाने प्रस्तुते किं सर्वस्यैवार्हद्वचनस्यायं न क्रियते, येन तदेकदेशस्येति,अत्रोच्यते,सर्वसङ्ग्रहस्य कर्तुमशक्यत्वाद् । एतदेवाभिधित्सुराह—"महत"इत्यादि (पृ.३-२३) महतो ग्रन्थपरिमाणेनानेकपदकोट्यात्मकस्य अतिमहान्-सर्वद्रव्यप्रभूतपर्यायरूपः विषयो-गोचरोऽस्येत्यतिमहाविषयस्तस्य, स एव विशेष्यते, दुर्गमः—दुर्लंघ्यः ग्रन्थभाष्ययोः पारो-निष्ठाऽस्येति विग्रहस्तस्य, तत्र ग्रन्था—मूलसूत्राणि भाष्याणि—तदर्थविवरणानि। अस्येत्थंभूतस्य 'कः शक्तः' कः समर्थः ? 'प्रत्यासं सङ्ग्रहं 'जिनवचनमहोदधेः' जिनवचनसमुद्रस्य कर्तुं ?, न कश्चिदपीत्यर्थः, यो ह्येतत् कर्तुमिच्छति स एतदपि कुर्यादित्याह—"शिरसे"त्यादि (पृ. ३. २४) शिरसा—उत्तमाङ्गेन गिरिं—पर्वतं बिभित्सेत्, उत्क्षिप्सेत—उत्क्षेप्तुमिच्छेच, सः—कश्चिदनिर्दिष्टः 'क्षितिं' पृथिवीं 'दोर्भ्यां' बाहुभ्यां 'प्रतितीर्षेत्' तरितुमिच्छेच, समुद्रं दोर्भ्या-

मेव मित्सेच्च–मातुमिच्छेच्च पुनः कुशाग्रेण दर्भाग्रेण–समुद्रमेव। तथा "खद्योतके" त्यादि, (पृ. ४-२६) खद्योतकप्रभाभिः—ज्योतिरिङ्गनकरश्मिभिः सः—कश्चिदनिर्दिष्टरूप एव, अभिबुभूषेच्च—अभिभवितुमिच्छेच्च भास्करम्—आदित्यं मोहाद् अशक्यारम्भेच्छया, अज्ञाननाशाय, किमित्याह—'योऽतिमहाग्रन्थार्थम्' अज्ञानङ्गभेदभिन्नं 'जिनवचनं' तीर्थकरवचनं 'संजिघृक्षेत' सङ्ग्रहीतुमिच्छति, सर्वथा अशक्यमेतादित्यर्थः, एतच्च किल भिन्नकर्तृकमार्याद्वयं, तथापि प्राय एतत्पुस्तकेषु विद्यत इति व्याख्यातम्। सर्वसङ्ग्रहकरणाभावेऽपि स्वप्रवृत्तेः फलवत्तामाह—'एकमपिति' त्यादि (पृ-४-२७) एकमपि तु पदम्, आस्तां तावदधिकृतानि सप्त, जिनवचनादित्यवच्छेत्री पंचमी, यथा समूहाच्छुक्लं प्रकाशते, यस्मात् कारणान्निर्वाहकं—विधिग्रहणचरणादानैर्भवोत्तारकं पदं भवति, तस्माद्युक्त एव मे सङ्ग्रहकरणारंभ इत्यभिप्रायः, न चेयं स्वमनीषिकेत्यागममाह—'श्रूयन्ते च' तत्रागमे दीर्घेण कालेन सामायिकमात्रेण पदेन विधिनाऽभ्यस्तेनापूर्वकरणश्रेणिकेवलान्यवाप्य 'सिद्धा' निष्ठितार्थाः संवृत्ता इति, यस्मादेवं 'तस्मादि' ति (पृ-४-२८) तस्मात्तत्प्रामाण्याद्–आगमस्य प्रामाण्यात् कारणात्, किमित्याह—'समासतः' संक्षेपेण 'व्यासतश्च' विस्तरेण च, देशकालशक्त्यनुरूपं 'जिनवचनं' तीर्थकरवचनं 'श्रेय' इति निःश्रेयःसमाधनत्वात् श्रेय इतिकृत्वा, किमित्याह—'निर्विचारं' निर्गतविचारं, वस्त्वन्तराकरणेन ग्राह्यं विधिना सूत्रतोऽर्थतश्च धार्यं च परावर्तनानुप्रेक्षाभ्यां वाच्यं चोचितविनेयेभ्यः, अनेन सङ्ग्रहविस्तरकरणमाक्षिप्तं, धारणादिरूपत्वात्तस्य, वक्तुः प्रोत्साहनेन स्वप्रयत्नसाफल्यमभिधातुमाह—'न भवती' त्यादि, (पृ.४-२८) न भवति धर्मः स्वकर्मक्षयलक्षणः श्रोतुः सामान्येन सर्वस्य यावान् कश्चिच्छृणोति एकान्ततः हितश्रवणात्, धर्मश्रवणात्, अवि-

१. इतः प्राक् 'व्योमेन्दु' मित्याद्याऽऽकार्या सिद्धसेनीयायां देवगुप्तीयायां च वृत्तौ व्याख्याता.

धिश्रोतुर्लब्ध्यादिसापेक्षस्याभावात् ब्रुवतः-अभिदधतः अनुग्रहबुद्ध्या कथं नु नामामी प्रतिबुध्येरन् प्राणिन इत्येवंभूतया वक्तुस्तु-
हितवक्तुः पुनः एकान्ततः-एकान्तेनैव भवति धर्म्म इति, परानुग्रहस्योत्कृष्टधर्म्महेतुत्वख्यापनपरमेतत्, अन्यथोभयोर्वक्तृश्रोत्रो-
निधिसापेक्षो धर्म्म इति न कश्चिद्विशेषः ॥ यतश्चैवमतः किमित्याह—“श्रममविचिन्त्ये”त्यादि, (पृ. ४-३०) श्रमं—हृदयशो-
षादिरूपं अविचिन्त्य-अविगणय्यात्मगतं-स्वगतं यस्मात् सर्वार्थसम्पादनेनोत्तमो धर्म्मः तस्माच्छ्रेयः-अपवर्गसाधनं सदो-
पदेश्यं-सदा कथनीयं,श्रेय एव च, नाश्रेयः,स्वपरोपकारकमित्यर्थः,शास्त्रादि श्रेयः,उपदेशफलमाह-‘आत्मानं च परं चे’ति,
नयन्तौ द्वयोरप्यनुग्रहसमुच्चयपरौ, आत्मानं च परं च, हि—यस्मात्, हितोपदेष्टा—अपवर्गसाधनकथकः सत्त्वः, अनुगृह्णाति,
उभयोर्निःश्रेयसगुणसिद्धेरिति, अनेन पूर्वोक्तं प्रयोजनादि समर्थितमिति॥ तत्त्वार्थाधिगमसङ्ग्रहाभिधानेन शिष्यानुग्रहः शास्त्रकर्तुः
प्रयोजनं, इदं चानन्तरप्रयोजनं, परम्पराप्रयोजनं तु मुक्तिरेव, तज्ज्ञानतो वैराग्यादिभावेन मुक्तिसिद्धेरिति, उक्तं च—“मोक्षमा-
र्गोपदेशेन, यः सत्त्वानामनुग्रहम् । करोति दुःखतप्तानां, स प्राप्नोत्यचिरात् शिवम् ॥१॥” इति,श्रोतॄणां त्वनन्तरप्रयोजनं तत्त्वा-
र्थज्ञानं, श्रवणप्रतिबोधानन्तरं तस्यैव भावात्, परम्पराप्रयोजनं तु मुक्तिरेव, तज्ज्ञानतो वैराग्यादिभावेन मुक्तिसिद्धेरिति, उक्तं
च—“मोक्षमार्गपरिज्ञानाद्विरक्ता भवतो जनाः । क्रियासक्ता ह्यविघ्नेन, गच्छंति परमां गतिम् ॥१॥” इति,अभिधेयादि पूर्ववत्,
हितोपदेष्टाऽनुगृह्णातीत्युक्तं, तत्र हितोपदेशे विप्रतिपत्तेः शेषव्युदासेन तमभिधित्सुराह—‘नर्त्ते चे’त्यादि, (पृ.४-३१) ‘नर्त्ते च
मोक्षमार्गात्’न मोक्षमार्गादृते-मोक्षमार्गं विहाय हितोपदेशो विद्यते ‘जगति कृत्स्नेऽस्मिन्’,संपूर्णेऽपि त्रैलोक्य इत्यर्थः,अर्थो-
पदेशादीनां प्रकृत्यसुन्दरत्वात् क्लेशजनकत्वात् संसारवर्द्धनत्वाच्च,यत एवं ‘तस्मात् परमिममेवेति’ तस्मादित्यवधारणोपसंहारः,

परं–प्रधानं प्रकृतिसुन्दरत्वाद्विशुद्धिजनकत्वात्, प्रधानपुरुषोपायत्वात्, इममेव—प्रस्तुतं हितोपदेशं, इति–एवं वक्ष्यमाणेन प्रकारेण 'मोक्षमार्गम्'अपवर्गपन्थानं प्रवक्ष्यामि, किमन्येन परिफल्गुनाऽभिहितेनेति ॥

॥ तत्त्वार्थकारिका हरिभद्रसूरिविरचितायां तत्त्वार्थटीकायां समाप्ताः ॥

एवं प्रयोजनाद्यभिधाय—

## सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः इत्यादि सूत्रं (१)

अत्र सम्यग्दर्शनादीन्येवेत्यवधारणं द्रष्टव्यम्, अन्यथा अन्यस्यापि मोक्षमार्गत्वे अमीषां प्रेक्षापूर्वकारिणां उपन्यासायोगात्, अन्यभावेऽपि गुणवत्त्वात् अमीषां उपन्यासोऽविरुद्ध एवेति चेत्, न, एतद्गुणविमुक्तानामन्येषां तन्मार्गत्वविरोधात्, मोक्षस्यैकरूपत्वात्, मनुष्यलोकादेव च तत्र गमनादिति, 'मोक्षमार्ग' इति चैकवचननिर्देशः समुदितानामेव मोक्षमार्गत्वख्यापनार्थं इति सूत्रपिण्डार्थः। अवयवार्थाभिधित्सया आह भाष्यकारः-'सम्यग्दर्शन'मित्यादि (पृ.५-२५) अत्र सम्यक्शब्दः दर्शनशब्दसन्निधावपि श्रूयमाणः प्रत्येकमभिसंबध्यते,सम्यग्दर्शनं सम्यग्ज्ञानं सम्यक्चारित्रमिति,आह-सम्यग्दर्शनसहाययोर्ज्ञानचारित्रयोः सम्यक्त्वाव्यभिचाराद्गतार्थः प्रत्येकाभिसंबंधः?,उच्यते,सत्यमेतत्,किन्तु सम्यग्दर्शनसहाययोरपि न सामायिकादिज्ञानदेशविरतिचारित्रयोः साक्षान्मोक्षमार्गत्वम्, अपि तु विशिष्टयोरेवेति तत्संपरिग्रहार्थः प्रत्येकाभिसम्बन्धः, तत्र मिथ्यात्वमोहनीय (क्षय) क्षयोपशमोपशमसमुत्था तत्त्वरुचिः सम्यग्दर्शनं, ज्ञानावरणक्षयक्षयोपशमसमुत्थः तत्त्वावबोधो ज्ञानं,चारित्रमोहनीयक्षयक्षयोपशमोपशमसमुत्था तु सदसत्क्रियाप्रवृत्तिनिवृत्तिलक्षणा विरतिः चारित्रं, 'चारित्रमित्य'यमितिशब्दः इयत्तां दर्शयति, एताव-

न्तेव मोक्षमार्गो, न न्यूनान्यधिकानि वा, 'एष' इत्ययमेव य इतिनाऽवधृतस्वभावो चक्षुश्रोत्रबुद्धिगोचरो, नान्यः, अधिकृते-ष्वताया विशेषान् संख्यामाह–'त्रिविध' इति तिस्रो विधाः–प्रकारा अनन्तरप्रदर्शिता यस्य स त्रिविधः, कोऽसौ ? इत्याह–सूत्रोक्तो मोक्षमार्ग इति, अत्र मोक्षः कर्मविमुक्तः आत्मोच्यते तस्य मार्गः–शुद्ध्यापादनं, तत् सम्यग्दर्शनादिभिः क्रियत इति तान्येव मोक्षमार्गः, यथा(दा)पीपत्प्राग्भारावरोपलक्षितं क्षेत्रं मोक्षस्तदाप्याकालं तत्प्राप्तये तान्येव मोक्षमार्ग इति भावः, अत्र मोक्षमार्ग एष इत्यस्य त्रिविध इत्येतद्विवरणमिति, न मोक्षमार्गस्यैतावदेवोपदेशनमित्याह–'तं पुरस्ता'दित्यादि,तं–मोक्षमार्गमनन्तरोक्तं, पुरस्तादिति–अस्मात् सूत्रादुपरितनसूत्रेषु 'लक्षणतः' लक्षणं–स्वरूपं ततः तत्त्वार्थश्रद्धानादिलक्षणमाश्रित्य 'विधानतश्च' भेदतश्च निसर्गाधिगमद्वारेण क्षयोपशमद्वारेण वा, चः समुच्चये, 'विस्तरेणे'त्युद्दिष्टसंक्षेपापेक्षया प्रपंचेन 'उपदेक्ष्याम' इति भणिष्यामः, स्वपरानुग्रहार्थं, यद्येवं किमनेन संक्षेपार्थाभिधायिनाऽऽद्यसूत्रोपन्यासेनेति, अत्राह–'शास्त्रानुपूर्वी'त्यादि,प्रधानपुरुषार्थशासनाच्छास्त्रं–प्रवचनमेव, तस्यानुपूर्वी–परिपाटी तस्या विन्यासः–रचना तदर्थं, तुशब्दाल्लाभक्रमप्रदर्शनार्थं च, 'उद्देशमात्र'मित्यविशिष्टपदार्थाभिधानमुद्देशस्तन्मात्रमिदं- सम्यग्दर्शनादिसूत्रमुच्यते–अभिधीयते सूत्रकारेण, एतदुक्तं भवति–अनेन क्रमेण सम्यग्दर्शनादीनि वक्ष्यामः,अयं चामीषां लाभक्रम इति प्रदर्शनार्थमादाविदमुच्यते,सग्रहप्रतिज्ञानादिति,मोक्षमार्ग इत्येकवचननिर्देशप्रयोजनमाह–'एतानि चे'त्यादिना, 'एतानि च' प्रागुद्दिष्टस्वरूपाणि सम्यग्दर्शनादीनि, चशब्दः हिशब्दार्थो निपातः, स च यस्मादर्थः, 'समस्तानी'ति सर्वाणि, मोक्षसाधनानि–निःश्रेयसनिर्वर्तकानि, त्रिफलावदारोग्यकर्तृणि इत्यर्थः, विप्रतिपत्तिनिरासार्थमप्राप्यं सिद्धमप्येतदाह–'एकतरे'त्यादि, विप्रतिपत्तिश्च ज्ञानमेव मोक्षसाधनमिति ज्ञानवादिनः,क्रियैवेति क्रियावादिनः,

अतत्त्वं चैतत्, न केवलं ज्ञानमिष्टसिद्ध्ये सत्क्रियारहितत्वात् पङ्गुवत्, न च क्रियामात्रं विशिष्टज्ञानरहितत्वादंधवदिति, अत आह–'एकतरस्यापि' सम्यग्दर्शनादेरभावे–अलाभे असाधनानि–अनिर्वर्त्तकानीत्यतः समुदायवाचकत्वान्मोक्षमार्गशब्दस्य न्यास्य एकवचननिर्देशः, आह–इत्येष त्रिविधो मोक्षमार्ग इत्यनेनैव गतार्थमेतत्, न, सामस्त्यांगत्वात्, प्रत्येकसाधनत्वेऽपि त्रिविधत्वाविरोधात्, असिपरश्वादिच्छेदसाधनेषु तथा तथा दर्शनादिति, अतस्त्रयाणां–सम्यग्दर्शनादीनां ग्रहणम्–आश्रयणं मोक्षार्थिना कर्त्तव्यमिति विधिः। एतेषामेव लाभविधिमाह–'एषां चे'त्यादिना, 'एषा'मिति दर्शनादीनां, चः समुच्चये, यथा समस्तानां मुक्तिहेतुता प्रतिपन्ना एवमिदमपि च प्रतिपत्तव्यं, 'पूर्वस्य लाभ' इति सूत्रक्रममङ्गीकृत्य पूर्वस्य–सम्यग्दर्शनस्य लाभे-प्राप्तौ 'भजनीयं' विकल्पनीयं स्याद्वा न वेति, 'उत्तरं' ज्ञानं चारित्रं च, तथा देवनारकतिरश्चां मनुष्याणां केषांचित् सम्यग्दर्शनलाभेऽपि नाचारादिगोचरं विशिष्टं ज्ञानं, तथा केषांचिन्मनुष्याणां तल्लाभेऽपि न सामायिकादि विशिष्टं चारित्रमिति, 'उत्तरलाभेऽपि' (तु मु.) सूत्रक्रमप्रामाण्याच्चारित्रलाभे 'नियतो' निश्चितः 'पूर्वलाभः' ज्ञानलाभः, तदभावे सम्यक्चारित्राभावात्, एवं ज्ञानलाभे नियतो दर्शनलाभः, तदभावे सम्यग्बोधायोगात्, आह–ज्ञानचारित्रे अधिकृत्य युक्तमुक्तमेतत्, तयोः कालभेदेनापि भावात्, ज्ञानदर्शने पुनरयुक्तं, युगपद्भावादिति, तथाहि–यदैव मिथ्यात्वमोहनीयक्षयोपशमादेः सम्यग्दर्शनं तदैव मत्यादिज्ञानमिति, उच्यते, अस्ति एतत्, तथापि ज्ञानावरणीयक्षयोपशमादिनिमित्तं ज्ञानं तथारुचिपरिणामभावे भवतीति तत्पूर्वकमुच्यते, न किंचिदत्रायुक्तम्, अत एव कस्यचित् सम्यग्दर्शनलाभानन्तरं मृतस्य विशिष्टं ज्ञानं न भवत्यपीति व्यापिनी भजना, कृतमत्र प्रसङ्गेन, अक्षरगमनिकामात्रफलत्वात् प्रस्तुतारम्भस्येति॥ सूत्रोपन्यस्तान् सम्यग्दर्शनाद्यवयवान् प्रविभागतो व्याचिख्यासुराह–"तत्र सम्यगि"त्यादि, 'तत्रे'-

त्यादि वाक्योपन्यासः, 'सम्यगि'ति इतिशब्देनार्थाद्व्यवच्छिन्नः सम्यक्शब्दो गृह्यते,स किमित्याह-'प्रशंसार्थः' प्रशंसा श्लाघा अर्थः-अभिधेयोऽस्येति प्रशंसार्थः 'निपातः' निपात्यतेऽर्थादिद्योतकतयेति निपातः, न नामादि पदमित्यर्थः, इदं किल निसर्गसम्यग्दर्शनं,स्वत एव लाभात् पूजितः,अतः अंतरङ्गत्वेनाव्युत्पत्तिपक्षाश्रयं व्याख्यानं,व्युत्पत्तिपक्षं त्वधिकृत्याह-'समंचतेर्वा भावः' संपूर्वादंचतेर्धातोः क्विप्प्रत्ययान्तस्यैतद्रूपं सम्यगिति, समंचति-गच्छति व्याप्नोति सर्वान् द्रव्यभावानिति सम्यक्, कर्त्रर्थोऽत्र, यत्तत् दर्शनं रुचिरूपं तत् समंचति-सकलद्रव्यास्तिकादिनयमताङ्गीकरणेन गच्छति व्याप्नोति जीवादीन् पदार्थान्, एवं यदा दृष्टिः प्रवर्तते तदा सम्यगिति कथ्यते, वेति विकल्पार्थः, इह किलाधिगमसम्यग्दर्शनाश्रयं व्याख्यानं, तस्य प्रायो द्रव्यास्तिकाद्यधिगमेनैव प्रवृत्तेरिति, एवं सम्यक्शब्दं निरूप्य दर्शनशब्दनिरूपणायाह-'भावे(वः मु.) दर्शन 'मिति, इह नैकस्मिन् कारके ल्युड् भवति करणादिके,पश्यति स तेन तस्मिंस्तस्मात्, तत् सर्वापोहेन विशिष्ट एव कारके भावाख्ये खल्वयं द्रष्टव्यः, दृष्टिर्दर्शनमित्यर्थः. भावार्थगर्भमेतदेवाह-'दृशे'रित्यादिना, दृशेर्धातोः, दर्शनमिति यदेतद्रूपं भावाभिधायि तद् दृशेरिति भावः, अर्थस्याव्यभिचारिणी सर्वेन्द्रियानिन्द्रियार्थप्राप्तिः, प्राप्तिः-उपलब्धिः, व्यभिचरत्यवश्यमिति व्यभिचारिणी, सा चैकनयमतावलम्बिनी सामान्यमेवास्ति न विशेषा इत्यादि, कारणान्तरेणापक्षेपात्, न व्यभिचारिणी अव्यभिचारिणी, या सर्वनयमतावलंबिनी अस्ति सामान्यं विशेषानुविद्धमित्यादिरूपाऽप्रतिपक्षतया मत्या,एतामेव कथयति-'सर्वेन्द्रियानिन्द्रियार्थप्राप्ति'रिति, 'सर्वाणि--निरवशेषाणि 'इन्द्रियाणि' इन्द्रस्य-जीवस्य लिङ्गानि स्पर्शनादीनि मनःषष्ठानि तेषामर्थाः—स्पर्शादयः तेषामिन्द्रियानिन्द्रियार्थानां प्राप्तिः-उपलब्धिः स्वतः परतो या तदर्थप्रकाशनोत्तरकालभाविनी रुचिः अध्यवसायरूपा दर्शनं, यदेवंभूतं दर्शनं तद्विशिष्टेन

धीत क्रमपक्षत इत्याह–तत् सम्यग्दर्शनं, एतदुक्तं भवति–यथानन्तरोदिता प्राप्तिस्तत् सम्यग्दर्शनं,एतदेव निपातयोगेन पक्षद्वयमधिकृत्य विशेषतो योजयन्नाह–'प्रशस्त'मित्यादि, 'प्रशस्तं दर्शनं' प्रशस्तं मुक्तिसुखहेतुत्वात् ,सम्यग्दर्शनं तत्त्वस्य, तत्स्वाभाव्याद् , आवरणदोषतोऽन्यथाप्रतीतेः, तथारुचिप्रधानमित्यर्थः, अयमव्युत्पत्तिपक्षार्थः,व्युत्पत्तिपक्षार्थमाह-'सङ्गत'मित्यादि, सङ्गतं च नित्यानित्याद्यधिगमानुसारप्रवृत्तं दर्शनं,तत्त्वाधिगमादेव समुपजाता रुचिरिति भावः। एवं सम्यग्दर्शनशब्दावयवव्याख्यानेन सम्यग्ज्ञानचारित्रयोरपि लेशतः काका व्याख्यानं कृतमेव वेदितव्यं,तथाहि–सम्यग्ज्ञानशब्देऽपि सम्यक्शब्दः प्रशंसार्थो निपातः,समंचतेर्वा, ज्ञानमिति च भाव एव, एवं चारित्रमपि, स्वस्थाने च विशेषं वक्ष्यामः,सर्वत्र चाव्युत्पत्तिपक्षः प्रथमं तत्पूर्वक एव व्युत्पत्तिपक्ष इति ज्ञापनार्थं, तथाहि -न वर्णादीनां व्युत्पत्तिः, तत्पूर्वकाश्च पदादयः, इत्यलं प्रसङ्गेन ॥ सम्प्रति यथोद्दिष्टानां सम्यग्दर्शनादीनामाद्यस्य लक्षणमाह—

## तत्र–तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् ॥ सूत्रं (२)

तत्रशब्द उपन्यासार्थः, तत्त्वार्थश्रद्धानं—रुचिरूपं सम्यग्दर्शनं–मिथ्यात्वमोहनीयक्षयादिनिमित्तम्, अज्ञानात् परिणामान्तरमिति सूत्रसमुदायार्थः, अवयवार्थाभिधित्सया त्वाह भाष्यकारः-"तत्त्वाना" मित्यादि, (पृ.६-५) तत्त्वानाम्–अविपरीतानामर्थानाम्–अर्यमाणानां जीवादीना श्रद्धानम्–एवमेतदिति रुच्यभिप्रीतिरूपं तत्त्वार्थश्रद्धानमिति, आह–यत्तत्त्वं तदर्थं विहायान्यद्भवितुमर्हति अर्थो वा तत्त्वमन्तरेणेत्ययुक्तं द्वयोरुपादानं, नायुक्तं, कपिलादिपरिकल्पितस्य नित्यादेरर्थस्य तत्त्वविशेषणायोगात्, अर्थक्रियाविरहेण तस्यानर्थत्वादिति प्रतिपादितमन्यत्र, अर्थश्च स तेषामिति तद्व्यपोहार्थं द्वयाभिधानं, तत्त्वानाम-

र्थानां नित्या (नित्या)दिरूपाणां जीवादीनामित्यर्थः, आह–एवमपि तत्त्वग्रहणमेव कार्यं, तस्यार्थाव्यभिचारित्वात्, तथाहि—यद्यपि परिकल्पितोऽर्थो व्यभिचरति तत्त्वं, तथापि तत्त्वमर्थाव्यभिचारि,तद्भावस्तत्त्वमर्थयोगात्, उच्यते, अस्त्येतद्वस्तुस्थित्या, किन्तु तत्त्वमपि परिकल्पितं कैश्चिदिष्यते शून्यताद्यनर्थरूपमिति, न चोभयपदव्यभिचार एव विशेषणविशेष्यभावः, किंत्वेकपदव्यभिचारेऽपि दृष्टो, यथा-अप् द्रव्यं पृथिवी द्रव्यमिति, तत्र अपो द्रव्यमेव, द्रव्यं पुनर् वा अनब् वा, अथवा किं तावद् अनेन ?, निशङ्कमन्यदेव विग्रहान्तरमाह—"तत्त्वेने"त्यादि, तत्त्वेन चार्थानां श्रद्धानमिति, इदमप्यर्थकथनं, न तु त्रिपदः तृतीयातत्पुरुषः सम्भवति, एवं च दृश्यम्–अर्थानां श्रद्धानमर्थश्रद्धानं (तत्त्वेन अर्थश्रद्धानं) तत्त्वार्थश्रद्धानमिति, वाशब्दः पक्षान्तरप्रदर्शनार्थः, अयं वा पक्ष आस्तेयमि (स्थेय इ)ति, यदेवंभूतं तत् सम्यग्दर्शनमिति लक्ष्यनिर्देशः। अत्रैव भावार्थमाह—'तत्त्वे'त्यादिना, 'तत्त्वेन' यथावस्थितवस्तुविषयतया न विपर्ययेण, भावतः स्वप्रतिपत्त्या, न मातापित्रादिदाक्षिण्येन, निश्चितमेवेत्यवधारितं, न संदिग्धमित्यर्थः, तत्त्वेन वा अस्य वा विवरणं भावतो, निश्चितमित्यर्थः, एवं समासकल्पनाद्वयं निदर्श्य विषयार्थं दर्शयन्नाह—'तत्त्वानी'त्यादि तत्त्वानीति–अविपरीतभावव्यवस्थानि तानि जीवादीनीति, जीवा उपयोगलक्षणा आदिर्येषां सूत्रक्रममाश्रित्य, तानि जीवादीनि वक्ष्यन्ते, तत्त्वार्थशब्दयोर्विशेषणविशेष्यकल्पनापक्षमाश्रित्याह—"त एव चार्था"इति, त एव चेत्यर्थापेक्षया पुल्लिंगनिर्देशः, त एव च जीवादयोऽर्यमाणत्वादर्थाः, श्रद्धानमित्यस्यार्थमाह—"श्रद्धानमि"त्यादि, श्रद्धानं नाम तेषु जीवादिष्वर्थेषु 'प्रत्ययावधारण'मिति, प्रत्ययेन तदावरणीयकर्म्मक्षयोपशमादिना निमित्तेनालोचनाज्ञानेन वा तदुभयेन श्रुताद्यालोच्यैवमेवैतत्तत्त्वमेतच्च तत्त्वमितिरुचिरूपा वा वृत्तिः प्रत्ययावधारणमिति, आह—तत्त्वेन चार्थानामिति षष्ठ्यर्थं प्राक् प्रदर्श्य तेषु प्रत्ययावधारण-

मित्यत्र मप्तम्यर्थकथनं किमर्थं?, उच्यते, प्रायेणानयोरभेदख्यापनार्थं, तथा च प्रायः षष्ठीसप्तम्योरभेद एव दृश्यते, यथा गिरेस्तरवः गिरौ तरव इति, ये हि यस्यावयवास्ते तस्मिन् भवन्ति, एवमत्रापि, त(य)ज्जीवादीना श्रद्धानं ततस्तद्विषयमिति, एवं तत्त्वार्थश्रद्धानमित्येतत्पदं विवृत्य मम्यग्दर्शनपदं तु पूर्वमेव विवृतमिति विहाय यथेदमुत्पन्नं मत् परेणापि ज्ञायते तथा सलिङ्गमैदंपर्येणाभिधातुमाह–'तदेव'मित्यादि, यतः श्रद्धानं तेषु प्रत्ययावधारणं, तदेवं व्यवस्थिते सति प्रशमश्च संवेगश्चेत्यादिर्द्वन्द्वः, तत्र प्रशमः–क्रोधक्षयोपशमादेः मत्यमति वा दोषनिमित्ते क्षान्तिपरिणामः,संवेगः सम्भीतिर्नरकादिगत्यालोचनात्, मोक्षैकशरणता निर्वेदो, विषयेषु दोषदर्शनेन, अनुकंपा दुःखितेषु कारुण्यं, आस्तिक्यम्–अस्ति जीवादितत्त्वमिति मतो भावः, एषां प्रशमसंवेगनिर्वेदानुकम्पास्तिक्यानामभिव्यक्तिः–प्रकटता सैव लक्षणं–चिह्नं यस्य तत्तथाविधं तत्त्वार्थश्रद्धानं मम्यग्दर्शनमिति। एवंभूतं यत्तत्त्वार्थश्रद्धानं तत् मम्यग्दर्शनं, न पुनर्वचनमात्रकमेव, "एतच्च किल ममस्तप्रशमादिलिङ्गयुक्तं नैश्चयिकं, 'जं मोणंति पासहा, तं संमंति पासहा' (यन्मौनमिति पश्यत तत् सम्यगिति पश्यत, यत् मम्यगिति पश्यत तत् मौनमिति पश्यत) इत्यादिवचनविषयं, आस्तिक्याद्यन्यतरलिङ्गयुक्तं तु व्यावहारिकं, पश्चानुपूर्व्या च प्राय आस्तिक्यादिभावः, न परमार्थतोऽप्रतिपन्नजिनवचनाना अनुकम्पादयः, प्रशमादिक्रमोपन्यासस्तु यथाप्राधान्यमिति। अत्राह–जिनवचनानभिज्ञाना मापतुषादीनां कथं यथोदितं तत्त्वार्थश्रद्धानमनाभोगप्रधानत्वादिति, अत्रोच्यते, अस्त्यनाभोगो ज्ञानावरणोदयजन्यः, क्षयोपशमात्तु दर्शनविपरीतरुचिनिबन्धनस्य मिथ्यात्वमोहनीयस्य तदभावाद्यत्रावगमः तत्राविपरीतैव श्रद्धा,इतरत्राप्यप्रतिहता तच्छक्तिर्यथाऽवाबाधं तथैव प्रवृत्तेरित्यत एव मार्गदेशनानुसारिणोऽमद्ग्रहरहिताश्च मम्यग्दृष्टयो भवन्तीत्यभिदधति विद्वाम इत्यलं प्रमङ्गेन, "प्रकृतं प्रस्तुमः,तच्चेदं मम्यग्दर्शनं यतो भवति यद्विधं

चैतत् तदभिधित्सयाऽऽह—

## तन्निसर्गादधिगमाद्वा (सूत्रं. ३)

*प्रक्रमाद्गम्यमानस्याप्यस्य तदिति सर्वनाम्ना परामर्शः,सर्वविनेयानुग्रहायातिसूक्ष्मातिबादरग्रंथप्रारम्भकापोहेन मध्यमारम्भरव्या-
पनार्थः* सम्यग्दर्शनं मूलहेतुद्वैविध्याद् द्विविधमिति सूत्रसमुदायार्थः,अवयवार्थमाह भाष्यकारः—'तदेत' दित्यादिना (पृ-६-९२)
तच्छब्द एतच्छब्दार्थः, तदेतदनन्तराधिकृतं सम्यग्दर्शनं द्विविधं भवति, निमित्तद्वैविध्यात्, अनेनैव व्यपदिशन्नाह—'निसर्गे'-
त्यादि, अपरोपदेशात्तथाभव्यत्वादितः कर्म्मोपशमादिजं तु निसर्गसम्यग्दर्शनं, परोपदेशतस्तु बाह्यनिमित्तापेक्षं कर्म्मोपशमादि-
जमेवाधिगमः सम्यग्दर्शनमिति, वाशब्दो निमित्तदर्शनपरः, नैकस्यैव द्वयं निमित्तमित्यर्थः, एतदेव सूत्रेऽप्यसमासकरणे प्रयोजनम्,
अन्यथा तन्निसर्गाधिगमाभ्यामिति स्यात्, वाशब्दोऽप्यतिरिच्येत, अथ कथं तदेवं व्यपदिश्यते—निसर्गसम्यग्दर्शनमधिगमसम्य-
ग्दर्शनं चेति, अत्राह—'निसर्गादि'त्यादि, अत्रेतिशब्दस्तस्मादर्थे, यत्तदोर्नित्याभिसम्बन्धात्, यस्मान्निसर्गादधिगमाद्वा वक्ष्यमाण-
रूपादुत्पद्यत एतदिति, तस्माद्यवांकुरादिवत्तेनैव व्यपदिश्यते निसर्गसम्यग्दर्शनमधिगमसम्यग्दर्शनं चेति, अत्राह—यदि मुख्यया
वृत्त्या हेतुः प्रतिपाद्यते सूत्रेण तदेवं सति तदेतत् सम्यग्दर्शनं द्विविधमित्ययुक्तं विवरणं, एवं तु स्यात्-तस्य सम्यग्दर्शनस्य द्वौ हेतू,
यतः सूत्रेणाभिसमीक्षितं तद् द्विविधत्वमिति,एवं पर्यनुयुक्त आह—'द्विहेतुकं द्विविध'मिति, द्वौ निसर्गाधिगमाख्यौ प्रत्येकास-
मासकरणज्ञापितौ हेतू यस्य तद् द्विहेतुकं, न तु तन्मुख्यभेदप्रतिपादनया, निर्देशस्वामित्वेत्यादिसूत्रे सम्यग्दर्शनभेदस्याभिधी-
यमानत्वादिति । आह—सम्यग्दर्शनोत्पत्तौ निसर्गः कारणमभ्युपेयते, स कः किमात्मको वेति ?,अत्रोच्यते—'निसर्गः परिणाम'

इत्यादि, अपूर्वकरणानन्तरभाव्यनिवर्त्तिकरणं निसर्गः, ततस्तत्त्वरुचिभावात्, निसृज्यते–त्यज्यते तत्त्वरुच्याख्यकार्यनिर्वृत्तौ सत्यामिति निसर्गः, उत्पन्ने सम्यग्दर्शने अनिवृत्तिकरणं त्यज्यते, प्रयोजनाभावात्, त्यागोऽस्य कारणस्यैव कार्यरूपतया भवनात्, न निरन्वय इति ज्ञापनायाह–'परिणाम' इति, परिणमनं परिणामः, अनिवर्त्तिकरणवतो जीवस्य कथञ्चित्तत्त्यागेन तत्त्वरुचिरूपतया भवनात्, परिणामश्च प्रयोगविस्रसाभ्यामिति प्रयोगेण घटानां विस्रसाऽभ्रेन्द्रधनुरादीनामिति, वैस्रसिकव्यापनायाह–'स्वभाव' इति, स्वेन आत्मनैव तथाभव्यत्वादितो जनितोऽयमनिवर्त्तिरूपो भाव इति स्वभाव इत्युच्यते, स्वो भावः स्वभाव इति, नान्येन प्राणिना कृत इत्यर्थः, सर्वोपसंहारमाह–'अपरोपदेश' मिति, नास्मिन् परोपदेश इत्यपरोपदेशः–अनिवर्त्तिरूपो भावः, इत्येवं व्यवहारतः अनर्थान्तरं, नार्थान्तरवृत्तित्वमेषां शब्दानामित्यर्थः, इदानीं यस्येदं निसर्गसम्यग्दर्शनं यथा चैतदवाप्यते तदेतदभिधातुमाह–' ज्ञानदर्शने 'त्यादि, यावद् ये ' नास्यानुपदेशात् सम्यग्दर्शनमुत्पद्यत ' इति, तत्र ज्ञानं च दर्शनं च ज्ञानदर्शने, विशेषाध्यवसायो ज्ञानं सामान्याध्यवसायो दर्शनं, ते एवोपयोगौ, तौ लक्षणं यस्य सः, तथाविधः क इत्याह—जीव इति, एतद् वक्ष्यते–अभिधास्यते 'उपयोगो लक्षण'मित्यत्र सूत्रे (२-८) तस्य जीवस्य, न महदादेः, 'अनादौ संसारे परिभ्रमतः' अविद्यमान आदिरस्येत्यनादिः, सर्वथा असतः सद्भावायोगात्, अतिप्रसङ्गात्, सत एव क्षयापत्तेः, तस्मिन्ननादौ, कस्मिन्नित्याह–'संसारे' इति, संसरणं संसारः–नरकादिगमनं इत्यर्थः, इह च गमनमुपलक्षणं नरकादौ स्थितेरपि, ततश्च नरकादिगमनतत्स्थितिरूपः संसार इति, तस्मिन्ननादौ संसारे, अनेन सृष्टिवादव्यवच्छेदमाह, स्रष्टारमन्तरेण तदनुपपत्तेः, सति चास्मिन् स केन सृष्टः ?, तदपराभ्युपगमेऽनवस्था, अनभ्युपगमे तद्वदपरस्यासृष्टिः, रागादिरहितस्य च स्रष्टुः सर्जने सर्गे प्रयोजनाभावः, क्रीडाप्रयोजनाङ्गीक-

रणे रागादिमत्त्वं, सुखितदुःखितद्वादिकरणेऽस्थानपक्षपातः, तत्स्वभावत्वाभ्युपगमे न चालाद ( न प्रमाणं, न चासात् ) कस्य-
चिदुत्पत्तिः, तदभ्युपगमे कर्म्मप्रेरकत्वे च भक्तिर्वा इत्यलं प्रसङ्गेन, निर्णीतमेतदन्यत्र, तदनादौ संसारे किमित्याह—'परिभ्र-
मत' इति, सक्रियत्वेनासर्वगतत्वेन च पर्यटत इत्यर्थः, यन्निमित्तमिदं परिभ्रमणं तत् कथयन् प्रक्रान्तोपयोगि च प्रकारान्तर-
मिदमाह—'कर्म्मत एव कर्म्मणः स्वकृतस्ये'त्यादि यावत् 'फलमनुभवति' इति, कर्म्मत एवेति प्रकृतात् ज्ञानावरणीयादेरुद-
यप्राप्तान्निमित्तात् कर्म्मणः स्वकृतस्येति अन्यस्य ज्ञानावरणीयादेरात्मना निर्वर्त्तितस्य, अनेनैतदाह—आत्मा ह्यन्यकर्म्मोदयनि-
मित्तापेक्ष्यैवान्यत् कर्म्मान्तरं करोति,न तु यथा अन्ये मन्यन्ते-आदिकर्म्म स्वभावत एव, ततोऽन्या कर्मसन्ततिः स्वकृतेति, कुतः?,
सिद्धानामपि कर्म्मकरणप्रसङ्गात्, स्वभावाविशेषादित्येवं कर्म्मत एवेति सफलमवधारणं, आदिकर्म्म न विद्यत एवानादित्वात्
कर्म्मण इत्यर्थः, आह-सर्वं कर्म्म कृतं तत् कथमनादि मतम्?, उच्यते, प्रवाहरूपेणातीतकालवत्, तथाहि—यावान् कालोऽतीत-
स्तेन सर्वेण वर्त्तमानत्वं प्राप्तम्, अन्यथाऽतीतत्वाभावात्, यथोक्तम्-"भवति स नामातीतः प्राप्तो यो नाम वर्त्तमानत्वम्। एष्यंश्च नाम
स भवति यः प्राप्स्यति वर्त्तमानत्वम् ॥ १ ॥" अथ चासावनादिः,एवं कर्म्मापि,वर्त्तमानताकल्पत्वात् कृतकत्वस्येत्यलं प्रसङ्गेन,
'स्वकृतस्ये'ति चानेन कर्मसापेक्षस्यात्मन एव कर्तृत्वमाह, कथमयं स्वतन्त्रः सन्नात्मन एवाहिते प्रवर्त्तत इति चेत्?, उच्यते, कर्म्म-
मोहितत्वात् व्याधिमोहितवदपथ्य इति, कर्म्ममोहितः कथमेकान्तेन स्वतन्त्र इति चेत्, नायं दोषः, अनभ्युपगमात्, कर्म्मसापेक्ष
एवायं कर्तेत्युक्तं,न केवलसिद्धस्य,अनभ्युपगमात्, तदेवं कर्म्मत एव कर्म्मणः स्वकृतस्य फलमनुभवतः यदपेक्षं तत् फलं तदाह-'बंध-
निकाचनोदयनिर्जरापेक्ष'मिति,तत्र बन्धः कर्म्मणो योगः,स च प्रकृति(स्थितिरसप्रदेश)भेदभिन्नो वक्ष्यमाणः,निकाचनं तु आत्मप्र-

देशः मह कर्म्मणः प्रनष्टस्वविभागोऽविशिष्टमेकपिंडता, तस्यैव कर्म्मण उदयावलिकाप्रविष्टस्योदयो विपाकः,तस्यैव चोदयानुभवसमनन्तर परिशाटो निर्ज्जरेति,बन्धादयः कृतद्वन्द्वाः, ताः अपेक्ष्यंत इति कर्म्मण्यत्, बन्धनिकाचनोदयनिर्ज्जरापेक्षं, किं तत्?—फलं, कथं पुनः तत् फलं बन्धाद्यपेक्षं?, तत उच्यते, यतो बन्धादिष्वसत्सु न तत्सम्भव इति, क्वानुभवत इत्याह-'नरके'त्यादि, नरकतिर्य्यग्योनिः—उत्पत्तिस्थानं, तच्च द्वितीये वक्ष्यति, मनुष्याश्च अमराश्च मनुष्यामरास्तेषां भवः—प्रादुर्भावः, ते भवंति यत्र ग्रहणानि आदानादीनि, तच्छरीरग्रहणानीत्यर्थः, तेषु तेषु भवेषु अनादिसंसारात्मसु, विविधमित्यनेकविधं, यतः सातसम्यक्त्वहास्यादिकाः प्रकृतयो विविधास्तासां फलमपि विविधमेवेति, तथा ज्ञानावरणाद्या अपि विविधास्तत्फलमपि विविधमुच्यते, पुण्यमनुग्रहकारि सातादि, पापमुपघातकारि ज्ञानादिगुणानां, तयोः पुण्यपापयोः फलं स्वरसविकाररूपं पुण्यपापफलं तदनुभवतो जीवस्योपभुञ्जानस्य, अनु पश्चादर्थे, पूर्वं ग्रहः पश्चात् फलोपभोग इति, कथमनुभवत इत्याह—'ज्ञानदर्शनोपयोगस्वाभाव्यात्' ज्ञानदर्शने व्याख्याते, तयोः स्वाभाव्यं तस्मात् ज्ञानदर्शनोपयोगस्वाभाव्यादिति, एतदुक्तं भवति-यदा यदोपभुंक्ते तदा तदा चेतयते सुख्यहं दुःखितोऽहमित्यादि, साकारानाकारोपयोगद्वयसमन्वितत्वादवश्यंतया चेतयत इति, उत्तरग्रन्थेनापि सम्बन्धोऽस्य तानीत्यादिना, ज्ञानदर्शनोपयोगस्वाभाव्यादेव तानि तान्यनिर्दिष्टस्वरूपाणि परिणामेनाध्यवसायस्थानान्तराणि—परिणामाध्यवसायस्थानान्तराणि, परिणामेन न निरन्वयोच्छित्त्या, निरन्वयोच्छित्तौ हि कार्यभावे तत्त्वतोऽसत् सञ्जनति, न च सर्वथा असतः शक्तिप्रतिनियमः, ततः कार्यान्तरवत्तदभावप्रसङ्ग इति भावनीयं, अध्यवसायस्थानान्तराणि चानुकम्पादिगर्भाणि मलीमसमध्यमतीव्राणि पारम्पर्येण सद्दर्शनबीजभूतानि बोधरूपाणि गृह्णन्ते, तानि गच्छतः—प्राप्नुवतः, किम्भूतस्य सत इत्याह—'अनादी'त्यादि, नास्यादिरस्तीत्य-

नादिः, अनादिर्मिथ्यादृष्टिः,अप्राप्तपूर्वसम्यक्त्वलाभ इत्यर्थः, तस्य अनादिमिथ्यादृष्टेरपि, अपिशब्दात् सादिमिथ्यादृष्टेरप्यवाप्तसम्यक्त्वपरित्यागिनः पुनस्तल्लाभे 'सत' इति सद्वृत्तस्य, क्लिष्टसत्त्वाचरितातिक्रान्तभावस्य, किमित्याह–'परिणामविशेषा'-दिति परिणामः–अध्यवसायश्चित्तं,तस्य विशेषः स एव वा, पूर्वं पूर्वं जघन्यमङ्गीकृत्य परः परः शुभो विशेष इत्युच्यते, परिणामविशेषश्चेह यथाप्रवृत्तकरणमभिमतं,ततः परमपूर्वकरणं,अप्राप्तपूर्वं तादृगध्यवसायान्तरं जीवेनेत्यपूर्वकरणमुच्यते ग्रन्थिं विदारयतां, ततश्च ग्रन्थिभेदोत्तरकालभाव्यनिवर्त्तिकरणमासादयति, यतस्तावन्न निवर्त्तते यावत् सम्यक्त्वं न लब्धमित्यतोऽनिवर्त्तिकरणं,ग्रन्थान्तरप्रसिद्धत्वाद्भाष्यकारेण अनिवर्त्ति नोपात्तं करणं, अवश्यंतया च सम्यग्दर्शनं लभमानस्तल्लभत इति काक्का अभ्युपेतं, तदभावेऽभावात्, अत एवाह–अपूर्वकरणं व्यावर्णितलक्षणं 'तादृग्भवति' तादृगिति यद् यथाप्रवृत्तकरणस्य कार्यमनिवृत्तिकरणस्य च कारणं येनास्य जीवस्य अनुपदेशादित्युपदेशमन्तरेण, विशिष्टबाह्यनिमित्ताभावोपलक्षणमेतत्, तथाभव्यत्वादिभावतः आभ्यन्तरदोषोपशमप्राधान्यात्, अन्यदपि विशिष्टं बाह्यं निमित्तमन्तरेण 'सम्यग्दर्शनं' यथोदितस्वरूपमुत्पद्यते अभिव्यज्यते, स्वत एव कथंचिद्धातुप्रागुण्याद्रोगोपशान्तिवद्, इत्येतदेवंविधं 'निसर्गसम्यग्दर्शन'मिति निगमनं, उक्तं निसर्गसम्यग्दर्शनम्। अधुना अधिगमसम्यग्दर्शनमभिधातुमाह–'अधिगम'इत्यादि, गमो ज्ञानं,अधिको गमः अधिगमः,आधिक्यं सामान्येन परोपदेशादुत्पत्तेः, अधिगमस्त्वसारः संसारः इत्यन्वयालोचनेन, आगमोऽपि सारोऽपवर्ग इति व्यतिरेकालोचनेन, निमित्तमित्युपदेशस्य प्रतिमादि, तद्दर्शनजो बोधोऽपि निमित्तमआयुर्घृतमिति यथा, श्रवणमिति श्रुतिः प्रतिमादेरेव भूपादिवर्जनाकर्णनोत्थो बोध एवेत्यर्थः, शिक्षेति स्वयमेवाप्तप्रणीतागमाभ्यासः, उपदेश इति गुरुलक्षणयुक्तात् गुरोर्धर्मदेशना,

इत्यनर्थान्तरम् गम्यते किंचिद्भेदं प्रतिपद्यमाना अनर्थान्तरमित्युच्यते, एवं पर्यायकथनं कृत्वा संपिण्ड्य कथयन्नाह—'तदेव'मित्यादि, तदेवमित्युक्तेन प्रकारेण यत् परोपदेशात् परोपदेशमाश्रित्य, विशिष्टबाह्यनिमित्तोपलक्षणमेवैतत्, तथाभव्यत्वादिभावतः बाह्यनिमित्तप्राधान्यात् अन्यदपि प्रतिमादि बाह्यं निमित्तमाश्रित्य तत्त्वार्थश्रद्धानं भवति अपूर्वकरणादिक्रमेण, वैद्योपदेशक्रियानुष्ठानाद्रोगोपशान्तिवद्, अधिगमसम्यग्दर्शनमिति निगमनमेतत्, इह च परानपेक्षत्वात् कथंचिन्निसर्गे सत्यधिगमोपपत्तेः, अन्यथा कथं तदभावान्निसर्गसम्यग्दर्शनानन्तरमधिगमसम्यग्दर्शनोपन्यास इति ?, आह—सर्वसत्त्वानामनादित्वात् कर्म्मसंयोगस्य किमिति कालभेदेन सम्यग्दर्शनलाभः, तथा च केषांचिदयमनादिमान् केषांचिदद्य केषांचिदनन्तेन कालेनेति, अत्रोच्यते, सम्यग्दर्शनलाभो हि विशिष्टकालस्वभावनियतिकर्म्मपुरुषकारसामग्रीजन्यः, सा च प्रतिसत्त्वं भिन्नेति, ततश्च यस्य यो विपाककालस्तथाभव्यत्वनियतिकर्म्मकालपुरुषापेक्षस्तस्य तदा भवतीति न कश्चिद्दोषः, सर्वकार्याणामेव सामग्रीजन्यत्वाभ्युपगमात्, उक्तं च यथावस्थिताहन्मतवेदिना सिद्धसेनदिवाकरेण—"कालो सहाव णिअई पुव्वकयं पुरिसकारऽणेगंता। मिच्छत्तं ते चेव उ समासओ होंति सम्मत्तं ॥१॥" इत्यलं प्रसङ्गेन, अक्षरगमनिकामात्रस्य प्रस्तुतत्वादिति ॥ उत्तरसूत्रे सम्बन्धं लगयन्नाह—'अत्राहे'त्यादि, अत्र—सविषये सम्यग्दर्शने व्याख्याते विषयविवेकमजानान आह चोदकः—तत्त्वार्थश्रद्धानं सम्यग्दर्शनमित्युक्तं भवता, तत्र किं तत्त्वमिति, 'तत्रे'त्यनेन तत्त्वार्थश्रद्धानशब्दे यस्तत्त्वशब्दस्तत्र किं तत्त्वं—किं तस्याभिधेयं ?, न चायमयुक्तः प्रश्नः, तत्त्वानि जीवादीनि वक्ष्यन्त इति प्रागुपन्यस्तत्वात्, तदियत्तादिपरिज्ञानाभावात्, इत्येवमाशंक्याह—अत्रोच्यते, अत्र तत्त्व इति दर्शिते तत्त्वशब्दे यदभिधेयं तदियत्ताद्यवधृतस्वरूपमुच्यते—

जीवाजीवाश्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वम्. ॥४॥ सूत्रम् ॥

जीवादयस्तत्त्वमिति, एकवचननिर्देशः अमीषामेव निरुपचरितसामान्यविशेषतत्त्वख्यापनाय सामान्यप्रधानः, इति सूत्रसमुदायार्थः, अवयवार्थं तु विग्रहपुरस्सरमाह भाष्यकारः—'जीवा' इत्यादि, (पृ. ७-१२) तत्र सुखदुःखज्ञानोपयोगलक्षणा जीवाः, तद्विपरीतास्त्वजीवाः, आश्रूयते-गृह्यते कर्म्म अनेनेत्याश्रवः, शुभाशुभकर्म्मादानहेतुरिति भावः, आश्रवैरात्तस्य कर्म्मण आत्मना संयोगो बन्धः, आश्रवस्य निरोधो गुप्त्यादिभिः संवरः, कर्म्मणां विपाकतस्तपसा वा शाटो निर्जरा, कृत्स्नकर्मक्षयादात्मनः स्वात्मन्यवस्थानं मोक्षः, 'इत्येष सप्तविधोऽर्थस्तत्त्वमिति' इतिशब्दः इयत्तायाम्, एतावानेव, एष इति चोदकस्य प्रत्यक्षीकृतो वचनेन, सप्तविधः इति सप्तप्रकारः, अर्थ इत्यर्यमाणत्वात्, तत्त्वमित्यस्य पदस्य एष सप्तविधोऽर्थ इति पदत्रयं व्याख्यानं, तत्त्वमिति वा व्युत्पत्तौ कथ्यं, सद्भूतं परमार्थ इति व्युत्पत्तौ तु जीवादीनां पदार्थानां स्वभावः—स्वसत्ता, इयं यदा प्राधान्येन विवक्ष्यते तदैकवचननिर्देशः तत्त्वमिति, यदा तु विशेषधर्मानुविद्धत्वादुपसर्जनत्वेन तदा बहुवचननिर्देश एवेत्याह—'एते वा सप्तार्थास्तत्त्वानीति' एते प्राक् प्रत्यक्षीकृताः, वाशब्दो विशेषप्राधान्यापेक्षया विकल्पार्थः,सप्तार्था-जीवादयस्तत्त्वानि द्रव्याणि,पुण्यपापयोश्च बन्धेऽन्तर्भावान्न भेदेनाभिधानं,यद्येवमाश्रवादयोऽपि पञ्च न जीवाजीवाभ्यां भिद्यन्ते ततस्तेऽपि न वाच्याः, तथाहि-आश्रवो मिथ्यादर्शनादिरूपः परिणामो जीवस्य,स च क आत्मानं पुद्गलांश्च विरहय्य,बन्धस्तु कर्म्म पुद्गलात्मकं आत्मप्रदेशसंश्लिष्टं, संवरोऽप्याश्रवनिरोधलक्षणो देशसर्वभेदः आत्मनः परिणामो निवृत्तिरूपः, निर्जरा तु कर्म्मपरिशाटात् जीवकर्मणां पार्थक्यमापादयति स्वशक्त्या,मोक्षोऽप्यात्मा समस्तकर्मविरहित इति, तस्माज्जीवाजीवौ तत्त्वमित्येतावद्वक्तव्यम्, उच्यते, सत्यमेत-

देनं,किंत्विह मोक्षमार्गे शिष्यस्य प्रवृत्तिः प्रक्रान्ता,न तु सङ्ग्रहाभिधानं, तद् यदैवमाख्यायते आश्रवो बन्धश्चेतद्द्वयमपि मुख्यं तत्त्वं संसारकारणं, संवरनिर्जरे च मोक्षस्य, तदाऽसौ संसारकारणत्यागेनेतरत्र प्रवर्त्तते, नान्यथेत्यतः चतुष्टयोपन्यासः, मुख्यसाध्यख्यापनार्थं च मोक्षस्येति, न चैनमिह पुण्यपापाभिधाने किंचित् प्रयोजनमिति, एतेन जीवादिक्रमाभिधानप्रयोजनमुक्तं वेदितव्यमिति, जीवादीनां लक्षणादेरभिधानावसर इत्याह—'तांल्लक्षणत' इत्यादि, तान्—जीवाजीवादीन् लक्षणतः—स्वचिह्नेन विधानतो—भेदेन चशब्दाद् भेदप्रभेदपरिग्रहः, पुरस्ताद्—उपरिष्टात् विस्तरेण—प्रपंचेन उपदेक्ष्यामः—सामीप्येन कथयिष्यामः, 'उपयोगो लक्षणं' (२–८) स द्विविधोऽष्टचतुर्भेदः (२–९) तथा संसारिणो मुक्ताश्च (२-१०) समनस्कामनस्काः (२–११) संसारिणस्त्रसस्थावरा (२-१२) इत्यादिना ग्रन्थेन॥ एते च जीवादयः नामादिभेदैरनुयोगद्वारैः तथा प्रत्यक्षपरोक्षाभ्यां प्रमाणाभ्यां नैगमादिभिश्च वस्त्वंशपरिच्छेदिभिर्नयैः तथा निर्देशस्वामित्वादिभिःसत्संख्याक्षेत्रादिभिश्च प्रकारैरधिगन्तव्याः, तत्र व्यापकत्वान्नामादीनामादावेभिर्निरूपयन्नाह—

नामस्थापनाद्रव्यभावतस्तन्न्यासः ॥ ५ ॥ सूत्रं ॥

नामस्थापनाद्रव्यभावत इति तृतीयार्थे तसिः, नामादिभिर्जीवादीनां निक्षेपः कार्य इति सूत्रपिण्डार्थः । एनमेव प्रकटयन्नाह भाष्यकारः—'एभि'रित्यादि (पृ.९-१६) एभिरिति सूत्रोक्तैः नामादिभिः—नामस्थापनाद्रव्यभावैश्चतुर्भिरिति नामादीनामुपलक्षणव्यवच्छेदार्थं संख्या, इहाधिकारे एभिरेवेत्यर्थः,'अनुयोगद्वारै'रिति अनुयोगः—सकलगणिपिटकव्याख्या तस्य द्वाराणि—अधिगमोपायास्तैः, किमित्याह—'तेषा'मित्यादि, तेषामित्यनन्तरोक्तसूत्रोक्तानां, तानेव स्पष्टयति—जीवादीनां तत्त्वाना-

मिति, किमित्याह—'न्यासो भवति' विरचना कार्येत्यर्थः, किमर्थमादावित्याह—'विस्तरेणे'त्यादि, विस्तरेण—प्रपञ्चेन लक्षणतो विधानतश्चाधिगमायेति, यदुक्तं प्राग् लक्षणतो विधानतश्च पुरस्ताद्विस्तरेणोपदेक्ष्याम इति, तत्र लक्षणविधानाभ्यामप्यभिधाने चशब्दात् स्वभेदप्रभेदैर्विस्तरेणाधिगमायेति, तत्राप्युपयोगो लक्षणं संसारिणो मुक्ताश्चेत्यादौ उपयोगः चतुर्भेदः संसारश्चेति नामादिन्यासव्याख्यावतारणेन प्रपंचाधिगमायेत्यर्थः,आदावुक्तोऽयं सर्वत्रावधारयितुं शक्यत इतिभावः। एनमेवोपन्यस्य पर्यायेण व्याचिख्यासुराह—'न्यास' इत्यादि,न्यासः कः ?, उच्यते—निक्षेप इत्यर्थः,एतन्नामादि यथा लक्ष्येऽवतरति तथाऽभिधातुमाह—'तद्यथे'त्युदाहरणोपन्यासार्थः,नामजीव इत्यादि, नाम्नैव जीवः नामजीवः,जीवशब्द इत्यर्थः,एवं स्थापना जीवाकारा प्रतिकृतिः, एवं द्रव्यं तद्गुणवियुक्तः,एवं भावस्तद्गुण इति, एवं चत्वार्य्यपि तत्त्वं सर्वेभ्योऽर्थानर्थसिद्धेरिति,यद्वा एकस्मिन्नेव शरीरिणि चतुष्टयं,तत्र यो जीव इतिशब्दः प्रवर्त्तते स नामजीवः,य आकारः करावयवसन्निवेशः स स्थापनाजीवः,विवक्षया ज्ञानादिगुणवियुक्तत्वं द्रव्यजीवो,ज्ञानादिगुणपरिणतिभावत्वं तु भावजीव इति ॥ सम्प्रति नामादीनां जीवविशेषणतयोपात्तानां स्वार्थं लक्ष्ये दर्शयति—'नामे'त्यादिना,नामेति किमुक्तं भवति ?-संज्ञा नाम करणमित्यनर्थान्तरमेतत्,अनेन शब्देनेदं वस्त्वभिधीयत इतियावत्,एतदेवाह-'चेतनावत' इत्यादिना, चेतना—ज्ञानं सा यस्यास्ति तच्चेतनावत्,तद्विपरीतमचेतनं,'द्रव्यस्ये'ति (तस्य) प्रदर्शनमिदं,गुणक्रिययोरपि नामादिचतुष्टयप्रवृत्तेः, द्रव्यव्यतिरेकेण वा गुणक्रियाऽभावात् प्राधान्यख्यापनपरं,अतस्तस्य द्रव्यस्य चिन्ता न क्रियते,व्यवहारार्थं संज्ञा—सङ्केतः क्रियते, कीदृगित्यत आह—'जीव'इति,इतिना स्वरूपे जीवशब्दः स्थाप्यते, जीव इत्ययं ध्वनिः तच्चेद्वाच्योऽर्थो नामतया नियुज्यते स नामजीव इति,स इत्यनेन तत्र चेतनावत्यचेतने वा यदृच्छया यो जीवशब्दो नियुक्तस्तं व्यपदिशति स शब्दो नामजीव इत्युच्यते,न तद्वस्तूपाधिक

इति, ' अर्थाभिधानप्रत्ययास्तुल्यनामधेया ' इति न्यायात् । सम्प्रति स्थापनाजीवं कथयति-'यः काष्ठपुस्त' इत्यादिना, यः स्थाप्यते जीव इति संबन्धः,कः स्थाप्यते ? काष्ठपुस्तादिष्वित्याह-काष्ठं-दारु पुस्तं-दुहितृकादि सूत्रचीवरादिविरचितं चित्रं-चित्रकराद्यालिखितं, कर्म्मशब्दः क्रियावचनः प्रत्येकमभिसम्बध्यते, काष्ठक्रियेत्यादि,अक्षनिक्षेप इति सामयिकी संज्ञा चन्दनकानां,निक्षेपो रचना विन्यास इति, एते काष्ठपुस्तचित्रकर्म्माक्षनिक्षेपा आदिर्येषां रच्यमानानां ते काष्ठपुस्तचित्रकर्म्माक्षनिक्षेपादयः, आदिशब्दश्चोभाभ्यां सम्बन्धनीयः, काष्ठपुस्तचित्रकर्म्मादयो ये सद्भावस्थापनारूपाः तथा अक्षनिक्षेपादयोऽसद्भावस्थापनारूपा ये तेषु वस्तुषु 'स्थाप्यते' जीवाकारेण रच्यते-जीव इति यो जीवाकारो रचितः स स्थापनाजीवोऽभिधीयते, एतदुक्तं भवति-शरीरानुगतस्यात्मनो य आकारो दृष्टः स तत्रापि दृश्यत इतिकृत्वा स्थापनाजीवोऽभिधीयते, ननु चाक्षनिक्षेपे नास्त्यसावाकार इति, उच्यते, यद्यपि शरीरूपतया नास्ति तथापि बुद्ध्या स रचयिता तत्र रचयति तमाकारम्, अत एव स्थापना नामद्रव्याभ्यां सुदूरं भिन्ना, यतो निक्षिप्यमाणं वस्तु न शब्दो भवति, नापि तद्भाववियुक्तं विवक्ष्यते, किंत्वाकारमात्रं यत्तत्र तद्विवक्षितमिति । स्थापनाजीवं दृष्टान्तेन भावयति-'देवताप्रतिकृतिवदि'त्यादिना, देव एव देवता तस्याः प्रतिकृतिः-प्रतिबिम्बं, सा च न सैव सहस्राक्षशूलपाणिमयूरवाहनादिरूपा, नापि ततोऽत्यन्तभिन्नस्वभावाऽन्यैव, किन्तु तत्समानपरिणामरूपा तथा प्रतीतिरिति, तद्वत् इन्द्रो देवाधिपः रुद्रः-उमापतिः स्कन्द इति स्कन्दकुमारः, उत्तरपदलोपात्, सत्यभामा सत्येति यथा, विष्णुः-वासुदेवः, रुद्रादीनां न देवतात्वं शास्त्रे,लौकरूढ्या त्वेवमुपन्यासः, यथेन्द्रादीनां प्रतिकृतिः स्थापिता सतीन्द्र इति व्यपदिश्यते तथा जीवाकृतिरपि काष्ठादिषु स्थापिता जीव इति भावः । अधुना द्रव्यजीवमाह-'द्रव्यजीव'इति, इतिः प्रकारार्थः, योऽयं प्रकारः प्रागुपन्यस्तः स उच्यते,

'गुणपर्यायवियुक्त'इति सहवर्तिनो गुणाः–चैतन्यसुखादयः क्रमवर्तिनः पर्यायाः–तिर्यङ्मनुष्यादयः, गुणाश्च पर्यायाश्चेति द्वन्द्वस्तैर्वियुक्तो, रहित इत्यर्थः, ननु द्रव्यगुणादेरभेदप्रतिज्ञानात् कथमेतदित्याह–'प्रज्ञास्थापितः' प्रज्ञा–बुद्धिस्तया स्थापितः, गुणादिभेदेन बुद्ध्या कल्पितः इत्यर्थः, स एव विशेष्यते—'अनादी'त्यादिना, अनादिश्चासौ पारिणामिकभावश्च तेन युक्तः, इह भाव औदयिकादिरूपोऽपि भवति तद्व्यपोहाय पारिणामिकग्रहणं, असावप्यभ्रेन्द्रधनुरादिना सादिपारिणामिक इत्यनादिग्रहणं, एवमनादिपारिणामिकभावयुक्तो जीव उच्यते द्रव्यजीव इति, अस्य कल्पनया द्रव्यमात्रत्वादिति, तत्त्वतो निर्विषयेयं कल्पना,गुणपर्यायवियुक्तस्य तस्य वान्ध्येयादिवदसम्भवात्, भूतभाविभावत्पर्याययोग्यता चेह द्रव्यलक्षणं न समस्तीति मन्यमान आह—'अथवा शून्योऽयं भङ्ग'इति, निर्विषय इत्यर्थः, एतदेव स्पष्टयति–'यस्ये'त्यादि, यस्येति वस्तुनः, हिशब्दो यस्मादर्थे, अजीवस्य—चेतनारहितस्य सतो–विद्यमानस्य भव्यं—भविष्यत् जीवत्वं–चेतनावत्त्वं स्याद्—भवेत् स द्रव्यजीवः स्यात्, भाविजीवकारणतया, यद्येवमपि सति को दोष इत्याह—'अनिष्टं चैतदि'ति, चशब्दः एवकारार्थः, अनिष्टमेवैतत्, एवं ह्यजीवस्य जीवभावे जीवस्याप्यजीवभाव इति सिद्धान्तविरोधः, आह–एवमपि विरोध एव, यत उक्तं—"जत्थ उ जं जाणेज्जा निक्खेवं निक्खिवे निरवसेसं । जत्थवि अ ण जाणेज्जा चउक्कयं निक्खिवे तत्थ ॥१॥"त्ति, चतुष्टयस्य व्यापितोक्ता सा विरुध्यते, न, अस्य बाहुल्यविषयत्वात्, प्रायः सर्वपदार्थेष्वन्येषु सम्भवात्, इहापि जीवपदार्थज्ञस्तत्र चानुपयुक्त इति द्रव्यजीवोपपत्तेः, तत्तथाभावेन योग्यतालक्षणं तु द्रव्यत्वमधिकृत्य भाष्यकारेणास्य प्रतिषेधः कृत इति, भावजीवमधिकृत्याह—'भावतो जीवा' इति, अत्रैकवचनोद्देशे बहुवचननिर्देशः एकपुरुषवादनिरासार्थः,तथा चाहुरेके—'पुरुष एवेद'मित्यादि, भावत इति च तृतीयार्थे

तसिः, भावैः सह ये वर्त्तन्त इत्यर्थः, अत एवाह–'औपशमिके'त्यादिना, औपशमिकादीनां भावानां लक्षणं इत्थं क्रमाभिधाने प्रयोजनं च द्वितीयाध्यायादिसूत्रे वक्ष्यामः 'औपशमिकक्षायिकौ भावा'वित्यत्र(अ.२-सू.१), ततश्चौपशमिकादिभावयुक्ताः,इत्यनेन निःस्वभावजीववादव्यवच्छेदमाह, तथा चाहुरेके—"निःस्वभावाः जीवाः संवृतैः सन्तः" "अकार्यांकरणैकस्वभावा"इति चान्ये, 'उपयोगलक्षणं' इति साकारनाकारसंविल्लक्षणाः, ते च नैकरूपाः, किन्तु ?, 'संसारिण' इत्यादि, संसार उक्तलक्षणः स एषामस्ति ते संसारिणो-नारकादयः, 'मुक्ताश्चे'ति मुक्ताः कर्म्मसम्बन्धेन, एते एकसमयसिद्धादयः, चशब्दात् सप्रभेदाः द्विधा वक्ष्यन्ते द्वितीयेऽध्याये, एवं जीवे नामादिन्याससुपदर्श्याजीवादिष्वतिदिशन्नाह—'एव' मित्यादि, एवमिति यथा जीवे तथा अजीवादिषु,अपिशब्दात्तद्भेदेष्वपि धर्म्मास्तिकायादिषु,अत एवाह–'सर्वेष्वि'ति व्याख्या अनुगन्तव्यमिति-नामादिचतुष्टयं कथनीयं, यथा नामाजीवः नामधर्म्मास्तिकाय इत्यादि,एवमिदमक्षरमात्रगमनिकया नामादिस्वरूपं व्याख्यातं,वस्तुधर्म्मत्वं चैतेषां सूक्ष्मोपपत्तिभिः संमत्यादिभ्योऽवसेयं, लेशतस्तु दर्श्यते-वस्तुधर्मो नाम,तत्प्रतीतिहेतुत्वात्, तथा लोकसिद्धेः स्तुत्यादौ सुखादिभावात् स्तवफलोपपत्तेश्च,एवं स्थापनाऽपि वस्तुधर्म्म,तदुद्देशेन करणात् भेदेन प्रवृत्तेः तदाकाराराधनात् तद्धेतुकश्रेयःसिद्धेश्च, द्रव्यभावौ तु तस्यैव तथाभवनात् साधुदेवाद्युदाहरणतः सुज्ञानावेव,इह च नामस्थापने अधिकृतवस्तुभिन्ने कथंचित् ये ते तद्वत फलासाधनात् वस्तुनि प्रवृत्तिनिमित्ताभावात् वहिःपर्यायरूपे इति केचिद् व्याचक्षते, न चैतदनार्पमित्यलं प्रसङ्गेन॥ साम्प्रतं येऽपि जीवादीनां शब्दास्तेष्वप्यस्य नामादिचतुष्टयस्यावतार इत्येतत् कथयन्नाह–'पर्यायान्तरेणापी' त्यादि, प्रधानशब्दस्य तदर्थशब्दान्तराणि पर्यायाः पर्यायादन्यः पर्यायः पर्यायान्तरं तेनाप्यस्य चतुष्टयस्य न्यासः कार्यः, तदाह–'नामद्रव्य' मित्यादि, (पृ. ८–१३)

एतज्ज्ञाप्यं नामादिजीवव्याख्यानेन भावितमेव यावत् केचिदप्याहुरित्यादि, केचित् पुनर्ब्रुवते, 'यद् द्रव्यतो द्रव्यं भवती'ति यदि-ति द्व्यणुकादि, द्रव्यत इति च तृतीयार्थे पंचम्यर्थे वा तसिः, द्रव्यैः सम्भूय यत् क्रियते, यथा बहुभिः परमाणुभिस्त्रिप्रदेशिकादिः स्कन्धः, अथवा तस्मादेव भेदे परमाणुद्विप्रदेशिकादिश्च तद् द्रव्यद्रव्यं, द्रव्यतो द्रव्यस्यैव भवनादिति, एतद्विशेषे स्थापयन्नाह— 'तचे' त्यादि, तच्चैतद् द्रव्यं पुद्गलद्रव्यं द्रव्यमेव भवति, नान्यद् धर्मादि इत्येवं प्रत्येतव्यं, धर्मादेरन्यैः सम्भूयाकरणात्, भिद्यमानाणामन्यवस्त्वनुत्पत्तेरिति, पुद्गलेषु चैवमुत्पादो न्याय्य इत्येतदाह—'अणव' इत्यादिना, अणवः–परमाणवः स्कन्धाश्च–द्विप्रदेशिकादयः सङ्घातभेदेभ्यः उत्पद्यन्ते, संघातात् स्कन्धाः, भेदादणवः, इत्येवं वक्ष्यामः पञ्चमेऽध्याय इति ॥ भावद्रव्यमभिधातुमाह— 'भावतो द्रव्याणी' त्यादि, अत्र भावद्रव्यमित्येकं विन्यस्य भावतो द्रव्याणीति बहुवचननिर्देशः पराभिमतं यदेकं विश्वस्य कारणमनादिद्रव्यं, यथाहुरेके–"आप एवेदं खल्विदमग्रे आसी" दिति तद्व्यपोहेन द्रव्यबहुत्वख्यापनार्थं, कानि तानीत्याह– "धर्म्मादीनि पंच सगुणपर्यायाणी'ति, सहवर्त्तिनो गुणाः–अमूर्त्तत्वादयः क्रमवर्त्तिनः पर्यायाः–अगुरुलघ्वादयः, तद्भाजि, मा भूद्गुणादिभेदेन नित्यान्येवेत्याह–'प्राप्तिलक्षणानी'ति, तान्येवान्यानन्यांश्च धर्म्मान् प्रतिपद्यन्ते परिणामलक्षणानीति-यावत्, तथा च जीवो देवादिभावेन परिणमते पुद्गलाः कृष्णादित्वेन धर्मादयस्तद्गमनादिनिमित्तत्वेन, 'वक्ष्यन्त' इति उपरिष्टात्, प्राप्तिलक्षणानीति यदुक्तं सा न स्वमनीषिकेत्यागममाह—'आगमतश्चे'त्यादिना, आगमत इति तसिः सप्तम्यर्थे, चशब्दोऽपिशब्दार्थे, आगमेऽपि पूर्वाख्ये कथ्यमाने 'प्राभृतज्ञ' इति व्याकरणमूलयोनिभूतशब्दप्राभृतज्ञो गुरुः, किमित्याह—'द्रव्यमिती' त्यादि, द्रव्यमित्यस्यार्थं तीर्थकृत् किमाहेति परिपृष्टो जगाद–'भव्यमाहे'ति, एतदपि साम्प्रतं कथमवगम्यत इति चेत्

शब्दप्राभृतविनिर्गतव्याकरणश्रुतेः,तदाह–'द्रव्यं च भव्य' इति, अस्यायमर्थः–द्रव्यमिति निपात्यते भव्यं चेद्भवति,भव्यमित्यपि सन्देहास्पदमेव केषांचिदिति स्पष्टयति–'भव्यमिति प्राप्यमाह' प्राप्तव्यं तैस्तैः स्वगतैः परिणतिविशेषैर्गत्यादिभिः प्राप्नोति वा तानिति प्राप्यं, ननु चायं भवतिरकर्मकः सत्ताभिधायी कथं प्राप्यमित्यनेन कर्माभिधायिना कृत्येन भव्यमिति अस्यार्थो निरूप्यते ?, उच्यते, नैवायं सत्ताभिधायी, किं तर्हि ?, प्राप्त्यभिधायी, चुरादावात्मनेपदी, तदाह–'भू प्राप्तावात्मने' प्राप्त्यभिधायिता कथ्यतेऽनेन,'तदेव'मिति प्राप्त्यभिधायित्वे सत्ययमर्थो भव्यशब्दस्य स कर्मसाधनपक्षे, प्राप्यन्ते स्वधर्मैर्यानि तानि भव्यान्युच्यन्ते, कर्तृसाधनपक्षे तु प्राप्नुवन्ति तान्येव धर्माणीति भव्यान्युच्यन्त इति, एतदाह–'प्राप्यन्ते प्राप्नुवंतीति वा द्रव्याणी'ति, अन्ये तु व्याचक्षते–आगमतश्च प्राभृतज्ञ इति द्रव्यप्राभृतपदार्थज्ञो भावद्रव्याणि, द्रव्यमिति च भव्यमित्यादि नोआगमतो द्रव्यलक्षणाभिधानप्रतिपादनपरमिति, एतच्च न भाष्यकाराभिप्रायानुसारीति नातीव शोभनं व्याख्यानं, अननुसारित्वं च 'अथवा शून्योऽयं भङ्ग' इत्यभिधानात्, योग्यतालक्षणमेव द्रव्यमस्यात्राभिप्रेतमिति गम्यते, अन्यथा जीवपदार्थस्तत्र चानुपयुक्तो द्रव्यजीव इत्यनेन प्रकारेणास्यापि सम्भवात् स शून्यो न स्यादिति कृतं विस्तरेण। सम्प्रति जीवादीनां न्यासं प्रदर्श्य तेषां पर्यायस्य द्रव्यशब्दस्य अन्येषामप्येवमेव कार्य इत्यतिदिशन्नाह—'एवं सर्वेषा'मित्यादि, एवं यथा जीवादीनां द्रव्यशब्दस्य तथा 'सर्वेषां' गुणक्रियादिशब्दादीनामिति (अनादिमतां) भव्याभव्यादीनां आदिमतां च मनुष्यादीनां पर्यायाणां, 'जीवादीनां मोक्षान्तानां' सम्बन्धिनामनादिमदादीनां 'तत्त्वार्थाधिगमार्थ'मिति तत्त्वस्य–परमार्थस्य भावस्याधिगमो–ज्ञानं तदर्थं 'न्यासः कार्य' इति, बुद्धिमता मुमुक्षुणा निक्षेपः कार्य इत्यर्थः ॥ एतेषामेवाधिगममभिधातुमाह—

प्रमाणनयैरधिगमः ॥६॥ सूत्रं।

प्रमाणनयैः करणभूतैर्वक्ष्यमाणलक्षणैरधिगमो भवति जीवादीनामिति सूत्रसमुदायार्थः, अवयवार्थाभिधित्सयाऽऽह भाष्यकारः –'प्रमा'मित्यादि (पृ-९-१०) प्रक्रमप्रदर्शितानां जीवादीनां तत्त्वानामिति पूर्ववद् व्याख्या, 'यथोद्दिष्टाना'मिति यथापरिपाट्या गागस्त्येनाभिहितानां 'नामादिभिर्न्यस्ताना'मिति नामादिसूत्रे नामस्थापनादिभिर्भेदैर्निक्षिप्तानां, एतदेव स्पष्टयति, अधिगमो (मे) पर्यायार्थमुपक्षिप्तानामित्यर्थः, अनेको जीवशब्दवाच्योऽर्थ इति यथाप्रयोजनं तद्विशेषाधिगमाय न्यस्तानामिति भावः, किमित्याह–'प्रमाणनयै'रित्यादि, प्रमाणनयैः–ज्ञानविशेषरूपैः 'विस्तराधिगमो भवति' एकैकस्य तत उद्घटनादप्रकृष्टस्य विस्तरेण–लक्षणविधानाख्येन 'अधिगमः' परिच्छेदो भवति, एतदुक्तं भवति–यदा अधिगमः तदा न प्रमाणनयान्विरहा (हय्य) इति, प्रमाणसंख्यानियमायाह–'तत्र प्रमाण'मित्यादि, 'तत्रे'ति वाक्योपन्यासार्थः, प्रमीयतेऽनेन तत्त्वमिति प्रमाणं, करणार्थाभिधानः प्रमाणशब्द इति, आत्मा सुखादिगुणकलापोपेतो मत्यादिना साधकतमेनावबुध्यते विषयमित्यर्थः, आह–यदि तेन करणभूतेनावबुध्यते आत्मेति तर्ह्यनवबोधक्रियाप्रमाणत्वे एवमवबोधात्मकमेवेत्यनिष्टावाप्तिः, नैतदेवं, सपर्यायस्यैव करणत्वात्, तस्य कथंचित् ततोऽव्यतिरेकात्, अन्वयव्यतिरेकयोगेन चित्रस्वभावत्वात्, तेन करणभूतेनात्माऽवबुध्यत इत्युपपन्नं, तथाहि–भिन्नः ग्राह्यग्रहणस्वभावः क्रियायाः कथंचित् अभिन्न आत्मा तत्त्वतः प्रमाणं, तदत्र शाब्दं न्यायमधिकृत्योपसर्जनीकृतक्रियावत्क्रियाभिधायी प्रमाणशब्दः, तदभेदाच्चात्मावबोध इति न कश्चिद्दोषः, एवं कर्तृसाधनादिपक्षेष्वपि प्रमिणोति–अवगच्छतीति प्रमाणमित्येवमादिष्वभिहितार्थानुसारतो भावना कार्या, मुख्यस्त्वयं प्रमाणशब्दः करणसाधन एवेति नात्र

यतः, 'द्विविध'मित्यनेन संख्यानियममाह, द्विविधमेव, न त्रिविधादि, द्वैविध्यमेव दर्शयति–'**परोक्षं प्रत्यक्षं च वक्ष्यते**' इति, पराणि–द्रव्येन्द्रियाणि मनश्च तन्निमित्तं ज्ञानं परोक्षमित्यादि, धूमादग्निज्ञानवत्, प्रत्यक्षं पुनरश्नात्यश्नुते वाऽर्थानित्यक्षः–आत्मा तस्याक्षेन्द्रियमनांसि अनपेक्ष्य यत् स्वत एवोपजायते तत् प्रत्यक्षम्—अवध्यादि, चशब्दः स्वगतानेकभेदसमुच्चयार्थः, एतच्च वक्ष्यत उपरिष्टात् "इत्थमुपन्यासे चैवमेवानयोर्भाव इति प्रयोजनं" '**चतुर्विधमित्येके**' इति चतुर्विधं प्रत्यक्षानुमानोपमानागमभेदेन एके सूरयो मन्यन्ते, कथमित्याह–'**नयवादान्तरेण**' यतः केचिन्नैगमादयो नयाश्चतुर्विधमभ्युपयन्ति, अत एवानुयोगद्वारेषु चतुर्विधमुपन्यस्तमिति, एतच्च यथा अवस्थितं चातुर्विध्यं तथा भाष्यकार एवोत्तरत्र दर्शयिष्यति। एवं प्रमाणावयवं निर्भिद्य व्युत्पत्त्यादिद्वारेण नयावयवं विभजयन्नाह–'**नयाश्चे**'त्यादि, नयन्तीति नयाः, अनेकधर्मात्मकं वस्तु एकधर्मेण नित्यमेवेदमनित्यमेवेति वा निरूपयंतीत्यर्थः, एते च पञ्च नैगमादयो वक्ष्यन्त उपरिष्टात्, अत एव सर्वनयावलंबि नः प्रमाणं ज्ञानी (नं), अमीषां भेदेनाभिधानं, तथाहि–प्रमाणं समस्तवस्तुस्वरूपपरिच्छेदात्मकं मत्यादीति, अतः प्रमाणं सम्यग्ज्ञानं, नयास्तु मिथ्याज्ञानं, यत आह–'एवं सव्वेऽपि नया मिच्छादिट्ठी'त्यादि, एवं च कृत्वा प्रमाणशब्दस्याभ्यर्हितत्वात् सूत्रे पूर्वनिपात इति न चोद्यावकाशः। अपरे वर्णयन्ति–परस्परापेक्षया नैगमादयो नया इति व्यपदिश्यन्ते अध्यवसायास्तैः परस्परापेक्षैर्ज्ञानं समस्तवस्तुस्वरूपालंबनं जन्यते, तदनवगतवस्तुपरिच्छेदाभ्युपायत्वात् प्रमाणं, ये पुनर्नैगमादयो निरपेक्षाः परस्परेण ते नयाभासा इति॥ 'किंचान्य'दित्यनेनोत्तरसूत्रं सम्बन्धयति, नैतावतैव विस्तराधिगमस्तत्त्वानां, यतोऽन्यदपि विस्तराधिगतौ कारणमस्ति, किं तत्?, निर्देशादि, के पुनर्निर्देशादय इत्युक्त आह—

निर्देशस्वामित्वसाधनाधिकरणस्थितिविधानतः ॥ सूत्रं ॥ ७ ॥

न तावन्निर्देशादीनेव व्याचष्टे, सम्बन्धवाक्यमेव समर्थयति–'एभिश्चे'त्यादि, (पृ. १०-१) एभिश्च, चशब्दात् प्रमाणनयसदादिभिश्च, एभिश्चेति सामान्यशब्दनिर्देशे न विशेषावगतिरस्त्यतो विशेषार्थमाह–(निर्देशादिभिरिति)निर्देशशब्देन निर्देशे सति नैसरूप्यपरिज्ञानमस्तीति, समासे चाव्यक्ताभिधानं प्रसिद्धं, न सूत्रादपीयत्तासम्भाव्येत, अतः 'षड्भि'रित्याह, उक्तेऽपि षड्भिरित्यस्मिन् किमेतानि व्याख्याद्वाराणि उत नेति याऽऽशङ्का तन्निरसनायाह—अनुयोगद्वारैः, व्याख्यान्तरैरित्यर्थः, एषां च व्यापिताऽस्ति नास्तीति आशङ्काव्युदासायाह–'सर्वेषा'मिति, उक्तेऽपि चैतस्मिन्नभावो सर्वशब्देनोपात्तस्तन्निराचिकीर्षयाऽऽह -'भावाना'मिति,अभावो हि व्यर्थत्वात् प्रयासस्य न तद्विषयमेतदिति कथयति,भावा अप्यन्यमताभिमताः सन्त्यतत्स्वरूपा इत्यतो द्वयमुपादत्ते–'जीवादीनां तत्त्वाना'मित्येतत्, ते च जीवादयः किमेभिः समासेन निरूप्यन्ते उत व्यासेनेत्यत आह–'विकल्पश'इति, शसश्च कारकसामान्याद्विधानमिति तृतीयार्थ एष इति, एतत् कथयति–'विस्तरेणे'त्यनेन, उक्तेऽपि चैतस्मिन्नसम्पूर्णमेव वाक्यं स्यात्, यदि पूर्वसूत्रादधिगम इत्येतन्नानुवर्त्तते, अतोऽनुवर्त्तत इति कथयति–अधिगम इति, सत्तां च पदार्थो न व्यभिचरति यद्यपि तथापि अन्यास्याः क्रियाया नाध्याहारः कर्त्तव्यः,ततश्च–भवतीत्याह,अनेनैव सूत्रसमुदायो व्याख्यातः,अवयवार्थं तु व्याख्यानयन्नाह–'तद्यथे'त्यादि, यथैते भाव्यन्ते निर्देशादयस्तथा कथ्यन्ते, निर्देश इति व्याख्येयावयवोपन्यासः, अस्य तूद्देशपूर्वकत्वात् प्रश्ने सति निर्देशोपपत्तेरेतद्व्याचिख्यासयैवोद्देशमाह–'को जीव'इति, किं द्रव्यं गुणः क्रियेति पृष्टे निर्दिशति–'औपशमिकादी'त्यादि,औपशमिकादयो वक्ष्यमाणास्त एव भावाः तथाभवनादात्मनः तैर्युक्तः द्रव्यं जीवः, न द्रव्यमात्रं,

नापि केवला भावाः, उभयमित्यर्थः१। स्वामित्वादयो जीवेऽभ्युह्या अनया दिशेति न दर्शितवान्,वयं तु दर्शयामः,स्वामी-प्रभुस्तद्भावः स्वामित्वं,जीवो हि कस्य प्रभुः ?, जीवस्य वा के स्वामिन ? इति,उच्यते,जीव एकोऽवधी(ऽधि)कृतः धर्म्मादीनामस्तिकायानां स्वामी, यतः सर्वेषु मूर्च्छां यात्युपलभते परिभुंक्ते शरीरतया वाऽऽदत्ते अतः सर्वेषां जीवः स्वामी, जीवस्यापि जीवाः अन्ये तन्मूर्च्छाकारिणः स्वामिनो भवन्ति २। साध्यते येन तत् साधनं,केन चात्मा साध्यते ?,उच्यते,नान्येनासौ,सततमवस्थितत्वात्,बाह्यान् वा पुद्गलानपेक्ष्य देवादिजीवस्तैः साध्यत इति, तैः स्वस्थानं नीयत इतियावत् ३। अधिकरणमाधारः, कस्मिन्नात्मा ?, निश्चयस्य स्वात्मप्रतिष्ठत्वात् आत्मनि, व्यवहारस्य शरीराकाशादौ स्थितः, आत्मरूपादनपगमः ४। कियन्तं कालमेष जीवभावेनावतिष्ठते ?,भव(चक्र)मङ्गीकृत्य सर्वस्मिन् काले,देवादींस्तु भवानङ्गीकृत्य यावती यत्र स्थितिस्तावन्तं कालं तत्रावतिष्ठत इति ५। विधानं प्रकारः,कतिप्रकारा जीवाः ?,त्रसस्थावरादिभेदाः,एवं शेषा अपि सिद्धान्तानुसारिण्या धिया अवलोक्य पारमार्षं प्रवचनं वाच्याः,ग्रन्थगौरवभयात्तु नादिद्रिये भाष्यकारः, तथा यदर्थं शास्त्रप्रवृत्तिस्तत्रापि योजनां निर्देशादीनां कुर्वन्नाह—'सम्यग्दर्शनपरीक्षाया'मित्यादि, यदा सम्यग्दर्शनं परीक्ष्यते तदापि सम्यग्दर्शनं किं गुणः ? क्रिया ? द्रव्यमिति पृष्टे निर्देशा भवन्ति, उच्यते-द्रव्यं, कथं ?, ये जीवेन शुभाध्यवसायविशेषेण विशोध्य पुद्गलाः प्रतिसमयमुपभुज्यन्ते अतस्ते सम्यग्दर्शनस्य निमित्तं, तदुपष्टम्भजन्यत्वात् तत्त्वार्थश्रद्धानपरिणामस्य, ततश्च कारणे कार्योपचारात् द्रव्यं सम्यग्दर्शनं, मुख्यया वृत्त्या तु तत्त्वार्थश्रद्धानरूप आत्मपरिणामः, सोऽपि नात्मव्यतिरिक्त एवेति द्रव्यमित्युक्तं, आह—यदि यथोक्ताः पुद्गलास्तदुपष्टम्भजन्यो वाऽऽत्मपरिणामः सम्यग्दर्शनं न तर्हि क्षीणदर्शनमोहनीयस्य छद्मस्थकेवलिसिद्धजीवस्य सम्यग्दर्शनमित्युक्ते आह-'सम्यग्दृष्टिर्जीव'इति सम्यक्-शोभना सदसत्प-

दार्थावलोकिनी दृष्टिर्यस्य स क्षीणदर्शनमोहनीयस्य सम्यग्दृष्टिर्जीव इति,एतदुक्तं भवति क्षीणे दर्शनमोहनीये न सम्यग्दर्शनी भण्यते, किं तर्हि ?,सम्यग्दृष्टिरेवेति,अतः सिद्धसाध्यतेतिभावः,स पुनः क्षीणदर्शनमोहः किं रूपी ?,नेत्याह-'अरूपी' अविद्यमानं रूपमस्येत्यरूपी, सर्वधर्म्मादिषु क्षेप्यः, नासौ रूपादिधर्म्मसमन्वितः, अमूर्त्त आत्मेति, छद्मस्थकेवलिनोर्यद्यपि कर्म्मपटलोपरागस्तथाप्यात्मा न स्वभावमपजहाति, आगंतुकं हि कर्म्मरजो मलिनयत्यात्मानमभ्रादिवच्चन्द्रमसं, सिद्धास्तु सर्वथाप्यरूपा एव, स एव सम्यग्दृष्टिः इदानीमाशंस्येत-किं स्कन्धो ग्राम इति, तन्निरासायाह-'नो स्कन्धः' अरूपत्वादेव न स्कन्धः-पुद्गलादिरूपः, स्वप्रदेशाङ्गीकरणात्तु स्यात् स्कन्धः,अथवा पंचास्तिकायसमुदिताः स्कन्धः,नोशब्दस्य तद्देशवाचित्वान्नोस्कन्धः सम्यग्दृष्टिः,एवं नोग्रामोऽपि वक्तव्यः, चतुर्द्दशभूतग्रामैकदेशत्वात् सम्यग्दृष्टेरिति । सम्प्रति स्वामित्वशब्दोच्चारणात् स्वामीत्यनेन 'कस्य'स्वामिनः सम्यग्दर्शनमिति, उद्देशवाक्यमेवं कृत्वा प्रवृत्तं—कियत्समवाप्येतत् ?, तस्यैवैतत्तदुक्तं, तदुत्पत्तिनिमित्तभूतस्यान्यस्यापि, व्यवहारार्थमाश्रीयते ? इति, उच्यते, मुख्येन तावत् कल्पेन यद् यत्र समवेतं तत् तस्यैवेति, व्यवहारार्थं तु निमित्तभूतस्याप्याश्रीयते, एतदाह— 'आत्मसंयोगेने'त्यादि, आत्मसंयोगेन—आत्मसम्बन्धेन, यदा ह्युत्पद्यमानस्य सम्यग्दर्शनस्य परतोऽपि निमित्तात् प्रतिमादिकात् नापेक्षा क्रियते प्रतिमादेस्तदाऽसौ परिणाम आत्मनि समवेत इतिकृत्वा स एवात्मा तेन परिणामेन तानि तत्त्वान्येवमभिमन्येत अत आत्मसंयोगेन जीवस्य सम्यग्दर्शनं,जीवस्य स्वामिनः सम्यग्दर्शनं-रुचिरिति, 'परसंयोगेने'ति पर-साधुप्रतिमादि वस्तु तन्निमित्तीकृत्य श्रद्धानपरिणाम उपजायते ततः स परिणामस्तत्कर्तृक इति तस्य व्यपदिश्यते, अत्र परसंयोगे षड् विकल्पा भवन्ति-जीवस्येत्यादयः, यदाऽस्य जन्तोः परमेकं मुनिमालम्ब्य क्रियानुष्ठानयुक्तं सा रुचिरुपजायते, क्षयोपशमो हि

द्रव्यादिपञ्चकमुररीकृत्य प्रादुरस्ति, अतो बहिरवस्थितस्य साधोरुत्पादयितुः सा रुचिः स्वं,कुम्भकारकर्मास्येति, एवमेकमजीवाख्यं
पदार्थं प्रतिमादिकं प्रतीत्य यदा क्षयोपशमः समुपजायतेऽतस्तदा तस्यैवाजीवस्य सम्यग्दर्शनं नात्मन इति,यदा पुनर्द्वौ साधू निमित्तं
क्षयोपशमस्य विवक्षितौ नात्मा तदा जीवयोः सम्यग्दर्शनं, यदा पुनरजीवौ प्रतिमाख्यावुभौ निमित्तीकृतौ तदा तयोः स्वामित्व-
विवक्षायां तत् सम्यग्दर्शनमिति, यदा पुनर्बहवो जीवाः साधवस्तस्योत्पत्तौ निमित्तं भवन्ति तदा जीवानां सम्यग्दर्शनं, न तु यत्र
समवेतमिति, यदा पुनर्बह्वीः प्रतिमा भगवतां दृष्ट्वा तत्त्वार्थश्रद्धानमाविर्भवति तदा च तासामेव तत्कर्तृकत्वात् नात्मन इति,
'उभयसंयोगेने'ति यदाऽऽत्मनोऽन्तरङ्गस्य बहिरङ्गस्य च साध्वादेस्तद्विवक्ष्यते तदा उभौ तस्य सम्यग्दर्शनस्य स्वामिनौ भवतः
इत्युभयसंयोगोऽभिधीयते, अत्र च लाघविक आचार्यो हेयान् विकल्पानादर्शयति, आदेयाः पुनरुपात्तव्यतिरिक्ताः, अयं तावदत्र
विकल्पो न सम्भवति–जीवस्य सम्यग्दर्शनमिति, यतोऽनेन षष्ठ्यन्तेन सम्यग्दर्शनस्य यः समवाय्यात्मा स वा भण्यते बाह्यो वा
तीर्थकरादिः यमवलोक्य स तादृशः परिणतिविशेषः समुदभूदिति ?,तत्र यद्यात्मा समवायी संबध्यते नास्ति तदा परस्य सम्बन्धः,
उभयसंयोगेन चैतच्चिन्त्यते, अथवा यदि तीर्थकरादिरभिसम्बध्यते तदा नात्माभिसम्बन्धः, अतः त्याज्य एवायं विकल्पः, एवं
नोजीवस्येति, अजीवस्येत्यर्थः, एकस्याः प्रतिमायाः विवक्षितत्वादुभयसंयोगाभाव इति हेयो विकल्पः, तथा जीवयोः सम्यग्द-
र्शनमिति न सम्भवति,यस्माद्वा तत्र समवायिनौ पुरुषौ स्वामितया विवक्षितौ, मम च सम्यग्दर्शनमस्य च सम्यग्दर्शनमुत्पन्नमिति,
यतस्तु तदालम्ब्योत्पन्नं तस्याविवक्षितस्वामितया उत्पादनिमित्तयोश्चोभयसंयोगो विवक्षितः अतस्त्यज्यते, तथा अजीवयोः
सम्यग्दर्शनमिति, द्वयोः प्रतिमयोरालम्बनीकृतयोर्भेदेन तद्विवक्षितं, यत्र तु समवेतं तत्राविवक्षा, अतस्त्यज्यते अयमपि विकल्पः,

तथा पंचमोऽपि त्याज्यः–जीवानामिति, अत्र बहव एव सम्यग्दर्शनसमवायिनो विवक्षिता जीवाः–अस्य चास्य चास्य चेति, न तु येनालम्बनेन तेषामुत्पन्नं तस्य तत् सम्यग्दर्शनं विवक्षितं, तस्मादयमपि त्याज्यः, षष्ठोऽप्यजीवानामिति त्यज्यते, आलम्ब्यानां बहूनां प्रतिमानामेतत् सम्यग्दर्शनं विवक्षितं, यत्र तूत्पन्नं तदविवक्षितमिति त्याज्य एव षष्ठो विकल्पः, एवमेते उभयसंयोगविवक्षायां षडपि त्यक्ताः, आदेया अपि षडेव, यथा जीवस्य च जीवस्य च, यस्य तदुत्पन्नं तस्य च तत्परिणन्तुः यं च निमित्तीकृत्य साधुमुपजायते तद्दर्शनं तस्य च तदिति, उभयोर्विवक्षितत्वात् स तत्त्वेन विकल्पः सम्भाव्यते १। तथा यस्य तदुत्पन्नं यस्य च विवक्षितं याभ्यां च दृश्यमानाभ्यां साधुभ्यां तदुत्पादितं तयोश्च साधुजीवयोस्तत् सम्यग्दर्शनमुभयत्रापि सतत्त्वेन विवक्षितत्वाज्जीवस्य जीवयोश्च द्वितीयो विकल्पः २। तथा यस्य तदुत्पन्नं यस्य च विवक्षितं यैश्च दृश्यमानैः साधुभिस्तदुत्पादितं तेषां च साधुजीवानां तत् सम्यग्दर्शनं, उभयत्रापि सतत्त्वेन विवक्षितत्वात् जीवस्य जीवानां च तृतीयो विकल्पः ३। तथा यस्य तदुत्पन्नं तस्य च विवक्षितं यया च दृश्यमानया प्रतिमया अजीवरूपयोत्पादितं तस्याश्च तदिति, तदा जीवस्य च तस्याश्च प्रतिमायाः तदिति सम्भाव्यते विकल्पो जीवस्याजीवस्य चेति ४। तथा जीवस्य यस्य तदुत्पन्नं याभ्यां प्रतिमाभ्यां दृश्यमानाभ्यां तदुत्पादितं उभयत्र विवक्षितत्वात् सम्भाव्यते अयं विकल्पो–जीवस्याजीवयोश्चेति ५। तथा यस्य तदुत्पन्नं याभिश्च प्रतिमाभिर्दृश्यमानाभिरुत्पादितं सर्वत्र विवक्षितत्वाज्जीवस्याजीवानां चेति भङ्गकः सम्भाव्यते ६। एतदाह–'शेषाः सन्ति' षडित्यर्थः, २। सम्प्रति तृतीयं द्वारं परामृशन्नाह–'साधन'मिति, साध्यते–निर्वर्त्यते येन तत् साधनं, अत्र पृच्छ्यमानं, तदाह–'सम्यग्दर्शनं केन भवति' याऽसौ रुचिः सुविशुद्धसम्यक्त्वदलिकोपेता सा केन भवतीति?, अत आह–'निसर्गादधिगमाद्वा भवतीत्युक्तं'

एतत् कथयति–न तावेव निसर्गाधिगमौ तादृशीं रुचिं जनयतः, किन्तु निसर्गाधिगमाभ्यां क्षयोपशमादयः कर्मणां जन्यन्ते, ततः क्षयोपशमादेः सम्यग्दर्शनं भवति, तावपि च निसर्गाधिगमौ कर्मणां क्षयोपशमादेरेव भवतः, ततस्ताभ्यामुत्तरोत्तरं क्षयोपशमं विशुद्धं विशुद्धतरमापादयमानाभ्यां यदा प्रतिविशिष्टः क्षयोपशमः आपादितो भवति तदा तस्मात् प्रतिविशिष्टात् क्षयोपशमात् सम्यग्दर्शनं भवतीति कथयति, तत्र निसर्गे बहु वक्तव्यमिति प्राक् तद्दर्शितमेव, एकेन च वाक्येन न शक्यं तत् समस्तं दर्शयितुमित्यतिदिशति–'तत्र निसर्गः पूर्वोक्तः', अधिगमोऽल्पविचारत्वादेकेन वाक्येन, समस्ताधिगमोपसंहारभावादाह–'अधिगमस्तु सम्यग्व्यायाम'इति,गुर्वादिसमीपाध्यासिनः शुभा क्रिया सम्यग्दर्शनोत्पादने शक्ता सा सम्यग्व्यायाम इत्युच्यते,'उभयमपी'त्यादि,उभयमपीति–निसर्गसम्यग्दर्शनमधिगमसम्यग्दर्शनं,तौ च निसर्गाधिगमावुभावपि,कथं भवतः?,अत आह–'तदावरणीयस्ये'त्यादि, तस्य–तत्त्वार्थश्रद्धानलक्षणस्य सम्यग्दर्शनस्य यदावरणीयम्–अनन्तानुबन्ध्यादि कर्म्म तस्य कर्म्मणः क्षयेण–उत्कलक्षणेनोपशमेन च क्षयोपशमाभ्यामिति च प्राप्यत इति । अत्र कश्चिदाह–तदावरणीयस्येति तत्त्वार्थश्रद्धानलक्षणज्ञानावरणीयं गृह्यते, ज्ञानावरणीयवर्जिते कर्मणि प्राय आवरणीयव्यवहाराभावात्,अत एव दर्शनं ज्ञानमिति,एतच्चायुक्तं,ज्ञानावरणीयस्योपशमाभावात्, स्यादेतत्,सत्यमेतत्,किन्तु मोहनीयोपशमात् यो ज्ञानावरणीयक्षयादिः ततः सम्यग्दर्शनमिति,तदप्ययुक्तं, उपशमेनेति पक्षान्तरोपन्यासानुपपत्तेः, हेतोः फलात् पूर्वमुपादानात् अतिप्रसङ्गाच्च, सातायुदयादपि क्वचिद् ज्ञानावरणीयक्षयादिभावादौदयिकप्रसङ्गादिति यत्किंचिदेतत्, तस्मात् सम्यग्दर्शनावारकमित्यनेनानन्तानुबन्ध्याद्येव तदावरणीयमुक्तमिति न दोषः २ । सम्प्रत्यधिकरणद्वारं परामृशति–'अधिकरण'मिति, अधिक्रियते यत्र तदधिकरणं आधारः–आश्रय इति,स च आधारस्त्रिविधः—

आत्मा वा यत् समवेतं दर्शनं मुख्यतः, उपचारात् परत्र भवति, यत्राङ्गादौ सम्यग्दृष्टिर्व्यवस्थितः तस्मिन्नपि तत्, उभयविवक्षायां नोभयत्र तत् आत्मनि परत्र च, एतदेव त्रैविध्यं दर्शयन्नाह-आत्मसन्निधानेनात्मन्येव स्थितमित्यर्थः परसन्निधानेन परत्र स्थितमिति, आत्मस्थमपि तदस्मिन् पक्षे न विवक्ष्यते, उभयसन्निधानेनात्मनि परत्र चेति वाच्यं, आत्मसन्निधानमिति चास्यार्थं सुहृद्भूत्वा कथयति-आत्मसन्निधानमभ्यन्तरसन्निधानमित्यर्थः, आत्मैवाधार आत्मसन्निधानं, प्रसिद्धतरेण स(स्व) शब्देनाभ्यन्तरसन्निधानमिति व्यपदिष्टं, आन्तरः-आसन्नस्तस्य सम्यग्दर्शनस्येति, परसन्निधानमिति चास्यार्थं विवृणोति—'बाह्यसन्निधानं' बाह्यम्-आसनादि, यत्रास्य सम्यग्दर्शनभाव इति, एवमुभयभावना कार्या, अधुनाऽऽधारे त्रिविधे कथिते परस्यैतदेव सन्देहकारणं जातं—क तर्हि सम्यग्दर्शनमिति?, पृच्छति-'कस्मिन् सम्यग्दर्शनं' अथवा अन्यथा प्रश्नः, सम्यग्दर्शनमित्येष गुण(:त)स्य भावस्य आश्रयेण भवितव्यं, स पुनराश्रयः किमभ्यन्तर आत्मा उत बाह्यं प्रतिमादि वस्तु यदुपष्टम्भेनोपजातं! उतोभयमिति प्रश्नित आह—'आत्मसन्निधाने तावदि'त्यादि, आत्माधारविवक्षायां जीवे सम्यग्दर्शनं, तस्य अन्यत्रादर्शनात्, यथा सम्यग्दर्शनमेवं ज्ञानचारित्रे अपीति, एतदाह—'जीवे ज्ञानं जीवे चारित्र'मिति, न च ज्ञानदर्शनचारित्राणि विरहय्य अन्यो जीवोऽस्तीति, काल्पनिकमुपदिशति, कथं?, यदा तावज्जीवे सम्यग्दर्शनं तदा ज्ञानचारित्रे आधारभावं प्रतिपद्येते, ज्ञानचारित्रात्मनि जीवे सम्यग्दर्शनं, यदा जीवे ज्ञानं तदा दर्शनचारित्रयोराधारता, यदा जीवे चारित्रं तदा ज्ञानदर्शनगोचरात् चारित्रमाधेयमिति, 'एतदादी'ति, एतानि-ज्ञानादीनि आदिर्यस्य गुणान्तरस्य तदेतदादि, तदपि जीवे आधारे द्रष्टव्यं भव्याभव्यत्वादि 'बाह्यसन्निधानेन जीवे सम्यग्दर्शन'मित्यादिना, ननु चात्मन्येवोपलभ्यत इत्युक्तं कथमिदानीं परस्मिन्नपि व्यपदिशति?, उच्यते, न यदेव यत्राविभागेनावस्थितं तदेव

...न्तु अन्यत्रापि व्यवस्थितमन्यत्रोपदिश्यते, यथा पर्यंकस्थो गेहे देवदत्तः,गेहस्थो नगर इति,जीने मम्यग्दर्शनादीत्यादयो विकल्पाः पूर्वं भाविता एव, इहाप्याधारभेदं केवलमुच्चारयता मर्वं तथैव भावनीयं, उभयमन्निधानेनाभूताः मद्भूताश्च पडेव यथोक्ता भङ्गा एव विकल्पाः भङ्गेपु वा विकल्पा इति, अत्राह—स्वामित्वाधिकरणार्थयोर्न कश्चिदर्थभेद इति किमर्थं भेदाभिधानं?, उच्यते,एकत्र मम्बन्धविवक्षा परत्राधारविवक्षेति,अस्ति चानयोर्भेदः देवदत्तस्य पुत्रो नगरामनादौ तिष्ठतीति यथा ४। स्थितिद्वारं स्पृशति–'स्थिति'रिति,एतद् विवृणोति–'सम्यग्दर्शनं कियन्तं कालमुत्पन्नं मद्भवतिष्ठते,'कालाध्वनो' रिति द्वितीया, प्रश्नयितुरयमभिप्रायः–प्रागभूत्वा मिथ्यादृष्टेर्दर्शनमाविश्चकास्ति, यच्चोत्पत्तिमत् तत् मादि मपर्यवमानं दृष्टं मनुष्यादिवत्, किंचित् मादिरपर्यवमानं मिद्धत्वादिवत्, आचार्योऽपि प्रश्नाभिप्रायानुरूपमेवोत्तरमाह—'मम्यग्दृष्टिर्द्विविधे' त्यादि, द्विविधेति मादिः मपर्यवमाना सादिरपर्यवसाना चेत्येवं द्विविधा, शोभना दृष्टिः मम्यग्दृष्टिः, का च शोभना?, या शुद्धकर्म्मदलिककृता या च दर्शनमोहनीयक्षयात् त्रयाणां भवति–छद्मस्थस्य श्रेणिकादेरिव,अपरा भवस्थस्यापायमद्द्रव्यपरिक्षये केवलिनः, अपरा मिद्धस्येति, तत्र या अपायसद्द्रव्यवर्तिनी श्रेणिकादीनां च मद्द्रव्यापगमे भवति अपायमहचारिणी सा मादिमपर्यवमाना, यस्मिन् काले श्रेणिकादिभिर्दर्शनमोहमप्तकं क्षपयित्वा रुचिराप्ता म आदिस्तस्याः, यदा त्वपायः—आभिनिबोधिकमपगतं भविष्यति केवलज्ञान उत्पन्ने मोऽन्तोऽस्याः मम्यग्दृष्टेः, एतदाह—'मादिसपर्यवसाने' ति, या तु भवस्थकेवलिनो द्विविधस्य मयोगायोगभेदस्य मिद्धस्य वा दर्शनमोहनीयमप्तकक्षयादपायमद्द्रव्यक्षयाच्चोदपादि मा मादिरपर्यवमानेति, यस्मिन् काले दर्शनमोहनीयं क्षपयित्वा प्राप्ता म आदिस्तस्याः, एवमेतत्तत्त्वमित्येवंविधा या रुचिः मा न कदाचित् तस्यापेष्यतीति, एवं यथाक्रममुप-

न्यमं सर्वं व्याख्यानयति, सादिसपर्यवसानेति यदुक्तं तस्येदं व्याख्यानं–'सादिमपर्यवसानमेव सम्यग्दर्शनं' यच्चापा-यसद्द्रव्यवर्त्ति तत् सम्यग्दर्शनमितीह भणति, यत् सद्द्रव्यविरामे अपायसंभवे श्रेणिकादीनां तच्च भणति, कथं च सादीति ?, सह आदिना वर्तत इति सादिः, यस्मिन् काले मिथ्यादर्शनपुद्गलान् विशोध्य स्थापयति सम्यग्दर्शनतया तदा सादिः, यदा त्वनन्तानुबन्ध्युदयात् पुनर्मिथ्यादर्शनतया परिणाममानेष्यति क्षपयित्वा वा तान् सम्यग्दर्शनपुद्गलान् केवली भविष्यति तदा सपर्यवसानं, सह पर्यवसानेन–अन्तेन यद्वर्तते तत् सपर्यवसानमेव सम्यग्दर्शनं, यदा च दर्शनसप्तकं क्षपयित्वा प्राप्नोति श्रेणिकादिः स आदिमत्त्स, केवलप्राप्त्यन्त इति, तत् पुनः सम्यग्दर्शनं सादिसपर्यवसानं शुद्धदलिकसहवर्त्तिनी रुचिः कियन्तं कालं भवतीति यत् पुरस्तान्नोदितं तद्भावयन्नाह–'तज्जघन्येने'त्यादि, 'सुप् सुपे'ति समासो भवति, अत्यन्तसंयोगे कालस्य द्वितीया, एतदुक्तं भवति—तथा सम्यग्दर्शनं कश्चिदन्तर्मुहूर्तं घटिके तत्परिणाममनुभूय पुनर्मिथ्यादर्शनीभवति केवली वा परतः, एवं जघन्यां स्थितिमाख्यायोत्कृष्टां निरूपयन्नाह–'उत्कृष्टेने'त्यादि, उत्कर्षेण कियन्तं कालमास्ते ?, षट्षष्टिः सागरोपमाणि साधिकानि, तद्यथा–द्व्यष्टवर्षे सम्यग्दर्शनमधिगम्य समासादितदीक्षः पूर्वकोटिं विहृत्य अष्टवर्षोनामपरिच्युतसम्यग्दर्शनः विजयादीनां चतुर्णामन्यतमस्मिन् विमाने उदपादि स्थितावुत्कृष्टायां, त्रयस्त्रिंशत्सागरोपमस्थितिः, तत्क्षयाच्च प्रच्युत्य मनुजेषु सद्दर्शनः समुत्पन्नः, पुनस्तेनैव प्रकारेण संयममनुष्ठाय तदेव विमानं तावत्स्थितिकमनुप्राप्तः, पुनः स्थितौ क्षीणायामक्षीणतत्त्वार्थश्रद्धानः संयमं प्राप्यावश्यंतया सिद्ध्यति, एवं द्वे त्रयस्त्रिंशतौ षट्षष्टिः पूर्वकोटित्रयातिरिक्ता, अच्युतकल्पे वा द्वाविंशतिसागरोपमस्थितिः तिस्रो वाराः समुत्पद्यते, ततः परं अवश्यंभाविनी तस्य सिद्धिरिति । यदुक्तं पुरस्तात् 'सम्यग्दृष्टिर्द्विविधा–सादिसपर्य-

वसानात्, साऽशा भावतः, स्थितिरेव सादिरपर्यवसानेति योऽंशः स(तं) भावयति अनेन-'सम्यग्दृष्टिः सादिरपर्यवसाना सयोग'इत्यादिना,सह योगैः-मनोवाक्कायलक्षणैः सयोगः केवली, उत्पन्ने केवलज्ञाने यावत् शैलेशीं न प्रतिपद्यते तावत् सयोगकेवली, शैलेशीप्रतिपत्तौ तु निरुद्धयोगः, एतदेवाह-'शैलेशीप्राप्त'इति, शिलानां समूहाः शैलास्तेषामीशो मेरुः तस्य भावः शैलेशी, अचलतेतियावत्, तां प्राप्तः, स चेयान् कालो ज्ञेयः-मध्यमया वृत्त्या पंच ह्रस्वाक्षराण्युच्चार्यन्ते यावत्,ततः परं सिद्धस्यैव, एष द्विविधोऽपि केवली सयोगायोगाख्यः भवस्थः साद्यपर्यवसानसम्यग्दृष्टिरुच्यते, सिद्धश्च सर्वकर्मवियुत इति, यतः सादिरप्यसौ रुचिः न च कदाचिदपैष्यतीति, सम्यग्दृष्टिः सादिरपर्यवसानेति चेत्ययं स्त्रीलिङ्गनिर्देशः भवस्थकेवलिनः सयोगसायोगस्य च सिद्धस्य च तस्य रुचेरनन्यत्वख्यापनार्थो, नासौ ततोऽन्येति, अथवा सम्यग्दृष्टिः सादिरपर्यवसाना याऽभिहिता तामनुभवति सयोगादिरिति ५। सम्प्रति विधानद्वारं परामृशन्नाह-'विधान'मिति,विधीयते तदिति विधानं-भेदः प्रकार इति, ननु च साधनद्वारैरभिहित एव भेदो-निसर्गसम्यग्दर्शनमधिगमसम्यग्दर्शनमिति, किं पुनर्भेद आख्यायते?, उच्यते, तत्र न सम्यग्दर्शनस्य भेदः प्रतिपिपादयिषितः, किन्तु निमित्तं, तत्र क्षयादि यदुत्पत्तौ कारणतां प्रतिपद्यते तद्भेदो विवक्षितः, इह तु तेन निमित्तेन यत्कार्यमुपजनितं तस्य भेदः प्रतिपाद्यते,एवं च कृत्वा वक्ष्यमाणसंख्याद्वारस्यास्य च विधानद्वारस्य (साधनस्य) च स्पष्ट एव भेदो निदर्शितः स्यात्, विधानं सम्यग्दर्शनस्य भेदकं क्षयसम्यग्दर्शनमुपशमसम्यग्दर्शनं क्षयोपशमसम्यग्दर्शनमिति, संख्याद्वारे तु तद्वतां भेदः प्रतिपाद्यते,कियत् सम्यग्दर्शनं?,कियन्तः सम्यग्दर्शनिन इत्यर्थः,निर्णयवाक्येऽपि चासंख्येयानि सम्यग्दर्शनानीत्यस्मिन् असंख्येयाः सम्यग्दर्शनिन इत्यर्थः,मतुपो लोपादभेदोपचारात् अर्शआदिपाठाद्वा, तस्माद् युक्तः त्रयाणां साधनविधानसंख्या-

आगतो परस्परेण भेद इति, सम्प्रति भेदकथने प्रवर्त्तमान एकस्याप्यभेदरूपेण्युक्त रूपे(क्ता भिद्यते)ति मन्यमानः कारणोपाधिकं भेदं दर्शयन्नाह 'हेतुत्रैविध्यात् क्षयादि, त्रिविध'मित्यादि, तिस्रो विधा यस्य स त्रिविधो हेतुः, अन्यपदार्थः, त्रिविधस्य भावः त्रैविध्यं, हेतोस्त्रैविध्यं हेतुत्रैविध्यं तस्माद्धेतुत्रैविध्यात्, वर्त्तमानसामीप्यादिवत् समासः, हेतुत्रैविध्यप्रदर्शनायाह—'क्षयादि त्रिविधं सम्यग्दर्शन'मिति कार्यनिर्देश एषः, न च त्रिभिः सम्भूयैकं जन्यते मृदुदकगोमयरिवोपदेशनकं, किन्तु क्षयेणान्यैव रुचिरात्यन्तिकी सकलदोषरहिताऽभिव्यज्यते, क्षयोपशमेनापि चान्यादृश्येव, तथोपशमेनेति, अतः त्रिविधं सम्यग्दर्शनं यत् कार्यं क्षयादिहेतुभिः, के पुनस्ते हेतव? इति, उच्यते, क्षयादयः, कस्य च क्षयादयोऽत आह-'तदावरणीयस्ये'त्यादि, तस्य-सम्यग्दर्शनस्यावरणीयम्—आच्छादकं [illegible] तस्य, 'कर्मण'इति पृथग्भूतस्य कर्मणो, न वासनादेः, एतदेव स्पष्टयन्नाह—'दर्शनमोहस्ये'ति, अनन्तानुबन्ध्यादेर्दर्शनसप्तकस्येत्यर्थः, चशब्दः शेषप्रकृत्यानुगुण्यसमुच्चयार्थः, अवधारणार्थं इत्यन्ये, दर्शनमोहस्यैव न पठन्त्येवान्ये, तस्य तदावरणीयस्य कर्मणो दर्शनमोहस्य 'क्षयादिभ्य'इति क्षयक्षयोपशमोपशमेभ्यस्तद्भवति, 'तद्यथे'त्युदाहरणोपन्यासार्थः, 'क्षयसम्यग्दर्शन'मित्यादि, तदावरणीयस्य कर्मणः क्षयादेरुपजातत्वादेवमभिधीयत इति भावः, 'अत्र चे'त्यादि, अत्रेति एषु क्षयादिसम्यग्दर्शनेषु यथा कार्यभेदोऽभ्युपगतः एवं प्रकर्षभेदोऽभ्युपगन्तव्य इति कथयत्येतच्चशब्दः, तं च प्रकर्षं दर्शयन्नाह—'औपशमिके'त्यादि, एवं च क्षयसम्यग्दर्शनं प्रधानत्वादुपन्यस्येदानीं प्रकर्षस्य निदर्श्यत्वादन्ते तदुपन्यस्यति, उपशमेन—उदयनिरोधरूपेण निर्वृत्तमौपशमिकं, क्षयेण—परिशाटरूपेणोपशमेन च निर्वृत्तं क्षपशमिकं, क्षयेण निर्वृत्तं क्षायिकम्, अत एषामौपशमिकादीनामिमां रचनामाश्रित्य परस्परस्य विशुद्धिप्रकर्षो—निर्मलता स्वच्छता तत्त्वपरिच्छेदितेत्यर्थः, औपशमिकं हि सम्यग्दर्शनं

सर्वमलीमसमल्पकालभाव (श्यं च) शमस्तु मिथ्यात्वगमात्, यतोऽन्तर्मुहूर्त्तमात्रं भवद्भवेद्, यदि च कालं तत्रस्थो न करोति, एवं सति मिथ्यादर्शनमेव प्रतिपद्यत इत्यागमः, तस्मादौपशमिकात् क्षायोपशमिकं सम्यग्दर्शनं विशुद्धतर, बहुकालावस्थायित्वाद्, यत उत्कृष्टेन षट्षष्टिः सागरोपमाणि साधिकानि तदुक्तम्, अत एव च तस्य वस्तुपरिच्छेदस्पष्टग्रहणसाम° र्थ्यमनुमातव्यम्, आगमाश्वासात्, ततश्च क्षायिकं विशुद्धतमं, सर्वकालावस्थायित्वात् स्पष्टवस्तुपरिच्छेदाचेति। 'किञ्चान्यद्' उत्तरसूत्रसम्बन्धवाक्यं, न केवलमेभिः, एतैश्चाधिगमः कार्य इति, कैरिति चेदित्यत आह—

सत्संख्याक्षेत्रस्पर्शनकालान्तरभावाल्पबहुत्वैश्च ॥ सूत्रं ॥८॥

सदादिभिश्चानुयोगद्वारैः तत्त्वाधिगमः कार्यः इत्यस्य समुदायार्थः, अवयवार्थं तु आह भाष्यकारः, तत्र सच्छब्दं संख्यादिविशेषणं सर्वाश्रयेदिति विनिच्य दर्शयति 'सत् संख्या क्षेत्र'मित्यादि(पृ. १२८)युतक्रमेणैतद् द्वारमिति, इतिशब्द इयत्तायाम्, इयद्भिरेव, येऽन्ये ते अत्रैवान्तर्भवन्ति, 'एतैश्च' सूत्रोक्तैः, एतदेव विशेषयति 'सद्भूतपदप्ररूपणादिभिः' सद्भूतस्य विद्यमानार्थस्य सम्यग्दर्शन-पदस्य प्ररूपणं तत्त्वकथनं—स आदिर्येषा तानि सद्भूतपदप्ररूपणादीनि तैरिति, विवेकेन फलं दर्शयति—'अष्टाभि'रिति, तेषां च व्या-ख्यानाद्गता करयत्यनुयोगद्वारैरिति, 'सर्वभावाना'मित्यनेनैषां व्यापितां कथयति सदादीनां, 'विकल्पशः' इत्यादि व्याख्या-नमेव, 'कथमितिचेदि'त्यनेन पराभिप्रायमाशङ्कते, केन प्रकारेण एभिर्विस्तरेणाधिगमः क्रियत इत्येवं त्वं मन्येथाः, उच्यते यथा क्रियते विस्तराधिगम इति, 'सदि'त्यनेन सद्द्वारं परामृशति, कथं चैतस्य द्वारस्योत्थानं यथा शंकते परः—किमस्ति नास्ती-त्येवं मन्येथाः, नन्वेतावति अयुक्तमेतत्कथनमिति, अत आशङ्कावाक्यं दर्शयति—'सम्यग्दर्शनं किमस्ति नास्ती'ति,

किमुक्तं भवति?–सम्यग्दर्शनशब्दवाच्योऽर्थः किमस्ति नास्तीति, संशयश्चायं, शब्दो ह्यसत्यपि बाह्येऽर्थे प्रवर्त्तमानो दृष्टः शशविषाणादौ, सत्यपि च घटादाविति, अतः किमयं सम्यग्दर्शनशब्दः सति बाह्येऽर्थे प्रवृत्तः उतासतीति प्रश्नयति, सूरिराह–'अस्ति' विद्यते, सम्यग्दर्शनशब्दवाच्योऽर्थो घटादिशब्दवाच्यवत्, आप्तोक्तः प्रशमादिलिङ्गगम्यश्च, पुनराशङ्कते—'क्वास्ती'ति इति चेत्, आशङ्कासम्भवश्च गुणः सम्यग्दर्शनं, गुणश्च गुणिपरतन्त्र इति, सूरिराह—'उच्यत' इति अत्र विधिरित्याह, अजीवेषु तावत् धर्मास्तिकायादिषु नास्ति सम्यग्दर्शनं, जीवगुणत्वात्तस्य, यच्चोक्तं कस्येति स्वामित्वचिन्तायामजीवस्य प्रतिमादेः सम्यग्दर्शनमिति तदुपचारात्, इह तु मुख्यचिन्ताप्रक्रम इति न तदङ्गीक्रियते, अथ जीवेषु का वार्त्तेत्यत आह—'जीवेषु तु भाज्यं' तुशब्द एवकारार्थे, भाज्यमेव, नावश्यंभावि सर्वेषु, भजनां च कथयति—'तद्यथा गतीन्द्रिये' त्यादिना, गत्यादीनि चान्यत्रावश्यकादौ प्रपञ्चेनोक्तानि, अशून्यार्थं तु किञ्चिद् दर्श्यते–गत्यादिषु पूर्वप्रतिपन्नाः प्रतिपद्यमानाश्च सम्यक्त्वं चिन्त्यन्ते, तत्र नरकप्रभृतिगतिषु चतसृष्वपि पूर्वप्रतिपन्नाः प्रतिपद्यमानाश्च जीवाः सन्ति, नरकगतौ क्षायिकक्षायोपशमिके स्यातां, तिर्यग्गतावप्येते, मनुष्यगतौ त्रीण्यपि क्षायिकादीनि सन्ति, देवगतौ क्षायिकक्षायोपशमिके भवेता (?)१। इन्द्रियाणि सामान्येनाङ्गीकृत्य सन्ति पूर्वप्रतिपन्नाः प्रतिपद्यमानाश्च विकल्पशः, एकेन्द्रियेषु न पूर्वप्रतिपन्नाः न प्रतिपद्यमानकाः, द्वित्रिचतुरिन्द्रियेषु असंज्ञिपंचेन्द्रियेषु च पूर्वप्रतिपन्ना भाज्याः, सास्वादनसम्यक्त्वं प्रति, प्रतिपद्यमानास्तु न सन्त्येव, संज्ञिपञ्चेन्द्रियेषु द्वयमप्यस्ति २। कायान् पृथिव्यादीनाश्रित्य सामान्येन द्वयमप्यस्ति, विशेषेण धरणिजलानलानिलतरुषु द्वयं न सम्भवत्येव, द्वित्रिचतुरसंज्ञिपंचेन्द्रियेषु त्रसेषु पूर्वप्रतिपन्नाः स्युः, नाधुना प्रतिपत्स्यन्ते, संज्ञिपञ्चेन्द्रियत्रसकाये द्वयमपि स्यात् ३। योगेषु मनोवाक्कायेषु सामान्येन द्वयमपि, काययोगभाजां

पृथिव्यादीनां तरुपर्यन्तानां न द्वयं, कायवाग्योगयुजां द्वित्रिचतुरसंज्ञिपञ्चेन्द्रियाणां पूर्वप्रतिपन्नाः स्युः, न तु प्रतिपद्यन्त इति, मनोवाक्काययोगानां द्वयं ४। अनन्तानुबन्धिनामुदये न द्वयं, शेषकषायोदये द्वयं ५। वेदत्रयसन्वितानां द्वयमस्ति सामान्येन, विशेषेणापि स्त्रीवेदे द्वयं पुरुषवेदे द्वयं, नपुंसकवेदे एकेन्द्रियाणामसंज्ञिपंचेन्द्रियपर्यन्तमानानां पूर्वप्रतिपन्नाः केचित् सन्ति, न प्रतिपद्यमानाः, संज्ञिपंचेन्द्रियनपुंसकेषु द्वयं नारकतिर्यग्मनुष्याख्येषु ६। लेश्यासूपरितनीषु द्वयं, आद्यासु प्रतिपन्नाः स्युर्न तु प्रतिपद्यन्ते ७। किं सम्यग्दृष्टिः प्रतिपद्यते मिथ्यादृष्टिः प्रतिपद्यत इति?, अत्र निश्चयस्य सम्यग्दृष्टिः प्रतिपद्यते, अभूतं नोत्पद्यत इति, शशविषाणादिवत्, व्यवहारस्य मिथ्यादृष्टिः, प्रतिपत्तेरभूतभावविषयत्वात्, 'असत् कारणे कार्य'मिति निदर्शनात् ८। एवं ज्ञानी निश्चयस्य, अज्ञानी व्यवहारनयस्य ९। चक्षुर्दर्शनिषु द्वयं, मक्षिकाद्यसंज्ञिषु पूर्वप्रतिपन्नाः स्युः, न तु प्रतिपद्यमानकाः, संज्ञिपंचेन्द्रियचक्षुर्दर्शनिषु द्वयं, अचक्षुर्दर्शनिषु पृथिव्यादिषु पंचसु द्वयं नास्ति, शेषेषु द्वित्रिचतुरसंज्ञिष्वचक्षुर्दर्शनिषु पूर्वप्रतिपन्नाः स्युर्न तु प्रतिपद्यन्ते, संज्ञिपंचेन्द्रियाचक्षुर्दर्शनिषु द्वयं १०। चारित्री पूर्वप्रतिपन्न एव, अचारित्रः पूर्वप्रतिपन्नः प्रतिपद्यमानश्च स्यात् ११। आहारकेषु द्वयं, अनाहारकः पूर्वप्रतिपन्नः, न तु प्रतिपद्यमानकोऽन्तरगतौ सम्भवति १२। उपयोग इति साकारोपयोगोपयुक्तः प्रतिपद्यते उतानाकारोपयोगोपयुक्तः इति, उच्यते, साकारोपयोगोपयुक्तः प्रतिपद्यते पूर्वप्रतिपन्नश्च, अनाकारोपयोगोपयुक्तस्तु पूर्वप्रतिपन्नः स्यात्, न तु प्रतिपद्यमानो, यतः सर्वाः किल लब्धयः साकारोपयोगोपयुक्तस्य भवन्तीति पारमर्षवचनप्रामाण्यात् १३। एतेषु त्रयोदशस्वनुयोगद्वारेषु-व्याख्यानाङ्गेषु 'यथासम्भव'मिति यत्र न संभवति यत्र च सम्भवति, अथवा क्षायिकादि सम्यग्दर्शनं यत्र सम्भवति तत्र वाच्य,' सद्भूतपदार्थस्य' सम्यग्दर्शनपदस्य 'प्ररूपणा' व्याख्या उन्नेया, भाषकपरीत्तादयस्तु नाद्दता भाष्य-

द्वारेण, प्रायस्तेषामुपपातानुयोगद्वारान्तर्गतत्वात् इति, यतो भाषकः पंचेन्द्रियेष्ववतरति, परीत्तोऽपि कायेषु, पर्याप्तस्तेष्वेव, सूक्ष्म-संज्ञिभव्यचरमाश्च नेष्वेवातो नाद्दता इति १। द्वितीयद्वारं स्पृशन्नाह—'संख्ये'ति, संख्या-इयत्ता, सा चैका गणितव्यवहारानुप-तिनी द्व्यादिका शीर्षप्रहेलिकान्ता, गणितविषयातीता असंख्येया जघन्यमध्यमोत्कृष्टसंज्ञिताऽपरा, तदिति(च)क्रमेण व्यव-स्थिता अनन्ता, सापि जघन्यादिभेदत्रयानुगता अनुयोगद्वारात् विस्तरार्थिनाऽधिगमनीया, य एते सम्यग्दर्शनसमन्विताः सत्त्वा गत्यादिषु ते कियन्त इति तद्वन्त इह पृच्छ्यन्ते, उक्तं चेदं पुरस्ताद्, यतः पृच्छति–'कियत् सम्यग्दर्शनं' किंपरिमा-णानि सम्यग्दर्शनीनि इत्यर्थः, स्वयमेवोद्घट्टयति संज्ञाभिः–सत् 'किं संख्येय'मित्यादि, किं संख्येयमिति किं संख्येयं सम्य-ग्दर्शनराशिमभ्युपगच्छामः उतासंख्येयमथानन्तमिति?, एवं पृष्टे आह–'उच्यते असंख्येयानि सम्यग्दर्शनानि' न संख्येया नाप्यनन्ताः,किं तर्हि?, असंख्येयाः सम्यग्दर्शनिन इति, क्षयसम्यग्दृष्टीन् सिद्धान् केवलिनश्च विरहय्य शेषाः संसारवर्त्तिनो याव-न्तः क्षयादिसम्यग्दर्शनिनस्ते निर्दिश्यन्ते असङ्ख्येयानि सम्यग्दर्शनानीत्यनेन, ये तर्हि केवलिनः सिद्धाश्च ते सर्वे कियन्त इत्याह–'सम्यग्दृष्टयस्त्वनन्ता' इति, भवस्थकेवलिनः सिद्धांश्चाङ्गीकृत्योक्तं सम्यग्दृष्टयस्त्वनन्ता इति २। द्वारान्तरस्पर्शनेनाह–'क्षेत्रं'-क्षियंति-निवसन्ति यत्र जीवादिद्रव्याणि तत् क्षेत्रम्–आकाशं, ये एतेऽसंख्येयतया निर्द्धारिता अनन्ततया च एभिः पुनः किय-दाकाशं व्याप्तमिति संशये सति पृच्छति–'सम्यग्दर्शनं कियति क्षेत्रे' ननु च सम्यग्दर्शनमेतेन प्रच्छ्यते, निर्णयोऽपि तस्यैव, सम्यग्दृष्टयस्तु न चोद्यन्ते न निर्णीयन्त इत्ययुक्तम्, उच्यते, इहायं सम्यग्दर्शनशब्दः भावसाधनः, सम्यग्दृष्टिः सम्यग्दर्शनं, स चाप्युभयोरनिकोऽभ्युपगन्तव्यः, अपायसद्द्रव्यसम्यग्दर्शनिनस्तद्वियुतस्य च सिद्धभवस्थकेवलाख्यस्य, निर्णयवाक्येऽप्येवमेव दृश्यं,

अथवा सम्यग्दर्शनिषु निर्ज्ञातेषु सम्यग्दृष्टयोऽप्यनेनैव रूपेण ग्रहीष्यन्त इति सम्यग्दर्शनिनः प्रश्नयति, अथवा एकं जीवमुद्दिश्यायं प्रकृतः प्रश्नः, एकत्रावधृतक्षेत्रेऽन्यत्राप्युपमानात् तथा प्रतिपत्स्येऽहमिति पृच्छति–सम्यग्दर्शनं कियति क्षेत्रे इति, एकस्मिँश्च पृच्छयमाने सम्यग्दर्शनं कियति क्षेत्रे इत्येकवचनमपि सुघटं भवति, सूरिराह–लोकस्यासंख्येयभाग'मिति, यदैकः पृष्टः एकस्य चोत्तरं तदा कोऽर्थः?, योऽहं सम्यग्दर्शनी सोऽहं कियति आधारे स्थितः?, पृष्टे उत्तरं–लोकस्यासंख्येयभागे, धर्म्माधर्म्मद्वयपरिच्छिन्न आकाशदेशो जीवाजीवाधारः क्षेत्रं लोकः, तस्यासंख्येयभागे त्वं स्थितो, यतोऽसंख्येयप्रदेशो जीवोऽसंख्येयभाग एव अवगाहते. सर्वस्य लोकस्य बुद्ध्याऽसंख्येयभागखंडकल्पितस्य य एकोऽसंख्येयभागस्तत्र स्थित इति, अथापि सर्वानेवाङ्गीकृत्य प्रश्नस्तथाप्यसंख्येयभागे पूर्वस्मादभ्यधिकतरे लोकस्य सर्वे वर्त्तन्त इति युक्तमुत्तरं ३। उत्तरत्र स्पर्शनमाकाशप्रदेशैः पर्यन्तवर्त्तिभिः सह यः स्पर्शस्तत् स्पर्शनं, अस्मिन् द्वारे पृच्छयते–सम्यग्दर्शनेन किं स्पृष्टमित्यनेन, अत्रापि सम्यग्दर्शनशब्दः सामान्यवाची दृश्यः, एकं वाऽङ्गीकृत्य प्रश्न इति मन्तव्यं, उत्तरं 'लोकस्यासंख्येयभागः स्पृष्ट' इत्येकानेकप्रश्नानुरोधेन ज्ञेयं, यः पुनः समुद्घातप्रतिपन्नः चतुर्थसमयवर्त्तिभवस्थकेवली तेन किं स्पृष्टं लोकस्येति, उच्यते—'सम्यग्दृष्टिना तु सर्वलोक' इति, यतोऽभिहितं—"लोकव्यापी चतुर्थे तु" तुशब्दोऽवधारणे, सम्यग्दृष्टिनैव समुद्घातं गतेनैव समस्तलोकः स्पृश्यत इति, एतस्मिन् व्याख्याने चोदकोऽचूचुदत्—सम्यग्दृष्टिसम्यग्दर्शनशब्दयोर्व्युत्पत्तौ क्रियमाणायां भावे कारके नास्त्यर्थभेद इति भवाँश्चाह–सम्यग्दर्शनेन लोकासंख्येयभागः स्पृष्टः, सम्यग्दृष्टिना तु सर्वलोक इति, तत् नूनं भवता कश्चिदर्थभेदः परिकल्पित इत्यतः प्रश्नेनोपक्रमते–'सम्यग्दृष्टिसम्यग्दर्शनयोः को विशेष इति?, सूरिराह–अत्र 'उच्यते', 'अपायसद्द्रव्ये'त्यादि, अपायो–निश्चयज्ञानं मतिज्ञानांशः सद्-

ग्याणि पुनः शोभनानि प्रशस्तत्वात् विद्यमानानि वा द्रव्याणि सद्द्रव्याणि–मिथ्यादर्शनदलिकानि अध्यवसायविशोधितानि सम्य-
ग्दर्शनतया आपादितपरिणामानि, अपायश्च सद्द्रव्याणि च अपायसद्द्रव्याणि तेषां भावः अपायसद्द्रव्यता, इत्थंभूतलक्षणे तृतीया,
यावत् सोऽपायः सम्भवति यावच्च तानि सम्भवन्त्येषाऽपायसद्द्रव्यता, तया सम्यग्दर्शनं, अपाययुक्तानि सद्द्रव्याणीति विनाशाशंका-
–निराचिकीर्षया गुरुर्भूत्वा प्ररिराचष्टे–'अपाय आभिनिबोधिकं'तृतीयो भेदः आभिबोधिकस्य निश्चयात्मकः प्रसिद्धः तेन
योगः तद्योगः तस्मात् ,तेनापायेन योग इति चोच्यते,यतः सम्यग्दर्शनपुद्गलेषु सत्सु अपगतेषु च भवतीति,व्यापी स इत्यर्थः,तद्योगात्
सम्यग्दर्शनम् ,एतेनापायेन यावदस्ति सम्बन्ध इति,तेन च सम्बन्धः सत्सु च सद्द्रव्येष्वक्षीणदर्शनसप्तकस्य,असत्सु च सद्द्रव्येषु क्षीणद-
र्शनसप्तकस्य,उभय्यामप्यवस्थायां सम्यग्दर्शनं द्रष्टव्यं,उभय्यामपि त्ववस्थायां सम्यग्दृष्टिव्यपदेशो नास्ति, 'तत् केवलिनो नास्ती'-
त्यादि,तदिति-सम्यग्दर्शनं सद्द्रव्यापाययोगजनितव्यपदेशं केवलिनोऽतीन्द्रियदर्शनत्वात् न समस्ति,अतो न सम्यग्दर्शनी केवली,
कस्तर्हि ?, आह–'सम्यग्दृष्टिस्तु केवली'ति,तानि च बुद्ध्या आदाय अपायसद्द्रव्याणि तत्र केवलिनि सम्यग्दर्शनिव्यपदेशो निषि-
ध्यते, तैस्तु विना यदि सम्यग्दर्शनिव्यपदेशः कल्प्यते भावसाधनार्थोऽविशिष्ट इतिकृत्वा तदा नास्ति निषेध इति,तुशब्दः अमुमे-
वार्थमवद्योतयति,एवं च कृत्वा पूर्वप्रश्नेऽपि सुघटं भाष्यं भवति ४। द्वारान्तरं स्पृशति-'काल'इति, यदेतत् पूर्वके द्वारे निरूपितं सम्य-
ग्दर्शनं तत् कियन्तं कालं भवतीति प्रश्नयति, ननु च स्थितिद्वारेऽप्येतदेव पृष्टमुक्तं च, किमर्थं पुनः पिष्टपेषणं क्रियत ? इति,
उच्यते, न कालः स्थितिमन्तरेण कश्चिदस्तीत्यस्यार्थस्य ख्यापनार्थं,तथा वर्त्तनादीन्येव काललिङ्गानि पठन्ति, अथवा एकजीवाश्र-
यणेन नानाजीवसमाश्रयणेन च नास्ति स्थितिद्वारे साक्षादभिधानमित्यतो युज्यते प्रश्नः, तथा च "पुव्वभणिअं तु जं भण्णइ

तस्थे" त्यादि, अतस्तत् सम्यग्दर्शनमेकजीवाङ्गीकरणेन नानाजीवाङ्गीकरणेन च परीक्ष्यं, एतदुक्तं भवति—एकेन प्राप्तं सत् कियन्तं कालमनुपाल्यत इति, नानाजीवैश्च कियन्तं कालं धार्यत इति परीक्ष्यम्, 'एकं जीवं प्रती 'त्यादि, पूर्वं भावित एव ग्रन्थ इति, स्थितिद्वारे नानाजीवान् प्रति सर्वदा—सर्वकालं, महाविदेहादिक्षेत्रमाश्रित्याव्यवच्छेदात्, इयं तु स्थितिः क्षायोपशमिकस्य चिन्तिता, औपशमिकस्य तु यथासम्भवं अन्तर्मुहूर्त्तप्रमाणेति, क्षायिकस्य तु सर्वदाऽवस्थानम् ५। अतोऽनन्तर अन्तरद्वार स्पृशति—'अन्तरं' इत्यनेन, सम्यग्दर्शनं प्राप्य पुनश्चोज्झित्वा मिथ्यात्वदलिकोदयात् पुनः कियता कालेन लप्स्यत इति पृच्छति—'सम्यग्दर्शनस्य को विरहकाल' इति, सम्यग्दर्शनं प्राप्य पुनश्चोज्झित्वा यावन्न पुनः सम्यग्दर्शनमासादयति स विरहकालः—सम्यग्दर्शनेन शून्यः कालः कियानिति, औपशमिकक्षायोपशमिके निश्रित्य निर्णयवाक्यं प्रवृत्तं—'एकं जीवं प्रती 'त्यादि, एको जन्तुरौपशमिकं क्षायोपशमिकं वा प्राप्य उज्झित्वा पुनः कश्चिन्मुहूर्त्तस्यान्तर्लभते, कश्चित्तु अनन्तेन कालेन लभते, स चानन्तः काल एवमाख्यायते—उत्कृष्टतोऽपार्द्धः पुद्गलपरावर्त्तः, पुद्गलपरिवर्त्तो नाम यदा जगति यावन्तः परमाणवस्ते औदारिकादितया सर्वे परिभुक्ता भवंति, स पुद्गलपरावर्त्तः औदारिकवैक्रियतैजसभाषाप्राणापानमनःकर्म्मभेदात् सप्तधा, एतत्समुदायस्यार्द्ध गृह्यते किञ्चिन्न्यूनं, एतत् प्रतिपादयितुं कथं शक्यते इति चेदुपार्द्धपुद्गलपरावर्त्त इत्यनेन, उच्यते, 'समुदायेषु हि शब्दाः प्रवृत्ता अवयवेष्वपि प्रवर्त्तन्त' इतिन्यायात्, अर्थं चार्द्धशब्दः न समप्रविभागवचनः, किञ्चिन्न्यूनाभिधायित्वाच्च पुंलिङ्गः, उपगतोऽर्द्धः उपार्द्धः—किञ्चिन्न्यून इति प्रादिसमासः, 'नानाजीवा 'निति सर्वजीवान् नास्त्यन्तर, विदेहादिषु सर्वकालमवस्थानादिति, क्षायिकस्य त्वनपगमान्नास्त्यन्तर ६। द्वारान्तराभिधित्सयाऽऽह—'भाव' इति, यैषा रुचिर्जीवस्य जिनवचनश्रद्धायिनी सा कस्मिन्

भावे 'औपशमिकादीना समवतारेति इति प्रश्नयति-'सम्यग्दर्शन'मित्यादिना, सम्यग्दर्शनमित्यविशिष्टां रुचिं क्षयादिरूपां त्रिविधामपि जिज्ञासते क रूति, तथा च प्रतिवचनमपि भविष्यति—त्रिषु भावेष्विति, 'औपशमिकादीनाम्'उक्तलक्षणाना 'कतमो भावः' कतमोऽत्रेतियावत्, सूरिस्तु हेयभावनिराचिकीर्षया आदेयं त्रिष्वित्यनेन कथयति, औदयिकं—गतिकषाया-दिरूपं पारिणामिकं च भव्यत्वादिलक्षणं विहाय अन्ये त्रयः क्षायिकादयस्तेषु भावेषु भवति, औदयिकपारिणामिकयोर्गत्यादि-भव्यत्वाद्यवधारणात्तत् न तयोः समस्ति, अनादित्वाच्च, 'त्रिषु' इति उच्यते त्रिषु भवति, नौदयिकपारिणामिकयोरिति ७। द्वारान्तर स्पृशति 'अल्पबहुत्व'मित्यनेन,'अत्र' एतस्मिन् त्रिषु भावेष्विति व्याख्याते,आहाद्य'-एषा क्षायिकादीना 'सम्यग्दर्शनानां' त्रिषु क्षायिकादिषु परिणामेषु वर्तमानाना किं तुल्यसंख्यत्वमुतान्यथेति, आश्रयभेदेन वा अल्पबहुत्वचिंता, आह—'अस्त्यल्प-बहुत्व' (आहोस्विदल्पबहुत्वं मु.) मिति अल्पबहुभावः, किंचिदल्पमवास्ति किंचिच्च बह्विति, कथं भावनीयम् ?, 'उच्यते-सर्वस्तोकमौपशमिकं' यत ईदृशी परिणति श्रेण्यारोहादिस्वभावा न बहवः सत्त्वाः संप्राप्नुवन्तीत्यागमः, 'ततः क्षायिकम-संख्येयगुणं' ततः—औपशमिकात् क्षायिकमिति च,अत्राय विशेषः प्रेक्ष्यः—छद्मस्थाना श्रेणिकादीना यत् क्षायिकं तत् गृह्यते, अपायसद्भावात्, छद्मस्थवर्त्तिनश्च औपशमिकस्याधिकृतयोपात्तत्वात् तत इत्यनेन अवधिमतापि तादृशेन भाव्यं, तत औपशमिकात् क्षायिकं छद्मस्थस्वामिकमसंख्येयगुणमिति,असंख्येयगुणमिति योऽसावौपशमिको राशिः सोऽसङ्ख्येयेन राशिना गुण्यते,औपशमिकाद् बहुतरमितियावत्, 'ततोऽपि' क्षायिकात् 'क्षायोपशमिकं' भवत्यसंख्येयगुणं, सर्वगतिषु बहुस्वाम्याधारत्वात्, असंख्ये-यगुणमिति च योऽसौ क्षायिकराशिः सोऽसंख्येयेन गुण्यते, अतः क्षायिकाद् बहुतरमास्त इतियावत्, यत्तर्हि क्षायिकं केवल्याधार

तत् कियद् ?, उच्यते, सर्वकेवलिनामानंत्यादनन्तगुणं केवल्याधारमेतद् द्रश्यं इत्यत आह—'सम्यग्दृष्टयस्त्वनन्ता' इति, केवलिनोऽनन्ता इत्यर्थः, अतस्तद्द्रव्यमप्यनन्तमेव, इतिः द्वारसमाप्तिसूचकः। अथ किं सम्यग्दर्शनस्यैव निर्देशादिसदादिभिर्द्वारैरधिगमः क्रियते ? उत ज्ञानादीनामपि ?, ज्ञानादीनामपि, किंतु एकत्र सम्यग्दर्शने योजना कृता, अन्यत्राप्येवं द्रष्टव्येत्यतिदिशति—'एवं सर्वभावाना'मित्यादिना, 'एव'मिति यथा सम्यग्दर्शनस्य तथा सर्वभावानां ज्ञानादीनां नामस्थापनादिभी रचनां कृत्वा प्रमाणनयनिर्देशादिसदादिभिः परीक्षाधिगमः कार्य इति, यत् प्रस्तुतं 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग इति, तत्र यत् सम्यग्दर्शने विचार्यं तदभिहितं, तदभिधानाच्च परिसमापितं सम्यग्दर्शनमित्येतदाह–उक्तं सम्यग्दर्शनं, द्वितीयावयवव्याचिख्यासाप्रस्तावप्रदर्शनायाह–ज्ञानं वक्ष्यामः, कीदृक् तदिति चेद्, उच्यते—

मतिश्रुतावधिमनःपर्यायकेवलानि ज्ञानं ॥ (सूत्रं ९)

मत्यादीनि सर्वाण्येव ज्ञानं प्रत्येकं, न तु सर्वाण्येकमेव, एकवचननिर्देशस्तु सर्वेषामोघतः समानजातीयत्वज्ञापनार्थः, तथाहि—सर्वाण्येव विषयावबोधे ज्ञानानीति सूत्रसमुदायार्थः। अवयवार्थं त्वाह भाष्यकारः—'मतिज्ञान'मित्यादि (पृ. १४-५.) मननं मतिः–इन्द्रियानिन्द्रियपरिच्छेदः, ज्ञातिर्ज्ञानं, सामान्येन वस्तुस्वरूपावधारणं, ज्ञानशब्दः सामान्यवाचको मत्या विशेष्यते, मतिश्चासौ ज्ञानं चेति मतिज्ञानं, एवं 'श्रुतज्ञान'मिति, श्रुतिः श्रुतं—शब्दार्थसंवेदनं, तेन ज्ञानं विशेष्यते, श्रुतं च तत् ज्ञानं च श्रुतज्ञानमिति, अवधिशब्दो मर्यादावचनः, अमूर्तपरिहारेण साक्षान्मूर्तविषयमिन्द्रियानपेक्षं मनःप्रणिधानवीर्यकमवधिज्ञानं, अवधिश्च तज्ज्ञानं च तदवधिज्ञानं, 'मनःपर्यायज्ञान'मिति मनसः पर्यायाः मनःपर्यायाः–जीवादिज्ञेयालोचनप्रकाराः, परगताः

मन्यमानमनोद्रव्यधर्म्मा इत्यर्थः, साक्षात्कारेण तेषु तेषां वा ज्ञानं मनःपर्यायज्ञानमिति, 'केवलज्ञान'मिति केवलमित्येकं–स्वभे-
दरहितं शुद्धं वा–मलावरणशून्यं, सकलं वा–आदित एव सम्पूर्णं असाधारणं वा–मत्यादिविकलं अनन्तं वा–सर्वद्रव्यभावप-
रिच्छेदि ज्ञानं केवलज्ञानं, स्वाम्यादिसाधर्म्याच्चादौ मतिश्रुतोपन्यासः, अत्रापि मतिभेदत्वात् मतिपूर्वकत्वाच्च श्रुतस्यादौ मतेः,
कालविषयादिसाधर्म्याच्च तदनन्तरं, छद्मस्थविषयादिसाधर्म्याच्च तदनु मनःपर्यायस्य, उत्तमत्वादिभिर्नाऽन्ते केवलस्येत्युप-
न्यासानुपूर्वीप्रयोजनं,तथा चोक्तम्—"जं सामिकालकारणविसयपरोक्खत्तणेहि तुल्लाइं। तब्भावे (वे.विशे.भा.) सेसाणि अ तेणा-
दीए मतिसुआइं ॥१॥ कालविवज्जयसामित्तलाहसामण्णओऽवही तत्तो। माणमवेत्तो छउमत्थविसयभावादिसामण्णा ॥ २ ॥ अंते
केवलमुत्तमजइसामित्तावसाणलाभाओ ॥" ( विशे. ८६-८७॥ ) इत्यादि, 'इत्येतदि'ति, इतिरियत्तायां, एतावदेव, नान्य-
दस्ति, एतदित्यवयवप्रविभागेन यदाख्यातं मूलम्–आद्यं विधानं–भेदः मूलं च तद्विधानं च मूलविधानं तेन मूलविधानेन–मूल-
विधानतः 'पंचविध'मित्यादि ज्ञेयपरिच्छेदि ज्ञानं,एतदुक्तं भवति–मौलान् भेदानङ्गीकृत्य पञ्चविधमेव भवति,अथ किमन्ये एषां
पञ्चानां प्रभेदाः सन्ति उत नेति ?, सन्तीत्युच्यते, 'प्रभेदास्त्वस्ये'त्यादि, प्रभेदा–अंशाः अवयवाः अस्य–पञ्चविधस्योपरिष्टाद्
वक्ष्यन्ते, मूलभेदास्तु न, कथितत्वादिति, मतिज्ञानस्यावग्रहादयः श्रुतस्याङ्गानङ्गप्रविष्टादयः अवधिज्ञानस्य भवप्रत्ययादयः मनः–
पर्यायज्ञानस्य ऋजुमत्यादयः, केवलज्ञानस्य न सन्त्येवेति ॥ एवं ज्ञानमभिधायेह प्रमाणसंख्यामाह—

तत् प्रमाणे इति ॥ (सूत्रं १०)

इदं पञ्चविधमपि ज्ञानं जातिभेदेन द्वे प्रमाणे इति सूत्रसमुदायार्थः । अवयवार्थं त्वाह भाष्यकारः–'तदेतदि'त्यादिना (पृ.

१४-९) तच्छब्द एतदित्यस्यार्थे, पञ्चविधमपि ज्ञानं मत्यादि द्वे प्रमाणे भवत इत्येतदत्र विधीयते, किम्भूते द्वे इत्याह—'परोक्षं प्रत्यक्षं चे'ति परैः-इन्द्रियैरुक्षा-सम्बन्धनं यस्य ज्ञानस्य तत् परोक्षम्-इन्द्रियादिनिमित्तं मत्यादि, यत्पुनरिन्द्रियादिनिमित्तनिरपेक्षमात्मन एवोपजायते अवध्यादि तत् प्रत्यक्षं, चशब्दः स्वगतानेकभेदसमुच्चयार्थः, इत्थमुपन्यासे चैवमेवानयोर्भाव इति प्रयोजनं ॥ परोक्षमभिधातुमाह—

तत्र-आद्ये परोक्षमिति ॥ (सूत्रं ११)

एतदेव व्याचष्टे भाष्यकारः—'आदौ भवमाद्यं' (पृ. १४-१२) यस्मात् परमस्ति न पूर्वं स आदिः, विवक्षावशात्, तत्र भवं 'दिगादित्वात्' आद्यमिति, आद्यं चाद्यं चेत्याद्ये इति, प्रतिविशिष्टेन च क्रमेण व्यवस्थितानामाद्यव्यपदेशो दृश्यते, तद्यथा-अयं यतिरेषां विशिष्टक्रमभाजामाद्य इति, एवमत्रामूर्त्तानां ज्ञानानां क्रमसन्निवेशो दुरुपपाद इति मत्वा अब्रवीत्-'आद्ये इति सूत्रक्रमप्रामाण्यात्' सूत्रं चासन्नमप्यनन्तरं त्यज्यते तत् प्रमाणे इति, सन्निवेशाभावात्, तस्मात् परमेव मतिश्रुतादि ग्राह्यं, तत्र क्रमः-परिपाटी, सूत्रे क्रमः सूत्रक्रमस्तस्य प्रामाण्यम्-आश्रयणं तस्मात्, 'प्रथमद्वितीये' मतिश्रुते 'शास्ती'ति कथयति सूत्रकार इत्याह भाष्यकारः, अस्यैव भावार्थमाह-'तदेव'मित्यादिना, तदेवमाद्यव्यपदेशे सिद्धे सुखेन वक्तुं शक्यते यदुताद्ये मतिज्ञानश्रुतज्ञाने द्वे अपि परोक्षं प्रमाणं भवत इति,शेषमनूद्य परोक्षप्रमाणता विधीयते,एवं शब्दार्थेन तत्त्वतः प्रतिपादितमपि परोक्षत्वं सम्यगनवगच्छन्नाह चोदकः 'कुत'इति कस्मात् परोक्षं प्रमाणं भवतः, गुरुरपि तदेव स्पष्टयन्नाह-'निमित्तापेक्षत्वादि'ति इन्द्रियमनोनिमित्तापेक्षत्वादिति, इन्द्रियमनोनिमित्तापेक्षत्वादिभिः प्रायः, एवमपि तत्त्वतोऽनवगच्छतः सामान्येन निमित्तापेक्षत्वादिति

मन्यमानस्य मा भूदाशङ्का-नन्ववध्यादेरपि विशिष्टक्षयोपशमादिनिमित्तापेक्षाऽस्त्येवेति, तद्व्यवच्छेदायाह-'अपायसद्द्रव्यतया मतिज्ञान'मिति अपायो-निश्चयः ईहानन्तरवर्ती सद्द्रव्यमिति-शोभनानि द्रव्याणि सम्यक्त्वदलिकानि, अपायश्च सद्द्रव्याणि नापायसद्द्रव्याणि तेषां भावः-स्वरूपादप्रच्युतिः तयेत्थंभूतया मतिज्ञानं परोक्षम्, एतदुक्तं भवति-अपाय इन्द्रियानिन्द्रियजन्य इति इन्द्रियनिमित्ततया परोक्षं, ग्राह्यगृहीतृव्यतिरिक्तनिमित्तापेक्षत्वादितियावत्, न चैवमवध्यादेः ग्राह्यगृहीतृव्यतिरिक्तनिमित्त-पेक्षाऽस्ति, अयमेव ग्रन्थकाराभिप्राय इति द्रढयन्नाह-'तदिन्द्रिये'त्यादि-तदिति-मतिज्ञानं इन्द्रियाणि-श्रोत्रादीनि अती(नि)न्द्रियं मनस्तानि निमित्तं-कारणं यस्य ज्ञानस्य तत्तथेति वक्ष्यते सूत्रकारः, इदं च सद्द्रव्यविकलानामपि सम्यग्दृष्टीनां भवति श्रेणिकादीनां तथापि बहूनां सद्द्रव्यसमन्वितानामिति सामान्येनोक्तमपायसद्द्रव्यतयेत्यलं प्रसङ्गेन। श्रुतज्ञानस्य परोक्षत्वे विशेषकारणमाह 'तत्पूर्वकत्वादि'ति मतिज्ञानपूर्वकत्वात् 'परोपदेशजत्वाच्च' परः-तीर्थंकरादिस्तस्मादुपदेशस्ततो जायत इति परोपदेशजं तद्भावस्तस्मात् श्रुतज्ञानं परोक्षमिति, अनेनोभयस्य निमित्तभूयस्त्वं ख्याप्यते, तथा चेदं कचिन्मनसि मतिज्ञानं श्रुतज्ञानं च स्वत एव भवति, यथा प्रत्येकबुद्धादीनां, कचित्त्वधिकं परोपदेशमपेक्षते, यथा अस्मदादीनामिति निमित्तभूयस्त्वं श्रुतज्ञानस्य। अत्र कश्चिदाह-इन्द्रियमनोनिमित्तं विज्ञानं परोक्षमित्येतदागमविरुद्धं भवतः, "इंदियपच्चक्खं नोइंदियपच्चक्खं चे"त्यादि(नन्दी सू. ३)वचनप्रामाण्यात्, प्रतीतिविरुद्धं च, साक्षाद्रूपादिदर्शनादिति, अत्रोच्यते, नागमविरुद्धं,तत्र व्यवहारतः प्रत्यक्षत्वाभिधानात्, कथमेतन्नागम इति चेत् तत्रागमादेव, यतस्तत्रैवोक्तं "मतिनाणपरोक्खं च सुअनाणपरोक्खं चे" (नन्दी सू.)न च मतिश्रुताभ्यामिन्द्रियमनोनिमित्तमन्यदस्ति यत् प्रत्यक्षसंज्ञया भवेदिति उपचारतस्तत्र प्रत्यक्षत्वाभिधानं,निश्चयं त्वधिकृत्य प्रवृत्तोऽयं शास्त्रकार इति नाग-

मविरोधः, प्रतीतिविरोधोऽपि नास्ति, साक्षाद्रूपादिदर्शनासिद्धः, इन्द्रियादिद्वारेण दर्शनात्, शक्यं चात्र वक्तुं इन्द्रियमनोनिमित्तं विज्ञानं परोक्षं, ग्राह्यगृहीतृव्यतिरिक्तनिमित्तोपस्थापितप्रत्ययात्मकत्वाद्धूमादग्निज्ञानवत्, विपक्षेऽवध्यादीति कृतं प्रसङ्गेन ॥ एवं परोक्षं प्रमाणमभिधाय तदन्यदभिधातुमाह–

प्रत्यक्षमन्यदिति ॥ (सूत्रं १२)

उक्तलक्षणज्ञानद्वयाद् यदन्यद् ज्ञानत्रयं तत् प्रत्यक्षमिति सूत्रसमुदायार्थः। एतदेवाह भाष्यकारः-'मतिश्रुताभ्या'मिति (पृ.१५-८) मतिज्ञानश्रुतज्ञानाभ्यां यदन्यत् प्रागुद्दिष्टे ज्ञानपञ्चकेऽवशिष्यते त्रिविधं ज्ञानम् अवध्यादि तत् त्रिविधमिति प्रत्यक्षप्रमाणं भवति, प्रमाणमनूद्य प्रत्यक्षं भवतीत्येतद्विधीयत इति, एवं शब्दार्थेनैव तत्त्वतः प्रतिपादितमपि प्रत्यक्षं सम्यगनवगच्छन्नाह चोदकः–'कुत' इति कस्मात् प्रत्यक्षं प्रमाणं भवति?,गुरुरपि तदेव स्पष्टयन्नाह–'अतीन्द्रियत्वादि'ति,अतिक्रान्तमिन्द्रियाणामतीन्द्रियं ज्ञानं तद्भावोऽतीन्द्रियत्वं तस्मादिति, यत् प्राणिनां ज्ञानदर्शनावरण (योः) क्षयोपशमाच्च क्षयाच्च इन्द्रियानिन्द्रियद्वारानपेक्षमात्मानमेव केवलमभिमुखीकुर्वदुदेति तत् प्रत्यक्षम्–अवध्यादि एव,'तत् प्रमाणे'इति द्वित्वसंख्यायां परोक्षप्रत्यक्षाख्यो यो विषयस्तमुपदर्श्य प्रमाणशब्दार्थं कथयन्नाह भाष्यकारः–'प्रमीयन्तेऽर्थास्तैरिति प्रमाणानी'ति, प्रमीयन्ते–परिच्छिद्यन्ते सदसदित्यादिभेदेनार्थाः–जीवादयस्तैरिति प्रमाणानि, करणे ल्युट्, भावनाऽत्र प्राक् कृतैव, ज्ञानव्यक्त्यपेक्षो बहुवचननिर्देशः प्रमाणानीति,'अत्राहे'ति एवं द्वे परोक्षप्रत्यक्षप्रमाणे भवत इति ज्ञापिते चोदयति–'इहे'त्यादि, इह–शास्त्रेऽवधारितमेतत्, अन्यथा 'तत् प्रमाणे'इति द्वित्वमसङ्गार्थ्यवैयर्थ्यं, के द्वे इत्याह–'प्रत्यक्षपरोक्षे'इति, लोकरूढ्यैवमुपन्यासः, ततः किमित्याह—'अनु-

मानेऽस्यादि, अनुमानं चोपमानं चेत्यादिग्रन्थः, तत्रानुमानं-लिङ्गादर्थदर्शनं, प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानं, आप्तोपदेशः आगमः, दृष्टार्थस्याप्यन्यथानुपपत्त्या कल्पनमर्थापत्तिः, सम्भवः प्रस्थादौ कुडवादिभावः, अभावो भावोपलम्भकप्रमाणविरह इति, एतान्यपि च प्रमाणानीत्येवं साङ्ख्यादयः आचार्यदेशीया वा (केचित्) मन्यन्ते 'तत् कथमेतदि'ति, किमेतान्यप्रमाणान्येव उत प्रमाणान्तराणि भवन्तीति चोदकाभिप्रायः, अत्र परिहारमाह-'उच्यत'इत्यादिना, उच्यते अत्र समाधिः, सर्वाण्येतानि-अनुमानादीनि मतिश्रुतयोरन्तर्भूतानि प्रविष्टानि, कथमिति युक्तिमाह-'इन्द्रियार्थे'त्यादि, इन्द्रियाणि चक्षुरादीनि तेषामर्था-रूपादयः इन्द्रियाणि चार्थाश्च इन्द्रियार्थास्तेषां सन्निकर्षः-सम्बन्धः स इन्द्रियार्थसन्निकर्षो निमित्तं यस्य तत्तथा अनुमानादि तद्भावस्तस्मात्, न हि धूमादिभिः प्रत्यक्षपर्यन्तैरिन्द्रियानिन्द्रियाभ्यामगृहीतैरनुमानादीनां सम्भव इति मतिश्रुतयोरन्तर्भावः, 'किंचान्यदि'ति पक्षान्तरमाश्रयति, यदाह-'अप्रमाणान्येव वा' अनन्तरोदितानि अनुमानादीनि, कुत? इति प्रश्नः, अत्र निर्वचनं-'मिथ्यादर्शने'त्यादि, मिथ्यादर्शनेन-तत्त्वार्थश्रद्धानपूर्वेणैकनयरूपेण परिग्रहात्-स्वयमङ्गीकरणात् अनुमानादीनां, तथा 'विपरीते'त्यादि, विपरीतानामुपदेशः-स्थानं परेभ्यस्तद्विषयलक्षणगोचरमिति विपरीतोपदेशः तस्माच्च कारणात् अप्रमाणान्येव, एकानेकस्वभावे वस्तुतत्त्वे एकस्वभावमेवेदमस्वभावं नेति यथानुपदेशः स विपरीत एवेति भावनीयं, न चेयं स्वमनीषिकेति सूत्रकारमतमुपन्यस्यन्नाह-'मिथ्यादृष्टे'रित्यादि, मिथ्यादृष्टेः प्राणिनो यस्मान्मतिश्रुतावधयस्त्रयोऽपि नियतं-निश्चितमज्ञानमेव, कुत्सितं ज्ञानमित्येवं वक्ष्यति सूत्रकारः, न चाज्ञानस्य प्रामाण्यमिति प्रतीतमेतत्, आह-यद्येवं कथं मतिश्रुतयोरन्तर्भूतानीत्युक्तम्?, अत्रोच्यते-'नयवादे'त्यादि, तथा नैगमादयस्तेषां वादः स्वमनीषिकाप्रकाशनं नयवादस्तस्य अन्तर-भेदः नयवादान्तरं तेन नयवादभेदेनेन, 'यथा' मतिश्च श्रुतं

च मतिश्रुते तयोर्विकल्पाः-भेदास्तेभ्यो जायन्त इति मतिश्रुतविकल्पजानि भवन्ति यथा तथा नयविचारणायां पुरस्तात् वक्ष्याम इति, शब्दनयस्य हि मिथ्यादृष्टिरज्ञो वा नास्तीति वक्ष्यति, तन्मतेन तु प्रमाणानीति ॥ सूत्रान्तरसम्बन्धाभिधित्सयाऽऽह- 'अत्राहे'त्यादि,अत्रेत्येतस्मिन् ज्ञानपञ्चके कथिते सामान्येन प्रमाणद्वये च प्रत्यक्षपरोक्षरूपे विहिते परोऽचोचत्–'उक्तं' प्रतिपादितं त्वया, किमिति तद्?, उच्यते—मत्यादीनि पंच ज्ञानानि—मतिश्रुतावधिमनःपर्यायकेवलानि, एवमुद्दिश्य तत इदमभिहितं-किं तद्?, उच्यते-'तानि विधानतो लक्षणतश्च पुरस्ताद्विस्तरेण वक्ष्याम'इत्येतत्, ननु च नैवंविधं तत्र सूत्रे भाष्यमस्ति-विधानतो लक्षणतश्च, कथमयमध्यारोपः क्रियते गुरोरिति?, उच्यते, सत्यमेवंविधं भाष्यं नास्ति, एवं पुनः समस्ति--प्रभेदास्त्वस्य पुरस्ताद्वक्ष्यन्त इति, अतः प्रभेदा इत्यनेन विधानलक्षणरूपाः प्रतिपाद्यन्ते तत्र भाष्ये, अतो नाध्यारोप इति, तत्र विधानं-भेदः मत्यादेः, लक्षणं त्वसाधारणं चिह्नं इति, यदेतत् प्रतिज्ञातं प्राक्तदुच्यतामिति पृष्टः सन् आह–' अत्रोच्यते ' अत्र एतस्मिँश्चोदिते उच्यते मया लक्षणमादौ, अल्पविचारत्वात्, तदाह—

मतिः स्मृतिः संज्ञा चिन्ताऽभिनिबोध इत्यनर्थान्तरम् ॥१३॥ सूत्रम्

आह-लक्षणतो विधानतश्चेत्येवमेव किन्न कृतः सम्बन्धग्रन्थो येनाल्पविचारत्वादिति प्रयोजनमाश्रीयते, उच्यते, प्राग् विधानं लक्षणाङ्गभावख्यापनार्थमिति, मतिः स्मृतिः संज्ञा चिन्ताऽभिनिबोध इत्यनर्थान्तरमिति पर्यायैर्लक्षणाभिधानं मननाद्यात्मकमेतदित्यदुष्टमेव, अयं सूत्रसमुदायार्थः, अवयवार्थमाह—'मतिज्ञान'मित्यादिना (पृ. १५-८) मननं मतिः सैव ज्ञानं मतिज्ञानमित्येवं सर्वत्राक्षरगमनिका कार्या,भावार्थस्त्वयं--मतिज्ञानं नाम यदिन्द्रियानिन्द्रियनिमित्तं वर्त्तमानविषयपरिच्छेदि, स्मृतिज्ञानं प्राक्

न्द्रियं च इन्द्रियानिन्द्रिये च इन्द्रियानिन्द्रियाणि तानि निमित्तं यस्य तदिन्द्रियानिन्द्रियनिमित्तमिति, एतदेवाह-इन्द्रियनिमित्त-
मनिन्द्रियनिमित्तं च, चशब्दादुभयं चेति, अपेक्षाकारणं चाङ्गीकृत्य सूत्रं पपाठाचार्यः तदिन्द्रियानिन्द्रियनिमित्तमिति, अपेक्षा-
कारणं चालोकविषयेन्द्रियाणि, सति प्रकाशे विषये च चक्षुरादिषु च सत्सु ज्ञानस्योद्भवो दृष्टः, तेषामपि मध्येऽन्तरङ्गमपेक्षाकार-
णमिन्द्रियाणि पठितं, पारमार्थिकं तु कारणं क्षयोपशमः मतिज्ञानावरणपुद्गलानां, न हि तदावरणक्षयोपशममनपेक्ष्य ज्ञानस्यो-
त्पत्तिरिष्यते, यदि तर्ह्यन्तरनिमित्तं क्षयोपशमः स एवोपादेयः, किं नाद्येनेन्द्रियानिन्द्रियनिमित्तेनाधीतेनेति, उच्यते, स क्षयो-
पशमः सर्वसाधारण इतिकृत्वा न पठितः, चशब्देन वा सङ्गृहीतो द्रष्टव्यः, इन्द्रियनिमित्तमनिन्द्रियनिमित्तं च, चशब्दात् क्षयो-
पशमनिमित्तमिति, न च भावेन्द्रियस्य तद्रूपत्वादिति, तत्रेन्द्रियनिमित्तं स्वयमेव भावयति-'तत्रेन्द्रिये'त्यादि,तत्र-तेषां त्रयाणां
मध्ये इन्द्रियनिमित्त तावद् भण्यते-'स्पर्शनादीना'मिति स्पर्शनरसनघ्राणचक्षुःश्रोत्राणां पंचानामेव पञ्चस्वेवेत्यन्यस्याभावं
नियमयति, स्वे आत्मीया विषया येषु प्राणिनः सक्ति भजंते तेषु स्वेषु विषयेषु, तद्यथा-स्पर्शनस्य स्पर्शे रसनस्य रसे घ्राणस्य
गन्धे चक्षुषो रूपे श्रोत्रस्य शब्दे, अत एषां स्पर्शनादीनां स्वविषयेषु वर्तमानाना ग्राहितया यदुपजायते ज्ञानं तत् तानीन्द्रिया-
ण्यालम्ब्योत्पद्यमानमिन्द्रियनिमित्तमिति भण्यते, इदानीमनिन्द्रियनिमित्तमाचष्टे-अनिन्द्रियं—मनस्तन्निमित्तं यस्य तदनिन्द्रिय-
निमित्तं, कीदृक् तद् इत्याह-'मनोवृत्तिः'मनोविज्ञानमिति, मनसो-भावाख्यस्य वर्तनं-विषयपरिच्छेदितया परिणतिर्मनोवृत्तिः,
'ओघज्ञानं चे'ति ओघः-सामान्यं अप्रविभक्तरूपं यत्र न स्पर्शनादीनीन्द्रियाणि नापि मनोनिमित्तमाश्रीयते, केवलं मत्याव-
रणीयक्षयोपशम एव तस्य ज्ञानस्योत्पत्तौ निमित्तं, यथा वल्ल्यादीनां नीव्राद्यभिसर्पणज्ञाने न स्पर्शनं निमित्तं, न मनो निमित्तमिति,

तथाच मतिज्ञानावरणक्षयोपशम एव केवलो निमित्तं क्रियत ओघज्ञानस्य । ननु पुनरिन्द्रियनिमित्तमनिन्द्रियनिमित्तं च ज्ञानं किमेकरूपमुतास्ति कश्चिद्भेदकलापः ?, अस्तीत्याह, यद्यस्ति ततो भण्यताम्, उच्यते—

अवग्रहेहापायधारणा इति १५ ॥ सूत्रं ॥

अवग्रहादयः इन्द्रियानिन्द्रियनिमित्तमतिज्ञानभेदा इति सूत्रसमुदायार्थः, अवयवार्थं त्वाह भाष्यकारः—'तदेतदि'त्यादिना (पृ. १६. १६.) तदेतत् मतिज्ञानं लक्षणविधानाभ्यां यदुक्तं 'उभयनिमित्तमपि' इन्द्रियनिमित्तमनिन्द्रियनिमित्तम्, अपिशब्दादिन्द्रियानिन्द्रियनिमित्तमपि 'एकशः' इत्येककं स्पर्शनादीन्द्रियव्यत्ययपेक्षयाऽपि 'चतुर्विध'मिति चतस्रो विधा यस्य तच्चतुर्विधं भवति, 'तद्यथे'ति निदर्शनार्थः, 'अवग्रह' इत्यादि, एवमुपन्यस्यावग्रहस्वरूपाभिधित्सयाह—'तत्राव्यक्त'मित्यादि, तत्रेति र्शनादिभिर्व्यक्तम् अस्पष्टमालोचनावधारणमिति योगः, तदेव विशेष्यते—'यथास्व'मिति यथास्वमिति यथात्मीयः, इन्द्रियैः स्पर्शनादिभिर्विषयाणां स्पर्शादीनां यथाऽऽत्मीयो—यो यस्य विषयः, स्वविषय इत्यर्थः, 'आलोचनावधारण'मिति आङ् मर्यादायां, लोचनं दर्शनं, एतदुक्तं भवति—मर्यादया सामान्यस्यानिर्देश्यस्य स्वरूपनामादिकल्पनारहितस्य दर्शनमालोचनं तदेवावधारणमालोचनावधारणं, एतदवग्रहोऽभिधीयते, अवग्रहणमवग्रहः इत्यन्वर्थयोगादिति, एवं स्वचिह्नतोऽवग्रहमभिधायास्यैव पर्यायशब्दानाह—'अवग्रहो ग्रहणमालोचनमवधारणमित्यनर्थान्तरं' सामान्यमात्रपरिच्छेदकत्वात् पर्यायशब्दा एवैते इति, एवमवग्रहं कथयित्वा ईहास्वरूपं कथयन्नाह—'अवगृहीत' इत्यादि, अवगृहीत इत्यनेन क्रमं दर्शयति, अवगृहीते सामान्ये ईहा प्रवर्तते, तथाह 'विषयार्थैके'त्यादि, (विषयः सामान्यविशेषरूपः) स एवार्यमाणत्वादर्थः विषयार्थः तस्यैकदेशः सामान्यमनिर्द-

ग्रादिरूपं तस्माद् विषयार्थैकदेशात् परिच्छिन्नादनन्तरं स्पर्शमात्रग्रहे तस्य मृणालस्पर्शसाधर्म्यात् 'शेषानुगमनं' सद्भूतासद्भू-तोष्णत्वादिविशेष्यत्यागोपादानाभिमुखस्वरूपेण, न संशय इव सर्वात्मना परिकुंठचित्तभावतः, अननुगमनेन, किमित्याह–'निश्चय-विशेषजिज्ञासा चेष्टे'ति निश्चीयतेऽसाविति निश्चयः—मृणालस्पर्शादिः स एव विशिष्यते–अन्यस्मादिति विशेषः तस्य ज्ञातुमिच्छा जिज्ञासा तया चेष्टा–बोधः स्वतत्त्वात्मव्यापाररूप ईहोच्यते, एवं स्वचिह्नतः ईहां निरूप्य अस्या एव पर्यायशब्दानाह –'ईहा ऊहा तर्कः परीक्षा विचारणा जिज्ञासेत्यनर्थान्तरं' सामान्येनेहाभिधानान्नास्त्यर्थभेद एषां शब्दानामिति, एवमीहा-मभिधायापायमभिधातुमाह–'अवगृहीत' इत्यादि, अनेनापि क्रममाचष्टे, अवगृहीते विषये स्पर्शसामान्यादौ ततः 'सम्यगि'ति मृणालस्पर्श इत्येवमादानाभिमुखं सम्यक्, तत्र तद्भावानुगुण्यात्, नो अहिस्पर्श इत्येवं परित्यागाभिमुख्यमसम्यक्, तत्र तद्भा-वागुण्यात्, इत्येवमीहायां प्रवृत्तायां सत्यां ततः किमित्याह–'गुणदोषविचारणाऽध्यवसायापनोदोऽपाय इति' इह मृणा-लसाधारणो धर्मो गुणः तत्रासम्भवति दोषः तयोर्विचारणा-मार्गणा तयाऽध्यवसायो-निमलतरबोधः स एवापनोदः मृणालस्पर्श एवा-यमिति निश्चयादयमुदेति, तत्रेहामितिकृत्वा, 'अपाय' इत्ययमेवंविधोऽपनोदोऽपाय इति, अपैतीत्यपायः, निश्चयेन परिच्छिनत्तीत्यर्थः, एवं स्वलक्षणतोऽपायमभिधायास्यैव पर्यायशब्दानाह–अपायोऽपगमः अपनोदः अवव्याधः' तथा 'अपेत' मित्यादि, ए-तत्र भावाभिधायिभिः पुनः पर्यायाभिधानं वस्तुविषयोऽपायोऽनन्तरकालभावी संलक्ष्यमाणोऽपाय इति ज्ञापनार्थं, एवमपायमभि-धायाधुना धारणाऽभिधित्सयाऽऽह–'धारणे'त्यादि, धारणेति लक्ष्यं प्रतिपत्तिः यथारूपयोगाप्रच्युतिः 'यथास्व'मिति यथाविषयं, यो यः स्पर्शादिर्विषयः, मृणालस्पर्शानुभवस्याविनाश इत्यर्थः, तथा 'मत्यवस्थान' मित्युपयोगान्तरेऽपि शक्तिरूपाया मतेः क्वचि-

शादिरूपं तस्माद् विषयार्थैकदेशात् परिच्छिन्नादनन्तरं स्पर्शमात्रग्रहे तस्य मृणालस्पर्शसाधर्म्यात् 'शेषानुगमनं' सद्भूतासद्भूतोष्णत्वादिविशेष्यत्यागोपादानाभिमुखस्वरूपेण, न संशय इव सर्वात्मना परिकुंठचित्तभावतः, अननुगमनेन, किमित्याह—'निश्चयविशेषजिज्ञासा चेष्टे'ति निश्चीयतेऽसाविति निश्चयः—मृणालस्पर्शादिः स एव विशिष्यते—अन्यस्मादिति विशेषः तस्य ज्ञातुमिच्छा जिज्ञासा तया चेष्टा—बोधः स्वतत्त्वात्मव्यापाररूप ईहोच्यते, एवं स्वचिह्नतः ईहां निरूप्य अस्या एव पर्यायशब्दानाह—'ईहा ऊहा तर्कः परीक्षा विचारणा जिज्ञासेत्यनर्थान्तरं' सामान्येनेहाभावित्वान्नास्त्यर्थभेद एषां शब्दानामिति, एवमीहामभिधायापायमभिधातुमाह—'अवगृहीत' इत्यादि, अनेनापि क्रममाचष्टे, अवगृहीते विषये स्पर्शसामान्यादौ ततः 'सम्यगि'ति मृणालस्पर्श इत्येवमादानाभिमुखं सम्यक्, तत्र तद्भावानुगुण्यात्, नो अहिस्पर्श इत्येवं परित्यागाभिमुख्यमसम्यक्, तत्र तद्भाववैगुण्यात्, इत्येवमीहायां प्रवृत्तायां सत्यां ततः किमित्याह—'गुणदोषविचारणाऽध्यवसायापनोदोऽपाय इति' इह मृणालसाधारणो धर्मो गुणः तत्रासम्भवति दोषः तयोर्विचारणा-मार्गणा तयाऽध्यवसायो-विमलतरबोधः स एवापनोदः मृणालस्पर्श एवायमिति निश्चयादयमुदेति, तत्रेहामितिकृत्वा, 'अपाय' इत्ययमेवंविधोऽपनोदोऽपाय इति, अपैतीत्यपायः, निश्चयेन परिच्छिनत्तीत्यर्थः, एवं स्वलक्षणतोऽपायमभिधायास्यैव पर्यायशब्दानाह—अपायोऽपगमः अपनोदः अपव्याधः' तथा 'अपेत' मित्यादि, एतच्च भावाभिधायिभिः पुनः पर्यायाभिधानं वस्तुविषयोऽपायोऽनन्तरकालभावी संलक्ष्यमाणोऽपाय इति ज्ञापनार्थं, एवमपायमभिधायाधुना धारणाऽभिधित्सयाऽऽह—'धारणे'त्यादि, धारणेति लक्ष्यं प्रतिपत्तिः यथारूपयोगाप्रच्युतिः 'यथास्व'मिति यथाविषयं, यो यः स्पर्शादिर्विषयः, मृणालस्पर्शानुभवस्यानाश इत्यर्थः, तथा 'मत्यवस्थान' मित्युपयोगान्तरेऽपि शक्तिरूपाया मतेः क्वचि-

गिति प्रतिपत्तिः, तन्निरासायाह–'सेतराणामिति सप्रतिपक्षाणामित्यर्थः' एतदुक्तं भवति—इतरशब्दस्य विरोध एवार्थः समवसेयो,नान्य इति, एतदेव प्रकटयति, तद्यथा–'बह्ववगृह्णाती' त्यादिना, ननु तावदवग्रहादयः प्रथमान्ताः श्रुताः पूर्वसूत्रे बह्वादयश्चेह षष्ठ्यन्ता इति तत्रेवमर्थकथनं युक्तं–बह्वोरर्थस्य अवग्रहः अस्यार्थस्यावग्रह इति, उच्यते, अल्पोऽयं दोषः, यतोऽवग्रहादयः कर्तृसाधनास्तत्र श्रिता अवगृह्णातीत्यवग्रहः,ईहते इति ईहा,अपैतीत्यपायः,धारयतीति धारणा, यश्चासो ज्ञानांशोऽवगृह्णातीत्यादिरूपस्तस्यावश्यं कर्मणा भवितव्यं, ततश्चेह बह्वादिभेदं सूत्रेण विषयात्मकं भण्यते,अतो नास्त्येवार्थभेदो बह्वोरवग्रहः बहुमवगृह्णातीति,अनयोरेक एवार्थः,केवलं तु शब्दभेदः, तत्र बहुमवगृह्णाति वेणुवीणामृदङ्गपटहध्वनिसमुदयं क्षयोपशमोत्कर्षात्, कथमेतद् विनिश्चीयते, उत्तरकालं तथा अपायादिदर्शनात्, न ह्यसत्यवग्रहभेदे स तथाविधो युक्तः, अतिप्रसङ्गाद्, व्यावहारिकावग्रहमेवापेक्ष्यैवमुक्तमित्यन्ये, स ह्यनाय ज्येत्तरेहाद्यपेक्षया अवग्रह इति,तथा 'अल्पमवगृह्णाति' तेषामेव वेण्वादिशब्दानामेकं पटहादिशब्दं, नान्यत्, मतोऽपि क्षयोपशमापकर्षात्,तथा 'बहुविधमवगृह्णाति' तेषामेव वेण्वादिशब्दानामेकैकं मृदुमधुरषड्जादिभेदेन, तथैकविधमवगृह्णाति,तमेव वेण्वादिशब्दं मृद्वाद्येकगुणसमन्वितमित्यर्थः, तथा क्षिप्रमवगृह्णाति तमेव वेण्वादिशब्दं शीघ्रमिति भावः,तथा'चिरेणावगृह्णाति'तमेव वेण्वादिशब्दं बहुना कालेनेति,तथा 'अनिश्रितमवगृह्णाति'तमेव वेण्वादिशब्दमन्यनिरपेक्षं मेघशब्दादिना भेरीशब्दाग्रहणवदिति वृद्धव्याख्या, 'निश्रितमवगृह्णाति'तमेव वेण्वादिशब्दमन्यसापेक्षमिति, तथा 'असंदिग्धमवगृह्णाति' तमेव वेण्वादिशब्दं निश्चितमित्यर्थः, तथा 'संदिग्धमवगृह्णाति' तमेव वेण्वादिशब्दमनिश्चितमिति, तथा 'ध्रुवमवगृह्णाति' तमेव वेण्वादिशब्दं स्थिरबोधभावेन, तथा 'अध्रुवमवगृह्णाति'तमेव वेण्वादिशब्दमस्थिरबोधभावेन,भावना चात्रो-

चरकालं तथा अपायादिदर्शनादिना कृतेव,तथा कश्चिद् ध्रुवो बोधो भवति यतः पुनः स्मरणं प्रवर्त्तते,अन्यस्तु न तथेत्यनुभवसिद्ध-मेतत्, एवमीहादीनामपि विद्यात् ,'एव'मिति यथा विषयस्य बह्वादिभेदात् द्वादशप्रकारोऽवग्रहोऽभिहितः क्षयोपशमोत्कर्षापकर्षादि 'एवमीहादीनामपि' ईहापायधारणानामपि विद्याद्-जानीयाद् भेदं, तद्यथा बह्वीहते अल्पमीहते, एवं बह्वपैत्यपैत्यल्पमवैति, एवं बहु धारयत्यल्पं धारयतीत्यादि द्वादशविधत्वमिति ॥ एवमवग्रहादीनां स्वस्थाने द्वादशविधं ग्राह्यभेदाद्भेदं प्रतिपाद्येदानीमेषामेव विषयं निर्द्धारयन्नाह—

अर्थस्येति ॥ सूत्रं १७ ॥

अर्थस्य ग्राहकाः अवग्रहादय इति सूत्रसमुदायार्थः, अवयवार्थं त्वाह भाष्यकारः–'अवग्रहादय'इत्यादिः (पृ.१८-६) अवग्रहादयोऽनन्तरोदितस्वरूपा मतिज्ञानविकल्पा–मतिज्ञानांशाः अर्थस्य–सामान्यविशेषात्मनो विषयरूपस्य भवन्ति ग्राहकाः,विषयिण इतियावत्, अर्थग्रहणं व्यञ्जनव्यावृत्त्यर्थं, साकल्येनैतेऽर्थस्यैव भवन्ति,न व्यञ्जनस्य ॥ व्यञ्जनस्य तर्हि किमित्याह—

व्यञ्जनस्यावग्रह इति ॥ सूत्रं १८ ॥

एक एव भवतीति सूत्रसमुदायार्थः,अवयवार्थं त्वाह भाष्यकारः–'व्यञ्जनस्ये'त्यादिना,(पृ.१८-९) व्यज्यतेऽनेनार्थः प्रदीपेनेव घट इति व्यञ्जनं, तच्चोपकरणेन्द्रियशब्दादिपरिणतद्रव्यसंश्लेषरूपं, तथा चाह भाष्यकारः–'वंजिज्जइ जेणत्थो घडोव्व दीवेण वंजणं तं च। उवकरणिंदिअसद्दाइपरिणओ दव्वसंबंधो ॥ १ ॥ (विशे. १९४) इत्यादि, तस्य व्यञ्जनस्य संश्लेषरूपस्यावग्रह एवैको भवति, तथाविधक्षयोपशमाभावादव्यक्ततन्मात्रबोधः सुपुप्ताङ्गपतितोत्पलनालसंश्लेषबोधवत्, 'नेहादय'इति, शब्दाद्यर्थविषय-

उपसंहरन्नाह–'एव'मित्यादि, एवमेतत् तदिति लक्षणविधानाभ्यां यन्निरूपितं मतिज्ञानं, तस्य पुनः संपिण्ड्य भेदान् कथयति–'द्विविध'मित्यादि, द्विविधमिति इन्द्रियनिमित्तमनिन्द्रियनिमित्तं च, चतुर्विधमवग्रहादिभेदतः,अष्टाविंशतिविधमिति स्पर्शनादीनां मनःपर्यवसानानां षण्णामेकैकस्य चत्वारो भेदा अवग्रहादयः, तत् समुदिताः सन्ते चतुर्विंशतिरूपा जाताः, तन्मध्ये चक्षुर्मनोवर्जः स्पर्शनादीनां यो व्यञ्जनावग्रहश्चतुर्भेदः स प्रक्षिप्तः ततोऽष्टाविंशतिविधं भवति, अष्टषष्टयुत्तरशतविधमिति तस्या एवाष्टाविंशतेरेकैको भेदः षड्विधो भवति, बह्वादिभेदेन, अतोऽष्टषष्टयुत्तरशतविधं भवति, षट्त्रिंशत्त्रिशतभेदमिति, तस्या अष्टाविंशतेरेकैको भेदो द्वादशधा भवति सेतरबह्वादिभेदेन॥ अत्र–अस्मिन् अवकाशे चोदक आह-'गृह्णीमो'जानीमस्तावत् क्रमेण पूर्वमुद्घटितं लक्षणविधानरूपं मतिज्ञानं, तदनन्तर तु यच्छ्रुतज्ञानमुक्तं तन्न विद्म इत्यतः पृच्छ्यते मया श्रुतज्ञानं किंलक्षणमिति?, अस्मिंश्चोदिते गुरुराह–'उच्यते'मयेति

श्रुतं मतिपूर्वं द्व्यनेकद्वादशभेदमिति॥२०॥ सूत्रं॥

'श्रुतज्ञान' मित्यादिना (पृ १९९) श्रुतमिति विवृणोति–श्रुतज्ञानमिति, श्रुतिः श्रुतमितिकृत्वा, श्रोत्रादिनिमित्तं शब्दार्थज्ञानमित्यर्थः,श्रूयत इति श्रुतं-शब्दात्मकमुपचाराद् ज्ञानहेतुत्वात् श्रुतमुच्यते, मतिपूर्वमिति व्याचष्टे–'मतिज्ञानपूर्वकं भवती'ति, मतिज्ञानम्–अनन्तरोदितं कारणं यस्य तत्तथा, आह–युगपदेव मतिश्रुतयोर्लब्धिः, तत्कथं मतिपूर्वकत्वमस्य?, उच्यते, उपयोगापेक्षया, श्रुतोपयोगो मतिनिमित्तमित्यर्थः, अस्य च श्रुतज्ञानस्य प्रधानो हेतुः शब्दात्मकं श्रुतमिति,पर्यायशब्दैस्तदाह 'श्रुत'मित्यादि, श्रूयत इति श्रुतं–शब्दरूपं, तथा आप्तवचनं–तीर्थकरादिवचनं, तथा आगच्छत्याचार्यपरम्परयेत्यागमः, तथा उपदि-

त्वादीहादीनां, तद्द्वारेणैव संश्लेषे प्रवृत्तेरिति,अन्ये तु व्याचक्षते—व्यञ्जनं शब्दाद्याकारपरिणताः पुद्गला एव, विशिष्टार्थावग्रहकारित्वात्, तस्यावग्रह एव भवति, अर्थावग्रहबोधाभिमुख्यकारि तेषां स्वीकरणमित्यर्थः, नेहादय इति,स्वांशे भेदमार्गणनिश्चयधारणाख्ये, तासां नियतत्वात्,'एव'मित्यादि, एवमनन्तरोदितसूत्रद्वयाभिहितेन प्रकारेण 'द्विविधो' द्विप्रकारोऽवग्रहः, विषयभेदाद् 'द्विविध'मित्यादि, व्यञ्जनस्योक्तलक्षणस्यार्थस्य च,'ईहादयस्त्वर्थस्यैव' सामान्यविशेषात्मनः,आह—यदा पुद्गला व्यंजनं तदा कथमिदमर्थाद् भिद्यते?,अभेदे च व्यञ्जनस्यावग्रह इति किंपरं सूत्रं?, उच्यते, प्राप्तकारीन्द्रियविषयपुद्गला व्यञ्जनं, तेषामादावर्थावग्रहबोधाभिमुख्यकारि यत् स्वीकरणं तच्छरावप्रक्षणतुल्यं न तत्रेहादय इत्येवंपरं सूत्रं॥ तत् किमयं व्यंजनावग्रहो न सर्वत्र?, ओमित्युच्यते, तथा चाह सूत्रकारः—

न चक्षुरनिन्द्रियाभ्यां ॥१९॥ सूत्रं ॥

व्यंजनावग्रह इति सूत्रसमुदायार्थः, अवयवार्थं त्वाह भाष्यकारः—'चक्षुषे'त्यादि (पृ. १९-२) चक्षुषा उपकरणेन्द्रियाख्येन सह नोइन्द्रियेण च मनओघज्ञानरूपेण व्यंजनावग्रहो न भवति, एतदुक्तं भवति ते रूपाकारपरिणताः पुद्गलाश्चिन्त्यमानाश्च वस्तुविशेषाः न ताभ्यां संश्लिष्य विज्ञानं जनयंति,अपि तु योग्यदेशावस्थिताश्चक्षुषा गृह्यन्ते,प्रणिधानमविवाश्च मनसा चिन्त्यन्ते,संश्लेषाभ्युपगमे तु अक्ष्यञ्जनादेः ग्रहणं,विषयकृतौ वाऽनुग्रहोपघातौ दर्निवारौ, नायनरश्मिविधानं मनोनिर्गमनं चान्यत्र निराकृतमिति नेहाभिधीयते,अतश्चक्षुरनिन्द्रियाभ्यां व्यंजनावग्रहो न भवति, शेषैर्भवतीत्याह—'चतुर्भि'रित्यादि, चतुर्भिरिन्द्रियैः—स्पर्शनरसनघ्राणश्रोत्रैः शेषैः-उपयुक्तवर्जैर्भवति व्यंजनावग्रह इति,अत्र चतुर्भिरिन्द्रियैरित्यनेन संख्याभ्युपगमतोऽधिकेन्द्रियव्यवच्छेदः,

उपसंहरन्नाह—'एव'मित्यादि, एवमेतत् तदिति लक्षणविधानाभ्यां यन्निरूपितं मतिज्ञानं, तस्य पुनः संपिण्ड्य भेदान् कथयति—'द्विविध'मित्यादि, द्विविधमिति इन्द्रियनिमित्तमनिन्द्रियनिमित्तं च, चतुर्विधमवग्रहादिभेदतः,अष्टाविंशतिविधमिति स्पर्शनादीनां मनःपर्यवसानानां षण्णामेकैकस्य चत्वारो भेदा अवग्रहादयः, तत् समुदिताः सर्वे चतुर्विंशतिरूपा जाताः, तन्मध्ये चक्षुर्मनोवर्जः स्पर्शनादीनां यो व्यञ्जनावग्रहश्चतुर्भेदः स प्रक्षिप्तः ततोऽष्टाविंशतिविधं भवति, अष्टषष्ट्युत्तरशतविधमिति तस्या एवाष्टाविंशतेरेकैको भेदः षड्विधो भवति, बह्वादिभेदेन, अतोऽष्टषष्ट्युत्तरशतविधं भवति, षट्त्रिंशत्त्रिशतभेदमिति, तस्या अष्टाविंशतेरेकैको भेदो द्वादशधा भवति सेतरबह्वादिभेदेन ॥ अत्र—अस्मिन् अवकाशे चोदक आह-'गृह्णीमो'जानीमस्तावत् क्रमेण पूर्वमुद्घटितं लक्षणविधानरूपं मतिज्ञानं, तदनन्तरं तु यच्छ्रुतज्ञानमुक्तं तन्न विद्म इत्यतः पृच्छ्यते मया श्रुतज्ञानं किंलक्षणमिति?, अस्मिंश्चोदिते गुरुराह—'उच्यते'मयेति

श्रुतं मतिपूर्वं द्व्यनेकद्वादशभेदमिति ॥२०॥ सूत्रं ॥

'श्रुतज्ञान' मित्यादिना (पृ १९-९.) श्रुतमिति विवृणोति—श्रुतज्ञानमिति, श्रुतिः श्रुतमिति कृत्वा, श्रोत्रादिनिमित्तं शब्दार्थज्ञानमित्यर्थः,श्रूयत इति श्रुतं शब्दात्मकमुपचाराद् ज्ञानहेतुत्वात् श्रुतमुच्यते, मतिपूर्वमिति व्याचष्टे—'मतिज्ञानपूर्वकं भवती'ति, मतिज्ञानम्—अनन्तरोदितं कारणं यस्य तत्तथा, आह—युगपदेव मतिश्रुतयोर्लब्धिः, तत्कथं मतिपूर्वकत्वमस्य?, उच्यते, उपयोगापेक्षया, श्रुतोपयोगो मतिनिमित्तमित्यर्थः, अस्य च श्रुतज्ञानस्य प्रधानो हेतुः शब्दात्मकं श्रुतमिति,पर्यायशब्दैस्तदाह 'श्रुत'मित्यादि, श्रूयत इति श्रुतं—शब्दरूपं, तथा आप्तवचनं—तीर्थकरादिवचनं, तथा आगच्छत्याचार्यपरम्परयेत्यागमः, तथा उपदि-

श्यते–उच्चार्यत इत्युपदेश',तथा ऐतिह्यमेन वृद्धाः स्मरन्तीति,तथा अभ्यस्यते निर्जरार्थिभिरित्याम्नायः, तथा प्रगतं प्रशस्तं प्रधानमादौ वा वचनं प्रवचनं–क्षीणरागादिवचनं जिनवचनमिति,'इत्यनर्थान्तर'मिति एवमेभिः पर्यायशब्दैः द्वादशाङ्गं गणिपिटकमभिधीयत इतियावत्, द्व्यनेकद्वादशभेदमित्येनमवयवं व्याचिख्यासुराह–'तदेतदि'त्यादि, तदेतच्छ्रुतमनन्तरोक्तं 'द्विविधं'-द्विप्रकारं, कथमित्याह–'अंगबाह्य'मित्याचारादिश्रुतपुरूषावयवबाह्यं,'अंगप्रविष्टं चे'ति तदन्तर्गतं चेत्यर्थः, तत् पुनर्द्विविधं मत् अनेकविधम्–अनेकप्रकार द्वादशप्रकार च, कथमित्याह–'यथासंख्यं'यथोपन्यस्तमितियावत्, तदेव प्रकटयन्नाह–'अंगबाह्य'मित्यादि, अगबाह्यमनन्तरोपन्यस्तमनेकविधं, तद्यथा–'सामायिक'मित्यादि, समभावः सामायिकं–चारित्रं,तत् प्रतिपादकमध्ययनमपि सामायिकमिति१,चतुर्विंशतीनां तीर्थकृतां अप्यन्येषां च स्तवाभिधायी चतुर्विंशतिस्तवः २,वन्दनं कस्मै कार्यं कस्मै च नेति यत्र वर्ण्यते तद्वन्दनं३,असयमस्थानं प्राप्तस्य यतेस्तस्मात् प्रतिनिवर्त्तनं यत्र वर्ण्यते तत् प्रतिक्रमणं ४,कृतस्य पापस्य यत्र कायपरित्यागेन क्रियमाणेन विशुद्धिराख्यायते स कायव्युत्सर्गः५,प्रत्याख्यानं यत्र मूलगुणा उत्तरगुणाश्च धारणीया इत्ययमर्थः ख्याप्यते तत् प्रत्याख्यानं ६,दश विकाले पुत्रहिताय स्थापितान्यध्ययनानि दशवैकालिकं,आचारात् परतः पूर्वकाले यस्मादेतानि पठितवन्तो यतयस्तेनोत्तराध्ययनानि, पूर्वेभ्य आत्मीयसंघसंततिहिताय स्थापितान्यध्ययनानि दशा उच्यन्ते, दशा इति चावस्थावचनः शब्दः,काचित् प्रतिविशिष्टावस्था यतीना यासु वर्ण्यते ता दशा इति,कल्पव्यवहारौ कल्पन्ते–विधंते मूलादिगुणा यत्र स कल्पः, व्यवह्रियते प्रायश्चित्ताभवद्व्यवहारतयेति व्यवहारः, निशीथम्–अप्रकाशं सूत्रार्थाभ्यां यत्, ऋषिभिर्भाषितानि प्रत्येकबुद्धादिभिः कापिलीयादीनि, एवमादि सर्वमङ्गबाह्यं दृश्यं, उक्तमङ्गबाह्यं, अङ्गप्रविष्टमभिधातुमाह–'अंगप्रविष्ट'मित्यादि,अगप्रविष्टं यत् प्राग्-

पन्यस्तं तत् द्वादशविधं, 'तद्यथा–आचार'इत्यादि, आचारो ज्ञानादिर्यत्र कथ्यते स आचारः, सूत्रीकृताः अज्ञानिकादयो यत्र वादिनस्तत् सूत्रकृतं, यत्रैकादीनि पर्यायान्तराणि वर्ण्यन्ते तत् स्थानं, सम्यगवायनं वर्षधरनद्यादिपर्वतानां यत्र स समवायः, व्याख्या जीवादिगताया यत्र नयद्वारेण प्ररूपणा क्रियते सा व्याख्याप्रज्ञप्तिः, ज्ञाता--दृष्टान्तास्तानुपादाय धर्मो यत्र कथ्यते तज्ज्ञातधर्मकथा, उपासकः--श्रावकैरेवं स्थातव्यमिति येष्वध्ययनेषु दशसु वर्ण्यते ता उपासकदशाः, अन्तकृतः–सिद्धाः ते यत्र ख्याप्यन्ते वर्द्धमानस्वामिनस्तीर्थे एतावन्त इत्येवं सर्वतीर्थकृतां ता अन्तकृद्दशाः, अनुत्तरोपपातिका देवा यासु ख्याप्यन्ते ता अनुत्तरोपपातिकदशाः, प्रश्नितस्य जीवादेर्यत्र प्रतिवचनं भगवता दत्तं तत् प्रश्नव्याकरणं, विपाकः--कर्म्मणामनुभवस्तं सूत्रयति यत्र तद्विपाकसूत्रं, दृष्टीनाम्--अज्ञानिकादीनां यत्र प्ररूपणा कृता स दृष्टिवादः, तासां वा यत्र पातः ॥ अत्रावसरे चोदक आह--'मतिज्ञानश्रुतज्ञानयो'रनन्तरोदितयोः 'कः प्रतिविशेषः?' परोक्षत्वाद्यविशेषादिति प्रष्टुरभिप्रायः, सिद्धान्तवाद्याह–'अत्रोच्यते' 'उत्पन्ने'त्यादि, उत्पन्न इति स्वेन रूपेण(क्रियया)वा जातः, न तु उत्पद्यमानः, स चातीतो विनष्टोऽपि भवत्यत आह-'अ॰विनष्ट'इत्यप्रच्युतः अर्थो-रूपादिः तस्य ग्राहकं-परिच्छेदकं, एतच्च कालान्तरस्थायिषूत्पन्नाविनष्टेष्वप्यर्थेषु व्यवहारतस्त्रिकालगोचरमपि सम्भवत्यत आह–'साम्प्रतकालविषय'मिति वर्त्तमानकालविषयमित्यर्थः, स्मृतेरतीतविषयत्वान्न सर्वमेवंविधमिति चेत्, न, साम्प्रतकालगृहीतातिरिक्तस्य कस्यचिदस्मरणात्, पूर्वदृष्टस्य कालान्तरदर्शनवच्चास्याः प्रामाण्यमिति 'मतिज्ञान'मिति मतिज्ञानमेवंविधं भवति, 'श्रुतज्ञानं त्वि'त्यादि, तुशब्दो मतिज्ञानादस्य भेदप्रदर्शनार्थः, तथा चाह—'त्रिकालविषय'मिति त्रिकालगोचरं, मा भूद्विषयाभेद एवेत्याह—'उत्पन्नविनष्टानुत्पन्नार्थग्राहक'मिति उत्पन्नो–वर्तमानः विनष्टः–अतिक्रान्तः अनुत्पन्नो–भावी

अर्थो-रूपादिस्तस्य ग्राहकं-परिच्छेदकं, नोइन्द्रियनिमित्तविशिष्टपर्यालोचनात्मकत्वाच्छ्रुतस्य, आह-उत्पन्नाद्यर्थग्राहकमित्येतान-
देन वाच्यं, अस्य त्रिकालविषयाव्यभिचारित्वात्, न, उत्पन्नादिभेदापेक्षया व्यभिचारासिद्धेः,न हि प्रत्येकमुत्पन्नादि ज्ञानं त्रिका-
लगोचरमिति, अतस्तस्य कथंचिदेकत्वख्यापनपरं त्रिकालविषयग्रहणं। 'अत्राहे'त्यादि, अत्र प्रस्तावे आह चोदकः गृह्णीमो—
जानीमस्तत् पूर्वपृष्टं मतिज्ञानश्रुतज्ञानयोर्नानात्वं, अथ श्रुतज्ञानस्य प्रस्तुतस्य द्विविधमनेकद्वादशविधमित्येवं भूयः कि-
कृतः प्रतिविशेषो-भेदः, मतं तद्द्रव्यश्रुतमोघतो भावश्रुतस्य कारणमित्यभिप्रायः,सिद्धान्तवाद्याह—'अत्रोच्यते वक्तृविशेषादि'-
ति, वक्तार' तस्य ग्रन्थराशेर्निबन्धकास्तेषां विशेषो भेदस्तस्माद् द्वैविध्यमिति द्विविधत्वं, एतदेव दर्शयति—'यद्भगवद्भि'रित्या
दिना,भगवद्भिरित्यैश्वर्यादिगुणान्वितैः 'सर्वज्ञै'रिति सर्वद्रव्यपर्यायान् विशेषतो जानानैः,'सर्वदर्शिभि'रिति तानेव सामा-
न्यतः पश्यद्भिः,'परमर्षिभि'रिति केवलिप्रधानैः 'अर्हद्भि'रिति पूजा त्रिदशादीनामर्हद्भिर्यदुक्तमिति सम्बन्धः, किमर्थं कृतकृत्यै-
रुक्तमित्याह—'तथास्वाभाव्यादि'ति, तेषामेष एव स्वभावो यतस्ते सर्वाकार (सर्वदेव) परहितरता इति, अथवा न कृतकृत्या
एवेति हेत्वंतरमाह—'परमशुभस्य चे'त्यादिना, इह तीर्थकरनामकर्म विशेष्यं वर्त्तते, परमं च तच्छुभं च परमशुभं, नातोऽन्यत्
शुभतरमस्ति, तस्मिन्नभ्युदितेऽन्या अमातादिकाः प्रकृतयः उदिता अपि न स्वविपाकप्रकर्षं प्रदर्शयितुं क्षमाः, क्षीरपूरितकुम्भे निम्ब-
रसबिन्दुवत्तस्य, एतदेव विशेष्यते—'प्रवचने'त्यादिना, प्रवचनं-द्वादशाङ्गं गणिपिटकं ततोऽनन्यवृत्तिर्वा सङ्घस्तस्य, प्रवचनस्य
प्रतिष्ठापनं फलं-प्रयोजनमस्य तत् प्रवचनप्रतिष्ठापनफलं तस्य, तीर्थं तदेव गणिपिटकं संघः सम्यग्दर्शनादित्रयं वा तत् कुर्वन्ति
-उपदिशन्ति ये ते तीर्थकरास्तन्नामयति-करोति यत्तीर्थकरनाम तस्यानुभावात्-पश्चाद्विपाकात् इत्यर्थः, अतस्तस्मादनुभावाद्

यद् उक्तं–प्रतिपादितं गन् मातृकापदादिरूपेण 'भगवच्छिष्यै'रिति तीर्थकरशिष्यैः, ते च सामान्यपुरुषा अपि भवन्त्यत आह– 'अतिशयवद्भिः'विशिष्टशक्तियुक्तैः, एतेऽपि वैक्रिया अपि भवंत्यत आह–'उत्तमातिशय'इत्यादि, उत्तमा अतिशयाः–प्रधाना अप्रमादादयः चाक्षुषु ( नाक च इक्षु )मधुरा बुद्धिः बीजकोष्ठादिरूपा आभिः उत्तमातिशयवाग्बुद्धिभिः सम्पन्नैः–समन्वितैः, करित्याह–'गणधरै'रिति साधनादिगणधारिभिः यद् दृब्धं–रचितं तदङ्गम्–आचारादि, तदन्यकृतमङ्गबाह्यमित्येतदाह– 'गणधरानन्तर्यादिभिस्त्वि'त्यादिना, गणधरा–गौतमादयः तेषामनन्तरे ये साधवस्तेऽनन्तर्यास्तेषां शिष्या जम्बूनामादयः ते आदिर्येषां प्रभवादीनां ते गणधरानन्तर्यादयस्तैः, पुनः किम्भूतैरित्याह–'अत्यन्तविशुद्धागमैः' अत्यन्तं निर्मलागमैः, त एव विशेष्यन्ते–'परमप्रकृष्टवाङ्मतिशक्तिभि'रिति वाग् अग्राम्या मतिः–औत्पत्तिक्यादिः चतुर्विधा शक्तिः–ग्रन्थकरणलब्धिः परमाः–उत्तमा प्रकृष्टाः–तज्जातानपि श्रेष्ठाः वाङ्मतिशक्तयो येषां ते तथाविधास्तैः, 'आचार्यै'रिति ज्ञानाद्याचारानुष्ठायिभिः, किमित्याह–'कालसंहननायुर्दोषादि'ति दुष्षमच्छेवार्तवर्षशतजीवितापराभवात् अल्पशक्तीनां शिष्याणां,कालदोषात् ह्येते अल्पशक्तयो भवन्ति, अत एतदनुग्रहाय उपकारायाल्पेनेन ग्रन्थेन तत्त्वमुह्यिष्यत इति मन्यमानैर्यत्प्रोक्तमनन्तरोदितगुणैराचार्यै— दशवैकालिकादि तदङ्गबाह्यमिति, अत एव च मतेरेतन्महाविषयमित्याह–'सर्वज्ञे'त्यादिना, सर्वज्ञप्रणीतत्वात्–तीर्थकरोपदिष्टत्वात् तथा आनन्त्यत्वाद् विज्ञेयस्य श्रुतज्ञानसम्बन्धिनः,किमित्याह–'मतिज्ञानात्' साम्प्रतकालविषयतया (अल्पविषयज्ञापकात् श्रुतज्ञानं त्रिकालविषयतया महाविषयं), अनेकार्थपरिच्छेदीत्यर्थः, तस्य चैवंविधस्य श्रुतस्य महाविषयत्वात् कारणात् तांस्तानर्थान् जीवादीनधिकृत्य प्रकरणसमाप्त्यपेक्षं विवक्षिताधिकारनिष्ठापेक्षं, किमित्याह–'अंगोपाङ्गनानात्व'मिति,

यत्रापरो विचित्रस्तदुपाङ्गं राजप्रसेनकीयादि, एतदुक्तं भवति—यत्राचारादिरूपोऽर्थः परिसमाप्तिं नीतस्तदिदमाचारादि, सुखेन च
'किंचान्यत्' इतश्चाङ्गोपाङ्गनानात्वं, 'सुखग्रहणे'त्यादि, सुखेन -अनायासेन पूर्वस्य ग्रहणं करिष्यति अङ्गानङ्गानां, एवमगे-
गृहीतं धारयिष्यन्ति बुद्ध्या, सुखेन विज्ञानं तस्मिन्नर्थे शृण्वन्त उत्पादयिष्यन्तीति, सुखेनापोहं—निश्चयं करिष्यन्तीति, अन्यथेति—
पोऽर्थः स्थित इति—सुखेन च प्रयोगं--व्यापारं करिष्यन्ति प्रत्युपेक्षणादिकालभेदेन विदित्वेति। 'अन्यथे'त्यादि राजप्रसेनकी-
भेदेन रचनायाः अभावे हिः यस्मादनिबद्धम्-अरचितं कथमिति चेद् 'अङ्गोपाङ्गशः' अङ्गानि-आचारादीनि उपाङ्गानि-समुद्रस्य प्रतरणम्-
यौपपातिकादीनि ताभ्यां साङ्गोपाङ्गाभ्यां परिमितविशिष्टार्थाभिधायिभ्यां साङ्गोपाङ्गशः,अल्पत्वात् शक्यः दृश्यः, 'एतेने'-
उत्तरणं तेन समुद्रप्रतरणेन तुल्यं वर्त्तते समुद्रप्रतरणवत् 'दुरध्यवसानं स्यादि'ति दुःखेनाध्यवसीयते दुरध्यवसानं भवेत्, वस्तुनः
त्यादि एतेनाङ्गोपाङ्गभेदप्रयोजनेन सुखग्रहणादिना पूर्वाणि-दृष्टिपातान्तःपातीनि,पूर्वं प्रणयनात् ,वस्तूनि पूर्वस्यैवांशोऽल्पः, आह-
प्राभृतमल्पतरं,प्राभृतात् प्राभृतप्राभृतमल्पतरं, ततोऽध्ययनं ग्रन्थतोऽल्पतरं,ततः उद्देशकोऽल्पतरः,उद्देशकात् पदमित्यत अत्रा-
पदानि च व्याख्यातानि, एतदुक्तं भवति-सुखग्रहणादि यदेवाङ्गोपाङ्गादिकरणे फलं तदेवात्रापीति॥ 'अत्राहे'त्यादि, अत्रा-
वसरे मतिश्रुतयोरुक्तस्वरूपयोस्तुल्यविषयत्वम्-अभिन्नग्राह्यता, सा च वक्ष्यते इहैवोत्तरत्र, तस्य वक्ष्यमाणस्य सूत्रस्यैकदेशमुप-
न्यस्यति-'द्रव्येष्वसर्वपर्यायेष्वि'ति सर्वेषु धर्मादिद्रव्येष्वसर्वपर्यायेषु मतिश्रुतयोः प्रवृत्तिः-निबन्ध इति, तस्माद्विषयादेकरू-
रूपादेकत्वमेव मतिश्रुतयोर्भवति, न भेद इति, 'अत्रोच्यते, उक्तमेतदि'ति भेदप्रयोजनं पुरस्तात् ,तदेवोद्घट्यति-'सम्प्रती'-
(सांप्रते)त्यादिना, वर्त्तमानकालविषयं—वर्त्तमानमर्थमालम्बते मतिज्ञानं, श्रुतज्ञानं पुनस्त्रिकालविषयं—त्रैकालिकमर्थमालम्बते,

विशुद्धतरं च–व्यवहितविप्रकृष्टानेकसूक्ष्मार्थग्राहित्वाद्विशुद्धतरमुच्यते, 'किंचान्य'दिति, तथा अयमपरस्तयोर्विशेषः–मतिज्ञानमिन्द्रियाणि–स्पर्शनादीनि अनिन्द्रियं–मन ओघज्ञानं च निमित्तमुररीकृत्य प्रवर्त्तते, 'आत्मनो' जीवस्य 'ज्ञस्वाभाव्यादि'ति जानातीति ज्ञः ज्ञत्वमेव स्वाभाव्यं ज्ञस्वाभाव्यं–आत्मरूपता तस्मात् ज्ञस्वाभाव्यादिति, 'पारिणामिक'मिति सर्वकालवर्ति, न कदाचित् संसारे पर्यटत एतद् भ्रष्टं, यतो निगोदजीवानामपि अक्षरस्यानन्तभागो नित्योद्घाट इत्यागमः, अतः पारिणामिकं, 'श्रुतज्ञानं न्वि'त्यादि श्रुतज्ञानं पुनर्नैवं, यतः 'तत्पूर्वक'मिति, मतिपूर्वकं, मतिपूर्वकत्वेऽपि न तन्मात्रनिमित्तमित्याह–'आप्तोपदेशाद्भवती'ति अर्हदादिवचनादुपजायते इति। आह–'अत्राह गृह्णीमो मतिज्ञानश्रुतज्ञानयोर्नानात्व'मित्यनेन अवधारितमेतत्, पुनरयुक्तमत्राह इत्यादि चोदनं उक्तनिर्वचनं?, उच्यते, नायुक्तं, क्वचित् कस्मिंश्चिदधिगतेऽपि हि निमित्तान्तरतः आशङ्काभावे शिष्यस्य परिहार एव स्मारणीयोऽधिकतरं वा किंचिद्वाच्यं, न तु कुपितव्यमिति विधिप्रदर्शनार्थं अत्राहेत्यादि, अत्रावसरे चोदक आह—'उक्तं श्रुतज्ञानं' भवतेति, 'अथावधिज्ञानं किं' यदस्यानन्तरमुद्दिष्टमिति, अत्रोच्यते इत्याह—

द्विविधोऽवधिः ॥ सूत्रं ॥ २१ ॥

द्वे विधे द्वौ भेदौ यस्य स द्विविधोऽवधिः—ज्ञानविशेष इति सूत्रसमुदायार्थः, अवयवार्थाभिधित्सया द्वैविध्यमेवाह भाष्यकारः—'भवप्रत्यय इत्यादिना' (पृ. २२-४) भवनं भवः जन्मोत्पाद इत्यनर्थान्तरं, स एव प्रत्ययः–कारणं यस्यावधेः स भवप्रत्ययः, तथा क्षयोपशमः–अवधिज्ञानावरणपरिशाटोदयविघातलक्षणः निमित्तं यस्य स तथाविधः, चशब्दः स्वगतानेकभेदसमुच्चयार्थः, न च लक्षणविधानावसरेऽस्य भेदाभिधानमयुक्तं, भेदकथनेनैव लक्षणाभिधानात्, एतदुक्तं भवति–भवक्षयोपशमाभ्यां

लक्ष्यमाणो द्विविधोऽवधिरिति॥ सूत्रान्तरसम्बन्धमाह–'तत्र'तयोरुद्घट्टितयोर्भेदयोराद्यस्तावदुच्यते, तमाह—

भवप्रत्ययो नारकदेवानामिति ॥२२॥ सूत्रं ॥

अवधिरिति वर्तते, सूत्रसमुदायार्थः प्रकटः, अवयवार्थमाह भाष्यकारः–'नारकाणा'मित्यादिना (पृ. २० ७) नरकाः–सीमन्तादयस्तेषु भवाः प्राणिनस्तीव्रदुःखभाजो नारकास्तेषां, तथा दीव्यन्त इति देवाः–भवनवास्यादयः प्रधानसुखभाजः प्राणिन एव तेषां, 'यथास्व'मिति यथा स्वात्मीयं यस्य यत् स्वक्षेत्रादि नियतं गव्यूतपंचविंशतियोजनादिमानमित्यर्थः, किमित्याह?–'भवप्रत्ययं'भवकारणमवधिज्ञानं भवतीति, क्षायोपशमिकत्वादवधेर्भवस्य कारणत्वमपश्यतः माभूत् प्रत्ययशब्दो ज्ञानवचन इति विभ्रमः,स्वयमेव व्याचष्टे–'भवप्रत्ययं भवहेतुकं भवनिमित्त'मित्यर्थः, कारणवचन एवायं प्रत्ययशब्द इति भावः, आह कथमौदयिको भावोऽस्य कारणं?, क्षायोपशमिकमेतदिति सुप्रतीतं?, उच्यते, सत्यमेतत्, किन्तु तस्मिन्नेव क्षयोपशम एवावश्यं भावीत्येवमुच्यते, एतदेवाह–'तेषां ही'त्यादि, तेषां–नारकदेवानां यस्माद्भवोत्पत्तिरेवेति, उत्पत्तिशब्दः सत्तावचनो, भवसत्तैव, नान्यत् किञ्चित् 'तस्य हेतुर्भवती'ति तस्येति–निश्चयतो ज्ञानाव्यभिचारिणः क्षयोपशमस्य व्यवहारतस्तु ज्ञानस्यैव कारणं भवतीति, निदर्शनमाह–'पक्षिणा'मित्यादिना, पक्षिणा–हंसादीनामाकाशगमनवत्, यच्चैषामाकाशगमनं, तत्र्कस्तत्र एव नियमभावात् भवोत्पत्तिरेव हेतुः, न शिक्षा–अन्योपदेशरूपा, तथा 'न तपः' अनशनादिलक्षणं, तद्वन्नारकदेवानामप्यवधिरिति भावः॥

'द्विविधोऽवधि'रित्युक्तं, तत्रैकं भेदमभिधायाधुना द्वितीयमभिधातुमाह—

यथोक्तनिमित्तः षड्विकल्पः शेषाणाम् ॥२३॥ सूत्रं ॥

सूत्रोक्तक्षयोपशमहेतुः षड्विधस्तिर्यङ्नराणामवधिरिति सूत्रसमुदायार्थः, अवयवार्थं त्वाह भाष्यकारः अवयवोल्लिङ्गितेन, तत्र 'यथोक्तनिमित्त'मिति (पृ.२२-१२) यथोक्तं निमित्तं यस्य स तथा, भवोऽप्युक्तमेव निमित्तमिति तद्व्यावृत्त्यर्थमाह—'क्षयोपशमनिमित्त इत्यर्थः' क्षयोपशमः पूर्ववत् स निमित्तं यस्य स तथा, क्व पुनरिदमुक्तं निमित्तं?, अधिकारे ज्ञानाज्ञानदर्शन(दानादि) लब्धयः इत्यत्र, य इहावधिशब्दः प्रकृतज्ञानविशेषणमिति। एतदाह—'तदेतदि'त्यादि, तदिति पुरस्ताद्यदादिष्टं तत् अवधिज्ञानं, किम्भूतमित्याह—क्षयोपशमनिमित्तं, नेतरत् भवप्रत्ययिकम्, (किमिति)आह—'षड्विधं भवति' क्षयोपशमस्य षड्विधत्वात्, केषामित्याह—'शेषाणा'मिति, एतदेव व्याचष्टे—'शेषाणा'मित्यादिना, शेषाणामित्युपयुक्तवर्जितानां, उपयुक्ताश्च नारकदेवा इत्याह—'नारकदेवेभ्यः शेषाणा'मिति, ते च नान्य इत्याह—'तिर्यग्योनिजानां मनुष्याणां च', चशब्द एतेषामेव गर्भजत्वादिविशेषणार्थः, तदन्येषामवधिज्ञानायोगात्, तथैतत् षड्विधमुपाधिभेदात्,तथा चाह—'अवधिज्ञाने'त्यादिना, अवधिज्ञानस्य—प्रागुक्तस्वरूपस्यावरणीयम्—आच्छादकं यत् कर्म—भास्करस्येवाभ्रादि तस्य क्षयोपशमाभ्याम्—उक्तस्वरूपाभ्यां समुदिताभ्यामेव, नैकैकस्मात् क्षयादेः, भवत्यवधिविज्ञानं, 'षड्विधं' षट्प्रकारं, 'तद्यथे'ति प्रकारोपन्यासार्थः, 'अनानुगामिक'मित्यादि, उपन्यस्य चार्थं कथयति—'नात्रे'त्यादिना, 'तत्र'तेषु षट्सु 'अनानुगामिकं' अनुगच्छत्यवश्यमनुगामि तदेवानुगामिकमाद्यर्थं अनुगमप्रयोजनं वा अनुगामिकं तस्य प्रतिषेधेऽनानुगामिकमिति,अर्थमस्य भावयति—'यत्रे'त्यादिना, यत्र क्षेत्रे प्रतिश्रयस्थानादौ 'स्थितस्ये'ति कायोत्सर्गक्रियादिपरिणतस्य' उत्पन्नम्—उद्भूतं भवति, तेन चोत्पन्नेन यावत्तस्मात् स्थानात् न निर्याति तावज्जानात्यर्थान्,ततः प्रक्रान्त(च्युत)स्य स्थानान्तरवर्त्तिनः 'प्रतिपतति' नश्यति,कथमिव?,उच्यते—'प्रश्नादेश-

पुरुषज्ञानवत्' प्रश्नं प्रच्छन जीवधातुमूलानां तं प्रश्नमादिशतीति प्रश्नादेशः प्रश्नादेशश्चासौ पुरुषश्चेति विग्रहस्तस्य ज्ञानं तेन तुल्यमेतद् द्रष्टव्यं, पुरुषप्रश्नादेशज्ञानवदित्येवं गमकत्वं, अथवा प्रश्नादेशः-प्रधानपुरुषः तन्निष्ठः-तत्परायणस्तस्य ज्ञानं तद्व-दिति, का पुनर्भावना?,यथा नैमित्तिकः कश्चिदादिशन् कस्मिंश्चिदेव स्थाने शक्नोति संवादयितुं,न सर्वत्र, पृच्छ्यमानमर्थम्, एवं तदप्यवधिज्ञानं यत्र स्थितस्योपजातं तत्रस्थ एवोपलभते तेन,नान्यत्रेति,'अनुगामिकम्' एतद्विपरीतमिति,यत्र क्वचिदाश्र(श्र)या-दुत्पन्नं ततस्तस्य क्षेत्रान्तरगतस्यापि न नि(प्रति मु.)पतति-न प्रच्यवते, भास्करप्रकाशवत्, आदित्यप्रकाशो हि तदनुयायीति प्रतीतं, क्षेत्रान्तरे तत्परोक्षतया सदेहात् प्रत्यक्षं निदर्शनान्तरमाह-'घटरक्तभाववच्च' न हि घटस्यापाकात समुपजातो रक्त-भावः गृहादेस्तडागादिगतस्यापि प्रतिपतति, 'हीयमानकं' हीयते-क्रमेण अल्पीभवति यत् तद्धीयमानकं, 'असङ्ख्येयेषु' अतिक्रान्तशीर्षप्रहेलिकागणितेष्वितियावत् द्वीपा-जम्बूद्वीपादयः (तेषु) समुद्रा लवणादयः तेषु 'पृथिवीषु' च रत्नप्रभादि-कासु विमानेषु ज्योतिर्विमानादिषु, तिर्यग् द्वीपसमुद्रेषु ऊर्द्ध्वं विमानेषु अधः पृथिवीषु यदवधिज्ञानमुत्पन्नं भवति तत् क्रमशः संक्षिप्यमाणं प्रतिपतति सर्वान् द्वीपान् पश्यन् स तेषामेकांशं पुनर्न प्रेक्षते,शेषं पश्यति,पुनर्द्वियोजनं न पश्यत्येवं क्रमेण हीय-मानं तावद्धीयते यावदङ्गुलासङ्ख्येयभागः शेषः, तदाह-'आअंगुलस्यासङ्ख्येयभागात्' अङ्गुलपरिमाणस्य क्षेत्रस्य असंख्येया-नि खण्डानि कृतस्य एकस्मिन् असंख्येयभागे यावन्ति द्रव्याणि समवस्थितानि तानि पश्यतीत्यर्थः, ततः कदाचिदवतिष्ठते कदा-चित्प्रतिपतत्येव, तान्यपि न पश्यतीत्यर्थः, अङ्गुलशब्दस्य परिभाषितोऽर्थो द्रष्टव्यः, अन्यथा अङ्गुलसंख्येयभागादि भवितव्यं, अन्येषां त्वेवंविधं भाष्यमिति,कथं हीयत इति चेद् दृष्टान्तमुपन्यस्यति-'परिच्छिन्ने'त्यादि,परितः-सर्वासु दिक्षु छिन्ना परि-

च्छिन्ना, इन्धनं पलालादि तस्योपादानं—प्रक्षेपः तस्य संततिः—नैरन्तर्यं,सा विशिष्यते- परिच्छिन्नेति,नातः परमिन्धनप्रक्षेपः,परिच्छिन्ना इन्धनोपादानसन्ततिः, एतदुभयं पुनरपि शिखाविशेषणं—परिच्छिन्ना इन्धनोपादानसन्ततिर्यस्यामग्निशिखायां सा परिच्छिन्नेन्धनोपादानसन्ततिः, अग्नेः शिखा अग्निशिखा, परिच्छिन्नेन्धनोपादानसन्ततिश्चासावग्निशिखा च परिच्छिन्नेन्धनोपादानसन्तत्यग्निशिखा तया तुल्यमेतद् हीयमानमवधिज्ञानं,यथा अपनीतेन्धनाग्निज्वाला नाशमाशु प्रतिपद्यते तद्वदेतदपीति, 'वर्द्धमानकं यदङ्गुलासङ्ख्येयभागादिषु' अङ्गुलासंख्येयभागमात्रे क्षेत्रे,ततोऽङ्गुलमात्र ततो रत्निमात्र इत्यादिपूत्पन्नं तावद्वर्द्धते यावत् सर्वलोको—धर्माधर्मद्रव्यपरिच्छिन्नो व्यासो भवति, तदा 'आ सर्वलोकात्' कथमिव वर्त्तते?, अत आह—'अधरोत्तरे'त्यादि, अधरः—अधोवर्ती उत्तरः—उत्तरवर्त्ती तावेवारणी ताभ्यामधरोत्तरारणिभ्यां निर्मथनं—संघर्षणं तेन निष्पन्नः—उद्भूतः. तदेवमुत्पन्नोऽवधिर्वृद्धिमधिगच्छति, तथाह 'उपात्ते'त्यादिना, उपात्तं—प्रक्षिप्तं शुष्कम्—आर्द्रं न भवतीति करीषादि तेनोपात्तेन शुष्केण उपचीयमानः, वृद्धिं गच्छन्नित्यर्थः, प्रचीय(आधीय. मु )मानः—प्रक्षिप्यमाणेन्धनोऽपि पुनरिन्धनानां पलालादीनां राशिः—समूहो यत्राग्नौ स उ(अधरो)त्तरारणिनिर्मथनोत्पन्नोपात्तशुष्कोपचीयमानप्रचीयमानेन्धनराश्यग्निस्तेन तुल्यमेतदिति,यथा अग्निः प्रयत्नादुपजातः सन् पुनरिन्धनलाभाद् विवृद्धिमुपगच्छति एवं परमशुभाध्यवसायलाभादसौ पूर्वो वर्द्धत इत्यर्थः,'अनवस्थित'मिति नावतिष्ठते कचिद् एकस्मिन् वस्तुनि,शुभाशुभानेकसंयमस्थानलाभात् ,यत आह—हीयते योजनं दृष्ट्वा तस्यैवार्द्धमवगच्छति तस्याप्यर्द्धमेवमादि वर्धते चार्द्धक्रोशं दृष्ट्वा क्रोशमेवत्य(तोऽ)र्द्धयोजनमेवमादि, कदाचिदुभयीमवस्थामनुभवति वर्द्धते हीयते (च मु.) तस्यैव क्रोशस्यैव च क्रोशस्यैकस्यां दिशि पर क्रोशो वृद्धः,अन्यस्यान्तस्य क्रोशस्यार्द्धं हीनमिति,अथवा 'प्रतिपतति चोत्पद्यते

च' कचित् कालान्तरे उदितं पुनर्न पश्यति पुनश्चोदेति, तत्क्षयोपशमवैचित्र्यात् पुनः पुनर्नाशोत्पादस्वभावम्, ऊर्मिवत्, यथा महति सरसि स्वच्छवारिभारिणि पूर्वं प्रबलानिलवेगनिक्षिप्यमाणजलपटले अदभ्रोर्मयः समुपजाताः समासादितरोधसः शनैः शनैः शमं भजंते, पुनश्चाभिघातविशेषात् प्रादुर्भवन्ति, अतो यथा उर्म्मयोऽनवस्थिता एवमवधिज्ञानमपि, 'अवस्थित'मिति अवतिष्ठते स्म अवस्थितं,यया मात्रयोत्पन्नं तां मात्रां न जहातीतियावत्,एतदाह-'यावति क्षेत्रे'इत्यादि,यावति-यत्परिमाणे क्षेत्रे अङ्गुलासंख्येयभागादावुत्पन्नमासर्वलोकात् 'तत'इति तस्मात् क्षेत्रात् न प्रतिपतति-न नश्यति, सर्वकालमास्ते,कुतोऽवधिर्यावदास्त इति?, उच्यते 'आकेवलप्राप्तेः' आङ् मर्यादायां केवलं ज्ञानं तस्य प्राप्तिः-लाभः आकेवलप्राप्तिः (तां) यावत्, एतदाह-'यावति क्षेत्र' इत्यादि, केवलज्ञानं न प्राप्नोति, प्राप्ते तु केवले छाद्मस्थिकं ज्ञानं व्यावर्त्तते, अथवा आमरणात्, तदाह-'आ भवक्षयात्' भवो मनुष्यादिजन्म यावत्तत्र जीवति तावद्भवति ततः परं नश्यति, अथवा जात्यन्तरमपि गच्छन्तं जीवं न मुंचति, तदवधिज्ञानं तेनान्वित एव गच्छति, लिङ्गवज्जात्यन्तरावस्थायिता भवतीत्येतदाह-जाते रन्या जातिः जात्यन्तरं तत्रावतिष्ठते, तच्छीलं च, कथमिव तदादाय गच्छति?, आह -'लिंगवत्' पुरुषवेदादिलिङ्गं त्रिधा तेन तुल्यं वर्त्तत इति लिङ्गवत्,यथा इह जन्मन्युपादाय पुरुषवेदं जन्तुर्जात्यन्तरमाधावत्येवमवधिमपि,प्रस्तुतवस्तुपरिसमाप्तिं सूचयति 'उक्तमवधिज्ञान'मित्यनेन,उक्तं लक्षणतो विधानतश्चावधिज्ञानं,न पुनर्वान्यमिति॥ तदनन्तरानुसारि मनःपर्यायज्ञानं वक्ष्यामः-

**ऋजुविपुलमती मनःपर्यायः ॥२४॥ सूत्रं ॥**

ऋजुविपुलमती विषयभेदात् ज्ञानभेदौ मनःपर्यायज्ञानमभिधीयत इति सूत्रपिण्डार्थः,अवयवार्थमाह भाष्यकार इति 'मनःपर्या-

घे'त्यादिना (पृ २४ ५) ज्ञानप्रक्रमादेव मनःपर्यायज्ञानं प्राग्निरूपितशब्दार्थं, किमित्याह -'द्विविध'मिति, द्वे विधे यस्येति द्विविधं, द्वैविध्यमाह-'ऋजुमती'त्यादिना, ऋजुमतिः घटादिमात्रचिन्तनद्रव्यज्ञानाद् ऋजुमतिः सेव मनःपर्यायज्ञानं, मन्यमानमनोद्रव्य-परिणामालम्बनत्वाद् ऋजुमतिमनःपर्यायज्ञानं, एवं विपुला मतिर्महद्रक्तश्यामादिघटादिचिन्तनद्रव्यज्ञानाद् विपुलमतिः सैव मनः-पर्यायज्ञानं, मन्यमानमनोद्रव्यविशिष्टपरिणामगोचरत्वाद् विपुलमतिमनःपर्यायज्ञानमिति, चशब्दः स्वगतानेकभेदसमुच्चयार्थः ॥ सूत्रान्तरसम्बन्धाभिधानायाह-'तत्राहे'त्यादि, अत्र द्वैविध्ये दर्शिते चोदकोऽभिधत्ते-'कोऽनयोः प्रतिविशेष'इति, क इत्यस-म्भावने, नव कश्चित् सम्भाव्यते अनयोर्ऋजुविपुलमत्योः प्रतिविशेषः-स्वगतो भेदः, मनःपर्यायाणामुभयत्र दर्शनात्, तद्विशेषाणा च बहुत्वेन द्वैविध्यानुपपत्तेरिति चोदकाभिप्राय', 'अत्रोच्यत'इति परिहारमाह सूत्रेण—

विशुद्ध्यप्रतिपाताभ्यां तद्विशेषः ॥ २५ ॥ सूत्रं ॥

विशुद्ध्यप्रतिपाताभ्या वक्ष्यमाणस्वरूपाभ्या 'तद्विशेष'इति ऋजुविपुलमत्योर्नानात्वमिति सूत्रसमुदायार्थः। अवयवार्थं त्वाह भाष्यकार'-'विशुद्धिकृतश्चे'त्यादिना (पृ २४ ८) विशुद्ध्या-बहुतरपर्यायज्ञानरूपया कृतः-जनितः विशुद्धिकृतः, चः समुच्चये, तथा अप्रतिपातेन,-अच्यवनरूपेण कृतोऽप्रतिपातकृतश्चानयोः ऋजुविपुलमत्यो. प्रतिविशेषो भेद इति, एतदेव भावयति-'तत्र-र्थे'त्यादिना, तत्रेत्युपन्यासार्थः, ऋजुमतिमनःपर्यायज्ञानात्तु उक्तलक्षणात् सकाशात् विपुलमतिमनःपर्यायज्ञानमुक्तलक्षणमेव विशुद्धतरमिति, जातिभेदेन बहुतरपर्यायावगमादिति, तथाहि -घटे चिन्तिते ऋजुमतिमनःपर्यायज्ञानेन घटोऽनेन चिन्तित इत्या-नुगामिकावगमने मनोद्रव्याणि साक्षात् क्रियंते, विपुलमतिमनःपर्यायज्ञानेन तु घटोऽनेन विचिन्तितः स महान् रक्तः श्यामो

चैत्यानुगामिकानगमनिबन्धनानीति, 'किंचान्यद्' इत्ययमपरो भेदहेतुः, ऋजुमतिमनःपर्यायज्ञानमुक्तलक्षणं प्राप्तं मदप्रमत्त यतिना प्रतिपतत्यपि प्रत्यनते, अपिशब्दात्तु न प्रतिपतत्यपि, भूयः—पुनः विपुलमतिमनःपर्यायज्ञानं तु न प्रतिपतत्या केवल-प्राप्तेरिति, बहुत्वेऽपि मनोद्रव्यविशेषाणां तज्ज्ञानस्य द्वैविध्योपपत्तिः॥ सूत्रान्तरयोगमाह- 'अत्राहे'त्यादि, अत्र ऋजुविपुलमत्योर्भेदे उक्ते चोदक आह—अथ अवधिमनःपर्यायज्ञानयोः—उक्तलक्षणयोः कः प्रतिविशेष इति पूर्ववत्, अतीन्द्रियत्वाविशेषात् प्रष्टुर्भ्रान्तिहेतुः, अत्रोच्यते गुरुणा—

विशुद्धिक्षेत्रस्वामिविषयेभ्योऽवधिमनःपर्याययोः॥ २६॥ सूत्रं॥

विशुद्ध्यादिकृतः अवधिमनःपर्याययोः प्रतिविशेष इति सूत्रसमुदायार्थः, अवयवार्थमाह भाष्यकारः 'विशुद्धिकृत'इत्यादिना (पृ. २४-१६)। विशुद्ध्या कृतः विशुद्धिकृतः, एवं क्षेत्रादिष्वपि योजनीयं, एतदेव प्रकटयन्नाह 'अवधिज्ञानादि'त्यादि, अवधिज्ञानाद्—उक्तलक्षणात् मनःपर्यायज्ञानं विशुद्धतरं, विशुद्धतरता स्वयमेव भाष्यकृदाह यावंति—यत्परिमाणानि, नियमादनन्तानि, हिरेवमित्यभ्यार्थे, यावन्त्येव रूपमेषामस्तीति रूपाणि, प्रदर्शनं चैतद् रूपरसगन्धस्पर्शशब्दवन्ति द्रव्याणि गुणसङ्घातात्मकानि अवधिज्ञानी जानीते, पश्यति चेति हृदय, तेषामवधिज्ञानिनोपलब्धानां रूपिद्रव्याणि यावन्ति मनःपर्यायज्ञानिनो विषयभुवस्मास्कन्दन्ति तान्यमो मनःपर्यायज्ञानी विशुद्धतराणि, बहुतरपर्यायाणि जानातीत्यर्थः, तान्यपि च मनोगतानीति मनोव्यापारभाञ्जीत्यर्थ, असञ्चित्यमानानि तु नैव जानीते साक्षात्, 'किंचान्यदि'त्ययं चापरो भेद इति, 'क्षेत्रकृतश्चानयोः' अवधिमनःपर्याययोः प्रतिविशेषो—भेदो दृश्यः, एतद्भावयति—'अवधिज्ञानमङ्गुले' अङ्गुलमङ्ख्येयानि खण्डानि कृतानि तत्र-

पश्यति ततः स एव वर्द्धमानेन तेन बहूनि
कस्मिन्नसङ्ख्येयभागमात्रे क्षेत्रे यावन्ति रूपिद्रव्याणि समवगाढानि सर्वस्तोकानि यः पश्यति ततः स एव वर्द्धमानेन तेन बहूनि
बहुतराणि द्रव्याण्यवगच्छतियावत्, सर्वलोकावस्थितानि द्रव्याणि पश्यति शुभाध्यवसायविशेषादिति, एतदाह—'अङ्गुलस्या-
सङ्ख्येयभागादिपूत्पन्नं भवत्यासर्वलोकादिति, मनःपर्यायज्ञानं, तुशब्दः पुनःशब्दार्थः, मनुष्यक्षेत्र एव—अर्द्धतृ-
तीयद्वीपसमुद्रपरिमाणे भवति, नान्यक्षेत्र इति—सौधर्मादौ अन्यक्षेत्रे एव, न अन्यक्षेत्रजमनःपर्याप्तिमत्प्राणिविषयं तु, मनु-
ष्यलोक एव भवतीति क्षेत्रग्रहणं, 'किं चान्यत्–स्वामिकृत'इत्यादि पूर्ववत्, अवधिज्ञानमवधिकृतं संयतस्य-साधोः विरतस्या-
संयतस्य–अविरतस्य संयतासंयतस्य–विरताविरतस्य श्रावकस्य सर्वगतिषु नारकादिषु चतसृष्वपि भवति, मनःपर्यायज्ञानं
पुनर्मनुष्यसंयतस्यैव भवति, मनुष्यग्रहणान्नारकादिव्युदासः, संयतग्रहणान्मिथ्यादृष्ट्यादीनां प्रमत्तांतानां षण्णां व्युदासः, एवका-
रेण नियमयति--मनुष्यसंयतस्यैव, फलं नियमस्य दर्शयति–'नान्यस्ये'ति देवादेः नैतदुत्पद्यत इत्यर्थः, 'किंचान्यत् विषयकृत'
इत्यादि, रूपिषु परमाणुद्रव्येषु सर्वेषु 'असर्वपर्यायेष्वि'ति सर्व-सम्पूर्णाः पर्याया-उत्पादादयो येषां तानि सर्वपर्यायाणि न सर्वपर्या-
याणि असर्वपर्यायाणि तेषु, तानि हि रूपिद्रव्याण्यवधिज्ञानी सर्वाणि जानाति, न तु तेषां सर्वान् पर्यायान् इति, एकैकस्य तु परमाणोः
कदाचिदसङ्ख्येयान् कदाचित् संख्येयान् पर्यायान् जानाति, कदाचिज्जघन्येन चतुरो रूपरसगन्धस्पर्शान्, न पुनरेकैकस्य परमाणोर-
नन्तान् ज्ञातुं प्रत्यलं स्यात् पर्यायानिति, यदि हि सर्वानेव जानीयात् केवल्येवासौ स्यात्, 'जे एगं जाणति से सव्वं जाणती'-
त्यागमात्, अतः असर्वपर्यायेषु 'अवधेः' अवधिज्ञानस्य विषयनिबन्धो भवति, गोचरव्यवस्थेत्यर्थः, नैवं मनःपर्यायस्येति, एत-
दाह–'तदनन्तभागे मनःपर्यायस्ये'ति तेषाम्–अवधिज्ञानज्ञानिज्ञातानां द्रव्याणामनन्तभागे मनोवर्गणासम्बन्धिनि मनःपर्या-

पज्ञानस्य विषयनिबन्ध इति। एवमतीन्द्रियत्वाविशेषेऽप्यवधिमनःपर्याययोर्विशेष इति। 'अत्राहे'त्यादि अत्रावसरे आह चोदकः 'उक्तं मनःपर्यायज्ञानं' भवता अथ तदनन्तरोद्दिष्टं केवलज्ञानं किमिति—किंस्वरूपमिति प्रश्नः, अत्रोच्यते परिहारः—'केवलज्ञानं दशमेऽध्याये वक्ष्यते', तद्धि घातिकर्मणां क्षयादेव भवति, असावपि च संवरात्, संवरश्च नवमेऽध्याये वक्ष्यमाण इतिकृत्वा, अत एव दशमाध्यायादिसूत्रमाह—' मोहक्षया 'दित्यादि, मोहो—मोहनीयं कर्म्म तत्क्षयात्, तथा ज्ञानदर्शनावरणान्तरायक्षयाच्च, किमित्याह'केवल'मिति केवलज्ञानं भवति। 'अत्राहे'त्यादि अत्रावसरे आह चोदकः-'एषा'मिति पूर्वोदितानां मतिज्ञानादीनां (ज्ञानानां) कः कस्य ज्ञानस्य विषयनिबन्धो—विषयव्यापार इति, अत्रोच्यते सूत्रकृता—

मतिश्रुतयोर्निबन्धः सर्वद्रव्येष्वसर्वपर्यायेषु ॥२७॥ सूत्रम् ॥

अस्य समुदायार्थः प्रकटः, अवयवार्थं त्वाह भाष्यकारः, प्रकृतं ज्ञानमित्येतदाह—'मतिज्ञानश्रुतज्ञानयोः' उक्तस्वरूपयोर्विषयनिबंधो विषयव्यापारो भवति, क्वेत्याह-'सर्वद्रव्येषु' धर्मास्तिकायादिषु,'असर्वपर्यायेष्वि'त्यसम्पूर्णपर्यायेष्वित्यर्थः, पर्याया—उत्पादादयः, एतदेव भावयति—'ताभ्यां ही'त्यादि, ताभ्यां—मतिश्रुताभ्यां यस्मात् सर्वाणि द्रव्याणि धर्मादीनि जानीते, नतु सर्वैः पर्यायैः उत्पादादिभिः, अस्य भावना मतिज्ञानी तावच्छ्रुतज्ञानोपलब्धेषु सर्वद्रव्येषु यदाऽक्षरपरिपाटीमन्तरेण स्वभ्यस्तविन्यस्तानि ध्यायति तदा सर्वाणि जानाति, नतु सर्वान् पर्यायान्, अल्पकालत्वात्सकलसमर्थाशक्तेरिति, एवं श्रुतग्रन्थानुसारेणापि भावनीयम्। अवधेर्विषयनिबन्धनमाह—

रूपिष्ववधेः ॥२८॥ सूत्रं ॥

रूपिषु द्रव्येष्ववधेर्निबन्धः इति सूत्रपिण्डार्थः। एतमेव प्रकटयन्नाह भाष्यकारः 'रूपिष्वेवे'त्यादि (पृ. २६-२) रूपिष्वे-वे'ति मूर्त्तेष्वेवेत्यर्थः, द्रव्येषु—पुद्गलद्रव्येषु स्कन्धादिषु अवधिज्ञानस्योक्तलक्षणस्य विषयनिबंधो—विषयव्यापारो भवति सर्वेषु, असर्वपर्यायेषु, मा भूत् परमावधेरन्योऽपि प्रकार इत्याशङ्कापोहायाह—'सुविशुद्धेनापी'त्यादि, सुविशुद्धेनाप्यवधिज्ञानेन, परमप्रकर्षप्राप्तेनापीत्यर्थः,रूपीण्येव द्रव्याण्यवधिज्ञानी जानीते स्कन्धादीनि,तान्यपि न सर्वैः पर्यायैरतीतानागतैरुत्पादादिभिरिति। मनःपर्यायनिबन्धनमाह—

तदनन्तभागे मनःपर्यायस्य ॥२९॥ सूत्रं ॥

अवधिज्ञानविषयानन्तभागे मनःपर्यायज्ञानस्य विषयनिबन्धः इति सूत्रसमुदायार्थः। अवयवार्थं त्वाह भाष्यकारः—'यानी'त्यादिना (पृ. २६-६) यानि रूपाणि द्रव्याणि स्कन्धादीन्यवधिज्ञानी जानीते ततोऽनन्तभागे—तेषामवधिज्ञानदृष्टानां योऽनन्तभागस्तस्मिन् मनःपर्यायस्य—उक्तरूपस्य विषयनिबन्धो भवतीति। विशेषाभिधानायैतदेव स्पष्टयन्नाह—'अवधिज्ञाने'त्यादि, अवधिज्ञान(विषय)स्य-सकलपुद्गलराशेः अनन्तभागं स्तोकपुद्गलरूपं मनःपर्यायज्ञानी जानीते, किमुक्तं भवति?-रूपिद्रव्याणि,मूर्त्तानीत्यर्थः, तान्यपि न यानि कानिचित्, किन्तु 'मनोरहस्यविचारगतानी'त्यत्र मनः—अनिन्द्रियं प्रतिविशिष्टपुद्गलप्रचितं चेतः परिगृह्यते तदेव रहस्यम्—अप्रकाशरूपं तस्मिन् विचारो—विचारणा, कथमयं पदार्थो व्यवस्थितः इत्येवंरूपा, तत्र गतानि—प्रविष्टानि जीवेन चिन्त्यमानानीतियावत्,तान्यपि न सर्वलोकवर्तीनि, किन्तु मानुषक्षेत्रपर्यापन्नानीति, मानुषक्षेत्रं—मानुषोत्तरार्द्धतृतीयद्वीपसमुद्रप्रमाणं तत्र पर्यापन्नानि—व्यवस्थितानि 'विशुद्धतराणि चे'त्यवधिज्ञानिज्ञेयेभ्यः सकाशाद्बहुतरपर्यायाणि जानीत इति॥

केवलज्ञानस्य निबन्धमाह—

सर्वद्रव्यपर्यायेषु केवलस्य ॥३०॥ सूत्रं ॥

सर्वद्रव्यपर्यायेषु केवल(स्य)विषयनिबन्धः अनन्तज्ञेयविषयमेतदिति सूत्रसमुदायार्थः। एतमेव प्रकटयन्नाह भाष्यकारः—'सर्व-द्रव्येषु' धर्मादिषु सर्वपर्यायेषु चोत्पादादिषु केवलज्ञानस्य विषयनिबन्धो—गोचरव्यापारो भवति, कथमेतदेवमित्याह—'तद्धी'त्यादिना (पृ.२६-१२) तत् केवलज्ञानं यस्मात् सर्वग्राहकं भूतभव(द्भाविभाव)ग्राहकं, मा भूदुपचारतो लोक एवेत्याह—'संभिन्नलोकालोकविषयं' संभिन्नौ—सम्पूर्णौ स्वपरपर्यायोपेतौ लोकालोकौ धर्मादिसमन्वितासमन्विताकाशरूपौ विषयो—गोचरो यस्य तत् तथा, ज्ञानप्रकर्षतामस्याह—'नातः परज्ञानमस्ति' अतः—केवलज्ञानात् परं—प्रधानतरं ज्ञानं नास्ति, अनेनाप्रकाशितं ज्ञेयं तर्हि परं भविष्यतीत्याशंक्याह—'न चे'त्यादि, न च केवलज्ञानविषयात् परं दुरवबोधं सूक्ष्मतया प्रधानतरं किंचिद्—अन्यद् ज्ञेयमस्ति, पञ्चास्तिकायादि, अन्यभाववैकल्येनेतराभावरूपतया पञ्चानामेव प्रतीतेरिति। केवलस्यैव पर्यायानाह—'केवल'मित्यादिना, तत्र केवलमेकम् अन्यज्ञानासम्पर्कात् परिपूर्णं—सर्वतः सकलखण्डशो भवनात् समग्रम्—अन्यज्ञानाधिकसर्वविषयग्रहणात् असाधारणं मत्यादिभिरतुल्यं, क्षायिकत्वात्, निरपेक्षम्—आलोकाद्यपरतन्त्रमुत्तमबोधत्वात्, विशुद्धम्—एकान्तविमलं सकलावरणविगमात्, सर्वभावज्ञा(ज्ञा.मु.)पकं धर्मादिपर्यायप्ररूपकं, ततस्तथाविधदेशनाभावात्, लोकालोकविषयं—सर्ववस्त्वालम्बनं निरावरणं—सर्वज्ञात्मस्वभावत्वात् अनन्तपर्यायम्—अनन्तपरिणामं, ज्ञेयानन्त्यादित्यर्थः, इत्येतत् पर्यायशब्दाभिधायकमिति। सूत्रान्तरप्रस्तावग्रन्थ अत्राहेत्यादिः, 'अत्राहे'ति पूर्ववत्, एषाम्—अनन्तरप्रपञ्चव्यापितानां मतिज्ञानादीनां पञ्चानां

युगपदेकस्मिन् काले एकस्मिन् जीवे प्रमातरि कति भवन्तीति प्रश्न', अत्रोच्यते इति निर्वचनोपन्यासः।

एकादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः ॥ ३१ ॥ सूत्रं ॥

निर्वचनसूत्रं,प्रथमादीनि विकल्प्यानि एकस्मिन् काले एकस्मिन् प्राणिनि चत्वारि यावद् ,आङोऽभिविधिवाचकादिति सूत्रसमुदा-
निर्वचनसूत्रं,प्रथमादीनि विकल्प्यानि एकस्मिन् काले एकस्मिन् प्राणिनि चत्वारि यावद्,आङोऽभिविधिवाचकादिति सूत्रसमुदा-
यार्थः। एनमेवोपदर्शयन्नाह भाष्यकारः—'एषां मत्यादीनां ज्ञानानां' एतद्विचाराधिकारात् प्रस्तुतानां आदित आरभ्य एकादीनि
भाज्यानि युगपदेकस्मिन् जीवे प्रमातरि आ चतुर्भ्य इत्यभिविधावाङ,एतदेव स्पष्टयन्नाह—'कस्मिंश्चि'दित्यादि (पृ.२७-३)
कस्मिंश्चिज्जीवे मनुष्यादौ मत्यादीनां पञ्चानां ज्ञानानां एकं भवति, आद्यं मतिज्ञानमेव,एतच्च क्वचिन्निसर्गसम्यग्दर्शनस्यान-
वाप्ताक्षरश्रुते' निसर्गतः प्रवचनमातृमात्रपरिज्ञानवति द्रष्टव्यं, तथा कस्मिंश्चिद् (जीवे मु) द्वे भवतः मतिश्रुते,एते अपि सम्यग्द-
र्शनवत्यवाप्ताक्षरश्रुते द्रष्टव्ये, तथा कस्मिंश्चित् त्रीणि भवन्ति, मतिश्रुतावधीनि, प्राक्तने (द्वये) एवावधिसमुत्पत्तेः, तथा कस्मिं-
श्चिच्चत्वारीति मतिश्रुतावधिमनःपर्यायाणि, ज्ञानत्रयवति मनःपर्यायोत्पत्तौ, आह—मतिश्रुतयोर्युगपल्लाभ उक्तः तत् कथं मतिज्ञा-
नमेकं भवति?,उच्यते, युगपल्लाभेऽपि तदुपयोगयोर्भिन्नप्रकारत्वात्, तदुपयोगमधिकृत्यान्यापूर्वकत्वान्मतिज्ञानमेवैकं भवति, श्रुत-
ज्ञानमप्येवं न किमिति चेदित्याह—'श्रुतज्ञानस्य त्वि'त्यादि,श्रुतज्ञानस्य पुनः—ग्रन्थानुसार्युपयोगरूपस्य 'मतिज्ञानेन' यथोदि-
तरूपेण नियतो—निश्चितः सहभावः—एकत्रवृत्तिः, कुत इत्याह—तत्पूर्वकत्वात्—मतिज्ञानपूर्वकत्वादिति, एतदेव स्पष्टयति
'यस्ये'त्यादिना, यस्य जन्तोः श्रुतज्ञानं श्रुतानुसार्यस्ति तस्य नियतम्—अवश्यं मतिज्ञानं यथोक्तलक्षणं सम्भवति, यस्य
पुनर्मतिज्ञानं केवलं निसर्गसम्यग्दर्शनकाले अनवाप्ताक्षरश्रुतस्य तस्यैवंभूतस्य श्रुतज्ञानं ग्रन्थानुसारि स्यादुत्तरकालं पठतो

न वा अनतीयानस्येत्यत एवमुक्तं, (अथ) चेन्मतिज्ञानमेव केवलज्ञानस्य सकलज्ञेयग्राहिणः पूर्वैः-पूर्वकालप्राप्तैः पूर्वसन्निवेशिभिर्वा मतिज्ञानादिभिश्चतुर्भिः सह किं सह भावः सहावस्थानं भवति?, नेति-उत शेषज्ञानानामभाव एवेति, अत्रोच्यत इत्युत्तरग्रन्थोपन्यासः, 'केचिदि'त्यादि, विप्रतिपत्तिरिति केषाचिन्मतोपन्यासः, केचिदृजुमतयः आचार्याः-सूरयो व्याचक्षते अत्र, किमित्याह-ना भावः शेषज्ञानानां, सतः सर्वथा असत्ताऽयोगात्, सत्सु(सत्सु सु)खादेरप्यसत्त्वप्रसङ्गात्, किं त्व(तु,तद-सु)भिभूतत्वात्-तिरस्कृतत्वात् केवलेन अकिंचित्कराणि भवंति, स्वप्रयोजनासमर्थानीत्यर्थः, दृष्टान्तमाह-'इन्द्रियवत्' यथेन्द्रियमकिंचित्करं चक्षुरादि केवलिनः, सर्वात्मना केवलेनैव तद्विषयदर्शनात् तद्वदिति, शिष्यव्युत्पत्तये निदर्शनान्तरमाह—'यथा वे'त्यादि,यथा वा येन वा प्रकारेण एतत् स्थितं लोके,किमित्याह-'व्यभ्रे नभसि' विगताभ्रे आकाशे आदित्ये उदिते सति, किंविशिष्टे इत्याह—'भूरितेजसि' प्रभूतोद्योते, किमित्याह-भूरितेजस्त्वादेव कारणात् आदित्येनाभिभूतानि तिरोहितस्वसामर्थ्यानि,कानीत्याह-अन्यतेजांसि-अन्यानि च तानि तेजांसि च अन्यतेजांसि, तेजसोऽभेदात्तेजोमयानि द्रव्याण्येव गृह्यन्ते,तथा चाह-'ज्वलनमणिचन्द्रनक्षत्रप्रभृतीनि' ज्वलनः-अग्निः मणिः-सूर्यकान्तचन्द्रकान्तादिः चन्द्रः शशी नक्षत्रं-अश्विन्यादि, प्रभृतिशब्दात्तारकादिपरिग्रहः, एतानि प्रकाशनम्-उद्योतनं प्रत्यकिंचित्कराणि भवंति, ते (न) किंचिद्बहिरवस्थितं प्रकाशयंति, हतप्रभावत्वात्, 'तद्वदि'ति तेन प्रकारेण केवलभास्वता भूरितेजसाऽऽक्रान्तानि न विषयप्रकाशनं प्रति व्याप्रियन्ते मत्यादीनि, अत्रैव मतान्तरमाह-'केचिदप्याहु'रित्यादिना, अन्ये पुनर्ब्रुवते-'अपाये'त्यादि, युक्तिग्रन्थान्तेतानि मत्यादीनि केवलिनः सन्ति, तत्रापायसद्द्रव्यतयेति पूर्ववत्, अनेन प्रकारेण न मतिज्ञानं, श्रोत्रादीन्द्रियोपलब्धेः हितार्थनिश्चयरूपं

न, तदभावात् तत्पूर्वकं-मतिज्ञानपूर्वकं श्रुतज्ञानम्-उक्तलक्षणं न, अवधिज्ञानमनःपर्यायज्ञाने च यथोक्तस्वरूपे रूपिद्रव्यवि-
षयनियमगोचरे, अत एते अपि न, सकलवस्तुविषयत्वात् केवलस्य, यस्मादेवं तस्मान्नैतानि सर्वाण्येव केवलिनः मतः प्रवृ-
त्तक्षायिकालोकस्य सन्तीति, उपपत्त्यन्तरमुपन्यस्यन्नाह–'किं चान्यदि'त्यादि, इदं वा यदत्र क्षुण्णं मतिज्ञानादिषु चतुर्षु मनःपर्या-
यज्ञानान्तेषु पर्यायेण क्रमेणोपयोगः–स्वविषयग्रहणव्यापारो भवति,न युगपद्–एकस्मिन्नेव काले, मत्यादीनामन्यतमेनोपयुक्तस्य
श्रुताद्यन्यतमोपयोगाभावात्, अन्योपयोगासंकीर्ण उपयोगो भवतीत्यर्थः, 'संभिन्ने'त्यादि, संभिन्ने–सर्वपर्यायग्राहके ज्ञान-
दर्शने–विशेषसामान्यविषये यस्य स तथा तस्य पुनर्भगवतः समग्रैश्वर्यादियुक्तस्य 'केवलिनः' परमज्ञानिनः, किमित्याह—
'युगपद्' अक्रमेण, किमित्याह–'सर्वभावग्राहके' पंचास्तिकायग्राहके,एतदेव विशेष्यते–'निरपेक्षे'ज्ञेयं मुक्त्वाऽन्यापेक्षारहिते,
कस्मिन्नित्याह—'केवलज्ञाने केवलदर्शने च' इतरेतरानुविद्धविशेषसामान्यग्राहिणि क्षायिकबोध इत्यर्थः, 'अनुसमयं'
उपयोगो भवती'ति अनुगतः–अव्यवहितः समयः–अत्यन्तोऽविभागः कालो यत्र कालसन्ताने सोऽनुसमयस्तं, प्रतिसमयमि-
त्यर्थः, उपयोगः–स्वविषयग्रहणव्यापारो भवति, ततः सदा केवलोपयोगद्वयभावात् अन्योपयोगासंकीर्णोपयोगरूपलक्षणमत्यादि-
ज्ञानाभाव इत्यभिप्रायः। 'किं चान्यदि' त्युपपत्त्यन्तरमालम्ब्यते–'क्षयोपशमे'त्यादि, क्षयोपशमादुद्भूतानि चत्वारि ज्ञानानि
पूर्वाणि–मतिश्रुतावधिमनःपर्यायलक्षणानि, क्षयादेव स्वावरणस्य केवलं भवति, क्षये च क्षयोपशमाभाव इत्यभिप्रायो, नि-
गमयन्नाह–'तस्मादि'त्यादि, तस्मात् क्षयोपशमाभावात् न केवलिनो भगवतः शेषाणि केवलात् ज्ञानानि मत्यादीनि सन्ती-
ति॥ एवं मत्यादिज्ञानपञ्चकं प्रमाणं प्रदर्श्य आद्यत्रयं साभासं तदुपदर्शयन्नाह—

मतिश्रुताविभङ्गा(०नवयो मु.) विपर्ययश्चेति ॥३२॥ सूत्रं ॥

अत्रानर्थौ वक्तव्ये अविभङ्गग्रहणमनर्थेविभङगो विपर्यय इति ज्ञापनार्थं,एते त्रयो ज्ञानभेदाः अज्ञानं ज्ञानं चेति सूत्रसमुदायार्थः, एनमेव प्रकटयन्नाह भाष्यकारः 'मतिज्ञान'मित्यादि (पृ. ३०-४) ज्ञानविपर्ययोऽयथार्थोऽवबोधः अज्ञानमिति, अत्राह चोदकः —'तदेव'मित्यादि, तदेव ज्ञानं मत्यादि तदेवाज्ञानं विपर्यय इति,नन्वित्यसूयायां, छायातपवत् शीतोष्णवच्चेति निदर्शनं,'तदत्यन्तविरुद्ध'मिति तत् ज्ञानादज्ञानं अज्ञानाच्च ज्ञानं परस्परपरिहारेणावस्थानादत्यन्तविरुद्धं, यथा छायादेरातपादि, एकस्य विरुद्धधर्मद्वयमसमारोपायोगादिति,अत्रोच्यते परिहारः—'मिथ्यादर्शने'त्यादि,मिथ्यादर्शनेन तत्त्वार्थाश्रद्धानरूपेण परिग्रहात्—अध्यात्मात् कारणात्, किमित्याह—'विपरीतग्राहकत्वम्' अयथावस्तुपरिच्छेदित्वमेतेषां—मत्यादीनां, तस्माद्विपरीतग्राहकत्वात् अज्ञानानि भवन्ति, मिथ्यात्वलक्षणौदयिकभावयोगादित्यर्थः,'तत्रथे'त्युदाहरणोपन्यासार्थः, मतिज्ञानमिति ज्ञानं मिथ्यात्वोदयाद्विपरीतग्राहकं मत्यज्ञानं भवति, एवं श्रुताज्ञानं,एवं विभङ्गज्ञानमिति, विभङ्गावयवं व्याचष्टे—अवधेर्विपरीतो—मिथ्यात्वोदयाद्विपरीतग्राहकः अतीन्द्रियार्थविषयो बोधः विभङ्ग इत्युच्यते शास्त्र इति, ततश्च (न)यदेव ज्ञानं तदेवाज्ञानम्, अपि तु निमित्तभेदात् ज्ञानाज्ञानव्यवस्थेति भावार्थः। 'अत्राहे'त्यादि,अत्र ज्ञानेतरविभाग उक्ते चोदक आह—'उक्तं भवता'प्रतिपादितं त्वया, किमित्याह—'सम्यगि'त्यादि, सम्यग्दर्शनेन- तत्त्वार्थश्रद्धानरूपेण परिगृहीतम्—अधिष्ठितं मत्यादित्रयं ज्ञानं भवत्यविपरीतार्थग्राहि, अन्यथा मिथ्यादर्शनपरिगृहीतमज्ञानमेवेत्ययथार्थग्राहीति यावता मिथ्यादृष्टयोऽपि च लौकिकास्तंत्रान्तरीयाश्च एते च द्विविधा इत्याह—'भव्याश्चाभव्याश्च' सिद्धिगमनयोग्या भव्याः अयोग्यास्त्वभव्याः, एते च 'इन्द्रियनिमित्तान्' उपलब्धौ स्पर्शना-

दीन्द्रियापेक्षान् 'अविपरीतान्' यथावस्थितान् 'स्पर्शादीनर्थान्' स्पर्शरसगन्धवर्णशब्दान् उपलभंते स्वतः उपदिशन्ति चान्येभ्यः, कथमित्याह–'स्पर्शं' शीतादिकं 'स्पर्श'इत्येवमुपलभंते उपदिशन्ति च, तथा रसं–तिक्तादिकं रस इत्येवं, एवं शेषान्–गन्धरूपशब्दानवैपरीत्येन, ततः कथमेतदिति, न बाधकं प्रत्ययमन्तरेण मिथ्यादृष्टिज्ञानानामयथार्थग्राहितेत्यर्थः, अत्रो-च्यते गुरुणा,'तेषां ही'त्यादि तेषां–मिथ्यादृष्टीनां यस्माद्विपरीतमेतद्–अधिकृतज्ञानं मिथ्यात्वग्रहावेशाद्भवत्यतोऽज्ञानमेवेति,

तथा चाह सूत्रकारः–

मदसतोरविशेषाद् यदृच्छोपलब्धेरुन्मत्तवत् ॥ ३३ ॥ सूत्रं ॥

मदामत्र सदसती, सद्विद्यमानं असदविद्यमानमुभयोः सदसतोरविशेषाद्–अभेदात्, अबोधमधिकृत्य, अथवा (अयथा) बोधादि-त्यर्थः, यत्रापि यथाबोधाध्यवसायस्तत्रापि यदृच्छोपलब्धेः–अनालोचितोपलब्धेः उन्मत्तवद् उन्मत्तस्येवाज्ञानमेवेति सूत्रार्थः, अवयवार्थं त्वाह भाष्यकारः–'यथोन्मत्ते'त्यादिना,यथोन्मत्तो वायुपिशाचादिगृहीतः 'कर्मोदयाद्' ज्ञानावरणीयादिकर्मविपाकात् उपहतेन्द्रियमतिः सन्, किमित्याह–'विपरीतग्राही भवति' अन्यथावस्थितवस्तुपरिच्छेदीत्यर्थः, अत एव 'सोऽश्व'मि-त्यादि, स उन्मत्तः अश्वं सन्तं गौरित्यध्यवस्यति–गौरयमित्येवं गृह्णाति, तथाभिधानात्, गां च संतमश्वोऽयमित्यध्यवस्यति, एवं लोष्टं–मृदात्मकं सुवर्णमिति, सुवर्णं लोष्टमिति, कदाचिल्लोष्टं च लोष्टमित्यध्यवस्यति, एवं सुवर्णं च सुवर्णमिति, तस्योन्म-त्तस्य एवमुक्तनीत्या विशेषेण अयथावद्बोधेन लोष्टसुवर्णे द्वे अपि संमूढचेतनत्वात्त्वतस्तुल्ये, गवाश्वोपलक्षणमेतत्,एतावपि तुल्यौ, चेतनाचेतनेषु सर्वत्र संग्रह इति ज्ञापनार्थं उदाहरणबहुत्वं,ततश्च 'लोष्ट'मित्यादि, लोष्टं सुवर्णमित्येवं विपरीतमध्यवस्यतः–गृह्णतः,

किमित्याह–नियतं–निश्चितं अज्ञानमेव,कुत्सितं ज्ञानमेव,न ज्ञानं भवति,एवं दृष्टान्तमभिधाय दार्ष्टान्तिकयोजनामाह–'तदि'त्यादिना, यद्वा प्रागुक्तमज्ञानं तद्व॰मिथ्यादर्शनोपहतेन्द्रियमतेः प्रमातुः मतिश्रुतावधयोऽपि प्रागुक्तस्वरूपाः अज्ञानान्येव भवन्ति, मिथ्यादर्शनग्रहणेन सम्मूढचेतनत्वात्,अत एव मनुष्य एव देवः तद्व्यतिरिक्तो वेति सांख्यादीनां प्रतिपत्तिः सदसदविशेषणेति भावनीयमलं प्रसङ्गेनेति,निगमनमाह–'उक्तं ज्ञानं'मत्यादि प्रागुपन्यस्तं,इदानीं चारित्रावसर इत्यत आह–'चारित्रं नवमेऽध्याये वक्ष्यामः' आश्रवनिरोधः संवरः (९ १)स गुप्तिसमितिधर्मानुप्रेक्षापरीषहजयचारित्रै' (९. २) रित्यादिना ग्रंथेन, ततः शास्त्रार्थपरिज्ञानगम्यत्वादस्येति सूत्रान्तरसम्बन्धाभिधित्सयाऽऽह–प्रमाणे चोक्ते, प्रमाणनयैरधिगम इति सूत्रानुवृत्तौ प्रमाणे च परोक्षप्रत्यक्षे उक्ते, अधुना नयान् वक्ष्यामः, 'नयथे'त्येतदपन्यासार्थं ॥

नैगमसंग्रहव्यवहारऋजुसूत्रशब्दा नयाः ॥ ३४ ॥ सूत्रं ॥

नैगमश्च संग्रहश्चेत्यादि कृतद्वन्द्वसमासाना पंचानामपि प्रथमाबहुवचनान्तं, नया इति चानेकधर्मात्मकस्य वस्तुन एकधर्माध्यवसायादिलक्षणा इति सूत्रसमुदायार्थः। अवयवार्थमाह–'नैगम'इत्यादिना(पृ. ३२ ७) निगम्यन्ते–परिच्छिद्यंत इति निगमाः–पदार्थाः लौकिकास्तेषु भवो नैगमः, सदभेदेन सर्वं गृह्णातीति सङ्ग्रहः, सत्सङ्गृहीतानां विधिपूर्वकं व्यवहरणं व्यवहारः, ऋजु–सममकुटिलं सूत्रयतीति ऋजुसूत्रः, यथार्थशब्दनाच्छब्द इत्येवमर्थाः, एते पंच नया भवंति ॥ 'तत्रे'ति पूर्ववत् ॥

आद्यशब्दौ द्वित्रिभेदौ ॥ ३५ ॥ सूत्रं ॥

आदौ भवः आद्यः, शब्दनाच्छब्दः, आद्यश्च शब्दश्च आद्यशब्दौ, नयौ द्वित्रिभेदाविति सूत्रसमुदायार्थः। अवयवार्थमाह–

'आद्य' इत्यादिना (पृ. ३२-१०) ग्रन्थेन, आद्य इति सूत्रक्रमप्रामाण्यात् यथोपन्यस्तात् नैगमसंग्रहेत्यादिपाठात् नैगममयं ब्रवीति, स द्विभेदः, असौ यो नैगमः द्विभेदः द्वौ भेदौ अस्येति द्विभेदः, भेदावेवाह— 'देशपरिक्षेपी च, सर्वपरिक्षेपी च' देशः—विशेषः परमाण्वादिगतस्तं परिक्षेप्तुं शीलमस्येति देशपरिक्षेपी, विशेषग्राहीत्यर्थः, सर्वं—सामान्यं तद्व्यापित्वात् तत् परिक्षेप्तुं शीलमस्येति सर्वपरिक्षेपी, सामान्यग्राहीत्यर्थः, चशब्दौ पृथक्पृथक्स्वातन्त्र्यख्यापनपरौ, अस्येति (नैगमस्य, स) द्विभेदः, शब्दनयः त्र्यंशः, तानाह— 'साम्प्रते'त्यादिना, साम्प्रतवस्त्वाश्रयणात् साम्प्रतः, नानार्थसमभिरोहणात् समभिरूढः, यथाभूतः—एवम्भूतोऽन्वर्थप्रधानत्वात्, इति समुच्चये परिसमाप्तौ वा, 'अत्राहे'त्यादि अत्राधिकारे आह परः, किमेषां नैगमादीनां लक्षणमिति, प्रश्नोत्तराभिधित्सयाऽऽह— 'अत्रोच्यते निगमेष्वि'त्यादि, निश्चयेन गम्यते उच्चार्यन्ते प्रयुज्यते येषु शब्दास्ते निगमा—जनपदास्तेषु निगमेषु—जनपदेषु येऽभि-हिताः उच्चारिताः शब्दा—घटादयस्तेषामर्था—जलाधानयनार्थक्रियासमर्था घटादय एव, शब्दार्थपरिज्ञानं च वाच्यवाचकभावेन, सोऽयमित्थं प्रपञ्चः, किमित्याह— 'देशसमग्रग्राही नैगम' इति देशो—विशेषः देशत्वादेव समग्रं—सामान्यं समग्रव्याप्तेः एतद्ग्राही नैगमः, सौवर्णो घटः घट इति च ग्रहणात्, उभयग्रहणेऽपि नय एव, स्वविषयप्राधान्यादिति। संग्रहलक्षणमाह— 'अर्थाना'मित्यादिना, अर्थानां—घटादीनां सर्वैकदेशसंग्रहणं संग्रहः, सर्वं—सामान्यं सर्वव्याप्तेः देशो—विशेषः देशत्वादेव, तयोः सर्वैकदेशयोः सामान्य-विशेषात्मकयोः एकीभावेन संग्रहणं सङ्ग्रहः, सन्मात्राविशेषात् तदतिरिक्तवस्त्वभावादिति। व्यवहारलक्षणाभिधित्सया त्वाह 'लौ-किके'त्यादि, लोके—मनुष्यादिस्वभावे ये विदितास्ते लौकिकाः—पुरुषाः तैः समः—तुल्यः, यथा चैते विशेषा(न्) व्यवहरन्ति तथाऽयमपीति 'उपचारप्रायः' उपचारबहुलः, अन्यत्र सिद्धस्यार्थस्यान्यत्राध्यारोप उपचारः यथा कुण्डिका श्रवति

पन्था गच्छतीत्यादि, इह कुण्डिकास्थं जलं श्रवति, पथिस्थाः पुरुषा गच्छन्तीति, अत एव 'विस्तृतार्थः' विस्तीर्णाध्यवसायः व्यवहार इति। ऋजुसूत्रलक्षणं तु 'सता'मित्यादि, सतां–विद्यमानानां, नासतां खपुष्पादीनां, सतामपि साम्प्रतानां, नातीतानामनागतानाम् अर्थानां–घटादीनां, नानर्थानां कल्पितानां, 'अभिधानपरिज्ञानं' अभिधानं–शब्दः परिज्ञानम्–अवबोधः अभिधानं च परिज्ञानं चाभिधानपरिज्ञानं यच्च ऋजुसूत्र इति। शब्दलक्षणमाह–'यथार्थाभिधानं शब्दः' यथार्थं च तदभिधानं च यथार्थाभिधानं, भावघटाभिधानमित्यर्थः, शब्द इति शब्दनयः, तदाश्रयोऽध्यवसाय इत्यर्थः, अयं च समानलिङ्गसङ्ख्यापुरुषकालवचनः, अतः स्वाति तारा नक्षत्रमित्यस्यावस्तु, तथा चाम्रकदम्बा वनं, तथा स पचति त्वं पचसि अहं पचामीत्यादि, तथा अग्नीष्टोमयाज्यस्य पुत्रो यति(भवि)तेत्येवमादि सर्वमवस्तु, परस्परव्याघातात्, नीलरक्तादिवत्, अयं च साम्प्रतादिभेदात्त्रिविध उक्त इति साम्प्रतलक्षणमाह–'नामे'त्यादिना, 'नामादिष्वि'ति नामस्थापनाद्रव्यभावेषु 'प्रसिद्धपूर्वकत्वादि'ति प्रसिद्धो–निर्ज्ञातः पूर्वं–संज्ञासंज्ञिसम्बन्धकाले, प्रसिद्धः पूर्वमिति प्रसिद्धपूर्वः, अयमेव प्रसिद्धपूर्वकस्वभावस्तस्मात् शब्दात्–घटादेः–अर्थे भावरूपे तस्यैवाभिधेयत्वात् प्रत्यय इत्यध्यवसायः साम्प्रत इति, अयं चेह सामान्यशब्द एवेति मम नयाः, अन्ये त्वनेकवाचकैकशब्दानभ्युपगमेनास्य भेदमाहुः, सिंहादावनेकस्मिन्नर्थे हरिशब्दानभ्युपगमात्। समभिरूढलक्षणमाह–'सत्सु अर्थेष्वि'त्यादि, सत्सु–विद्यमानेषु वर्त्तमानपर्यायापन्नेषु अर्थेषु–घटादिषु घटः कुटः कुम्भ इत्येवमनेकप्रवृत्तिनिमित्तमुपलक्षणेषु 'असंक्रम' इत्यन्यत्रागमनं, शब्दस्य प्रवृत्तिनिमित्तं विहाय, घटशब्दस्य कुटार्थवदित्यसंक्रमाध्यवसायः समभिरूढ इति, घटनाद् घटः कुटनात् कुटः कुम्भनात् कुम्भ इति भिन्नप्रवृत्तिनिमित्ता एवैते शब्दा घटपटादिशब्दवदिति पर्यायशब्दाभावः, इन्द्रादिशब्दानामपि इंदनशकनपूर्दारणादिक्रियाभे-

दादिति । इत्थम्भूतलक्षणं त्वदः—'व्यञ्जनार्थयोरेवंभूत' इति व्यञ्जनं—शब्दः तदभिधेयोऽर्थः तयोर्व्यञ्जनार्थयोः एवं पर्याया-
भाववद्वाच्यवाचकप्रवृत्तिनिमित्तभावे भूतो यथार्थ एवंभूत इति, यथा घटशब्दो न कुटार्थवाचकः, प्रवृत्तिनिमित्ताभावात्, एवं ना-
चेष्टावदर्थवाचकोऽप्यत एव हेतोः, अर्थोऽपि तत्क्रियाशून्यो न स इति, तथा अर्यमाणत्वाभावात्, अतो यदैव योषिन्मस्तकाधिरूढो
जलाद्यानयनाय चेष्टते तदैव घटः, घटवाचकोऽपि घटशब्दोऽस्य तदैवेत्यध्यवसाय एवम्भूतः । एतानि वाक्यानि सूत्राणि
इति केचित्, तत्तु न, वृत्त्यभावात्, तन्नयलक्षणवाक्यान्येवेति । उक्तं नयलक्षणं, एतेषां चाद्याश्चत्वारोऽर्थनयाः, अर्थप्र-
धानत्वाच्छब्दोपसर्जनाः, शेषास्तु शब्दनयाः, शब्दप्रधानत्वात् अर्थोपसर्जना इति । 'अत्राहे'त्यादि, अत्रावकाशे यथोदितगृहीत-
नयस्वरूपश्चोदक आह—'उद्दिष्टा' अभिहिता लक्षणतः 'भवता' त्वया नैगमादयो नयाः, 'तन्नया इति कः शब्दार्थ (पदार्थः
मु.) इति, तन्नया इति लौकिकवाचोयुक्तिः, तद्राजा कीदृश इति यथा, इह नयाः शब्दनया गृह्यन्ते, यदाह—नया इत्यस्य कः पदार्थ
इति, तदस्य पदार्थत्वोपपत्तेः, कोऽर्थ इति वा, अनभिधानं गम्यार्थव्यपोहेन वाच्यार्थसंग्रहार्थं, कः पदार्थ इति को वाच्यो-
ऽर्थः ?, अनेककारकसन्निधाने सति कः प्रत्ययार्थो ग्राह्य इति प्रश्ननिमित्तं, एवं चोदकेन प्रश्ने कृते सत्याचार्य आह—'तत्रोच्यत'
इत्यादि, नयाः प्रापका इत्यादिना कर्त्रर्थः प्रदर्श्यते, नयन्त इति नयाः, सामान्यादिरूपेणार्थं प्रकाशयन्तीत्यर्थः, प्रापका इत्यनेन
नयतेरंतर्नीतण्यर्थता ख्याप्यते, प्रापयन्त्यात्मनि तं तमर्थं स्वाभिमताभिरुपपत्तिभिरिति प्रापकाः, कारका इत्यादिभिस्तु नय-
तेरर्थान्तरतापि भवति, अनेकार्थत्वाद् धातूनामिति दर्शयति, कुर्वन्ति तद्विज्ञानमात्मन इति कारकाः, एवं साधयन्ति तं तमात्मीयं
योगिनमिति साधकाः, एवं निर्वर्त्तयन्ति तथा आत्मानमिति निर्वर्त्तकाः, एवं निर्भासयन्ति—दीपयन्ति स्वां स्वां व्यक्तिमिति

निर्भासकाः, एवमुपलम्भयन्ति तांस्तान् सूक्ष्मान् अर्थविशेषानित्युपलम्भकाः, एवं व्यञ्जयन्ति—स्पष्टयन्ति तथा तथा स्वाभिप्रायेण वस्त्विति व्यञ्जकाः ' इत्यनर्थान्तर 'मिति कथंचिद्भेदे सत्यपि पर्यायभेदा एत इत्यर्थः, सकर्म्मकाणां प्राप्त्येन कर्मणा भवितव्यमिति तद्दर्शयन्नाह-जीवादीन् सप्त पदार्थान् प्रागुद्दिष्टान् नयन्ति इति नयाः, तद्धर्म्मा एवं सन्तस्तानेव नयन्ते, अनेककर्तृकरणानां वास्तवं न्यायमधिकृत्य कथंचिद्भेदमाह, इत्यत्र बहु वक्तव्यं तत्तु नोच्यते, ग्रन्थविस्तारभयादिति, 'अत्राहे'ति पूर्ववत्, किमेते नैगमादयो नयास्तन्त्रान्तरीयाः तन्यन्ते-विस्तार्यन्ते अर्था अनेनास्मिन्निति वा तन्त्रं-प्रवचनं तस्मादन्यत् कापिलादि तन्त्रान्तरं तस्मिन् भवाः कुशला वा तन्त्रान्तरीया वादिनः स्वशास्त्रसिद्धार्थवदनेन,आहोस्विदित्युत स्वतंत्रा एव 'चोदकपक्षग्राहिण इति' दुरुक्तादीनि चोदयतीति चोदकः तस्य पक्षो-विषयः तं ग्रहीतुं शीला इति, मतिभेदो-बुद्धिभेदस्तेन विप्रधाविताः-अयथार्थनिरूपका इति, एतत्परिहारार्थमाह-' अत्रोच्यते ' इत्यादि, न एते तन्त्रान्तरीयाः, ते हि निर्विषया एव, अवधारणदोषात, नापि स्वतन्त्रा एव चोदकपक्षग्राहिणः मतिभेदेन विप्रधाविताः, तदसम्बद्धप्रलापित्वादिति, ' ज्ञेयस्ये '-त्यादि, ज्ञेयस्यार्थस्य जीवादिघटादेः अध्यवसायान्तराण्येवैतानि, विज्ञानभेदा इत्यर्थः, वाच्यं ज्ञेयमधिकृत्यैतदुपदर्शयन्नाह-'तद्यथे'ति पूर्ववत् घट इत्युक्ते नैगमाध्यवसाय एवं मन्यते 'योऽसा'विति यो लोकप्रसिद्धः 'चेष्टाभिर्निर्वृत्तः' इति कुलालादिचेष्टानिष्पादितः, किमाकार इत्याह—' ऊर्ध्वकुण्डलोष्ठायतवृत्तग्रीवः ' ऊर्ध्वकुण्डलोष्ठश्चासावायतश्च वृत्तग्रीवश्चेति समासः,तथा चोर्ध्वं परिकुण्डलं वृत्तावौष्ठौ यस्य एवं आयता—दीर्घा वृत्ता—समपरिधि ग्रीवेति, तथा अधस्ताद्—अधोभागे परिमण्डलो—वृत्तः, एवं जलक्षीरादीनां आहरणधारणसमर्थः, आहरणं देशाद्देशान्तरसंचारणं, धारणं तेषामेव देशनियतं, एतत्प्रत्यल

उत्तरगुणनिर्वर्त्तनया–आपाकजरक्ततादिगुणपरिसमाप्त्या निर्वृत्तो–निष्पन्नः द्रव्यविशेष इति मृद्द्रव्यभेदः, तस्मिन्नेवमात्मके एकस्मिन्नेव विशेषवति–शुक्लपीतादिविशेषयुक्ते तज्जातीयेषु वा तत्प्रकारेषु वा सर्वेष्वविशेषाद्–अभेदेन सामान्येन परिज्ञानम्–अवबोधो नैगमः,तथा एकस्मिन् घटे बहुषु घटेषु 'नामादिविशेषितेष्वि'ति नामस्थापनाद्रव्यभावविशिष्टेषु साम्प्रतेषु–वर्त्तमानेषु अतीतेषु–अतिक्रान्तेषु अनागतेषु–भाविषु घटेषु सम्प्रत्ययो घट इति सामान्याध्यवसायः सङ्ग्रहः, सामान्यप्रधानत्वादिति, एवं तेष्वेव घटेषु एकद्विबहुनामादिरूपेषु 'लौकिकपरीक्षकग्राह्येषु' लोके विदिता लौकिकाः–अव्युत्पन्नमतयः परीक्षकास्तु–शास्त्रव्युत्पन्नमतय इति, एतद्ग्राह्येषु तत्फलार्थमविप्रतिपन्नाः,'उपचारगम्येष्वि'ति समुद्रो घट इत्यादिनीतेर्यथास्थूलार्थेष्विति सूक्ष्मसामान्यव्यपोहेन सम्प्रत्ययो घट इत्यध्यवसायो व्यवहारो विशेषप्रधानत्वादिति,तथा 'तेष्वेवे'त्यादि, तेष्वेव घटेषु 'सत्सु' विद्यमानेषु (साम्प्रतेषु–वर्त्तमानेषु) सम्प्रत्ययो घट इत्यध्यवसायः ऋजुसूत्रः। एवं 'तेष्वि'त्यादि, तेष्वेव साम्प्रतेषु–वर्त्तमानेषु 'नामादीनां' नामस्थापनाद्रव्यभावानामन्यतमग्राहिषु यस्माद्यस्य शब्दस्य नम्यमानः पदार्थो वाच्यः न तस्य स्थापना न तस्य द्रव्यं न तस्य भाव इत्यतो नामादीनां घटानां ये शब्दा अन्यतमं–नामस्थापनादिकं गृह्णन्ति तेऽन्यतमग्राहिणस्तेषु, एतेष्वपि 'प्रसिद्धपूर्वकेषु' प्रसिद्धः पूर्वो येषां प्रथमसङ्केतस्ते प्रसिद्धपूर्वाः त एव प्रसिद्धपूर्वकाः तेषु, नामादीनामन्यतमवाचकेषु,सम्प्रत्ययस्तथा घट इत्यध्यवसायः साम्प्रतः,शब्दः सामान्य इत्यर्थः,एवं 'एतेषा'मित्यादि,तेषामेव घटादीनां साम्प्रतानां–वर्त्तमानाद्यधिकानां सम्बन्धी 'अध्यवसायासङ्क्रमः' अध्यवसायो–ज्ञानं तदुत्पादकमभिधानमप्यध्यवसायः तस्यासङ्क्रमः–अन्यत्र वाच्ये अप्रवृत्तिः, न हि घटादिभेदेन कुट उच्यते, भिन्नप्रवृत्तिनिमित्तत्वात्, इहैव निदर्शनमाह–'वितर्कध्यानवदि'ति,

वितर्कः-श्रुतं तत्प्रधानं ध्यानं वितर्कध्यानं तद्वत्, एतच्चैकत्ववितर्कं द्वितीयमिह गृह्यते इत्यध्यवसायः समभिरूढ इति। 'तेषामेवे'-त्यादि, 'तेषामेव' अनन्तरनयपरिगृहीतघटादीनां यौ व्यञ्जनार्थौ तयोर्व्यञ्जनार्थयोरन्योऽन्यापेक्षार्थग्राहित्वमिति स्वप्रवृत्तिनिमित्तभावेन यथा व्यञ्जनं तथाऽर्थो यथाऽर्थः तथा व्यञ्जनम्, एवं हि सति वाच्यवाचकसम्बन्धो, नान्यथा, पुष्टप्रवृत्तिनिमित्तभावेनेत्यध्यवसाय एवंभूत इति। इह चाध्यवसायो ज्ञाननय उक्तः, साक्षाच्छास्त्राधिकारात्, ज्ञेयः अस्यार्थनयः, वाचकस्तु शब्दनय इत्येवमवगन्तव्यमिति। 'अत्राहे'त्यादि एवमुक्तनीत्या (इदानीं) एकस्मिन्नर्थे घटादौ अध्यवसायनानात्वात् विज्ञानभेदात् ननु विप्रतिपत्तिप्रसङ्ग इति, ननुशब्दो मीमांसायां, मीमांसनीयमेतत्-एवं विप्रतिपत्तिप्रसंग इति-विरुद्धा प्रतिपत्तिर्विप्रतिपत्तिः तस्याः प्रसङ्गोऽनिष्टमित्यर्थः, न ह्येकनिमित्ताः अनेकाः प्रतिपत्तयो भवितुमर्हन्ति, कृष्णे नीलादिप्रतिपत्तय इवेत्यभिप्रायः, एवं पूर्वपक्षमाशङ्क्याह-'अत्रोच्यत'इत्यादिना, अत्र विरुद्धाः प्रतिपत्तिः, न चैकान्तेनैकनिमित्ता अतः साध्वेवेति यथेत्यादिना दर्शयति, यथा सर्वं जगदनेकावयवात्मकमपि सत् एकं, कुत इत्याह-'सदविशेषात्' सत्त्वेनाभेदात्, अविशेषेण सच्छब्दवदिति प्रतीतिसिद्धेः, एवं सर्वं द्वित्वं, द्वयोर्भावो द्वित्वं जीवाजीवात्मकत्वात् सर्वस्य, तथोभयभेदश्च प्रतीतिभेदात्, न हि सत्प्रतीतिमात्रं जीवादिप्रतीतेरिति, एवं सर्वं त्रित्वं, त्रयाणां भावः त्रित्वं द्रव्यगुणपर्यायावरोधात् सर्वस्य, इहान्यापि द्रव्यं, गुणा-रूपादयः, पर्यायाः-कपालादयः इति प्रतीतिः, अत्रापि भेदनिमित्तमिति त्रिषु सर्वस्यावरोधः, एवं सर्वं चतुष्कं, चतुर्णां भावः चतुष्कं चतुर्दर्शनावरोधात् सर्वस्य, चक्षुर्दर्शनादीनि चत्वारि दर्शनानि तैः सर्वस्यावरोधो-ग्रहणं, विशेषाणामपि कथंचित् सामान्यभेदादिति, एवं सर्वं पञ्चत्वं पंचानां भावः अस्तिकायावरोधात् सर्वस्य पंचभिरस्तिकायैर्धर्म्मादिभिरविरुद्ध-

त्यादित्यर्थः,एवं सर्वं षट्कं, षण्णां भावः,षड्द्रव्याविरोधाच्च षड् द्रव्याणि धर्मास्तिकायादीन्येव कालावगानानि,'कालश्चेत्येके'
इति (५-३८) वचनात्, भिन्नश्च कथंचिद्द्रव्यपरिणामोऽस्तिकायपरिणामात्,प्रदेशसंघातद्रवणनिमित्तभेदादिति। प्रकृतयोजनामाह–
'यथे'त्यादिना, यथैताः सदादिप्रतिपत्तयोऽनन्तरोपन्यस्ता न विप्रतिपत्तयो न विरुद्धाः प्रतिपत्तयः,सर्वस्य जगतः तत्तद्धर्म-
भेदेन तस्यैव तथाप्रतीतेः, अथ च अध्यवसायस्थानान्तराणि–विज्ञानान्तराण्येतानि, प्रतिपत्त्यपह्नवायोगात्, अतिप्रसंगा-
पत्तेः शून्यताप्रसंगादिति,'नद्धन्नयवादा' इत्यनेकधर्मात्मकवस्तुगोचराः क्षयोपशमवैचित्र्यतस्तत्तद्धर्माध्यवसायनिबन्धना इत्यर्थः,
निदर्शनान्तरमाह–'किं चान्यदि'त्यादिना, यथा मतिज्ञानादिभिः प्रागभिहितस्वरूपैः पंचभिः केवलान्तैः ज्ञानैर्धर्मादी-
नामस्तिकायानां वक्ष्यमाणलक्षणानामन्यतमोऽर्थ इति–धर्मादिः पृथक् पृथगध्यवसायभेदेनोपलभ्यते, तथा अनुभवसि-
द्धत्वाद्, इहैव निमित्तमाह–'पर्यायविशुद्धिविशेषादि'ति, पर्याया–वस्तुभेदाः विशुद्धिः–क्षयोपशमादिरूपा तद्विशेषात्–तद्भे-
दात् उत्कर्षेण–प्रकर्षेण लभ्यते, एकं च तद्वस्तु अनेकधर्मात्मकतया, न च ता विप्रतिपत्तयो मिथ्यादिप्रतिपत्तयः, तद्वन्नय-
वादाः न विप्रतिपत्तय इति भावितमेतत्, निदर्शनान्तरमाह–'अथवे'त्यादिना, यथा वा प्रत्यक्षानुमानोपमानाप्तवचनैः
चतुर्भिः प्रमाणैः एकोऽर्थः प्रमीयते अग्न्यादिः प्रत्यक्षेणासन्नेन प्रमात्रा ज्वलद्भास्वराकारस्तार्णादिविशेषः,अनुमानेन तु धूमा-
द्विप्रकृष्टेन सामान्यतस्तद्देशनियतः,उपमानेन तु मध्यदेशवर्त्तिना निर्धूमः कनकपुञ्जपिंजरत्वसाधर्म्येण, आप्तवचनेन तु विप्रकृष्टेन
प्रमात्रा तथा अनवच्छिन्नदेशसामान्य एवेति, एवमेकोऽर्थः प्रमीयते–परिच्छिद्यते, कथं न सर्वेषामेवैकाकारा प्रतिपत्तिरित्याह—
'स्वविषयनियमादि'ति स्वः–आत्मीयो विषयो–ज्ञेयः स्वश्चासौ विषयश्चेति २ तस्मान्नियमात्–नियतत्वात्,अनेनैकान्ततः प्रमा-

णसंग्रनव्यच्छेदमाह, प्रतीतिभेदानुभूतेर्वैयधिकरण्यव्यवच्छेदं च, तथा तथा अप्यनुभवोपपत्तेः, 'न चे'त्यादि, नच ता ज्वलद्भास्वदाकारादिलक्षणाः प्रतिपत्तयो विप्रतिपत्तयो भवन्ति, सर्वाभिरपि तथा तत्परिच्छेदात्, तथा अनुभवसिद्धेः, तद्वन्नयवादा इति न विप्रतिपत्तयः, एतदुक्तं भवति-एकानेकस्वभावे वस्तुनि सनिबन्धनोऽयं सकलव्यवहारः सर्वथैकस्वभावे त्वनिबन्धन इत्यत्याज्य एव, प्रत्यक्षादिज्ञानाभेदप्रसङ्गात्, सर्वथैकालम्बनत्वापत्तेः, निर्विषयत्वे चातिप्रसङ्गात्, सङ्ख्यादिनियमत्वानुपपत्तेरिति प्रपञ्चितमेतदन्यत्रेति नेह प्रयासः, अभिहितमेवार्थं पूर्वाचार्यबहुमतोऽयमिति तत् संगृह्यार्याभिरुपप्रदर्शयन्नाह-'आह चे'त्यादि, आह च कश्मिन्-'नैगमे'त्यादि, नैगमशब्दार्थानामिति निगमा-जनपदाः तत्र भवाः नैगमाः-शब्दा अर्थाश्च तेषामेकानेकार्थनयगमापेक्ष इति, एको-विशेषः एकत्वात् अनेकं-सामान्यमनेकाश्रितत्वात् तावेव अर्थाविर्यमाणत्वात्, तथा नयगमः-परिच्छेदप्रकारः तमपेक्षते-अभ्युपैति यः स तथाविधः, असुमेवार्थं पूर्वाचार्यवाचोयुक्त्याऽनुसारयन्नाह-'देशसमग्रग्राही'ति देशो-विशेषः समग्रं-सामान्यं तयोर्ग्राही-आश्रयति, 'व्यवहारी'ति व्यवहारोऽस्य सामान्यविशेषाभ्यां परस्परविमुखाभ्यामस्तीति व्यवहारी 'नैगमो ज्ञेयः' नैगमनयो ज्ञातव्य इति १॥ संग्रहार्यामाह-'यत् सङ्गृहीतवचन'मित्यादि, यदिति ज्ञानं सम्बध्यते, कीदृशं तदित्याह-'संगृहीतवचनं' संगृहीतं-सामान्यं तदेवोच्यत इति वचनं, ततश्च संगृहीतं वचनं यस्य ज्ञानस्य तत् संगृहीतवचनं, सामान्यज्ञानमित्यर्थः, एतच्च सामान्ये सत्तायां देशतः प्रक्रमात् गोत्वादेरेतद्देशात् विशेषाच्च खण्डादेः अपोहेति शेषः, तद्व्यतिरेकेण तदभावात्, तदसत्त्वप्रसङ्गात्, एवंभूतं यद् ज्ञानं तत् संग्रहनयसंज्ञं-संग्रहनयनियतं विद्यात्-जानीयात् 'नयविधिज्ञो' नयभेदवित् २॥ व्यवहारार्यां त्वियं-'समुदाये'त्यादि, समुदायः-संघातः, व्यक्तिः-मनुष्यत्वं, आकृतिः-संस्थानं,

सत्ता-महामामान्यं संज्ञादयो-नामस्थापनाद्याः एषां निश्चयो—विशेषः तमपेक्षते-अभ्युपैति ममुदायादिना निश्चयापेक्षः,
न च मनुष्यत्वं मनुष्यातिरिक्तं,न चाकृ-ममुदायादीना ममुदायादिव्यतिरेकेणाभावात्,न समुदायादीना समुदायः ममुदायिभ्योऽन्यः,
तिराकृतिमद्भ्यः,न सत्ता मद्भ्यः, न च नामादयो नम्यमानादीन्यन्तरेण,विशेषप्रधानत्वात्, तदपेक्षं तं विद्यादिति मम्बन्धः,'लो-
कोपचारनियत'मिति लोकोपचारनिपुणः,लोकोपचारस्तु दह्यते गिरिर्गलति भाजनमित्यादि,'व्यवहार'मिति नयं, विस्तृतमुप-
चरितार्थश्रयणाद्विस्तीर्णं विन्द्यादित्यवबुध्येत३॥ ऋजुसूत्रशब्दनयसंग्रहमाह—'साम्प्रत'मित्यादिना,साम्प्रतविषयग्राहकं-वर्त्त-
मानज्ञेयपरिच्छेदकं ऋजुसूत्रनयं प्रकान्तमेव समासतः-संक्षेपेण विद्यात्-जानीयाद् ,यथार्थशब्दमित्यनेनैवंभूत एव प्रकाशितो
लक्ष्यते,सर्वविशुद्धत्वादस्येति,दर्शितमेतत् ,साम्प्रतसमभिरूढसंग्रहार्थमाह—'विशेषितपदं त्वि'ति विशेषितं पदं-नामादि प्रसिद्धपू-
र्वकत्वादित्यादिना,'शब्दनय'मिति४॥ इतिशब्दो नयानुस्मरणनिष्ठासूचकः। अत्राह परः—'अथे'त्युपन्यासे, जीव इति शुद्धपदेनाका-
रिते—आदिष्ट इति योगः,तथा नोजीव इति देशसर्वप्रतिषेधे वा नियुक्ते,एवं 'अजीव' इति प्रतिषेधे वा नियुक्ते, एवं नोअजीव इति
प्रतिषेधद्वयसमन्विते एवमाकारिते उच्चरिते सति केन नयेन नैगमादिना कोऽर्थः प्रतीयत इति,प्राग् घटपदार्थमजीवमेव केवलमधि-
कृत्यैव तदर्थप्ररूपणा कृतेति संशयबीजं परस्य,एवं पूर्वपक्षसंभवे सूरिराह—'अत्रोच्यत' इत्यादि, जीव इत्याकारिते शुद्धपदेनादिष्टे
किमित्याह—नैगमेत्यादि,नैगमश्च देशसंग्रहश्च व्यवहारश्चेत्यादिः समासः,नैगमेन देशग्राहिणा तथा व्यवहारेण विशेषग्राहिणा ऋजु-
सूत्रेण वर्त्तमानग्राहिणा साम्प्रतेन समभिरूढेण च एभिः सर्वैरेव संगृह्यैवंभूतवर्जैः पंचस्वपि गतिषु—नरकतिर्यङ्मनुष्यदेवसिद्धि-
गतिलक्षणेभ्यः अन्यतमो नारकादिगतिवर्त्ती जीव इत्येवं जीवः प्रतीयते, नाभावो नापि भावान्तरं, कस्मादिति चोदकाभिप्राय-

मात्सर्याह–एते हि यस्मान्नैगमादयो नया जीवं प्रति जीवमंगीकृत्य 'औपशमिकादियुक्तभावग्राहिणः' औपशमिकादियुक्तं भावं-अर्थं ग्रहीतुं शीला यतः,अतः सिद्धिगतावपि क्षायिकभावात् पंचग्रहणमिति । 'नोजीव' इत्यादिना, नोजीव उच्चारिते अजीवद्रव्यं धर्मादि प्रतीयत इति वर्त्तते, जीवस्य वा देशप्रदेशौ, देशः शिरोऽङ्गादिविभागः, प्रदेशस्त्वविभजनीयः कश्चित्, नोशब्दस्य सर्वदेशप्रतिषेधवचनत्वादिति,'अजीव'इत्यादि, अजीव इति गोच्चरिते अजीवद्रव्यमेव धर्म्मादि, प्रतीयत इति वर्त्तते, सर्वप्रतिषेधवाचकत्वादकारस्य, पर्युदासस्य चाश्रितत्वादिति,'नोअजीव'इत्यादि,नोअजीव इति चादिष्टे जीव एव,नाभावो नापि भावान्तरं, प्रतीयत इति वर्त्तते, तस्य वाऽजीवस्य देशप्रदेशाविति पूर्ववत्, द्वयोरपि नोकाराकारयोः सर्वप्रतिषेधवाचकत्वात्, द्वौ प्रतिषेधौ प्रकृतं गमयत इतिकृत्वा ॥ एवमधिकृतनयवक्तव्यतामभिधाय एवंभूतवक्तव्यतामधिकृत्याह–'एवंभूते'त्यादि, एवम्भूतनयेन तु जीव इत्याकारिते–उच्चारिते सति 'भवस्थ' इति भवे स्थितो भवस्थः–संसारी जीवः प्रतीयते,कस्मात् सिद्धिगतित्याग इत्याह–'एष हि' इत्यादि, एष यस्मान्नयः–एवम्भूतः जीवं प्रत्येवं प्रवृत्तः—यदुत औदयिकादिभावग्राहक एव --औदयिकादिभावयुक्तं जीवमिच्छति, शब्दप्रवृत्तिनिमित्तापेक्षणात् यदाह जीवतीति, जीव प्राणधारणे, प्राणानिन्द्रियादीन् धारयतीत्यर्थः, तच्च जीवनमिन्द्रियादिलक्षणं सिद्धे न विद्यते, तन्निबन्धनकर्म्माभावात्, तस्माद्भवस्थ एव जीव इत्येवंभूतनिगमनं ॥ 'नोजीव'इत्युच्चरिते अजीवद्रव्यं धर्म्मादि,प्रतीयत इति वर्त्तते,सिद्धो वा,तस्य प्राणलक्षणजीवलिङ्गानुपपत्तेः,नोशब्दस्य सर्वप्रतिषेधवाचकत्वात्, एतन्नयमतेन देशवाचकत्वासिद्धेः, देशिन एव देशत्वात्, भिन्नस्य तद्देशत्वायोगात्, सम्बन्धानुपपत्तेः, अनवस्थाप्रसङ्गादिति,'अजीवे'त्यादि, अजीव इति उच्चरिते अजीवद्रव्यमेवाण्वादि, सर्वप्रतिषेधवाचकत्वादकारस्य,'नोअजीव'

इत्याकारिते भवस्थ एव जीव इति प्रतीयते, प्रतिषेधद्वयस्य प्रकृतगमकत्वाद्, देशप्रदेशानभ्युपगमे कारणमाह-'समग्रार्थे'त्यादिना, समग्रः-सम्पूर्णः अर्थो-वस्तु समग्रार्थं ग्रहीतुं शीलमस्येति विग्रहस्तद्भावः तस्मात्, अस्य नयस्यैवंभूतस्य नानेन-एवंभूतनयेन देशप्रदेशौ-स्थूलसूक्ष्मावयवौ गृह्येते इति, एवमेकवचनेन चत्वारो विकल्पा दर्शिताः, एवं द्विवचनबहुवचनाभ्यामपि द्रष्टव्या इत्यभिधातुमाह-'एवं जीवौ जीवा' इति, द्वित्वबहुत्वाकारितेष्वपि चत्वारो विकल्पाः, तद्यथा-जीवौ नोजीवौ अजीवौ नोअजीवौ, बहुवचनेऽपि जीवाः नोजीवाः अजीवा नोअजीवा इति, एकवचनद्वित्वबहुत्वाकारितेष्वप्येवमेवाभ्युपगमो नैगमादीनामित्यर्थः, सर्वसंग्रहमधिकृत्याह-'सर्वसंग्रहे'त्यादि, सर्वसंग्रहेण तु नयेन-सामान्यवस्तुग्राहिणा जीवो नोजीव इत्यादि एकवचनद्विवचनानां विकल्पा नेष्यन्ते, अस्य ह्येवंभूतं वस्तु शून्यं-प्रतिपत्त्यगोचरः, कस्मादित्याह-'एष ही'त्यादि, एष यस्मान्नयः संख्यानन्त्याज्जीवानां बहुत्वमेवे(च्छती)ति प्रतीयते, 'यथार्थग्राही'ति नैकवचनद्विवचनार्थः इह विद्यत इत्यभिप्रायः, चित्रमतश्चैष इत्येवमविरोधः,अयं विशेषोऽनेन प्रतिपन्नो देशसंग्रहव्यवहारादिभ्य इति भावना पूर्ववत्, 'शेषास्त्वि'त्यादि,शेषास्तु नैगमादयो नयाः जात्यपेक्षमेकस्मिन्नेव जीवादौ बहुवचनमिच्छंति, कथमित्याह-'जात्यपेक्षं' जातिम्-सामान्यरूपामपेक्षते यत्तज्जात्यपेक्षं बहुवचनं, जातेरनेकाश्रयत्वात्, जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्यां (पा.१-२-५८) बहुवचनात् बहुषु चैकवचनं जात्यपेक्षमेवेति, 'सर्वाकारितग्राहिण' इति सर्ववचनादिभिराकारितान्-उच्चारितान् अनेकान् विकल्पान् गृह्णंति तच्छीलाश्चेति सर्वाकारितग्राहिण इति एतन्मतसमासार्थः, 'एव'मित्यादि, एवं सर्वभावेषु-धर्मास्तिकायादिषु नयवादेनानु(भि.मु.)गमः अनुसरणलक्षणः कार्यः इत्यतिदेश एषः। एवं प्रमेयनयानुगम उक्तः,साम्प्रतं प्रमाणमधिकृत्यैनमभिधातुं चोदकद्वारेणाह-'अत्राहे'त्यादि,

'अथे'त्युपन्यासार्थः पञ्चानां ज्ञानानां मत्यादीनां सविपर्ययाणां सह विपर्ययेण--अज्ञानस्वभावेन यानि वर्त्तन्ते तेषां कानि मत्यादीनि को नयो नैगमादिः श्रयते अभ्युपगच्छतीति, अत्रोच्यते,'नैगमे'त्यादि, नैगमादयस्तु य आद्या एव--नैगमसंग्रहव्यवहाराः सर्वाणि मत्यादीनि श्रयन्ते, कानीत्याह--अष्टौ मतिज्ञानं मत्यज्ञानमित्यादिना प्रकारेण पंच ज्ञानानि त्रयो विपर्यया इतिकृत्वा श्रयन्ते--अभ्युपगच्छन्ति, यतः सर्वाण्येव तान्यर्थं परिच्छिंदंति, 'ऋजुसूत्रनयो मतिमत्यज्ञानविवर्जितानि षट् श्रयत' इति, अत्राह परः--कस्मात् मतिमुक्तलक्षणा सविपर्यया मत्यज्ञानसहितां न श्रयति--नेच्छति ?, अत्रोच्यते, श्रुतस्य--श्रुतज्ञानस्य सविपर्ययस्य श्रुताज्ञानसहितस्य उपग्रहत्वात् उपकारकत्वात्, मतिमत्यज्ञाने श्रुतस्य श्रुताज्ञानसहितस्य उपग्रहं कुरुते, तत्कार्यभूतत्वात् श्रुतस्य, फलप्रधानश्चैष नय इत्यभिप्रायः। शब्दनयः पुनर्भावार्थावलम्बी द्वे एव,के ते इत्याह--श्रुतज्ञानकेवलज्ञाने श्रयते--अभ्युपैति,अत्राह--अथ कस्मान्नेतराणि- मत्यादीनि श्रयत इति, अत्रोच्यते--मत्यवधिमनःपर्यायाणां त्रयाणामपि, किमित्याह--श्रुतस्यैवोपग्रहत्वात्--उपकारकत्वादिति, नात्मानमात्मना प्रतिपादयितुं क्षमाण्येतानि, मूककल्पत्वात्, श्रुतेन तु प्रतिपाद्यत इति श्रुतमुपकारकमेषां, उपकारि च श्रेयो जघन्यमुपकार्यमित्यधिकृतनयाभिप्रायः, केवलज्ञानं तु प्रधानमन्येनानुपकार्यं स्वसामर्थ्येनैव च प्रवर्त्तितनाग्र्योगमिति श्रयते, विपर्ययानाश्रयणे तु कारणमाह--'चेतने'त्यादि, चेतना--जीवत्वं परिच्छेदत्वसामान्यं गृह्यते ज्ञ इत्यनेन तु विशेषपरिच्छेदिता, तयोश्चेतनाज्ञयोः स्वाभाव्यं--तथाभवनं तस्माच्च चेतनाज्ञस्वाभाव्यात् सर्वजीवानां--पृथिवीकायिकादीनां नास्य नयस्य कश्चिन्मिथ्यादृष्टिरज्ञो वैकान्तेन जीवो विद्यते,यथावस्थितस्पर्शादिपरिच्छेदात्, आगमोऽपि किलैवमेव व्यवस्थितः 'सव्वजीवाणंपि अ णं अक्खरस्स अणंतभागो णिच्चुग्घाडिओ'त्ति

वचनात् (नन्दी) सर्वे सम्यग्दृष्टयो ज्ञानिनश्च, तस्मादपि कारणात्, न केवलं श्रुतोपग्रहत्वेन, विपर्ययान्-मत्यादीन् न श्रयत इति नाभ्युपै (ति) अतश्च-अस्मात् कारणात् प्रत्यक्षानुमानोपमानाप्तवचनानामपि च प्रागभिहितस्वरूपाणां प्रामाण्यमभ्यनुज्ञातमि(यंत इ सू.)ति, एतेन यत् 'प्रत्यक्षमन्यदि' त्यस्मिन् सूत्रे प्रतिज्ञातं नयवादान्तरेण तु यथा मतिश्रुतविकल्पजानि भवन्ति तथा परस्ताद्वक्ष्यामः इति तदुक्तं वेदितव्यं, एवं हि सम्यग्दृष्टित्वात् सम्यग्ज्ञानित्वाच्च सर्वजीवानां सर्वज्ञानानामेव प्रामाण्यं, प्रतिभासरूत्यादिति ॥ साम्प्रतं प्रमाणनयविचारसमनन्तराध्यायार्थमुपसंहरन्नशङ्कार्थं वास्य पूर्वसूरियद्धमतत्त्वं कारिकाभिरुपदर्शयन्नाह—'आह चे'त्यादि, आह च कश्चित् पूर्वसूरिः 'विज्ञाये'त्यादि, विज्ञाय एकार्थानि पदानि—पर्यायशब्दरूपाणि तद्यथा—जीवः प्राणी जन्तुः इत्यादीनि च, अर्थपदानि च-निरुक्तपदानि, जीवतीति जीवः, प्राणा अस्य विद्यन्त इति प्राणी, जायत इति जंतुरित्येवमादीनि, विधानं नामस्थापनादिकं इष्टं च निर्देशस्वामित्वादि चशब्दादन्यच्च तन्त्रयुक्त्यादि, तथाऽऽद्यं परोक्षस्य प्रामाण्यस्यादावभिधानं तत्पूर्वकमेव प्रत्यक्षमिति ज्ञापनार्थमित्यादि, विन्यस्य नामादिभिः परिक्षेपात्—समन्तात् नयैः नैगमादिभिः परीक्ष्याणि-मीमांस्यानि तत्त्वानि-जीवादीनि ॥१॥ ज्ञानं-मत्यादि सविपर्यासं-सह विपर्यासैः त्रिभिः त्र्यः श्रयन्तीति त्रयो-नैगमादयः अभ्युपगच्छंति, आदितः आदेरारभ्य नयाः सर्वमष्टविधं ज्ञानं विभङ्गान्तं, एतच्च सामान्यतः सम्यग्दृष्टेः-उक्तलक्षणस्य ज्ञानं मिथ्यादृष्टेर्विपर्यासः मिथ्यात्वग्रहावेशादिति ॥ २ ॥ 'ऋजुसूत्र 'इत्यादि, ऋजुसूत्रो नयः षण् मतिमत्यज्ञानरहितानि श्रुतादीनि श्रयते, मतिं सविपर्ययां श्रुतोपग्रहात् श्रुतोपकारकत्वात् अनन्यत्वात्—श्रुतानन्यत्वेन न श्रयत इति, श्रुतकेवले तु-श्रुतज्ञानकेवलज्ञाने तु पुनः शब्दः श्रयते उक्तनीत्या, अत एवाह--नान्यत् मत्यादि श्रयते, श्रुताङ्ग-

त्वात्, श्रुतस्यैव तत्प्रतिविशिष्टबलाधानहेतुत्वादिति ॥ ३ ॥ 'मिथ्यादृष्टी'त्यादि, मिथ्यादृष्ट्यज्ञाने प्राक् प्रदर्शिते न श्रूयते, कस्मादित्याह–नास्य शब्दनयस्य कश्चिदज्ञोऽस्ति, कुत इत्याह-'ज्ञस्वाभाव्यादि'ति पूर्ववत्, जीवः-आत्मा, मिथ्यादर्शनं चाप्य(ज्ञोऽ)स्ति जीव एव इत्यादि ॥३॥ 'इति नयवादाश्चित्रा' नैगमादिभेदेन क्वचिद्–वस्त्वंशे स्वरुचिगृहीते विरुद्धा इव लक्ष्यन्ते, विशेषे कथं सामान्यं ? सामान्ये वा विशेष ? इत्यादि, अथ च विशुद्धा एते, विशेषस्य सामान्याननुविद्धस्यासत्त्वात् सामान्यस्य विशेषाननुविद्धस्येति प्रपञ्चितमेतदन्यत्र, एते च 'लौकिकविषयातीता' इति लौकिकानां-वैशेषिकादीनां विषयाः–शास्त्राणि तान्यतीताः–अतिक्रान्ताः, अवधृतस्वरूपत्वेन तदसम्भवात्, एते च तत्त्वज्ञानार्थं सद्भूतसर्वदोषरहितज्ञानाय अधिगमाय ज्ञेयाः, दर्शनज्ञानार्थमित्यर्थः ॥

इति हरिभद्रसूरिविरचितायां तत्त्वार्थवृत्तिटीकायां डुपडुपिकाभिधानायां तत्त्वार्थटीकायांप्रथमोऽध्यायः समाप्तः॥

---

नमोऽर्हते ।

अधुना द्वितीय आरभ्यते, तत्र चायं सम्बन्धग्रन्थः–'अत्राहे'त्यादि (पृ.३९-२), अत्राह–उक्तं भवता प्रथमेऽध्याये, किमित्याह–जीवादीनि तत्त्वानि–जीवाजीवाश्रवेत्याद्यभिधानात्, उक्तो जीवः स्वतत्त्वतः कथंलक्षणः–किंलक्षणो वेत्याशङ्क्याह–

औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ च ॥ १ ॥ सूत्रं ॥

औपशमिकश्च क्षायिकश्चौपशमिकक्षायिकौ भावौ–धर्मौ मिश्रश्च–क्षायोपशमिकश्च जीवस्य–आत्मनः सामान्येन स्वतत्त्वं–

स्वशब्द आत्मवचन एव,तत्त्वशब्दो भावाभिधायी, ततश्च स्वतत्त्वमिति जीवात्मभाव एव,नैते एवेत्याह–औदयिकश्च पारिणामिकश्चौदयिकपारिणामिकौ, एतौ च स्वतत्त्वम्, चशब्दात् सान्निपातिकः, इह च जीवस्वतत्त्वाधिकारादादावौपशमिकक्षायिकग्रहः तत्रापि आद औपशमिकग्रहः, औपशमिकपूर्वकत्वात् क्षायिकस्य, तथा अल्पाश्रयत्वादल्पकालस्थायित्वाच्चादावौपशमिकस्य, तदनन्तरं बहुतराश्रयत्वाद्बहुकालावस्थायित्वाच्च क्षायिकस्य, तदनु बहुतराश्रयत्वादेः क्षायोपशमिकस्य, तदन्वौदयिकस्यात एव हेतोः, अन्योदयप्रधानत्वाच्च, तदनु पारिणामिकस्य, महाविषयत्वात्, सर्व एवेति स्वतत्त्वमिति, निरुपचरितौ संसारापवर्गावस्य,अन्यथैतदभावः, औदयिकाद्यभावे संसाराभावात्,न हि स्फटिकमणेरपि पद्मरागाद्युपधानसन्निधाने तत्स्वभावतागर्भतद्भावमन्तरेण रक्तादयोऽतिप्रसङ्गात्, अन्धानामपि तथा तद्भावप्राप्तेः, इष्टा च परैरप्येषा अस्य तत्स्वभावता दिदृक्षावासनादिशब्दवाच्येति सूत्रसमुदायार्थः। अवयवार्थं त्वाह–'औपशमिक'इत्यादिना (पृ. ३९-५) तत्रोपशमनमुपशमः–कर्म्मणोऽनुदयक्षयावस्था भस्मपटलावच्छन्नाग्निवत्, स प्रयोजनमस्येति औपशमिकः, तेन वा निर्वृत्त इति, तथा(क्षयः)तदत्यन्तापचयः प्रयोजनमस्येति तेन वा निर्वृत्त इति क्षायिकः,क्षयोपशमाभ्यां निर्वृत्तः क्षायोपशमिकः–दरविध्याताविच्छिन्नज्वलनवत्, कर्मविपाकाविर्भाव उदयः तत्प्रयोजनस्तन्निर्वृत्तो वा औदयिकः, पारिणामिकस्तु परिणाम एव पारिणामिकः, स्वार्थे प्रत्ययो, न प्रयोजननिर्वृत्त्योः, जीवभव्याभव्यत्वादेरनादिपारिणामिकत्वात्, परीणामप्रयोजनत्वे तन्निर्वृत्तत्वे च जीवादेः प्रागभवनेनादिमत्त्वापत्तिः, अन्यथा प्रयोजनस्याप्रयोगात्, इतिशब्दोऽर्थपदार्थकः, एते औपशमिकाद्यर्थास्तात्त्विकाः पञ्च भावा जीवस्य स्वतत्त्वं भवन्ति, सान्निपातिकस्तु तदन्तर्गतत्वादेव वृत्तिकृता नोक्तः,उपात्तस्तु सूत्रकारेण चशब्दोपादानादिति ॥ अधिकृतभावानामेव पृथग्भेदाभिधानायाह–

द्विनवाष्टादशैकविंशतित्रिभेदा यथाक्रमम् ॥ २ ॥ सूत्रं ॥

द्वौ च नव चेत्यादिर्द्वन्द्वः,पश्चाद् बहुव्रीहिः,द्विनवाष्टादशैकविंशतित्रयो भेदा येषां ते तथेति समासः,'यथाक्रम'मिति पूर्वसूत्रोपन्यासक्रमेण, न त्वेकैकस्यैते समस्तानां वेति सूत्रसमुदायार्थः। अवयवार्थं त्वाह वृत्तिकारः-'एते' इत्यादिना (पृ.३९-८),एते अनन्तरोक्ताः औपशमिकादयः पञ्च भावाः-भवनलक्षणाः, किमित्याह—द्विनवाष्टादशैकविंशतित्रिभेदा भवन्ति, 'तद्यथे'त्युपन्यासार्थः, औपशमिकः उक्तलक्षणः द्विभेदो वक्ष्यमाणेन भेदेनेत्यादि निगदसिद्धं यावद्येन सूत्रक्रमेणेति येनेति वक्ष्यमाणेन 'सम्यक्त्वचारित्रे' इत्यादिना अत ऊर्ध्वमित्यस्मात् सूत्रादुपरिष्टाद्वक्ष्यामो-भणिष्यामस्तेन क्रमेणौपशमिकादिभेदा द्रष्टव्या इति ॥ अधुनैतानेव दर्शयन्नाह-'तद्यथे'त्युपन्यासार्थः,

सम्यक्त्वचारित्रे इति ॥ ३ ॥ सूत्रं ॥

सम्यक्त्वम्-उक्तलक्षणं प्रथमेऽध्याये चारित्रं तु नवमेऽध्यायेऽग्रे वक्ष्यते ते एते औपशमिके अपि भवत इति सूत्रसमुदायार्थः। अवयवार्थं त्वाह-'सम्यक्त्वं' तत्त्वरुचिरूपं 'चारित्रं' सावद्यविरतिरूपं, चः समुच्चये, द्वावेतौ भेदावौपशमिकौ भावौ भवतः, एतावेव, न त्वेतावौपशमिकावेव, एतद्भेदयोरेव सामान्यतः क्षायोपशमिकादिभावात्, आह-क उपशमक्षयोपशमयोर्भेदः?, उच्यते, क्षयोपशमे ह्युपशान्तस्याप्युदयोऽस्ति, प्रदेशतया कर्मणो वेदनात्, न चासावभिघाताय, विपाकाभावात्, उपशमे प्रदेशकर्मानुभावो नास्तीत्ययं भेदः, तथा चागमः—"से णूणं भंते! णेरइअस्स वा मणुअस्स वा देवस्स वा जे कडे कम्मे णत्थि णं तस्स अवेदइत्ता मोक्खो?, हंता गोयमा! एवं, से केणट्ठेणं भंते! एवं वुचइ?-एवं खलु गोयमा! मए दुविहे कम्मे

पण्णत्ते, तंजहा पएसकम्मे अ अणुभागकम्मे अ, तत्थ णं जं तं पएसकम्मं तं नियमा वेएति, तत्थ णं जं तं 'अणुभागकम्मे' अ-त्थेगइयं वेएइ अत्थेगइयं न वेएइ, णायमेयं अरहया विण्णायमेयं अरहया-अयं जीवे इमं कम्मं अब्भोवगमियाए वेदणाए वेदेइ, अयं जीवे इमं कम्मं उवक्कमियाए वेअणाए वेदिस्सइ, अहाकम्मं अहाकरणं जहा जहा तं भगवया दिट्ठं तहा तहा तं विपरिणमिस्स-इत्ति, से एतेणं गोयमा! एवं वुच्चइ।" अतोऽस्ति विशेष उपशमक्षयोपशमयोरिति, क्षायोपशमिकायां तत्त्वरुचावस्ति प्रदेशकर्मो-दयो, न त्वौपशमिकायामिति, एवं विरतावपि भावनीयमिति॥ उक्तावौपशमिकभेदौ, क्षायिकभेदानाह-

ज्ञानदर्शनदानलाभभोगोपभोगवीर्याणि च॥४॥ सूत्रम्॥

ग्रेण, ज्ञानं च दर्शनं चेत्यादिर्द्वन्द्वः, चशब्दोऽनन्तरद्वयानुकर्षणार्थः, इति सूत्रसमासार्थः। व्यासार्थं त्वाह—'ज्ञान' मित्या-दिना (पृ. ४०-१) ज्ञानं केवलज्ञानं दर्शनं केवलदर्शनं क्षायिकं प्रयच्छनाविघातका(रि दानं क्षायिकं प्राप्त्यभिघातका)री लाभः क्षायिकः पुरुषार्थसाधनप्राप्तानिरुद्धोगः क्षायिकः उचितभोगसाधनावाप्त्यवन्ध्यहेतुः उपभोगः क्षायिकः सोऽप्युचितोपभोग-साधनावाप्त्यवन्ध्यहेतुरेव, एतद्भेदस्तु सकृद्भुज्यत इति भोगः पुनः पुनरुपभुज्यत इत्युपभोगः, अयमिह भक्ष्यपेयवस्त्रपात्रादि-गोचरो ज्ञेयः, वीर्यं क्षायिकमशेषवीर्यान्तरायक्षयजं, तेन यदुचितं तत् सर्वं करोति, इतिशब्दोऽर्थपदार्थकः, एतानि सूत्रो-क्तानि, चः समुच्चये, सम्यक्त्वचारित्रे च क्षायिके भवतः केवलिन इति नव क्षायिका भावा भवन्ति, सिद्धत्वं तु क्षायिकमपि सक-लकर्मक्षयजमिति नोक्तं सूत्रकृता, कर्मप्रकृत्येकदेशक्षयजभेदानां विवक्षितत्वात्, इत्थं चैतद्दशमेऽध्याये वक्ष्यते, 'औपशमिकादिभ-व्यत्वाभावाच्चान्यत्र केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्य' (१०-२) इति वचनात्, तत्र विस्मृत इह आचार्यस्यायं क्षायिकभावभेदो,

नोपन्यस्तस्तूक्ताभिप्रायादिति,ज्ञानदर्शनादिभावात् सर्वदा,सर्वदा दानाद्यभावश्चेहान्यभावसापेक्षत्वात् निजौदयिकपरक्षायोपशमिकभोग्यत्वाद्यपेक्षोपपत्तेरिति ॥ उक्ताः क्षायिकाः, क्षायोपशमिकभेदाभिधानायाह—

ज्ञानाज्ञानदर्शनदानादिलब्धयश्चतुस्त्रित्रिपंचभेदाः सम्यक्त्वचारित्रसंयमासंयमाश्च ॥५॥ सूत्रं ॥

ज्ञानं चाज्ञानं च दर्शनं च लब्धिश्चेति विग्रहः, एवं यथासङ्ख्यं चत्वारश्च त्रयश्च त्रयश्च पंच भेदा यासामिति विग्रहः, तथा सम्यक्त्वं च चारित्रं च संयमासंयमश्चेति विग्रहः, अशक्यप्रतिबन्धमन्यथा सूत्रमित्येवमुपन्यास इति सूत्रसमुदायार्थः। अवयवार्थं त्वाह वृत्तिकृत्–'ज्ञानं चतुर्भेद'मित्यादिना ग्रन्थेन (पृ. ४०-६) ज्ञानं चतुर्भेदमित्युद्देशो मतिज्ञानमित्यादिर्निर्देशः,मनःपर्यायज्ञानमित्यत्रेतिशब्दः क्षायोपशमिकज्ञानेयत्ताप्रतिपादनार्थः, केवलज्ञानस्य क्षायिकत्वात्, अज्ञानं त्रिभेदमित्युद्देशः,मत्यज्ञानादिस्तु निर्देशः, मिथ्यादर्शनसहचरितं ज्ञानमज्ञानमुच्यते,कुत्सितत्वात् तत्कार्याकरणाद् अशीलवद् अपुत्रवद्वेति,विभङ्गज्ञानमवधिप्रतिपक्षो, मिथ्यादृष्टेः भङ्गः–प्रकारः, कुत्सायां विरुपसर्गः, विगर्हितं भङ्गं विभङ्गं विभंगं च तज्ज्ञानं चेति समासः, इतिः पूर्ववत्, दर्शनं त्रिभेदमित्युद्देशः, चक्षुर्दर्शनमित्यादिस्तु निर्देशः,तत्र (चक्षुर्दर्शनं) चक्षुर्दर्शनावरणीयकर्मक्षयोपशमतः अवबोधव्यापृतिमात्रसारं सूक्ष्मजिज्ञासारूपमवग्रहप्राग्जन्ममतिज्ञानावरणक्षयोपशमसंभूतं सामान्यमात्रग्राह्यवग्रहव्यंग्यं स्कन्धावारोपयोगवत्, एवमचक्षुर्दर्शनं शेपेन्द्रियोपलब्धिलक्षणं, एवमवधिदर्शनमपीति, दर्शनावरणक्षयोपशमजमिति,यथोदितमेव,अन्यथा अवग्रहदर्शनाभ्युपगमे तस्य ज्ञानभेदत्वे दर्शनाभावप्रसङ्गात्, इतिशब्दः क्षायोपशमिकदर्शनेयत्ताख्यापनपरः, केवलदर्शनस्य क्षायिकत्वादिति, लब्धयः पंचविधा इत्युपन्यासः, दानलब्धिरित्यादिना तु तन्निर्देशः, क्षायोपशमिक्य एता इति पूर्वसूत्राद्भेदेनाभिधानं, तासां स्वविपये

संबंधः प्रतीतः, समुदायार्थश्च ॥ अवयवार्थमाह–'तैजसमपी'त्यादिना(पृ.५५–१५)तैजसमपि शरीरं प्राग्निर्दिष्टस्वरूपं, किमित्याह–लब्धिप्रत्ययं लब्धिनिमित्तं भवति, लब्धिनिमित्तमपि, नतु लब्धिनिमित्तमेव, कार्मणभेदस्य उष्मलक्षणस्य रसाद्याहारपाकजनकस्य भावादिति, 'कार्मण'मित्यादि, कार्मणं शरीरं एषामौदारिकादीनां निबन्धनं बीजं, एतदुपादानतोऽपि भवतीत्याह–आश्रयो भवति, तच्छक्तयाधारत्वात् कुड्यमिव चित्रकर्मणः, कार्मणस्य किं निमित्तमित्याशंकासम्भवे सत्याह–'तत् कर्म्मत एवे'त्यादि, तत् कार्मणं शरीरं कर्म्मत एव भवति, पूर्वबद्धात् सकाशात्, अनादित्वात् कर्मसन्तानस्य, एतच्च कर्म्मबन्धे बन्धाधिकारे पुरस्तादग्रेऽष्टमेऽध्याये वक्ष्यति समूलोत्तरभेदं, एतदेव चार्थजातं स्पष्टयन्नाह–आदित्यप्रकाशवत्, एतदेव व्याचष्टे–यथा आदित्यः सकललोकप्रतीतः स्वमात्मानं प्रकाशयति, तथोपलब्धिहेतुत्वेनान्यानि च द्रव्याणि घटादीनि प्रकाशयति, अत एव हेतोः, न चास्य–आदित्यस्यान्यः कश्चित् प्रकाशकः, तथा दर्शनापत्तेः, चक्षुषोऽप्रकाशकत्वात्, अंधकाराग्रहणात्, नक्तंचराणामपि नयनरश्मिप्रकाशकत्वादिति, एवं दृष्टान्तमभिधाय दार्ष्टान्तिकयोजनामाह–'एव'मित्यादिना, एवं कार्मणं शरीरं आत्मनश्च स्वरूपस्य च कारणं सन्तानापेक्षया, अन्येषां च शरीराणाम्–औदारिकादीनाम्, आश्रयत्वेन, तैजसकार्मणमानमपि जघन्यमङ्गुलासंख्येयभाग उत्कृष्टं समानमौदारिकेण, केवलिसमुद्घाते तु लोकमाने, मारणान्तिकसमुद्घाते त्वायामतो लोकान्तायते ॥ 'अत्राहे'त्यादिना, अत्र शरीरव्यतिकर एव आह चोदकः–औदारिकपदमादौ यासां संज्ञानां तासां एतदादीनां कः पदार्थः ?, अन्वयार्थमप्यधिकृत्येति, उच्यते, 'उद्गतारमुदार'मिति उद्गता उत्कृष्टा आरा–छाया यस्यासावुद्गतारं उत्कृष्टच्छायमित्यर्थः, उदारं–प्रधानं, मोक्षहेतुत्वेन, तीर्थकरगणधरादिशरीरापेक्षया वा, यथोक्तम्–उपशान्तं च कान्तं च, दीप्तमप्रतिघाति च । निभृतं चोर्जितं चैव, वपुर्भगवतां मतम्

॥१॥" अथवा 'उत्कटारमुदार'मिति उत्कटा—उत्कृष्टा आरा-मर्यादा धर्म्मनीतिलक्षणा वा यस्य तत्तथा, उद्गम एव वा उदारमिति उद्गमनमुद्गमः प्रादुर्भावः स एव चोदारः, उत्कटः कथमित्याह—उपादानात् प्रभृति शुक्रशोणितग्रहणादारभ्य अनुसमयमुद्गच्छति प्रतिसमयं प्रादुर्भवत्यवस्थाभेदेन, एतदाह—वर्द्धते वयःपरिणामेनोपचीयते जीर्यते जरामधिगच्छति शीर्यते तच्छिथिलभावेन परिणमति पर्यायान्तराप्त्या, मुहुर्मुहुरुद्गमनाद्, उदारमेवौदारिकं, स्वार्थे प्रत्ययविधानात्, नैवमन्यानि वैक्रियादीनि, वैक्रियस्य (न) जरा अनभिभवात्, आहारकस्यायामे रत्निमानत्वात्, तैजसकार्मणयोस्त्वङ्गाद्यभावादिति, प्रकारान्तरमाह—'यथोद्गमं चे'त्यादिना, योग्य उद्गमो यथोद्गमं निरतिशेषं निःशेषं ग्राह्यं प्राण्याद्यवयवानां भेद्यं नाराचादीनां दाह्यमग्नेः हार्यं वायोः एवमुदाहरणात् पृषोदरादिपाठेनौदारिकं, नैवमन्यानीति, भावितार्थं, प्रकारान्तरमाह—'उदारमिति चे'त्यादिना, चशब्दोऽथवेत्यस्यार्थे, उदारमित्येतत् स्थूलनाम स्थूलाभिधानं, एतत्पर्यायानाह-'स्थूलमुद्गम'मित्यादिना, तत्र स्थूलं स्वल्पप्रदेशोपचितं बृहत्त्वात् भिण्डवत्, ऊर्ध्वंगतोच्छ्रायमुद्गतं, गतिप्रमाणत्वाद् भिन्नरेणुवदेव, पुष्टं शुक्रशोणितादिप्रचितं बृहत् प्रतिक्षणवृद्धियुक्तं महद् योजनसहस्रमानं, इत्येवमुदार इति प्रक्रमः, अत उदारमेवौदारिकमिति, अयं न नियमः, किंतु प्रदर्शनमिदं, क्वचिन्निवृत्त्याद्यर्थं इति, नैवं शेषाणि वैक्रियादीनि, कुत इत्याह—तेषां यस्मात् परं परं सूक्ष्ममित्युक्तं प्राक्। 'वैक्रिय'मित्यादि, इहापि पर्यायानाह—'विक्रिये'त्यादिना, विविधा विशिष्टा वा क्रिया तस्यां भवं वैक्रियं, प्रकृतेरन्यत्वं विकारः, विचित्रा कृतिर्विकृतिः, विविधं क्रियत इति विकरणं, एतेऽनर्थान्तरमभिदधति शब्दाः, एतदधुना स्पष्टयन्नाह—'विविधं क्रियते' इत्यादिना, विविधम्—अनेकप्रकारं तद्वैक्रियं क्रियते, कथमित्याह—एकं भूत्वा अनेकं भवति तत्, कर्त्तुरिच्छाऽनुविधानात्, एतन्निगदसिद्धं यावत् प्रतिघाति भूत्वेत्यादि,

अभिहननशीलं भूत्वा स्थूलतया अप्रतिघाति भवति सूक्ष्मतया, एवं विपर्ययोऽपि, यच्चैककाल एव एतान् भावान् अधिकारानभिहितलक्षणाननुभवति वेदयते, नैवं शेषाण्यौदारिकादीनीति भावितार्थं, न स्वार्थ एव प्रत्ययविधिरित्यनियमप्रदर्शनायाह–'विक्रियायां भव'मित्यादि, निगदसिद्धं, किन्तु कदाचिद्वैक्रियिकं चेति, एवमाहारकं आह्रियत इत्यादि, आह्रियते आहार्यमित्यनेन शब्दद्वयेन विशिष्टकारकसाध्यमाहारकशब्दमाह, 'कृत्यल्युटो बहुल'मिति (पा.)वचनात्, आह्रियते-गृह्यते प्रतिविशिष्टप्रयोजनायेत्याहारकं, आहार्यं वा, याचितोपस्कारवत्, कार्यपरिसमाप्तौ च मुच्यत एवेत्याह—अन्तर्मुहूर्त्तस्थितिः, एतावति च काले तदभिलषितार्थसिद्धेरिति, नैवं शेषाण्यौदारिकादीनि भावितार्थमेतत्, एवं तेजसो विकार इत्याह, उष्णभावलक्षणं तेजः सर्वप्राणिनामाहारपाचकं तस्य तेजसो विकारस्तैजसं, तेजःसमानस्थातरापत्तिः, एतत्पर्यायानाह–तेजोमयमिति, स एव विकारार्थः, एवं तेजःस्वतत्त्वमिति, तेजः स्वतत्त्वं–स्वरूपमस्येति समासः, इदं हि कार्मणभेदलक्षणं व्यापकमेव, अधुना लब्धिप्रत्ययमाह–'शापानुग्रहप्रयोजन'मिति, शापानुग्रहौ निग्राह्यानुग्राह्येषु यथासंख्यं प्रयोजनमस्येति समासः, नैवं शेषाण्यौदारिकादीनि भावितार्थं, एवं कर्म्मणो विकार इत्यादि, कर्म्मणो—ज्ञानावरणादेर्विकारो–विकृतिः, कर्मणामेव लोलीभाव, इति एवं कर्म्मात्मकमिति, कर्माण्येव आत्माऽस्येति कर्म्मात्मकं, एवं कर्म्ममयमिति विकारार्थ एव पर्याय;नैवं शेषाण्यौदारिकादीनि भावितार्थं, एवमन्वर्थतः प्रतिपाद्यौदारिकादीन्यत एव तल्लक्षणभेदमतिदिशन्नाह–'एभ्य एवे'त्यादिना, एभ्य एव चोदाराद्यर्थविशेषेभ्यो भिन्नलक्षणेभ्यः शरीराणामौदारिकादीनां नानात्वं सिद्धं, लक्षणभेदात्, घटपटादीनामिव, 'किं चान्य'दित्यभ्युच्चयमाह, 'कारण'इत्यादि, कारणतस्तावन्नानात्वं स्थूलपुद्गलोपचितमौदारिकं, तथा न वैक्रियादीनि, 'परस्पर सूक्ष्म'मितिवचनात्,

तथा विषयतो नानात्वं विद्याधरौदारिकस्य नन्दीश्वरो विषयः, जंघाचारणौदारिकस्य तु तिर्यक् रुचकपर्वतः ऊर्ध्वं पाण्डुकं, वैक्रियस्यासंख्येया द्वीपसमुद्राः, आहारकस्य महाविदेहक्षेत्राणि, तैजसकार्मणयोः सर्वलोक इति, तथा स्वामितो नानात्वं, औदारिकस्य तिर्यङ्मनुष्याः स्वामिनः, वैक्रियस्य देवनारकाः, तिर्यङ्मनुष्याश्च केचित् तल्लब्धिमन्तः, आहारकस्य चतुर्दशपूर्वविदः, तथा तैजसकार्मणयोः सर्वसंसारिण इति, प्रयोजनतो नानात्वं, औदारिकस्य धर्म्मादिमोक्षान्तं प्रयोजनं, वैक्रियस्य स्थूरसूक्ष्मैकत्वव्योमचारादि, आहारकस्य सूक्ष्माद्यर्थनिर्णयः, तैजसस्याहारपाकः शापादिसामर्थ्यं च, कार्मणस्य भवान्तरगत्यादि, एवं प्रमाणतो नानात्वं, सातिरेकं योजनसहस्रमौदारिकं प्रमाणेन, वैक्रियं योजनलक्षाः, आहारकं हस्तमात्रं, लोकप्रमाणे तैजसकार्मणे,एवं प्रदेशसंख्यातो नानात्वं, 'प्रदेशतोऽसङ्ख्येयगुणं प्राक् तैजसात्' 'अनन्तगुणे परे' इत्युक्तं, एवमवगाहनतो नानात्वं, अवगाहनेहाऽऽकाशप्रदेशेष्ववस्थानं, इयं प्रमाणानुसारतो भावनीया, तत्रेयं न विवक्षितेति भेदेनोक्ता, एवं स्थितितो नानात्वं, औदारिकस्य जघन्येनान्तर्मुहूर्त्तं स्थितिः उत्कर्षेण त्रीणि पल्योपमानि, वैक्रियस्य जघन्येनान्तर्मुहूर्त्तः उत्कर्षेण त्रयस्त्रिंशत् सागरोपमाणि, आहारकस्यान्तर्मुहूर्त्तं एव, तैजसकार्मणे प्रवाहतोऽनाद्यपर्यवसिते अभव्यानां, भव्यानां तु सपर्यवसिते इति, एवं अल्पबहुत्वनानात्वं, संभवे सति सर्वस्तोकान्याहारकाणि, उत्कर्षेण सहस्रपृथक्त्वं, कदाचिन्न सम्भवत्यपि, षण्मासान्तरालाभिधानात्, वैक्रियाण्यसंख्येयगुणानि, सदा नारकदेवभावात्, औदारिकाण्यसंख्येयगुणानि, सदा प्रत्येक(निगोद)शरीरतिर्यङ्मनुष्यभावात्, तैजसकार्मणे अनन्तगुणे, साधारणानामपि तत् प्रत्येकभावात् इति, एवमेतेभ्यश्च नवभ्यो विशेषेभ्यः कारणादिभ्यः शरीराणामौदारिकादीनां नानात्वं सिद्धं प्रतिष्ठितमिति। 'अत्राहे'त्यादि (पृ. ६१-१) अत्रावसरे शिष्यः प्रश्नयति–आसु चतसृषु संसारगतिषु नर-

कगत्यादिषु को लिङ्गनियमः? कस्यां गतौ किं लिङ्गमिति, एवं पृष्टे एतदभिधानायैवादौ लिङ्गमेव स्मारयन्नाह-'अत्रोच्यत' इत्यादिना, इह जीवस्य औदयिकेषु भावेषु व्याख्यायमानेषूक्तं प्राक् गतिकषायलिङ्गसूत्रे, किमुक्तमित्याह-त्रिविधमेव लिङ्गं स्त्रीपुन्नपुंसकमिति, तथा चारित्रमोहे वक्ष्यमाणलक्षणे, दर्शनमोहव्यवच्छेदार्थमेतत्, तत्रापि नोकषायवेदनीये हास्यादिरूपे त्रिविध एव वेदं वक्ष्यते स्त्रीपुन्नपुंसकभेदेन, नवविधत्वात् नोकषायवेदनीयव्यवच्छेदार्थं, यस्मादेवं तस्मात्त्रिविधमेव लिङ्गमिति निगमनं ॥ एवं लिङ्गनियमे सति गतौ वेदमाह—

नारकसम्मूर्च्छिनो नपुंसकानीति ॥ ५० ॥ सूत्रम् ॥

एते जन्तवो नपुंसकान्येवेति सूत्रसमुदायार्थः। अवयवार्थमाह-'नारकाश्चे'त्यादिना (पृ. ६१-८) नरकेषु भवाः नारकाः सर्वे सप्तपृथिवीनिवासिनः सम्मूर्च्छिनश्चेति सम्मूर्छजाः, सम्मूर्छनं च जन्मेत्यर्थः तदेषां विद्यत इति सम्मूर्छिनः, एते नपुंसकान्येव भवंति नपुंसकवेदभाज इत्यर्थः वृत्तिरितिकृत्वाऽवधारणफलमाह-न स्त्रियो न पुमांसः, किमेतदेवमित्याह-'तेषां ही'त्यादिना, तेषां यस्मान्नारकादीनां, किमित्याह-चारित्रेत्यादि, चारित्रमोहनीयं च तन्नोकषायवेदनीयं चेति विग्रहः, नवधा हास्यादि, तदाश्रयेषु, किमित्याह-'नपुंसकवेदनीय'मिति, नपुंसकत्वानुभवेन वेद्यत इति नपुंसकवेदनीयं तदेवैकमशुभगतिनामापेक्षमिति अशुभगत्यादिनामगोत्रवेद्यायुष्कोदयापेक्षं पूर्वबद्धनिकाचितमुदयप्राप्तं भवतीति पूर्वस्मिन् जन्मन्यनन्तरं बद्धं तद्योग्यहेतुभिः परिगृहीतं निकाचितमात्मप्रदेशैरन्योऽन्यानुगत्या नियमवेदनीयतया स्थितं उदयप्राप्तमिति समासादितपरिपाकं, एतदेवंविधं नारकसम्मूर्छिनां जन्तूनां दुःखबहुलमेतद्भवति, नेतरे स्त्रीपुंवेदनीये इति, तेन नपुंसकान्येव भवंतीति, नपुंसकवेदोद-

यान्महानगरदाहोपमं मैथुनाभिलापात् दुःखमनुभवंति नारकाः कांक्षारूपमित्थं सन्मूर्छिनोऽभीत्यार्चाः ॥

(न) देवा, इति ॥ ५१ ॥ सूत्रम् ॥

संबंधः प्रतीतः, समुदायार्थश्च। अवयवार्थमाह–'देवा' इत्यादिना (पृ–६२–२) दीव्यंतीति देवाश्चतुर्निकायाः अपि भवनवास्यादयः, किमित्याह–नपुंसकानि न भवन्ति, किं तर्हि?, स्त्रियः पुमांसश्च भवन्ति, शुद्धवेदा एव, किमित्यत एवाह–'तेषां ही'त्यादि, तेषां देवानां यस्माच्छुभगतिनामापेक्षे इति, शुभगत्यादिनामगोत्रवेद्यायुष्कोपेक्षे स्त्रीपुंवेदनीये इति, स्त्रीपुंस्त्वानुभववेदनीये पूर्वबद्धनिकाचिते इति जन्मान्तरपरिगृहीतात्मप्रदेशे अन्योऽन्यानुविद्धे उदयप्राप्ते इति समासादितपरिपाके द्वे एव भवतः यथोदिते, न इतरत् नपुंसकवेदनीयं, यतो देवा नपुंसकानि न भवन्तीति। इदानीं सामर्थ्यलभ्यं दर्शयति–'पारिशेष्याच्चे'त्यादिना, पारिशेष्याच्च गम्यते पारिशेष्यसिद्धत्वे ज्ञायते, किमित्याह–जराय्वण्डजपोतजाः पूर्वोक्तास्त्रिविधा भवंति यथासम्भवं स्त्रियः पुमांसो नपुंसकानीति॥ 'अत्राहे'त्यादि संबंधग्रन्थः, अत्र प्रस्तावे आह चोदकः–चतुर्गतावपि संसारे नरकगत्याद्यपेक्षया किं व्यवस्थिता स्थितिः आयुषः यावती क्षायय (सा भव) त्येव उत अकालमृत्युरप्यस्ति तत्तत्स्थित्युल्लङ्घनेनेति, अत्रोच्यते, उत्तरं, 'द्विविधानी'त्यादिना, द्विविधानि द्विप्रकाराणि आयूंषि जीवितानि भवन्तीति, किंभूतानीत्याह–'अपवर्त्तनीयानि अपवर्त्तनार्हाणि, अपवर्त्तना नाम प्राक्तनविरचितस्थितेरल्पतापादनं अध्यवसानादिभेदात्, अनपवर्त्तनीयानि चैतद्विपरीतानि, अनपवर्त्तनीयानि पुनर्द्विविधानि–सामान्येन सोपक्रमाणि निरुपक्रमाणीति, सहोपक्रमेण सोपक्रमाणि, उपक्रमोऽध्यवसानादिभिः स्थितेरासन्नीकरणं, निरुपक्रमाणि च निर्गतोपक्रमाणि च, उपक्रमरहितानीत्यर्थः,

अपवर्त्तनीयानि यानि प्रागुपन्यस्तानि, किमित्याह–नियतं सोपक्रमाणीति अवश्यं सोपक्रमाण्येव, बन्धकाल एव तथाविधाध्यवसानादेस्तथाविधबन्धभावादिति ॥ तत्र—

औपपातिकचरमदेहोत्तमपुरुषासंख्येयवर्षायुषोऽनपवर्त्यायुष इति ॥ ५२ ॥ सूत्रं ॥

औपपातिकचरमदेहोत्तमपुरुषाः असंख्येयवर्षायुषः अनपवर्त्यायुष एव भवन्ति, नैषामकालमृत्युरस्तीति सूत्रसमुदायार्थः। अवयवार्थं त्वाह–'औपपातिकाः' उपपातजन्मानो नारकदेवाः, चरमदेहा अन्त्यदेहाः तज्जन्ममोक्षगामिनः, उत्तमपुरुषाः–तीर्थंकरचक्रवर्त्तिवासुदेवबलदेवाः असंख्येयवर्षायुषो मिथुनपुरुषा इति, एते सर्व एव अनपवर्त्यायुषो भवन्ति, एतदेव स्पष्टयन्नाह–तत्रौपपातिका नारका देवाश्चेत्युक्तं प्राग्, अधुनाऽभिधेयं, चरमदेहास्तु मनुष्या एव भवन्ति, नान्ये देवादयः, चरमदेहा इति कोऽर्थः? इति प्रश्ने सत्येतदाह–अन्त्यदेहा इत्यर्थः, मा भून्मनुष्यभवमेवाधिकृत्यैतद् अनागामिदेवभवादिवदित्याह—ये तेनैव शरीरेण सिद्ध्यन्ति निष्ठितार्था भवन्तीति भावः, उत्तमपुरुषास्तीर्थंकरचक्रवर्त्तिनो वासुदेवबलदेवाः, गणधरादयोऽपि चान्ये, असंख्येयवर्षायुषो मनुष्यास्तिर्यग्योनिजाश्च भवन्ति, न सर्वत्र सदैवेत्याह–सदेवकुरूत्तरकुरुषु अकर्मभूमिष्विति सम्बन्धः, एतांस्तृतीयाध्याये वक्ष्यामः, तथा सान्तरद्वीपकासु एतास्वेव, एतेऽपि वक्ष्यमाणलक्षणा एव (अन्तर्द्वीपान् कायंतीति अन्तरद्वीपकाः,)'अकर्मभूमिषु' वक्ष्यमाणासु हिमवदादिकासु वक्ष्यमाणासु कर्म्मभूमिषु च भरताद्यासु वक्ष्यमाणास्वेव, न सदैवेत्याह– सुषमसुषमायां वक्ष्यमाणलक्षणायां एवं सुषमायां सुषमदुष्षमायामित्येतासु च तिसृषु समासु असङ्ख्येयवर्षायुषो भवन्ति, गणनया संख्यातीतवर्षायुष इत्यर्थः, ' अत्रैव चे 'त्यादि, अत्रैवासङ्ख्येयवर्षायुषामधिकारे

इदमाह–बाह्येषु द्वीपसमुद्रेषु मनुष्यलोकात् ,किमित्याह–तिर्यग्योनिजा गवादयः असंख्येयवर्षायुषो भवन्तीति पूर्ववत्, मनुष्यक्षेत्रबहिर्भूता एव भवन्तीत्यर्थः, यदुक्तमनपवर्त्तनीयानि द्विविधानि भवंति तदुपदर्शयन्नाह–'औपपातिकाश्च नारकदेवाः' असंख्येयवर्षायुषश्चोक्तलक्षणा निरुपक्रमा इति–निरुपक्रमायुष एव, तथा तद्बन्धोपपत्तेः, चरमदेहाः पुनः सोपक्रमा निरुपक्रमाश्च सामान्येन, कथयतीत्यर्थः, यद्येवं कथं अनपवर्त्यायुषां मध्ये पाठः ?× एषामेव बहुत्वादित्याचार्याः×,अत एवैतत्सम्भवोपदर्शनार्थमुक्तं–अनपवर्त्तनीयानि पुनर्द्विविधानि–सोपक्रमाणि चेत्यादि,एतेन उत्तमपुरुषा व्याख्याता इत्युपन्यासः,वासुदेवोपक्रमश्रुतेरित्याचार्याः, तदेवं न सूत्रविरोधः, तथा चाह–'एभ्य'इत्यादि, एभ्य उक्तलक्षणेभ्यः औपपातिकचरमदेहोत्तमपुरुषासंख्येयवर्षायुष्केभ्यः शेषा येऽन्ये मनुष्यतिर्यग्योनिजाः, ते किमित्याह–सोपक्रमा निरुपक्रमाश्च बाहुल्येन अपवर्त्यायुषः अनपवर्त्यायुषश्च भवन्ति,तथाऽऽयुर्बन्धभेदोपपत्तेः,इह नारकदेवा असंख्येयवर्षायुषः प्राणिनः षण्मासावशेषा नियमादायुषो बन्धकाः, शेषास्त्वायुषस्त्रिभागावशेषे वा त्रिभागत्रिभागावशेषे वा त्रिभागत्रिभागत्रिभागावशेषे वेति, एतदुक्तं भवति—त्रिभागावशेषायुषो नवभागावशेषायुषः सप्तविंशतिभागावशेषायुषो वा आयुषो बन्धकाः, अतः परं न बध्नंति, तत्र पृथिव्यादयः एकेन्द्रियाः पञ्चेन्द्रियाश्च निरुपक्रमायुषो नियमत एव त्रिभागावशेषे, सोपक्रमास्त्वनियमेन यावत् सप्तविंशतिभागे, ते च तदैव तदायुर्बध्नन्त्यध्यवसायभेदात्, केचिदपवर्त्तनीयं बध्नन्ति केचिदनपवर्त्तनीयं, मन्देतरपरिणामप्रयोगभेदादिति वृद्धाः, तत्र ये अपवर्त्यायुषः प्राणिनः तेषां विषादिभिः शीतोष्णादिभिश्च द्वन्द्वोपक्रमैरायुरपवर्त्तत इति, इंद्राशनिप्रपाततः अग्निरहितः कणकादिः वज्रं तु वैद्युतो वह्निः द्वन्द्वः उपघात आयुष इति, शेषं प्रकटार्थं, अपवर्त्तनमाह–'अपवर्त्तन'मित्यादिना, अपवर्त्तनं नाम शीघ्रं अन्तर्मुहूर्त्तादेव, पर-

पाग्मनात्, किमत्याह—कर्मफलोपभोगः सकलायुःकर्मवेदनं, इहापवर्त्तनक(का)ले कर्मफलोपभोगेषु अपवर्त्तनशब्दः, यदाह—अपवर्त्तननिमित्तमित्यपवर्त्तनं निमित्तमस्येति विग्रहः, दीर्घस्थितेः कर्मणोऽल्पस्थितिकरणं, निमित्तभावः, 'अत्राहे'त्यादि (पृ. ६४-४) अत्रावसरे पर आह—यद्यपवर्त्तते अपैति कर्म्म, फलं अदत्त्वेत्यभिप्रायः, तस्मात् ततः कृतनाशः प्रसज्यते, कुत इत्याह—यस्मान्न वेद्यते नानुभूयते तदिति, तथाऽस्ति आयुष्कं कर्म्माननुभूतं सत् तिष्ठति म्रियते च तत्स्वामी, तस्मात् ततः अकृताभ्यागमः प्रसज्यते, आगामिभवायुषस्तत्कालवेद्यत्वेनाकरणात्, अन्यच्च—येन सत्यायुष्के तद्भववेदनीये म्रियते ततश्चायुष्कस्य कर्मण आफल्यं स्वफलजीवनरहितता प्रसज्यते, तदकिंचित्करत्वेन, अनिष्टं चैतत्, कर्म्मसाफल्याभ्युपगमात्, "पुव्विं दुच्चिन्नाणं दुप्पडिकंताणं कडाणं कम्माणं वेदयित्ता मोक्खो, नत्थि अवेदयित्ते"ति वचनात्, एकभवस्थिति चायुष्कं कर्म्म, तत्रानुभवमाश्रित्य, न जात्यन्तरानुबन्धि, तस्यैव जात्यन्तरे अवेदनात्, यस्मादेवं तस्मान्नापवर्त्तनमुक्तलक्षणमायुषोऽस्तीति परः, अत्रोच्यते समाधिः, कृतनाशाकृताभ्यागमासाफल्यानि पूर्वोक्तानि कर्म्मणो न विद्यन्ते, नाप्यायुष्कस्य जात्यन्तरानुबन्धो विद्यते, किन्तु यथोक्तैरुपक्रमैरध्यवसानविपादिभिः अभिहतस्य पीडितस्य जन्तोः, किमित्याह—सर्वसंदोहेन सर्वात्मना उदयप्राप्तं मद् आयुष्कं कर्म शीघ्रं क्रमभाविविपाकावर्त्तनेनायुरनुभवात्, तदपवर्त्तनमुच्यत इत्येषोऽपवर्त्तनशब्दार्थः, तत् सर्वानुभवसार एव, इहैव निदर्शनमाह—संहतशुष्कतृणराशिदहनवत्, संहतश्चासौ शुष्कतृणराशिश्च २ तस्य दहनं तद्वत्, एतदेव व्याचष्टे—'यथा ही'त्यादिना, यथा हि संहतस्य सतः शुष्कस्यापि तृणराशेः, न अस्तोमार्द्रस्य, अवयवशः प्रत्यवयवं न क्रमेण दह्यमानस्य चिरेण दाहो भवति संहतत्वादेव, तस्यैव तृणराशेः शिथिलप्रकीर्णोप-

ण्डितस्य तथा विरलीकृतस्येत्यर्थः, सर्वतो युगपदादीपितस्य तथा पवनोपक्रमाभिहतस्य सहकारिविशेषात्, आशु-
शीघ्रं दाहो भवति तद्वदायुषोऽप्यनुभव इति,यदाऽऽयुर्दृढसंहतमतिघनतया बन्धकाल एव एवं बद्धं तत् क्रमेण वेद्यमानं चिराय
वेद्यते, यत् पुनर्बन्धकाल एव शिथिलमानद्धं तद्विप्रकीर्णतृणराशिदाहवत् अपवर्त्य वेद्यते इति, इहैव दृष्टान्तान्तरमाह–'यथा चे'-
त्यादिना,यथा वा संख्यानाचार्यः गणनाचार्यः संख्यानं गणितं करणलाघवार्थं करणानि गुणकारापवर्तनोद्वर्तनानि गणितशा-
स्त्रप्रसिद्धानि तत्र यो लघुः करणोपायः स्वल्पकालः तेन तत्फलमानयति गणिताभिज्ञत्वात्,तत्तुल्ये अपि हि फलानयने गुणकारभाग-
हारौ चिराय तत्फलमभिनिर्वर्त्तयतः, स पुमान् गणितनिपुणो गुणकारभागहाराभ्यां चिरकालकारिभ्यां सकाशात् करणलाघवा-
र्थमपवर्त्तनार्हं राशिं छेदच्छेदाल्पत्वादिना तदपवर्त्तयति पण्णवत्यादिकं, अनपवर्त्तनार्हं पुनर्लघुकरणाभिज्ञोऽपि न शक्नोत्येवापवर्त्तयि-
तुमेकपञ्चाशदुत्तरसहस्रादिकं गुणकारभागहारक्रममेवानुप्रयोजयति, न च संख्येयस्याभावो भवति, फलभूतस्य करणविशेषे सत्यपि
अभिप्सितं फलाभेदं दर्शयति, करणव्यापारकालोऽल्पभेदः,फलमविशिष्टमेवोभयोरिति वृद्धाः, यथैतद् तद्वदेतदिति दार्ष्टान्तिकयोज-
ना,उपक्रमाभिहत इत्युपक्रमहेत्वभिहतः मरणसमुद्घातदुःखार्त्तः मरणम्-आयुक्षयः तत्र समुद्घातः दुःखातिशयो बहिः–
प्रदेशनिर्गमसारः क्रियाविशेषः स एव निरुपमकर्म्मोत्खननात् दुःखं तेनार्त्तो–विषण्णः कर्म्मप्रत्ययं कर्म्मकारणं अनाभोगयोग-
पूर्वकं छद्मस्थत्वादज्ञानव्यापारपूर्वकं करणविशेषमपवर्त्तनाख्यमुत्पाद्य तथा कर्म्मस्वभावत्वेन फलोपभोगकरणाय काललघुता-
पादनेन कर्म्मापवर्त्तयति लघुकालेन वेदनात्,न चास्य कर्म्मणः फलाभावः, तथा सर्वतो भोगादिति, किंचान्यत्–निदर्शनान्तर-
मभो यथा धौतपटः प्रक्षालितपटः जलार्द्र एव सन संहतोऽविरलः ... [illegible]

त्यर्थः, स एव च वितानितो विस्तारितः सूर्यरश्मिवाय्वभिहतः सन् जललवाकर्षणात् क्षिप्रं शीघ्रं शोपमुपयाति, तथा र्शनात्, न च संहते तस्मिन् पटे अभूतस्नेहागमः कुतोऽपि, येनाधिकस्तत्क्षयकालः, नापि वितानिते सत्यकृत्स्नशोपः असं-र्णशोपः, एवं यावन्तस्तावन्त एव ते जललवा उभयत्रेति, अथ च कालभेदः शोपं प्रति, तद्वदिति दार्ष्टान्तिकयोजनोपन्यास ति, 'यथोक्तनिमित्तापवर्त्तनैः कर्मणः क्षिप्रं फलोपभोगो भवति' यथोक्तनिमित्तमध्यवसाननिपादि येषां अपवर्तनानां ानि यथोक्तनिमित्तापवर्त्तनानि तैः, कर्मणः प्रक्रमादायुपः, क्षिप्रं शीघ्रं फलोपभोगो भवति फलं-विपाकस्तस्योपभोगः -सामीप्येन भोगः, विपाकः सामीप्येन भुज्यत इत्यर्थः, 'न (च) कृतप्रणाशाकृताभ्यागमाफलानि भवन्ति, ममस्तायुर्द्र-योपभोगात्, न कृतविप्रणाशः, इत्थमायुःक्षय एव म्रियत इति नाकृताभ्यागमः, अत एव नाफल्यमायुपस्तत्सकलभोगादिति, त एव जात्यन्तरानुबंधित्वाभावोऽपीति भावनीयं, तदेवमकालमृत्युसिद्धिरिति स्थितं ॥

आचार्यहरिभद्रोद्धृतायां (डुपडुवि) काभिधानायां तत्त्वार्थटीकायां द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

---

साम्प्रतं तृतीयोऽध्याय आरभ्यते, इह च 'अत्राहोक्तं भवता' इत्यादि सम्बन्धग्रन्थः, अत्र अध्यायपरिसमाप्तिप्रस्तावे ष्य आह-अभिहितं भवता द्वितीयेऽध्याये भावप्रकरणे, किमित्याह—'नारका इति गतिं प्रतीत्य जीवस्य औदयिको ाव' इति,अनेन 'गतिकषायलिंगसूत्रं' सूचितमिति,तथा तस्मिन्नेव द्वितीये जन्मप्रकरणप्रस्तावे 'नारकदेवानामुपपात' इत्यु-, वक्ष्यति च चतुर्थेऽध्याये स्थितावायुपः 'नारकाणां च द्वितीयादिपु', एवमाश्रवचिन्तायां पष्ठेऽध्याये बह्वारम्भपरिग्रहत्वं

च नारकस्य।युपः इत्युक्तं भवतेति,व्युत्पन्नश्चोदकः,अव्युत्पन्नस्य प्रश्नायोगात्,'मूकं हुंकारं चे'ति श्रवणविधिकथनात्,तदेवमनेकत्र नारकश्रुतेः प्रामाण्याद् विशेषार्थं पृच्छति–तत्र नारके नरकाः नाम सत्त्वाः के वेति, इति अत्रोच्यते–नरकेषु भवाः नारकाः, नरान् कायंतीति नरकाः उष्ट्रिकादयो वक्ष्यमाणास्तेषु भवाः सत्त्वाः दुष्कृतकर्मणा नारका इति,तत्र नारकप्रसिद्ध्यर्थमिदं वक्ष्यमाणमुच्यते सूत्रं, तन्निवासित्वान्नारकाणामिति ॥ तदाह—

रत्नशर्करावालुकापङ्कधूमतमोमहातमःप्रभा भूमयो घनाम्बुवाताकाशप्रतिष्ठाः सप्त

अधोऽधः पृथुतराः इति ॥ १ ॥ सूत्रम् ॥

समुदायार्थः प्रकटः, अवयवार्थमाह–'रत्नप्रभे'त्यादिना,(पृ.६६-१०) रत्नानि–वज्रादीनि तत्प्रधाना रत्नरूपा रत्नभावा रत्नबहुलेत्यर्थः,एवं शर्कराप्रभादयोऽपि वाच्याः,प्रभाशब्दस्य प्रत्येकमभिसम्बन्धात् इति,एवमेता 'भूमयो घनाम्बुवाताकाशप्रतिष्ठा भवन्ति' घनाम्बु च वाताकाशं चेति समासः, तेषु प्रतिष्ठा–स्थितिर्यासां तास्तथाविधा भवन्ति, 'एकैकश' इत्येकैका घनाम्बुवातादिप्रतिष्ठा, न पुनः सप्तानामप्यध एव घनांब्वादीनि, सप्तेति संख्या, सप्तैव, न न्यूनाधिकाः, 'अधोऽध' इति प्रतिविशिष्टक्रमाख्यानं, तिर्यगूर्ध्वादिव्यवच्छेदार्थं,एतदेव रत्नप्रभायाः अधः असंख्येययोजनकोटीरवगाह्य शर्कराप्रभा भवति,एवं शर्कराप्रभाया अधो वालुकाप्रभा, इत्येवं शेषाः पंकप्रभाद्या भाव्या इत्याद्यर्थः, एतदेवाह–रत्नप्रभाया अधः असंख्येया योजनकोटीनां कोटीः अम्बुवाताकाशप्रतिष्ठा इत्येतावता सिद्धे सति घनग्रहणं क्रियते, किमर्थमित्याह–यथा प्रतीयेत–गम्येत यदुत घनमेवाम्बु पृथिव्या रत्नप्रभारूपायाः, वातास्तु घनाः तनवश्चेति तद्यथा प्रतीयते, एतदेवाह–'तदेव'मित्यादिना, तदेवमुक्तनीत्याऽऽद्या

त्यर्थः, स एव च नितानितो विस्तारितः सूर्यरश्मिवाय्वभिहतः सन् जललवाकर्षणात् क्षिप्रं शीघ्रं शोषमुपयाति, तथा दर्शनात्, न च सहते तस्मिन् पटे अभूतस्नेहागमः कुतोऽपि, येनाधिकस्तत्क्षयकालः, नापि नितानिते सत्यकृत्स्नशोषः असंपूर्णशोषः, एवं यावन्तस्तावन्त एव ते जललवा उभयत्रेति, अथ च कालभेदः शोषं प्रति, तद्वदिति दार्ष्टान्तिकयोजनोपन्यास इति, 'यथोक्तनिमित्तापवर्त्तनैः कर्म्मणः क्षिप्रं फलोपभोगो भवति' यथोक्तनिमित्तमध्यवसानविपादि येषां अपवर्त्तनानां तानि यथोक्तनिमित्तापवर्त्तनानि तैः, कर्म्मणः प्रक्रमादायुषः, क्षिप्रं शीघ्रं फलोपभोगो भवति फलं-विपाकस्तस्योपभोगः-सामीप्येन भोगः, विपाकः सामीप्येन भुज्यत इत्यर्थः, 'न (च) कृतप्रणाशाकृताभ्यागमाफलानि भवन्ति, समस्तायुर्द्रव्योपभोगात्, न कृतविप्रणाशः, इत्थमायुःक्षय एव म्रियत इति नाकृताभ्यागमः, अत एव नाफल्यमायुषस्तत्सकलभोगादिति, अत एव जात्यन्तरानुबंधित्वाभावोऽपीति भावनीयं, तदेवमकालमृत्युसिद्धिरिति स्थितं ॥

आचार्यहरिभद्रोद्धृतायां (डुपडुपि) काभिधानायां तत्त्वार्थटीकायां द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

---

साम्प्रतं तृतीयोऽध्याय आरभ्यते, इह च 'अत्राह्योक्तं भवता' इत्यादि सम्बन्धग्रन्थः, अत्र अध्यायपरिसमाप्तिप्रस्तावे शिष्य आह-अभिहितं भवता द्वितीयेऽध्याये भावप्रकरणे, किमित्याह—'नारका इति गतिं प्रतीत्य जीवस्य औदयिको भाव' इति,अनेन 'गतिकषायलिंगसूत्रं' सूचितमिति,तथा तस्मिन्नेव द्वितीये जन्मप्रकरणप्रस्तावे 'नारकदेवानामुपपात' इत्युक्तं, वक्ष्यति च चतुर्थेऽध्याये स्थितावायुषः 'नारकाणां च द्वितीयादिषु', एवमाश्रवचिन्तायां षष्ठेऽध्याये बह्वारम्भपरिग्रहत्वं

च नारकस्य पुनः इत्युक्तं भवतेति, व्युत्पन्नश्चोदकः, अव्युत्पन्नस्य प्रश्नायोगात्, 'मूकं हुंकार चे'ति श्रवणविधिकथनात्, तदेवमनेकत्र नारकश्रुतेः प्रामाण्याद् विशेषार्थं पृच्छति–तत्र नारके नरकाः नाम सत्त्वाः के वेति, इति अत्रोच्यते–नरकेषु भवाः नारकाः, नयन् रायंतीति नरकाः उष्ट्रिकादयो वक्ष्यमाणास्तेषु भवाः सत्त्वाः दुष्कृतकर्मणा नारका इति, तत्र नारकप्रसिद्ध्यर्थमिदं वक्ष्यमाणमुच्यते सूत्रं, तन्निवासमित्यान्नारकाणामिति ॥ तदाह—

रत्नशर्करावालुकापङ्कधूमतमोमहातमःप्रभा भूमयो घनाम्बुवाताकाशप्रतिष्ठाः सप्त अधोऽधः पृथुतराः इति ॥ १ ॥ सूत्रम् ॥

समुदायार्थः प्रकटः, अवयवार्थमाह–'रत्नप्रभे'त्यादिना, (पृ. ६६-१०) रत्नानि–वज्रादीनि तत्प्रधाना रत्नरूपा रत्नभावा रत्नचूलेत्यर्थः, एवं शर्कराप्रभादयोऽपि वाच्याः, प्रभाशब्दस्य प्रत्येकमभिसम्बन्धात् इति, एवमेता 'भूमयो घनाम्बुवाताकाशप्रतिष्ठा भवन्ति' घनाम्बु च वाताकाशं चेति समासः, तेषु प्रतिष्ठा–स्थितिर्यासां तास्तथाविधा भवन्ति, 'एकैकशः' इत्येकैका घनाम्बुवातादिप्रतिष्ठा, न पुनः सप्तानामप्यध एव घनाम्ब्वादीनि, सप्तेति संख्या, सप्तैव, न न्यूनाधिकाः, 'अधोऽध' इति प्रतिविशिष्टप्रमाण्यानं, तिर्यगूर्ध्वादिव्यवच्छेदार्थं, एतदेव रत्नप्रभायाः अधः असंख्येययोजनकोटीरवगाह्य शर्कराप्रभा भवति, एवं शर्कराप्रभाया अधो वालुकाप्रभा, इत्येवं शेषाः पंकप्रभाद्या भाव्या इत्याद्यर्थः, एतदेवाह–रत्नप्रभाया अधः असंख्येया योजनकोटीनां कोटीः अम्बुवाताकाशप्रतिष्ठा इत्येतावता सिद्धे सति घनग्रहणं क्रियते, किमर्थमित्याह–यथा प्रतीयेत–गम्येत यदुत घनमेवाम्बु पृथिव्या रत्नप्रभारूपायाः, वातास्तु घनाः तनवश्चेति तद्यथा प्रतीयते, एतदेवाह–'तदेव'मित्यादिना, तदेवमुक्तनीत्याऽऽद्या

ग्वरपृथिवी रत्नप्रभाऽङ्करूपा योजनसहस्रषोडशकबाहल्या पंकप्रतिष्ठा, पंकश्चतुरशीतियोजनसहस्रमानोऽशीतियोजनसहस्रमाने जलबहुले, तत्पुनर्विंशतियोजनसहस्रमाने घनवलये घनवलयप्रतिष्ठमिति, विंशतियोजनसहस्रमानघनोदधिवलयप्रतिष्ठमित्यर्थः,एवं घनोदधिवलयमसंख्येययोजनसहस्रबाहल्यघनवातवलयप्रतिष्ठं, एवं घनवातवलयमसंख्येययोजनसहस्रबाहल्यतनुवातवलयप्रतिष्ठं, ततः तनुवातवलयात् परं महातमोभूतमाकाशमिति, घनान्धकारनिचितम्,असंख्येययोजनकोटीकोटिमानमित्यर्थः,सर्वं चैतत् पृथिव्यादि तनुवातवलयान्तमनन्तरोदितं किमित्याह–आकाशप्रतिष्ठं, ज्योतिर्विमानानामाकाश एव तथादर्शनात्, आकाशं त्वात्मप्रतिष्ठमिति, नाधारान्तप्रतिष्ठं, यस्मादुक्तं पञ्चमेऽध्याये सूत्रतः 'आकाशस्यावगाहः' (५. १८) उपकार इत्येतद्, उपलक्षणमिदमवगाहनमाकाशस्येति,अवगाहदानेन व्याप्रियते आकाशं सर्वद्रव्याणाम्, अवगाहवतां पुनरवगाहदानव्यापारं सदवगाहिष्यति,तदन्यत्र तदनुरूपाधाराभावात्, अतः स्वप्रतिष्ठमिदमिति, 'तदनेन क्रमेणे'त्यादि,तस्मात् अनेन क्रमेणानन्तरोदितेन किमित्याह 'लोकानुभावप्रतिष्ठा' (सन्निविष्टा) इत्यनादिलोकस्थितिरचिताः ' असङ्ख्येययोजनकोटीकोटयो विस्तृताः तिर्यग् सप्त भूमयो रत्नप्रभाद्या यथोद्दिष्टा इति, सप्तग्रहणं नियमार्थं सप्तैवाध इत्याह, मा भून् एकशः एकैका अनियतसंख्या,तथा खरकाण्डभेदेन, 'किंचान्यत्' अन्यदपि सप्तग्रहणस्य प्रयोजनं, तदाह–'अधः सप्तैवेत्यवधार्यते' अध एव सप्त, ऊर्ध्वं त्वेकैवेषत्प्राग्भारेति,वक्ष्यते दशमेऽध्याये 'तन्वी मनोज्ञे'त्यादिना, (पृ.२३–१७) इहैव प्रयोजनान्तरमाह–'अपिचे'त्यादिना, अन्तरे भवा अन्तरीयाः तन्त्रप्रधाना अन्तरीयास्तन्त्रान्तरीयाः शाक्यादयः असंख्येयेषु लोकधातुषु सदाद्येषु असंख्येयाः पृथिवीप्रस्तरा इत्यध्यवसिताः एवं प्रतिपन्नाः,अनेकब्रह्माण्डोपलक्षणमेतत्, तत्प्रतिषेधार्थं च सप्तग्रहणमिति, प्रतिषेधश्च आसा-

मेव संख्येययोजनकोटीकोटिमानतया, सर्वाश्चैताः प्रस्तुताः पृथिव्यादयः किमित्याह–अधोऽधः पृथुतरा इति, यतो रज्जुप्र-
माणा खल्वायामविष्कम्भाभ्यां प्रथमा अर्धतृतीयरज्जुप्रमाणा द्वितीया (चतू)रज्जुप्रमाणा तृतीया पंचरज्जुप्रमाणा चतुर्थी षड्रज्जु-
प्रमाणा पंचमी अर्धसप्तमरज्जुप्रमाणा षष्ठी सप्तरज्जुप्रमाणा सप्तमी, अत एव 'छत्रातिच्छत्रसंस्थिता' इति अधोऽधो विस्तीर्ण-
तरेति, आसां चोत्कीर्त्तनमुभयथा नामतो गोत्रतश्चेत्याह–'घर्मे'त्यादि, घर्मादीनि आसां नामधेयानि यथासङ्ख्यमेव भवं-
ति, रत्नप्रभादीनि तु गोत्राणि, तद्गुणोपलक्षणात्, एवं च प्रथमा घर्मा नाम्ना रत्नप्रभा गोत्रेण, एवं शेषाणामपि योजना कार्या
यावत् सप्तमी माधवी नाम्ना महातमःप्रभा गोत्रेणेति, एवमेतानि नामधेयानि–नामान्येव आसां यथाक्रममुभयथा भवन्ति, अत्र
'रत्नप्रभे'त्यादि,आद्या पृथिवी घनभावेन बाहल्येन अशीतं योजनशतसहस्रं, अशीतियोजनसहस्रोत्तरो लक्ष इत्यर्थः, शेषा
द्वितीयाद्या द्वात्रिंशत् अष्टाविंशतिश्चेत्यादिर्द्वन्द्वः, भावार्थस्तु द्वात्रिंशदष्टाविंशतिविंशत्यष्टादशषोडशदशाष्टाधिकं योजनशतसह-
स्रमिति वर्त्तते, ततश्च द्वात्रिंशद्योजनसहस्राधिकं शतसहस्रं शर्कराप्रभा घनभावेन, अधुना सर्वपृथिव्यधोवर्त्तिनो घनोदधीन् नि-
दिशति–सर्वे घनोदधयो विंशतियोजनसहस्राणि, घनतनुवातावप्यधोऽसंख्येययोजनसहस्रप्रमाणौ, पृथ्वीपर्यन्तमध्यभागे घन-
वातवलयं अर्धपञ्चमयोजनादारभ्य प्रतिपृथिवि क्रोशवृद्धं, तनुवातवलयं क्रोशषट्कमानं प्रतिपृथिविसत्रिभागक्रोशवृद्धं, मध्यभाग
एव, प्रदेशहान्या पर्यन्ते तयोरपि वलयभावात्, एते च घनोदधिघनवाततनुवाता अधोऽधस्तु पुनर्घनतरा विशेषेण, अना-
दिपरिणामवशादेव घनोदध्यादिवलयविभागास्त्वन्यग्रंथानुसारतोऽवसेयाः "णवि अ फुसंति अलोगं चउसुंपि दिसासु सव्वपुढवी-
ओ। संगहिआ वलएसुं विक्खंभं तासि वोच्छामि ॥१॥ छच्चेव अद्धपंचम जोअणमद्धं च रयणपुढवीए। उयहीघणतणुवाया जहा-

म्नरपृथिवी रत्नप्रभाऽङ्गरूपा योजनसहस्रषोडशकबाहल्या पंकप्रतिष्ठा, पंकश्चतुरशीतियोजनसहस्रमानोऽशीतियोजनसहस्रमाने जलबहुले, तत्पुनर्विंशतियोजनसहस्रमाने घनवलये घनवलयप्रतिष्ठमिति, विंशतियोजनसहस्रमानघनोदधिवलयप्रतिष्ठमित्यर्थः, एवं घनोदधिवलयमसंख्येययोजनसहस्रबाहल्यघनवातवलयप्रतिष्ठं, एवं घनवातवलयमसंख्येययोजनसहस्रबाहल्यतनुवातवलयप्रतिष्ठं, ततः तनुवातवलयात् परं महातमोभूतमाकाशमिति, घनान्धकारनिचितम्, असंख्येययोजनकोटीकोटिमानमित्यर्थः, सर्वं चैतत् पृथिव्यादि तनुवातवलयान्तमनन्तरोदितं किमित्याह—आकाशप्रतिष्ठं, ज्योतिर्विमानानामाकाश एव तथादर्शनात्, आकाशं त्वात्मप्रतिष्ठमिति, नाधारान्तरप्रतिष्ठं, यस्मादुक्तं पञ्चमेऽध्याये सूत्रतः 'आकाशस्यावगाहः' (५. १८) उपकार इत्येतद्, उपलक्षणमिदमवगाहनमाकाशस्येति, अवगाहदानेन व्याप्रियते आकाशं सर्वद्रव्याणाम्, अवगाहवतां पुनरवगाहदानव्यापारं सदवगाहिष्यति, तदन्यत्र तदनुरूपाधाराभावात्, अतः स्वप्रतिष्ठमिदमिति, 'तदनेन क्रमेणे'त्यादि, तस्मात् अनेन क्रमेणानन्तरोदितेन किमित्याह 'लोकानुभावप्रतिष्ठा' (सन्निविष्टा) इत्यनादिलोकस्थितिरचिताः 'असङ्ख्येययोजनकोटीकोटयो विस्तृताः तिर्यग् सप्त भूमयो रत्नप्रभाद्या यथोद्दिष्टा इति, सप्तग्रहणं नियमार्थं सप्तैवाध इत्याह, मा भून् एकशः एकैका अनियतसंख्या, तथा खरकाण्डभेदेन, 'किंचान्यत्' अन्यदपि सप्तग्रहणस्य प्रयोजनं, तदाह—'अधः सप्तैवेत्यवधार्यते' अध एव सप्त, ऊर्ध्वं त्वेकैवेषत्प्राग्भारेति, वक्ष्यते दशमेऽध्याये 'तन्वी मनोज्ञे'त्यादिना, (पृ. २३–१७) इहैव प्रयोजनान्तरमाह—'अपिचे'त्यादिना, अन्तरे भवा अन्तरीयाः तन्त्रप्रधाना अन्तरीयास्तन्त्रान्तरीयाः शाक्यादयः असंख्येयेषु लोकधातुषु सदाद्येषु असंख्येयाः पृथिवीप्रस्तरा इत्यध्यवसिताः एवं प्रतिपन्नाः, अनेकब्रह्माण्डोपलक्षणमेतत्, तत्प्रतिषेधार्थं च सप्तग्रहणमिति, प्रतिषेधश्च आसा-

मेव संख्येययोजनकोटीकोटिमानतया, सर्वाश्चैताः प्रस्तुताः पृथिव्यादयः किमित्याह–अधोऽधः पृथुतरा इति, यतो रज्जुप्र-
माणा रत्नायामविष्कम्भाभ्यां प्रथमा अर्धतृतीयरज्जुप्रमाणा द्वितीया (चतु)रज्जुप्रमाणा तृतीया पंचरज्जुप्रमाणा चतुर्थी षड्रज्जु-
प्रमाणा पंचमी अर्धसप्तमरज्जुप्रमाणा षष्ठी सप्तरज्जुप्रमाणा सप्तमी, अत एव 'छत्रातिच्छत्रसंस्थिता' इति अधोऽधो विस्तीर्ण-
तयेति, आसां चोत्कीर्त्तनमुभयथा नामतो गोत्रतश्चेत्याह–'घर्मे'त्यादि, घर्मादीनि आसां नामधेयानि यथासङ्ख्यमेव भव-
ति, रत्नप्रभादीनि तु गोत्राणि, तद्गुणोपलक्षणात्, एवं च प्रथमा घर्मा नाम्ना रत्नप्रभा गोत्रेण, एवं शेषाणामपि योजना कार्या
यावत् सप्तमी माधवी नाम्ना महातमःप्रभा गोत्रेणेति, एवमेतानि नामधेयानि–नामान्येव आसां यथाक्रममुभयथा भवन्ति, अत्र
'रत्नप्रभे'त्यादि,आद्या पृथिवी घनभावेन बाहल्येन अशीतं योजनशतसहस्रं, अशीतियोजनसहस्रोत्तरो लक्ष इत्यर्थः,शेषा
द्वितीयाद्या द्वात्रिंशत् अष्टाविंशतिश्चेत्यादिर्द्वन्द्वः, भावार्थस्तु द्वात्रिंशदष्टाविंशतिर्विंशत्यष्टादशषोडशाष्टाधिकं योजनशतसह-
स्रमिति वर्त्तते, ततश्च द्वात्रिंशद्योजनसहस्राधिकं शतसहस्रं शर्कराप्रभा घनभावेन, अधुना सर्वपृथिव्यधोवर्त्तिनो घनोदधीन् नि-
दिशति–सर्वे घनोदधयो विंशतियोजनसहस्राणि, घनतनुवातावप्यधोऽसंख्येययोजनसहस्रप्रमाणौ, पृथ्वीपर्यन्तमध्यभागे घन-
वातवलयं अर्धपञ्चमयोजनादारभ्य प्रतिपृथिवि क्रोशवृद्धं, तनुवातवलयं क्रोशषट्कमानं प्रतिपृथिविसत्रिभागक्रोशवृद्धं, मध्यभाग
एव, प्रदेशहान्या पर्यन्ते तयोरपि वलयभावात्, एते च घनोदधिघनवाततनुवाता अधोऽधस्तु पुनर्घनतरा विशेषेण, अना-
दिपरिणामवशादेव घनोदध्यादिवलयविभागास्त्वन्यग्रंथानुसारतोऽवसेयाः "णवि अ फुसंति अलोगं चउसुंपि दिसासु सव्वपुढवी-
ओ। संगहिआ वलएसुं विक्खंभं तासि वोच्छामि ॥१॥ छच्चेव अद्धपंचम जोअणमद्धं च रयणपुढवीए। उयहीघणतणुवाया जहा-

संक्षेपेण निर्दिष्टा ॥२॥ तिभागो गाउअ चेव, तिभागो गाउअस्स य । आइदुवे पक्खेवो, अहो अहो जाव सत्तमिए, ३ इत्यादि, इह रत्नप्रभायां घनोदधिवलयविष्कम्भः षड् योजनानि, घनवातवलयविष्कम्भः अर्द्धपंचमानि, तनुवातवलयविष्कम्भतस्तु सार्द्धं योजनमिति, यथोक्तप्रक्षेपात्तु प्रतिपृथिवि भेदेन सप्तम्यां घनोदधिवलयविष्कम्भौ अष्टौ योजनानि घनवातवलयविष्कम्भस्तु द्वे इति॥

तासु नारका इति ॥ २ ॥ सूत्रम् ॥

समुदायार्थः प्रकटः,अवयवार्थं त्वाह–'तास्वि'त्यादिना,(पृ. ६८ ४) तासु उक्तलक्षणासु रत्नप्रभाद्यासु भूमिषु ऊर्ध्वमधश्चैकैकशः इत्येकैकस्याः पृथिव्या योजनसहस्रमेकैकं वर्जयित्वा ऊर्ध्वमधश्च मध्येषु भूमीनामेव, नरका भवन्ति आ षष्ठ्या इति, तानिदानीं प्रसिद्धरिहत्यनिदर्शनैर्भयानकैः प्रतिपादयन्नाह–'तद्यथा उष्ट्रिकादयो' भाण्डकविशेषाः, एते प्रकीर्णका भवंति, आवलिकाप्रविष्टास्तु वृत्त त्र्यस्रचतुरस्राकृतयः त्रिविधसंस्थानाः, ते च सीमंतकोपक्रान्ताः सीमंतकं नरकमवधिमवस्थाप्यौपक्रम्यन्ते, एवमेते सामान्यतो द्विविधाः, इहैव काश्चिन्नाम्नैवाह–' रौरवे 'त्यादिना, एवमन्ये केचिदिन्द्रकाः केचिदावलिकाप्रविष्टाः केचित् प्रकीर्णका इति, एवंप्रकाराः अशुभनामान इति व्याध्याक्रोशशपथनामानः, सप्तमनरकपृथिवीवर्त्तिनस्तु कालादयः पंचाप्रतिष्ठानपर्यंताः तत्र कालः पूर्वतः अपरतो महाकालः दक्षिणतो रौरवः उत्तरतो महारौरवः मध्येऽप्रतिष्ठानो नरकेन्द्र इति, तत्र रत्नप्रभायामाद्यपृथिव्यां नारकाणां प्रस्तारा वेश्मभूमिकाकल्पाः त्रयोदश, द्विद्व्यूनाः शेषास्तु एकादशादयो यावत् सप्तम्यामेक इति, यथोक्तं 'तेरिक्कारस नव सत्त पंच तिन्नेव होंति एक्केव। पत्थडसंखा एसा सत्तसुवि कमेण पुढवीसुं ॥१॥' एवं रत्नप्रभायां नरकावासानां नारकाणामित्यर्थः, त्रिंशत्सहस्राणि, सामान्येन, शेषासु शर्कराप्रभाद्यासु पंचविंशतिः पंचदश

दश त्रीणि एकं पंचोनं नरकावासशतसहस्रमिति यथासंख्यं सामान्येन आ षष्ठ्या इति षष्ठीं यावत्, षष्ठ्यां पंचोनं लक्षं इत्यर्थः, सप्तम्यां तु पृथिव्यां पंचैव महानरकाः,इह प्रकीर्णका न संति एवेति,एते चापष्ठ्याः केचित् संख्येययोजनप्रमाणाः केचिदसंख्येययोजनप्रमाणा इति,सप्तम्यां त्वप्रतिष्ठानो जम्बूद्वीपतुल्यः, कालादयस्त्वसंख्येययोजनसहस्रप्रमाणा इति, एते च शुभ- भागे योजनमहस्रबाहल्याः,शुषिरमप्येतावदेव चूडा चेति त्रियोजनसहस्रप्रमाणा एवेति। नरकानेवाधेयधर्म्मविशिष्टानभिधातुमाह—

नित्याशुभतरलेश्यापरिणामदेहवेदनावैक्रिया इति ॥ ३ ॥ सूत्रं ॥

एतत्सम्बन्धनिबन्धनत्वाल्लेश्यादीनामेतेषामेवातिशयासुन्दरत्वाभिधानं,'तात्स्थ्यात् तद्व्यपदेश'इति नीतेः, सूत्रसमुदायार्थः । ...त्थं चैतदाह अवयवार्थ—'ते नरका' इत्यादिना (पृ. ६८-१६) ते नरका अनन्तरोदिता भूमिकाक्रमेण रत्नप्रभादीनामधोऽधः, केमित्याह—निर्माणतः संस्थाननिर्वृत्तेः अशुभतराः संक्लेशजनकत्वेन, एतदेवाह—अशुभा रत्नप्रभायां, सामान्येन भयान- ...ाः,ततो रत्नप्रभानरकेभ्यः अशुभतराः—अनिष्टतराः शर्कराप्रभायां,ततोऽपि शर्कराप्रभानरकेभ्यः अशुभतराः वालुकाप्रभायां, ...त्येवमासप्तम्याः सप्तमीं यावत् अशुभतरा अशुभतमा अशुभतरतमा इति,एवमेते सामान्यत एवाशुभाः । अधुना नित्यार्थमाह- —नित्यग्रहणमिह गतिजातिशरीरांगोपांगकर्मनियमादिति नरकगतिनरकपंचेन्द्रियजात्योऽयं शरीरांगोपाङ्गकर्म्म तथावि- ...वैक्रियनिमित्तं तन्नियमात् त एते सूत्रोक्ता लेश्यादयो भावाः नरकगतौ नरकजातौ च वर्त्तमानानां, न शान्तिका(या)नामपि, ...तत्सामर्थ्यात् नैरन्तर्येण—अविच्छेदेन,'आभवक्षयोद्वर्त्तनात् भवन्ति, भवक्षय एव सति उद्वर्त्तन्ते, नान्तराले क्वापि तत्क्षयः ...त्याभवक्षयोद्वर्त्तनादित्याह, नैरन्तर्यार्थं च स्पष्टयन्नाह—न कदाचिदक्षिनिमेषमात्रमपि न भवंति,एतावन्तमपि कालं नाशु-

भभावनियोग शुभो वा भवत्येतावन्तमपि कालमित्येतदपि नास्तीति नित्या उच्यन्ते तद्व्याख्यांगत्वेनैव, नित्यशब्दः इहाभीक्ष्णवचनो द्रष्टव्यः, नित्यप्रहसितादिवदिति, 'अशुभतरलेश्या'इत्यादि व्याचष्टे एतद्, कपोतलेश्या रत्नप्रभायाः प्रकृत्यसुन्दरापि तीव्रसंक्लेशाध्यवसाना, विशेषेण अध्यवसानं द्रव्यसाचिव्यजनित आत्मपरिणामः, ततस्तीव्रतरसंक्लेशाध्यवसाना कापोतैव शर्कराप्रभायां, तद्द्रव्यभेदात्, ततस्तीव्रतरसंक्लेशाध्यवसाना नीलकृष्णा धूमप्रभायां,इहापि प्रस्तारभेदेन नीला तीव्रतमा,कृष्णातु(न) तीव्रेति, ततस्तीव्रतरसंक्लेशाध्यवसाना कृष्णैव द्रव्यभेदेन तमःप्रभायां, ततस्तीव्रतराध्यवसाना कृष्णैव महातमःप्रभायां परमकृष्णरूपा,द्रव्यभेदादिति, कथं अस्यां सम्यग्दर्शनलाभः ?,उच्यते–सर्वास्वविरोधात्, यथोक्तं–"सम्मत्तसुअं सव्वासु लहइ सुद्धासि"त्यादि,क्षीणप्रायायुषां चैषां शुद्धापि भवतीत्यविरोधः, 'अशुभतरपरिणाम'इत्यादि, एतद् व्याचष्टे–'बन्धने'त्यादि, बन्धनं च गतिश्चेत्यादिर्द्वन्द्वः, एत एव बन्धनादयः आख्या यस्य परिणामस्येति प्रक्रमः, स एव तदाख्यः, किमित्याह–दशविधोऽप्यशुभः पुद्गलपरिणामो नरकेषु, तत्र बन्धनपरिणामस्तत्तत्पुद्गलैः सम्बन्धलक्षणः महाग्न्यादिसम्बन्धाधिकः, गतिपरिणामः उष्ट्रादिगतिरूपस्तप्तलोहादिपदन्यासाधिकः, संस्थानपरिणामो जघन्यहुण्डाकृतिः, भेदपरिणामः शस्त्रादिभ्योऽतिवीभत्सः, वर्णपरिणामः परमनिकृष्टोऽतिभीषणः, गन्धपरिणामः खरुटगालाधिको यथा, रसपरिणामः कोशातकीश(त्रा)यमाणनिस्यंदाधिकः, स्पर्शपरिणामः वृश्चिककपिकच्छ्वादिस्पर्शाधिकः, अगुरुलघुपरिणामोऽतितीव्रातिदुःखाश्रयः, शब्दपरिणामः खरपरुषादिरूपोऽतिदुःखद इति, एवमशुभः पुद्गलपरिणामो नरकेषु सामान्येन अशुभतरश्चाऽऽधः तद्द्रव्यभेदादिति,साम्प्रतमिहैव दशविधः(धं)परिणामो(मं)भव्यसंवेगार्थं किञ्चिद्विशेषत आह–'इह तिर्यगूर्ध्वमधश्चे'त्यादि, अनेन वर्णपरिणाममाह,शृगालमार्जारादिना तु गन्धपरीणामं, हा मातः अहो

कश्मिन्यादिना तु मन्दपरिणाममिति, प्रकटार्थमेतत्, तृतीयमपि अशुभतरदेहा इत्यादि निगदसिद्धं यावत्तेषु शरीराणि भवन्ति, तेष्विति नरकेषु, अतोऽधिकृतशरीरेभ्यः अशुभतराणि चाधोऽधो भवंति, क्लिष्टतरादिकर्म्मभेदात्, प्रमाणं चैहैषां 'सप्त धनूंषी'त्यादि, उत्सेधाङ्गुलमधिकृत्यैतत्, परमाण्वादिक्रमेण अष्टौ यवमध्यान्यङ्गुलं चतुर्विंशत्यङ्गुलो हस्तश्चतुर्हस्तं धनुरिति, एतच रत्नप्रभायां भवधारकशरीराणामुत्कर्षेण, जघन्येन त्वङ्गुलासङ्ख्येयभागोऽस्यामन्यासु च शेषासु, किमेतादित्याह–द्विर्द्विः शेषासु,रत्नप्रभानारकशरीरप्रमाणं द्विगुणं द्वितीयस्यां नारकशरीरप्रमाणं, एतदपि द्विगुणं तृतीयस्यां नारकशरीरप्रमाणं,एतदपि द्विगुणं एवं यावत् सप्तम्यां पंच धनुःशतानि पूर्णानीति, उत्तरवैक्रियं तु प्रथमायां जघन्येनाङ्गुला(ल)सङ्ख्येयभागमितमन्यासु च, उत्कर्षेण पंचदश धनूंषि अर्धतृतीयाश्च रत्नयः, एतदेव द्विगुणं द्वितीयस्यामेवं ज्ञेयं यावत् सप्तम्यां धनुःसहस्रमिति, एतच प्रमाणं रत्नप्रभादिषु पर्यन्तवर्तिप्रतरेषु नारकाणामुत्कृष्टं द्रष्टव्यं,आयुः जघन्यमुत्कृष्टं च प्रथमप्रतरादिभेदेन भिद्यमाना दशनवतिसहस्रादिना रत्नप्रभायां पर्यन्तप्रतरे सागरोपमप्रमाणं भवति, एवमेव शरीरप्रमाणमपि प्रथमप्रस्तारादिभेदेन जघन्योत्कर्षाभ्यां मेत्तव्यमिति, तदुक्तं 'स्थितिरुत्कृष्टजघन्यता वेदितव्या'उदितभेदेन शरीरप्रमाणस्येति, 'अशुभतरवेदना'इत्यादि (पृ. ७०-१२) एतदपि प्रायो निगदसिद्धमेव यावत् ग्रन्थान्तरमिति, नवरम् 'उष्णशीते चतुर्थ्या'मिति, नवरमुष्णशीते द्वे वेदने भवतः प्रस्तारभेदेन, तत्रोष्णवेदना बहुतराणां शीतवेदना स्वल्पतराणामिति,एवम् 'शीतोष्णे पंचम्या'मिति शीतवेदना बहूनामुष्णवेदना स्वल्पानामिति, परयोः षष्ठीसप्तम्योः शीता शीततरा च वेदना यथासंख्यमिति, दृष्टान्तोऽत्रासद्भावप्रज्ञापनया, नारकाणामानयनाभावात्, तत्र चाग्न्ययोगात्, स हि पृथिवीकाय एवात्युष्णोऽन्धकारश्चेति ॥

परस्परोदीरितदुःखाश्चेति ॥ ४ ॥ सूत्रम् ॥

प्रायः प्रतीतसमुदायावयवार्थमेव, नवरं 'अनुसमयं आहारयंती'ति मनोऽधिकतरदुःखोत्पादनाय, इतरथा 'ते सव्वपुद्गले'त्यादि,(पृ.७२-७)'परस्परोदीरितानि चे'ति मिथ्यादृष्टयः,सम्यग्दृष्टयस्तु परोदीरितदुःखानि सहन्ते,नैवान्येषामुदीरयन्ति, दृष्टविपाकत्वात्, अत एवाधिकदुःखाः, न सामान्येन तज्ज्ञानभावात्,'अपि चोक्तं भवप्रत्यय'इत्यादि (पृ.७२-११) 'काकोलूक'मित्यादि (पृ. ७२-१५) एतत्तु मिथ्यादृष्टिविषयं मिथ्यादृष्टिं, (सम्यग्दृष्टिं तु) प्राप्यासन्नमुक्तित्वात् क्षान्तिपरमा एवेत्याचार्याः ॥ तत्र नैवंविध दुःखभाज एव ते, किन्तु—

संक्लिष्टासुरोदीरितदुःखाश्च प्राक् चतुर्थ्या इति ॥ ५ ॥ सूत्रम् ॥

परमाधार्मिकोदीरितदुःखाश्च प्राक् चतुर्थ्याः, चतुर्थीमर्यादयेति सूत्रसमुदायार्थः, अवयवार्थस्तु प्रायो निगदसिद्ध एव, नवरममयः असिपत्रवनानि, कुंभीनामानः त एव गृह्यन्ते, द्वन्द्वः समासः, करादिभिः अधर्मचारिण आधर्मिकाः परमा—उत्कर्षत एव, असुरनिकायाऽन्तर्गताः कर्मक्लेशजा वेदनाः ताच्छील्यात् तद्वेदनोत्पादनशीलतया, अंबरीषो भावा (०पाद्याः) तलतालनिपातः पातो भूमौ कसाभिघातश्चटिकेत्यन्ये, त्रिविधानि दुःखानि क्षेत्रस्वभावपरस्परोदीरणासुरजनितानि नरकेषु नारकाणां भवन्तीति। कियन्तं कालमेतानीति तत्स्थितिमाह—

तेष्वेकत्रिसप्तदशसप्तदशद्वाविंशतित्रयस्त्रिंशत्सागरोपमा सत्त्वानां परा स्थितिरिति ॥ ६ ॥ सूत्रम् ॥

उक्तलक्षणेषु- नरकेषु नारकाणां सत्त्वानामियमुत्कृष्टा स्थितिरिति सूत्रसमुदायार्थः, अवयवार्थश्च इहापि प्रायो निगदसिद्धः,

नतरं त्रयस्त्रिंशत्सागरोपमस्थितिर्गृह्यते, एतावन्ति सागरोपमाणि यस्याः स्थितेः सा एतावत्सागरोपमेत्येवं सर्वत्र योजनीयं, इदं चागमसिद्धमेव, योजनविस्तृतः पल्यः तथा योजनमुच्छ्रितः, सप्तरात्रिप्ररूढानां केशाग्राणां स पूरितः, ततो वर्षशते पूर्णे एकैकं केशमुद्धरेत, क्षीयते येन कालेन तत् पल्योपममुच्यते, कोटीकोट्यो दशैतेषां पल्यानां सागरोपममितिवचनात्, जघन्यां तु स्थितिं परस्ताद्वक्ष्यते चतुर्थेऽध्याये 'नारकाणां चे'त्यादिना (४-४३) सूत्रेण, तथा ये प्राणिनोऽसंज्ञिप्रभृतयः यासु भूमिषूत्पद्यन्ते उद्वृत्ताश्च यतो ये भवन्ति सम्यग्दर्शनादि वा लभन्ते तदेतदपि प्रकटमेव ॥ द्वीपसमुद्रपर्वतादिप्रतिषेधः शर्करप्रभादिविषयः, इहैवा-पवादमाह—'अन्यत्रे'त्यादिना (पृ. ७७-२) समुद्घाते गताः केवलिनः, औपपातिका नारका एव, तथा वैक्रियलब्धिसंपन्नाः, पूर्वजन्ममित्रादयः, नरकपालाः परमाधार्मिकाः, एते सर्वेऽपि द्वितीयादिषु कदाचित् केचित् संभवेयुरपीति, उपपातमङ्गीकृत्य रत्नप्रभायामेव देवाः सन्ति, न शेषासु, गमनमङ्गीकृत्य यावत्तृतीया, ततः परं न गच्छन्ति एव, शक्ता अपि लोकानुभावादेवेति, अयमन्यो लोकानुभाव एव 'यत्र वायव' इत्यादिनो(पृ. ७७-५)क्त इति ॥ सूत्रान्तरसंबन्धार्थमाह—'अत्राहे'त्यादि, (पृ. ७७-९) 'उक्तं भवता लोकाकाशेऽवगाह'इति (५-१२) पंचमेऽध्याये, तथा दशमे 'तदनन्तरमूर्ध्वं गच्छन्त्यालोकान्ता'दित्युक्तं (१०-५), तत्र लोकः स्वरूपेण, कतिविधो वा अधोलोकादिभेदेन, किंसंस्थितो वाऽऽकृतिमधिकृत्येति, अत्रोच्यते, पंचास्तिकायसमुदायो लोकः धर्मादयोऽस्तिकाया इति, ते चास्तिकाया धर्मादिकाः स्वतत्त्वतः स्वरूपतः विधानतो भेदतः लक्षणतश्चो-क्तगत्यादिलक्षणभेदेन उक्ता मनागिह अन्यत्र प्रकरणान्तरे वक्ष्यन्ते च प्रतिपदमेव पञ्चमेऽध्याये, स च लोकोऽधिकृतः क्षेत्रवि-भागेन त्रिविधः त्रिप्रकारः अधस्तिर्यगूर्ध्वं चेति दर्शयिष्यामः, संस्थानाख्यानायाह-'धर्मे'त्यादि, (पृ. ७७-१४) धर्माधर्मा-

स्तिकायो वक्ष्यमाणलक्षणौ लोकव्यवस्थाहेतू वर्त्तेते, तदवच्छिन्नाऽऽकाशस्य लोकत्वात्, एतदाह–तयोरवगाहनविशेषात् धर्म्माधर्म्मयोरवगाहनभेदात् वक्ष्यमाणाकारात् लोकानुभावनियमात् अनादिपारिणामिको लोकानुभावः तन्नियतावगाहनविशेषात् सुप्रतिष्ठकवज्राकृतिर्लोकः इति सुप्रतिष्ठकवज्रयोरिव संस्थानम्–आकृतिर्यस्य स तथाविधः बहुसादृश्याल्लोक एवंविध इति, यथोक्तमनेनैव सूरिणा प्रकरणान्तरे "जीवाजीवा द्रव्यमिति षड्विधं भवति लोकपुरुषोऽयम्। वैशाखस्थानस्थः पुरुष इव कटिस्थकरयुग्मः ॥ (२१०) तत्राधोमुखमल्लकसंस्थानं वर्णयन्त्यधोलोकम्। स्थालमिव तिर्यग्लोकमूर्ध्वमथ मल्लकसमुद्गम् ॥२११॥ (प्रशम.)मिति, अत एवाह 'अधोलोको गोकन्धराकृतिः' गोग्रीवासदृशः, उपरि तनुकोऽधोऽधो विशालः, समधिकसप्तरज्जुमानमिति, एतत्समर्थनायाह–उक्तं ह्येतत् प्राक् यदुत भूमयः सप्ताधोऽधः पृथुतराश्छत्रातिच्छत्रसंस्थिता' (३-२) इति, ता यथोक्ता इति अधोभूमयः गोकन्धराकृतय इत्यर्थः, एवं तिर्यग्लोको झल्लर्याकृतिः समतलवादित्रविशेषाकृतिरष्टादशयोजनशतोच्छ्रयमानः, एवमूर्ध्वलोको मृदङ्गाकृतिः मृदङ्गो वादित्रविशेष एव पृथुमध्यः एतदाकृतिः, ब्रह्मलोकप्रदेशे पृथुत्वा(त् उपरिप्रदेशे हीनत्वा)दिति, स्वात्मना सप्तरज्जुमानः॥ तत्रैवं त्रिविधे लोके तिर्यग्लोकप्रसिद्ध्यर्थमिदमिति लक्ष्यम्, आकृतिमात्रं उच्यते—

जम्बूद्वीपलवणादयः शुभनामानो द्वीपसमुद्रा इति ॥ ७ ॥ सूत्रम् ॥

समुदायावयवार्थौ प्रायः प्रतीतौ, नवरं शुभनामानः प्रशस्तनामान इति, असङ्ख्येयकमर्द्धतृतीयोद्धारसागरोपमोद्धारराशिप्रमाणं, एते च स्वयम्भूरमणसमुद्रपर्यन्ता वेदितव्या इति, अनादिमती चैषामियं संज्ञा जम्ब्वादिप्रवृत्तिनिमित्तापेक्षा च। किंच—

द्विर्द्विर्विष्कम्भाः पूर्वपूर्वपरिक्षेपिणो वलयाकृतय इति ॥ ८ ॥ सूत्रम् ॥

एतदपि प्रकटसमुदायावयवार्थमेव, नवरं विष्कम्भः पृथुलता, मानुषोत्तरपर्वतो मनुष्यलोकव्यवस्थाकारीति ॥ जम्बूद्वीपस्यापि द्वीपत्वेन वलयाकृतित्वे प्राप्ते अपवादार्थमाह—

तन्मध्ये मेरुनाभिर्वृत्तो योजनशतसहस्रविष्कंभो जम्बूद्वीप इति ॥ ९ ॥ सूत्रं ॥

इदमपि प्रायः प्रकटितार्थमेवेति, नवरं-मेरुरस्य नाभ्यामिति मेरुनाभिरुच्यते, कंठेकालवद्गमकत्वात् समासः, व्यधिकरणबहुव्रीहिनीत्या, वाक्यान्तरेणाह-मेरुर्वाऽस्य नाभिरिति मेरुनाभिः,नाभिशब्दो मध्यवाचीत्याह-मेरुरस्य मध्य इत्यर्थः, अयं च सर्वद्वीपसमुद्राभ्यन्तरस्मान् न वृत्त इति प्रतरवृत्त इत्याह-'कुलालचक्राकृति'रिति, कुलालचक्रवत् प्रतरवृत्त इत्यर्थः, वृत्तग्रहणं सूत्रे नियमार्थं, वृत्त एव, न चान्यवलयाकृतिग्रहणान्नियमसिद्धिरित्याह—वलयाकृतिभिरित्यादि, तथा च मा भूदिति नियमार्थं, काञ्चनस्थालः कांचनपात्रं तन्नाभिस्तचन्द्रकस्तद्वद्वृत्त इति, अधो धरणितलमवगाढो रुचकप्रतराविशिष्टप्रमाणानुगतो विष्कम्भकाण्डं त्रिलोकप्रविभक्तमूर्त्तिस्तत्स्पर्शनेन प्रतिक्रान्तिः विस्तारः, अयं च मेरुगिरिर्न सर्वत्र समप्रमाणवृद्धः किंतु प्रदेशपरिहाण्येतदाह—' नन्दनसौमनसाभ्या 'मित्यादिना ( पृ. ८१–१ ) एकादशैकादश योजनसहस्राण्यारुह्य प्रदेशपरिहाणिस्तथाविधा विष्कम्भस्य यथाविधया गणितशास्त्राविरोधेन सर्वत्र यथोक्तपरिक्रान्तिः भवतीति गणितज्ञा एवात्रप्रमाणं।

१ मेरोर्मूले धरणितले दशयोजनसहस्राणि विष्कम्भः, ततः पञ्चशत्यां नन्दनवनमिति तस्या एकादशभागेन पञ्चचत्वारिंशद्योजनानि पंच चैकादशभागा हीनाः, ततो नन्दनबहिर्विष्कम्भः चतुष्पञ्चाशदधिकानि नवनवतिशता,षट् चैकादशभागाः,ततो नंदनाभ्यन्तरवि-

तत्र भरतहैमवतहरिविदेहरम्यकहिरण्यवतैरावतवर्षाः क्षेत्राणीति ॥ १० ॥ सूत्रम् ॥

ग्रन्थार्थं सुविस्तृतं च, नवर तत्र जम्बूद्वीपे भरतमित्यादिना (पृ.८१-५) एषां पृथग्द्वीपत्वनिषेधमाह, तथा वंशा वर्षे-त्यादौ वंशाः किल पर्ववन्तो भवन्ति, तद्वत् पर्वभागविभाजनाद्वंशा इव अमी भरतादयः, वर्षसन्निधानाच्च वर्षाः, मनुजादिनिवासाच्च वास्याः 'सर्वेषा'मित्यादि (पृ. ८२-१) आदित्यकृताद् दिग्नियमाद्, तत्र यस्मिन् क्षेत्रे यत्र आदित्य उदेति सा प्राची, यस्मिन्नस्तमेति सा प्रतीची, यथोक्तमार्षे "जस्स जओ आइच्चो उदेइ सा तस्स होति पुव्वदिसा। जत्तो य अत्थमेइ सव्वेसिं उत्तरो मेरू ॥१॥" इत्यादि, व्यवहारमात्रमिदं, न निश्चयो, नियमो लोकमध्यावस्थितं पुनरष्टप्रदेशं रुचकं दिग्नियमहेतुं प्रतीत्य, किमित्याह-यथासम्भवं भवति, मेरुर्नोत्तरत एव, स हि दिशामैन्द्र्यादीना द्विप्रदेशिकानां द्विप्रदेशोत्तरवृद्धानां चतसृणां पूर्वादीनां दिशां

ष्कम्भानयनाय सहस्रं पात्यते, जातमेकोनाशीतिः शतानि चतुष्पञ्चाशदधिकानि षट् चैकादशभागाः, नन्दनाच्च नैकादशसहस्राणि हानिरिति साधरपञ्चाशत्सहस्रा एकादशभागेन एकाशीत्यधिकानि षट्चत्वारिंशत् शतानि नव चैकादशभागा हीनाः, ततः सौमनसे बाह्यविष्कम्भः द्विसप्तत्यधिकद्विचत्वारिंशच्छतानि अष्ट चैकादशभागाः, अभ्यन्तरविष्कम्भस्तस्य दशशत्या हीनः, तत एकादशसहस्रा यावद्वानरभागात् पञ्चविंशतिसहस्र एकादशभागेन अष्टभागाधिकद्वासप्तत्यधिकद्वाविंशतिशतपाते पण्डकवने सहस्रमेवावशिष्यते इति नन्दनसौमनसयोरन्तर्बहिर्विष्कम्भश्च यथोक्तमान एव सूत्रेष्वधीतः श्रीमज्जम्बूद्वीपवृत्त्यादिषु, यच्चात्र गणितज्ञाः प्रमाणमिति सुविचार्यं तत्तु नन्दनसौमनसाभ्यामेकादशैकादशसहस्राण्यारुह्य प्रदेशपरिहाणिर्विष्कम्भस्येति भाष्यकारवचसोऽन्यत्र संवादानुपलम्भादिति

दिशां चाऽऽग्नेय्यादीनामेकैकाकाशप्रदेशरचनाहितस्वरूपाणां मुक्तावलीसन्निभानां चतसृणामेव भावात्, उपरिष्टात्तु चतुःप्रदेशादिर्विमला, अधस्तु तमोऽभिधानेति दश दिश इति, उक्तं च—"अट्ठपएसो रुअगो तिरियं लोअस्स मज्झयारम्मि। एस पभवो दिसाणं एसेव भवे अणुदिसाणं ॥१॥ इंदग्गेई जम्मा य णेरइया वारुणी अ वायव्वा। सोमा ईसाणाऽवि अ विमला य तमा य बोद्धव्वा ॥२॥" इति ॥ कृतं विस्तरेण ॥

तद्विभाजिनः पूर्वापरायता हिमवन्महाहिमवन्निषधनीलरुक्मिशिखरिणो वर्षधरपर्वता इति ॥ ११ ॥ सूत्रम् ॥

तानि विभक्तुं शीलमेषामिति तद्विभाजिनः, पूर्वापरायता अकृत्रिमनिवेशत एव, हिमवदादयो वर्षधरपर्वता इति सूत्रसमुदायार्थः, अवयवार्थस्तु 'तेषां वर्षाणां विभक्तार' इत्यादि (पृ. ८२-७) भाष्यादवसेयः, एतच्च प्रायो गतार्थं, नवरं एवं शेषा इत्यत्र हरिवर्षविदेहयोर्विभक्ता निषधः, विदेहरम्यकयोर्विभक्ता नीलः, रम्यकहैरण्यवतयोर्विभक्ता रुक्मी, हिरण्यवतैरावतयोर्विभक्ता शिखरीति। एषामेव क्षेत्राणां प्रमाणमाह—तत्र पंच योजनशतानि षड्विंशत्यधिकानि षडेकोनविंशतिभागा योजनस्य भरतविष्कम्भः, भरतं चारोपितचापाकारं तदिष्वायमिषुरिति, एवमेकमभिधाय शेषाभिधित्सयाऽऽह—'स द्विर्द्विर्हिमवद्धैमवतादीनामामहाविदेहेभ्य इति' स भरतेषुः द्विगुणो द्विगुणः हिमवद्धैमवतादीनामिति पर्वतक्षेत्राणां भवति, आ महाविदेहेभ्यो महाविदेहानि यावत्, तद्यथा—हिमवच्छिखरिणोः योजनसहस्रो ह्युत्तरपञ्चशताऽधिका द्वादशाधिकैकोनविंशतिभागा योजनस्य, हैमवतहिरण्यवतयोः सहस्रद्वयं शतं च पञ्चोत्तरं पञ्च चैकोनविंशतिभागा योजनस्य, महाहिमवद्रुक्मिणोश्चत्वारि सहस्राणि शतद्वयं दशोत्तरं दश चैकोनविंशतिभागा योजनस्य, हरिरम्यकयोरष्टौ सहस्राणि चत्वारि शतान्येकविंशत्यधिकानि एकश्चैकोनविंश-

निभागो योजनस्य, निषधनीलयोः षोडश सहस्राण्यष्टौ शतानि द्व्युत्तरचत्वारिंशताधिकानि भवन्ति द्वौ चैकोनविंशतिभागौ योजनस्य, विदेहानां त्रयस्त्रिंशत् सहस्राणि षट् शतानि चतुरशीत्यधिकानि चत्वारश्चैकोनविंशतिभागा योजनस्येति, 'परतो विदेहेभ्योऽर्द्धार्द्धहीना'इति नीलादीनां प्रमाणमाचष्टे लाघविक आचार्यः,विदेहक्षेत्रेपुतः अर्द्धहीनो नीलेपुर्भवति,सोऽर्द्धहीनो रम्यकेपुः, इत्येवं यावदैरावतक्षेत्रमिति, अधुनैषां हिमवदादीनां कुलपर्वतानामवगाहोच्छ्रायौ प्रतिपादयति–'पञ्चविंशती'त्यादि, उच्छ्रायचतुर्भागोऽवगाहः सर्वेषां, उच्छ्रायो योजनशतम् अवगाहः पञ्चविंशतिर्योजनानि हिमवतः, एतदेव द्विगुणं समुच्छ्रायोऽवगाहप्रमाणं महाहिमवतः योजनशतद्वयसमुच्छ्रायः पञ्चाशदवगाहः, एतद्द्विगुणं निषधस्य चत्वारि शतान्युच्छ्रायः शतमवगाह इति, नीलादीनां निषधादिभिः तुल्यौ उच्छ्रायावगाहौ इति। इदानीं जीवाधनुःकाष्ठे कथयति–'भरतवंशस्ये'त्यादि (१०८२–१६) भाष्यम्, हिमवत आराद्भागवर्तिनी जीवेयं प्रतिपत्तव्या, धनुःकाष्ठं च, इषुर्यथोक्तो विष्कम्भ इति, प्रागभिहितोऽपि पुनरिहोपन्यस्त इषुरिति, तत्रैवं नोक्तस्तस्मात् पुनरुपन्याम इति, 'भरतक्षेत्रमध्ये'इत्यादि, वैताढ्यपर्वतो दक्षिणोत्तरार्धविभागकरो विद्याधराधिवासः पंचाशत्षष्टिनगरयुक्तः दक्षिणोत्तरश्रेणिद्वयालंकृतो गुहाद्वयोपशोभितश्च प्रतिपत्तव्यः, 'विदेहेष्वि'त्यादि, मेरुगिरेर्दक्षिणतो निषधस्योत्तरतो देवकुरवो भवन्ति, ते च काञ्चनपर्वतशतेनोपशोभिताः, ह्रदपञ्चकोभयपर्यन्तावस्थितैर्दशदशभिः काञ्चनपर्वतैर्विभूषिताः, शीतोदानदीपूर्वापरगौ निषधाच्चतुस्त्रिंशाष्टशतमचतुःसप्तभागान्तरौ चित्रविचित्रकूटौ योजनसहस्रोच्चौ तावदधोविस्तृतौ तदर्धमुपरि, ताभ्यां विराजिता इति। 'विदेहा'इत्यादि, मन्दरगिरिणा देवकुरूत्तरकुरुभिश्च विभक्ता व्यवच्छिन्नमर्यादाः स्थापिताः एते क्षेत्रान्तरवद्भवति, तत्र मनुष्यादीनां परस्परेण गमनाभावात्, अतः पूर्वे चापरे च उभये विदेहा

भवन्ति, मेरोः पूर्वतः पूर्वेऽपरतोऽपरे, तत्र पूर्वविदेहेषु षोडश चक्रवर्त्तिविजया नदीपर्वतविभक्ताः परस्परस्यागम्याः चक्रवर्तिनां विजेतव्या विभोक्तव्याश्च, नदीभिर्गिरिभिश्च विभक्ताः परस्परेण अगम्याः क्षेत्रविशेषा इत्यर्थः, अधुना अपरानपि अतिदिशति—अपरेऽप्येवंलक्षणाः षोडशैव चक्रवर्त्तिविजयाः सरिद्गिरिविभक्ताः परस्परासम्भाव्यमानगमना इति ॥ अधुना उत्तरभागवर्तिपर्वतान् प्रमाणतो निदर्शयति 'तुल्यायाम' इत्यादि भाष्यमेव सुज्ञानं, 'क्षुद्रमन्दरास्त्वि'त्यादि, धातकीखण्डे द्वौ पुष्करद्वीपार्धे द्वावित्येवं चत्वारोऽपि क्षुल्लकमन्दरा भवन्ति, जम्बूद्वीपमध्यवर्त्तिमेरोर्हीनप्रमाणाः, तच्च दर्शति–महामन्दरात् पंचदशभिर्योजनसहस्रैर्हीनोच्छ्रायाः, चतुरशीतियोजनसहस्रोच्छ्रिता इत्यर्थः, तथा षड्भिर्योजनशतैर्धरणितले हीनविष्कम्भाः चतुःशताधिकनवसहस्रविष्कम्भा इत्यर्थः, तेषां चतुर्णामपि प्रथमं काण्डं महामन्दरतुल्यं धरणिमवगाढं, सहस्रप्रमाणमित्यर्थः, द्वितीयं सप्तभिर्हीनं, षट्पञ्चाशत्सहस्रमानं, तृतीयं काण्डं अष्टाभिः सहस्रैर्हीनं महामेरोः सकाशाद्, अष्टाविंशतिसहस्रप्रमाणमित्यर्थः, भद्रशालनन्दनवने महामंदरे इव द्रष्टव्ये, धरण्या भद्रशालवनं तदुपरि पंचशतात् नन्दनमिति, तदुपरि अर्धषट्पंचाशत्सहस्राण्यारुह्य सौमनसं, पञ्च शतानि नन्दनवनेनाक्षिप्तानि, सौमनसेन पंच शतानि, आक्षिप्तानि, द्वितीयकाण्डस्यान्तेऽर्द्धषट्पंचाशत्सहस्राणि गत्वा तत् पंचशतविस्तीर्णमेव भवति, ततोऽपि विंशतिसहस्राणि आरुह्य पाण्डकवनं चतुर्णवतचतुःशतविस्तीर्णमेवानसेयं, तत्रोपरि अधश्च विष्कम्भोऽवगाहश्च तुल्यो महामन्दरेण यथासंख्यमशामिसम्बन्धः उपरि मस्तके यो विष्कम्भः स महामन्दरेणैषां तुल्यः, सहस्रप्रमाण इत्यर्थः, अधश्च योऽवगाहः सोऽपि महामन्दरेण तुल्यो, योजनदशसहस्रमान एषां भवन्ति, चूलिका चैषा महामन्दरचूलासदृशी प्रमाणतोऽवसातव्येति । अधुना

लयरार्थं द्वीपानां परिधिगणितपदजीवाद्यानयनाय करणोपाया भण्यन्ते, तत्र ईप्सितवृत्तक्षेत्रपरिधेरानयनायेदं करणसूत्रं—वि- ष्कम्भकृतेर्दशगुणाया मूलं वृत्तपरिक्षेपः विष्कम्भो योजनशतसहस्रं, तल्लक्षणं कृतिर्वर्गो भवति, पुनर्दशगुणा क्रियते, पश्चान्मूलमानीयते, तद् वृत्तक्षेत्रपरिक्षेपः, तत्र योजनराशौ उपलब्धव्ये त्र्येकषड्द्विद्विकसप्तकैः क्रमेण मूलमानेतव्यं, ततोऽयं राशिरधस्ताज्जातः ६३२४५४, एषोऽर्द्धेन छिन्नो योजनत्रिलक्षषोडशसहस्रसप्तविंशतिद्विशतसंख्यो भवति, शेषमुपरीदं ४८४४११ चतुर्भिर्गुण्यते, चतुर्गव्यूतं योजनं यतः,ततोऽयं गव्यूतराशिर्भवति १९३७६४४, षडादिराशिना ६३२४५४ भागो हार्यो, लब्ध- मिदं गव्यूतत्रितयं, शेषमुपरीदं४०५२२, धनुःसहस्रद्वयेन गुण्यते, जातस्ततो धनूराशिः ८१०४४०००, षडादिराशिना भागे लब्धभागमिदं १२८, शेषमुपरीदं ८९८८८, षण्णवत्यङ्गुलं धनुर्भवतीति षण्णवत्या गुण्यते, जातोऽङ्गुलराशिः ८६२७१४८, षडादिराशिना भागे लब्धमिदं १३, शेषमुपरीदं ४०७३४६, द्वाभ्यां गुण्यते, यतोऽर्द्धाङ्गुलद्वयेनैकमङ्गुलं भवति,जातोऽर्द्धाङ्गु- लराशिः ८१४६९२,षडादिराशिना भागे लब्धमिदं १,शेषार्द्धाङ्गुलभागा एतावन्त उद्धरिताः १९२२३८, अधस्तात् षडादिराशिः, एष जंबूद्वीपपरिधिः,वृत्तग्रहणं चतुरस्रादिक्षेत्रव्यावृत्त्यर्थं, परिक्षेपग्रहणं विष्कम्भेषुजीवादिव्यावृत्त्यर्थमिति। अधुना गणितपदमानीयते जम्बूद्वीपस्य,तत्रेदं करणसूत्रं 'स विष्कम्भपादाभ्यस्तो गणितं' प्रक्रान्तविष्कम्भो लक्षमेकः पादः पञ्चविंशतिः सहस्राणि,विष्क- म्भपादेनाभ्यस्तो–गुणितो विष्कम्भपादाभ्यस्तः, स इति परिधिर्जम्बूद्वीपस्य अभिसम्बध्यते, प्रक्रान्तार्थपरामर्शित्वात् सर्वनाम- शब्दानां, गणितमिति गणितपदमित्यर्थः, जम्बूद्वीपे योजनप्रमाणानि चतुरस्रखण्डान्येतावन्ति भवन्तीति वाक्यार्थः, तत्र परिधि- योजनराशिः पञ्चविंशतिसहस्रगुणितोऽयं ७९०५६७५००,गव्यूतत्रितयं पञ्चविंशतिसहस्रगुणं जातमिदं ७५०००,गव्यूतराशिश्चायं

योजनीक्रियते, चतुर्भिर्भागे लब्धमिदं १८७५०, योजनराशिरयं, धनूराशिरपि पञ्चत्रिंशतिसहस्रगुणो जातमिदं ३२०००००, अयमपि धनुराशिर्योजनीक्रियते, 'अष्टौ धनुःसहस्राणि योजनं भवती'ति वचनात् अष्टाभिः सहस्रैर्भागे लब्धमिदं ४००, अयमपि योजनराशिरनन्तरराशौ प्रक्षिप्तो, जातमिदं १९१५०, अयमपि सप्तकोट्यादिराशौ, जातमिदं ७९०५६९४१५०, अङ्गुलराशिः पञ्चत्रिंशतिसहस्रगुणो, जातमिदं ३२५०००, अर्द्धाङ्गुलं पञ्चत्रिंशतिसहस्रगुणं, जातमिदं २५०००, अस्यार्द्धाङ्गुलराशेरर्द्धं गृह्यते, ततोऽङ्गुलानि लभ्यन्तेऽमूनि १२५००, एतान्यङ्गुलराशौ क्षिप्यन्ते, जातमिदं ३३७५०००, ततः षण्णवत्या भागो, यस्मात् षण्णवत्यङ्गुलं धनुर्भवति, भागे लब्धमिदं ३५१५, अयं धनुराशिः, शेषमङ्गुलं षष्टिः, अस्य धनुराशेर्भागे सहस्रद्वयेन लब्धमेकं गव्यूतं, शेषमिदं १५१५। अधुना जीवानयनमुच्यते—इच्छावगाहोनावगाहाभ्यस्तस्य विष्कम्भस्य चतुर्गुणस्य मूलं ज्या ईप्सितोऽवगाहो यावान् स इच्छावगाहस्तेनोनो विष्कम्भः इच्छावगाहोनः, पुनरवगाहेन अभ्यस्यते-गुण्यते:, इच्छावगाहोनश्चासावगाहाभ्यस्तश्च इच्छावगाहोनावगाहाभ्यस्तस्तस्य पुनश्चतुर्भिर्गुणितस्य यन्मूलं सा मण्डलक्षेत्रजीवा भवतीति, अत्र विष्कम्भो योजनलक्ष ईप्सितावगाहोनः क्रियते, ईप्सितश्चायं ५२६ षट् कलाः, एष उपरितनो राशिः सवर्ण्यते, कलीक्रियते इत्यर्थः, एकोनविंशत्या गुण्यते, जातमिदं ९९९४, अत्र षट् कलाः क्षिप्यन्ते, जातमिदं १००००, विष्कम्भराशिरपि सवर्ण्यते एकोनविंशत्या, जातमिदं १९०००००, एषोऽवगाहराशिरमुनः पात्यते, जातमिदं १८९००००, पुनरवगाहराशिना गुण्यते, जातमिदं १८९०००००००, ततश्चतुर्भिर्गुण्यते ७५६००००००००, अस्य मूलं जीवा भवति, तच्च ग्राह्यं, द्विसप्तचतुष्कनवपंचचतुष्कैः क्रमेण जातमिदं २९०८८४, अधस्योऽर्द्धेन छिन्नो जातमिदं २७४९५४, अस्य राशेरेकोनविंशत्या भागे लब्धमिदं १४४७१, कलाश्च पंच, शेषं ५४९०४ यदुद्धरितं

र्तरका न्यूना रला लभ्यत इत्येपा जीवा। अधुना करणसूत्रमेवेपोरानयनायाह—ज्याविष्कम्भयोर्वर्गविशेषमूलं विष्कम्भार्द्धाच्छोध्यं शेपार्द्धमिपुः जीवावर्गस्य विष्कम्भवर्गस्य च विशेपः तस्य मूलं विष्कम्भाच्छोध्यते, शेपस्य यदर्धं स इपुर्भवति, तत्र जीवावर्गोऽयं ७५६००००००००, विष्कम्भवर्गश्चायम् एकपष्ट्युत्तरत्रिशतगुणः ३६१००००००००००, अस्माज्जीवावर्गे विशुद्धे शेपमिदं भवति ३५३४४००००००००,अस्य मूलमादीयते शून्याष्टकस्यार्द्धेन चत्वारि शून्यानि, शेपस्य मूलमेकाष्टकाष्टकैः,लब्धमिदं १८८००००, एतद्विष्कम्भाद् एकोनविंशतिगुणाच्छोध्यं, शेपं जातमिदं २०००० अस्यार्द्धेनेदं १००००, अस्यैकोनविंशत्या भागे लब्धमिदं ५२६ पड् कला इपुरिति। अधुना धनुःकाष्ठानयनाय करणसूत्रम्—इपुवर्गस्य पड्गुणस्य ज्यावर्गयुतस्य मूलं धनुःकाष्ठं इपोः कलीकृतस्यायं वर्गः १००००००००, एप पड्भिर्गुण्यते, जातमिदं ६००००००००, एप ज्यावर्गे क्षिप्यते, ज्यावर्गश्चायं ७५६००००००००, जातमिदं ७६२००००००००, अस्य मूलमात्रं धनुःकाष्ठं भवति, तच्च द्विक२ सप्तक ७ पट् ६-शून्यचतुष्क४त्रिकैः क्रमेणादीयते, ततो राशिर्भवति २६२१५१, अधस्त्यार्द्धेन छिन्नस्यैकोनविंशत्या भागे लब्धमिदं १४५२८, एकादश चैकोनविंशतिभागा इति । सम्प्रति विष्कम्भानयनाय करणसूत्रमिदं—ज्यावर्गचतुर्भागयुतमिपुवर्गमिपुविभक्तं तत् प्रकृतिवृत्तविष्कम्भः जीवावर्गचतुर्भागेन युक्त इपुवर्ग इपुणा विभक्तः स स्वभाववृत्तक्षेत्रविष्कम्भो भवति, ज्यावर्गः ७५६००००००००० अस्य चतुर्भागोऽयं १८९०००००००० एप इपुवर्गे क्षिप्यते, इपुवर्गश्चायं १००००००००, एकीकृत्यमिदं जातं १९००००००००००,भागपरावृत्त्या एकपष्ट्यधिकशतत्रयेणेपुर्गुण्यते, एकोनविंशतिभागेनैकः स गुणकारः, उपरितनस्य चैकोनविंशतिरेव शून्यचतुष्कापगमेऽनया भागलब्धमिदं १००००० । अधुना बाहुरानीयते, तत्रेदं करणसूत्रं—उदग्धनुःकाष्ठा-

दक्षिणं शोध्यं शेषार्द्धं बाहुरिति, उदग्धनुःकाष्ठमिदं २५३३० चत्वारश्चैकोनविंशतिभागाः, अमुष्माद्दक्षिणं धनुःकाष्ठं पात्यते, तच्चेदं १४५२८ एकादश चैकोनविंशतिभागाः,पातिते उपरितनराशिरयं १०७०२,अधस्तादेकादश कला न पतंति चतसृभ्यः कलाभ्य इतिकृत्वा उपरितनराशेः रूपमवतार्यते, एकोनविंशतिमध्यादेकादश शुद्धा अष्टौ शेषाः, कलाचतुष्टयक्षेपाद् द्वादश जाताः, अर्द्धेन षट्, उपरितनराशिर्न ददात्यर्द्धमतो रूपमेकमवतार्यते,एकोनविंशतिरपि नार्द्धं ददातीत्येकोनविंशते रूपं नीयते, तस्यार्द्धेन अर्द्धकला, अष्टादशानामर्द्धेन नव, नव षट् च पञ्चदश कलाः सार्द्धा जाताः, उपरितनराशेरर्द्धं चेदं ५३५०, एतावती बाहुः क्षुल्लहिमवत इति, अनेन परिक्षेपाद्यानयनकरणाभ्युपायेन सर्वक्षेत्राणां सर्वपर्वतानां चायामविष्कम्भज्येषुधनुःकाष्ठप्रमाणान्यवगन्तव्यानीति।× अपरे पुनर्विद्वांसोऽतिबहूनि स्वयं विरचय्यास्मिन् प्रस्तावे सूत्राण्यधीयते विस्तरप्रदर्शनाभिप्रायेण, तत्रयुक्तम् , अयं संग्राहिणा संक्षेपः कृत इत्यत्र विस्तराभिधानमप्राचीनमाचक्षते प्रवचननिपुणाः, अथ विस्तरतो विभक्तिस्ततो ग्रन्थलक्षापरिभाषितायाः जम्बूद्वीपदेशनायाः पदुप्रज्ञैस्तैर्विस्तृणद्भिरपि कियदत्र विस्तृतं स्यात्?, विस्तरार्थिनो बहुगुणः सिद्धान्त एव तत्कृतसूत्रेभ्यः इत्यत उपेक्षणीयमवद्भिप्राय इति×॥ एवमिमां जम्बूद्वीपवक्तव्यतां परिसमाप्य समासतः सम्प्रति द्वीपान्तरवक्तव्यतामभिधित्सयोवाच—

द्विर्धातकीखण्डे ॥ १२ ॥ सूत्रं ॥

'य एते मंदरवंशा'इत्यादि (पृष्ठं ८५-१) भाष्यं. लवणजलधेर्बहिर्धातकीखंडः द्वीपः, धातकीवृक्षसम्बन्धाद् , वलयाकृतिलक्षणचतुष्टयविष्कम्भः,तस्मिन् धातकीखण्डे मन्दरादयो जम्बूद्वीपमन्दरादिभ्यः संख्यया द्विगुणद्विगुणमाना वेदितव्याः, जम्बूद्वीपे मेरुरेकः, तत्र द्वौ, पूर्वापरदिग्मध्यव्यवस्थितौ मेरू, वंशा भरतादिक्षेत्राण्यैरवतपर्यवसानानि, तानि च तत्र द्विसंख्यायुक्तानि,

प्रत्येकं वर्षधरा हिमवदादयः पर्वता वैताढ्यादयश्च तेऽपि तत्र द्विर्द्विः स्थिताः,एते च सर्वेऽपि मन्दरादयो द्वाभ्यामिष्वाकारपर्वताभ्यां ऋजुभ्यामित्यर्थः दक्षिणोत्तरदिग्मध्यव्यवस्थिताभ्यां दक्षिणोत्तरायताभ्यां च विभक्ता विच्छिन्नाः, पूर्वार्धे चापरार्द्धे च व्यवस्थिताः, एतैरेव नामभिर्जम्बूद्वीपकैः समा संख्या येषां भरतादिक्षेत्राणां ते जम्बूद्वीपकसमसंख्याः चक्रनाभिप्रतिबद्धारकसंस्थिताः, तत्र वर्षधरपर्वता निषधगिरिसदृशोच्छ्रायाः, चतुर्योजनशतोच्चा इत्यर्थः, कालोदलवणजलस्पर्शिनो वंशधरसेष्वाकाराः कालोदसमुद्रो धातकीखण्डपरिक्षेपी लवणसमुद्रो जम्बूद्वीपपरिक्षेपी एतयोर्जलं कालोदलवणजलं तत् स्प्रष्टुं शीलमेषामिति कालोदलवणजलस्पर्शिनो हिमवदादयः, सह इष्वाकारपर्वताभ्यां पंचयोजनशतोच्चाभ्यामिति, धातकीखण्डवर्त्तिनश्च हिमवदादयो जम्बूद्वीपकहिमवदादिविच्छेदप्रतिनिषधाव्यवस्थिताः,वैताढ्यादयः क्षेत्राणि चेति, अरविवरसंस्थिता वंशा इति, अराणां विवराणि–अन्तरालानि तद्वद् व्यवस्थिताः वंशाः क्षेत्राणि तत्रेति, संक्षेपात्तु प्रतिपत्तव्यमिदं,यन्नाम किंचिन्नदीदेवकुरूत्तरकुरुप्रभृति जम्बूद्वीपेऽभिहितं तत् सर्वं धातकीखण्डे द्विर्द्विरवमातव्यमिति, यथैव धातकीखण्डे जम्बूद्वीपविधिरुक्तस्तथैव—

पुष्करार्द्धे च ॥ १३ ॥ सूत्रं ॥

पुष्करद्वीपः कालोदकसमुद्रपरिक्षेपी षोडशलक्षाविष्कम्भस्तस्यार्द्धमारात्तनमष्टौ योजनलक्षास्तस्मिन् पुष्करार्द्धे,जम्बूद्वीपवद्विविधिर्द्रष्टव्यः, यश्च धातकीखण्डे विधिरुक्त इष्वाकारौ दक्षिणोत्तरदिग्मध्यव्यवस्थितौ दक्षिणोत्तरायतौ पंचशतोच्चौ द्वौ, तथा मंदरौ चतुरशीतिसहस्रोच्छ्रायादिकौ, वंशधराः चतुःशतोच्चा इत्येवमादिकः संख्याविशेषनियमः स पुष्करार्द्धेऽप्यशेषो वेदितव्य इति, 'ततः पर'मित्यादि भाष्यम्, आ आरात्तनपुष्करार्द्धात् परतः समनन्तरो धान्यपल्यकार्द्धाकृतिर्वलयवृत्तो मानु-

शेषमुच्छ्रायादि सुज्ञानं
पोत्तराभिधानो गिरिर्मनुष्यलोकपरिक्षेपी महानगरप्रकारप्रतीकाशः कनकमयः पुष्करद्वीपार्द्धविभागकारीति, शेषमुच्छ्रायादि सुज्ञानं
'न कदाचिन् मम्मावि'त्यादि (पृ.८६-१)अस्मात् मानुषोत्तराद् गिरेः परतो न नरो ध्रियते, तथा संहरणतोऽपि न मन्ति मनु-
ष्यान्तर, संहरणं नाम वैरायनुबंधान् केनचिद्देवविद्याधरादिना इत्यमनुष्यः, ततोऽत्रोत्क्षिप्य नीयेतायं यत्रोर्ध्वशोषं शुष्यतु
म्रियतां वाप्यकृतप्रतीकारः क्षिप्रम्, एवं वैरादिनिर्यातनार्थं संहरणममूनि विहाय क्रियते "समणिं अवगतवेदं परिहारपुलागमप्प
मत्तं च। चोद्दसपुव्विं आहारगं च णवि कोइ संहरइ ॥ १ ॥ इदमपि संहरणतो न. मनुष्यास्ततः परत इति, अवश्यं हि मनु-
ष्येण मर्तव्यं अन्तरे मानुषोत्तरनगस्येति, तथा.'चारणविद्याधरर्धिप्राप्ताश्चे'ति मनुष्यास्तमुल्लंघ्य गताः सन्तः परतो न म्रियन्त
इति नियम्यते, न पुनर्गमनमेषां मानुषोत्तराद्बहिर्निषिध्यते, तपोविशेषानुष्ठानाज्जङ्घाचारिणो विद्याचारिणश्च संयता नन्दीश्वरादि-
द्वीपान् गच्छन्ति चैत्यवन्दनार्थं, प्रसिद्धश्चायमावश्यकादिष्वपि प्रायो विधिः, तथा विद्याधरा महाविद्यासम्पन्नाः, ऋद्धिप्राप्ताश्च
वैक्रियादिशरीरभाजः सर्वे गच्छंति परतो, नतु प्राणान् परित्यजयंति तत्रैवेति, एवंविधा अतिशयप्राप्ता अपि तत्र नो म्रियन्ते,
स्मृत निगतिमपमनुष्या इति दर्शयति-'अन्यत्र समुद्घातोपपाताभ्या'मित्यपोद्यते,मारणान्तिकसमुद्घातेन समुपहतः कश्चिदर्द्ध-
तृतीयद्वीपान्तरवर्त्ती बहिर्द्वीपसमुद्रेषूत्पत्स्यते तेन चोत्पत्तिप्रदेशे प्रक्षिप्तमात्मप्रदेशजालमिलिकागतिना पश्चात्तु म्रियते तत्र व्यव-
स्थित इति, तथा उपपातमङ्गीकृत्य जन्माभिसम्बध्यते, बहिर्द्वीपसमुद्रवर्त्तिनाऽसुमता येन मनुष्यायुर्निबद्धमर्धतृतीयद्वीपाभ्यन्तरे
उत्पत्स्यते वक्रगत्या तस्य तन्मनुष्यायुर्वक्रकाले विपक्ष्यते, तदैव चासौ मनुष्यो जातः, तदुदयवर्त्तित्वात्, तथा चागमः-"मणु-
स्से णं भंते! मणुस्सेसु उववज्जइ अमणुस्से मणुस्सेसु उववज्जइ?, गोयमा! मणुस्से मणुस्सेसु उववज्जइ, नो अमणुस्से मणुस्सेसु

उववज्जइ" एवं समुद्घातोपपातौ विरहय्य नान्येन प्रकारेण बहिर्मानुषोत्तरधरणिधरान्मरणं मनुष्याणां जन्म वा संभाव्यत इति× ये त्वेतद् भाष्यं गमनप्रतिषेधद्वारेण विद्याधरऋद्धिप्राप्तानामाचक्षते तेषामागमविरोधः, सर्वेषां हि चारणादीनामागमे गमनाभ्यनुज्ञानात्×, बहिर्जन्ममरणे न सम्भाव्येते, इत्यवधिकृत्येदमुच्यते—'अत एव मानुषोत्तर' इति, (८६-४) 'तदेवमर्वाग्मानुषोत्तरस्ये'त्यादि (८६ ५) भाष्यं, व्यावर्णितलक्षणस्य मानुषोत्तरस्य गिरेरर्वाक् जम्बूद्वीपधातकीखण्डपुष्करार्द्धान्यर्द्धतृतीया द्वीपाः,लवणकालोदसमुद्रद्वयं,जम्बूद्वीप एको धातकीखण्डे द्वौ पुष्करार्द्धे च द्वावेवं पञ्च मन्दराः, जम्बूद्वीपे भरतादीनि सप्त क्षेत्राणि धातकी खण्डे चतुर्दश पुष्करार्धे चतुर्दश एवं पंचत्रिंशत् क्षेत्राणि, जंबूद्वीपे हिमवदाद्याः षट् धातकीखण्डे द्वादश पुष्करार्द्धे द्वादश एवं त्रिंशद्वर्षधरपर्वताः, जम्बूद्वीपे एको धातकीखण्डे द्वौ पुष्करार्धे द्वौ चैवं पञ्च देवकुरवः, एवमेव पञ्चोत्तराः कुरवः, जम्बूद्वीपे द्वात्रिंशत् धातकीखण्डे चतुःषष्टिः पुष्करार्द्धे च एवं षष्ट्यधिकं शतं चक्रवर्त्तिविजयानां, पंचसु भरतेषु ऐरवतेषु प्रत्येकं पञ्चविंशतिर्जनपदाः अर्द्धं चार्याः,एते दशगुणा द्वे शते पचपंचाशदधिके जनपदानामार्याणां,जम्बूद्वीप एव हिमवतः प्राक्पश्चाद्दिक्षु सप्तसप्तान्तरद्वीपा एकत्र अष्टाविंशतिस्तथा शिखरिणोऽप्यष्टाविंशति, एवमेते षट्पंचाशद्भवंति, उत्सेधाङ्गुलं सहस्रगुणितं प्रमाणाङ्गुलं भवति,तन्मानेन चैषां द्वीपक्षेत्रगिरिकूटसरित्सागरकाण्डपातालभवनकल्पविमानादीनां विष्कम्भायामपरिधयो ग्राह्याः,× क्षेत्रादीनि च यथावत् परिमाणतो ज्ञात्वा तत्प्रत्ययार्थं संख्यान युक्तं, तच्च गणितज्ञेभ्यः साक्षात् सम्बन्धिफलत्वादव्यभिचारि प्रत्येतव्यं, यैश्च क्षेत्रपरिमाणं सख्यातं तैरवश्य सख्यानशास्त्रं प्रणेय, प्रमेयपदार्थप्रणयने प्रमाणप्रणयनवत्, यद्यपि चेयत्ता आगममात्रप्रतिपाद्या तथाऽप्यत्र सबन्धित्वात् संख्यानशास्त्रं प्रणेयं, प्रतिपादित तदन्यैरपि सख्यानं, तत् सख्यानलक्षणं तु नोक्तं, यदप्युक्तं

तदपि क्षेत्रपरिक्षेपादि व्यभिचरति सर्वं भुवनकोशादिप्रक्रियान्तं प्रतिदर्श्य,प्रायश्च सावर्णिमांसवायनतुद्रादयः(?) ये सातिशयज्योतिषक्षेत्रगणितशास्त्रानभिज्ञानास्तेषामविषय एवायं,यदि नाम मूढतया कश्चिदभिनिवेशनं कुर्यात् स तु प्रतिवृत्तफलकसूत्रदीपच्छायादिप्रत्ययैः प्रत्याय्यो यस्येयान् विष्कम्भस्तस्य परिक्षेपः कियान् भवतीति,संख्याननियमात् पूर्वापराविरोधि, प्रत्यक्षफलं च संख्यानमतः सर्वज्ञज्ञानविषयाभ्यन्तरत्वात् ज्ञानातिशयत्वाच्च महातडागोदरसंस्थितजलद्रव्यपलपरिज्ञानोपायोपदेशवत् तीर्थकरैः सर्वमनयमादर्शितं सर्वज्ञतालाञ्छनमिति, अत्राह—'उक्तं भवते' (८६-९) त्याद्यापातनिकाग्रन्थः । सूत्रेपूक्तं आश्रवप्रस्तावे षष्ठेऽध्याये 'स्वभावमार्दवार्जवत्वं च मानुषस्ये'ति× तत्र के मनुष्या आर्यादिभेदेन व्यवस्थिताः क्व वा द्वीपे क्षेत्रे समुद्रे वा ?, अत्रोच्यते—

प्राग् मानुषोत्तरान्मनुष्याः (३–१४)

मानुषोत्तरगिरिमर्यादान्यवच्छिन्नाः पञ्चविंशत्सु भरतादिक्षेत्रेषु सान्तरद्वीपेषु जन्मासादयन्त मनुष्याः,एतेन भाष्येण न व्याप्तिरर्द्धतृतीयद्वीपानां समुद्रद्वयस्य च दर्शिता, अधुना व्याप्तिमादर्शयति-'संहरणविद्यर्द्धियोगाच्चेति''भारतका'इत्यादि,(८७-२) सर्वत्र संहरणादिभिः कारणैः सन्निधानं स्यान्मनुष्याणामिति। एवमेषां स्थानं निरूप्य मनुष्याणां क्षेत्रादिविभागेन भेदमाख्याति-''भारतका'इत्यादि(८७–४) सुज्ञानं ॥ अधुनैषां क्षेत्रादिकृत एव विभागो विशेष्यते कर्म्मनिर्वृत्तिसंश्रयेण, अतस्तदाख्यानायाह—

आर्या म्लिशश्च (३–१५)

चशब्दोऽनेकभेदत्वमनयोः आपादयति। ' द्विविधा 'इत्यादि भाष्यं, । ( ८७–७ ) तत्रार्द्धषड्विंशतिजनपदजातान्वयजा आर्याः, अन्यत्रजा म्लेच्छाः, तत्र क्षेत्रजातिकुलकर्मशिल्पभाषाज्ञानदर्शनचारित्रेषु शिष्टलोकन्यायधर्मानुगताचरणशीला आर्याः,

एतद्विपरीता म्लेच्छा अत्यन्ताव्यक्तानियतभाषाचेष्टत्वात्, 'तत्र आर्याः षड्विधा' इत्यादि, क्षेत्रजातिकुलकर्म्मशिल्पभाषाभेदेन, 'तत्र क्षेत्र आर्या इत्यादि सुज्ञानं, 'जात्यार्या इक्ष्वाकव' (८७-११) इत्यादि सर्वे एते जातिभेदाः केनचित् निमित्तांतरेणाध्यवसेयाः, 'कुलार्याः' इत्यादि (८७-१३) निमित्तभेदेन भिद्यन्ते, अपरे परिभाषन्ते पित्रन्वयो जातिः मात्रन्वयः कुलं 'कर्म्मार्या' इत्यादि (८७-१५) अनाचार्यजं किल कर्म्म, तत्रार्याः कर्म्मार्या इति, आचार्योपदेशशिक्षितं शिल्पं तन्तुवायादि, तत्रार्याः शिल्पार्या इत्यादि 'भाषाऽऽर्या नामे' त्यादि (८८-१) शिष्टाः-सर्वातिशयसम्पन्ना गणधरादयः तेषां भाषा संस्कृताऽर्धमागधिकादिका च, तत्र शिष्टभाषानियता अकारादयो वर्णा विशिष्टेन पौर्वापर्येण सन्निवेशिताः यस्य शब्दप्रधानसंव्यवहारस्यासौ शिष्टभाषानियतवर्णस्तं,लोकरूढ्याऽत्यन्तप्रसिद्धः संव्यवहारे,तमेवंविधं पंचविधानामार्याणां क्षेत्रादिकं भाषंते ये ते भाषाऽऽर्याः इति । 'एतद्विपरीता म्लिशः' (८९-४) उक्तक्षेत्रजातिकुलकर्म्मशिल्पभाषाव्यतिरिक्तक्षेत्रादिषट्कभाजः सर्वे म्लिशो भवंति, शकयवनकिरातकांबोजवाल्हीकादयोऽनेकभेदाः, तथा अन्तरद्वीपकाः किल म्लेच्छा एव, क्षेत्रादिषट्कविपर्ययात् 'तद्यथा-हिमवतः प्राक् पश्चाच्च विदिक्षु' इत्यादि भाष्यं (८९-४) हिमवतः प्राग्भागे पश्चाद्भागे च विदिक्षु पूर्वोत्तरान्तरालादिषु त्रीणि त्रीणि योजनशतानि लवणजलधिमवगाह्य द्वीपकाः प्रथमतः सन्निविष्टाः, तासां मनुष्यविजातीनामेकोरुकादीनां पूर्वोत्तरस्यां दिशि त्रीणि योजनशतान्यवगाह्य लवणसागरजलं त्रिशतायामविष्कम्भः प्रथम एकोरुकाभिधानो द्वीप एकोरुकपुरुषाणामधिवासः, द्वीपनामतः पुरुषनामानि, ते तु सर्वाङ्गोपाङ्गसुन्दरा दर्शनमनोरमा एकोरुका एवेत्येवं शेषा अपि वाच्याः, तथा दक्षिणपूर्वस्यां दिशि ( लवणजलधिमवगाह्य ) हिमवतः त्रीणि शतानि त्रिशतायामविष्कम्भः प्रथमो द्वीप आभाषिकाभिधानः

आभाषिकमनुष्याणाम्, तथा दक्षिणापरस्यां दिशि हिमवतः त्रीणि शतानि लवणजलमवगाह्य त्रिशतायामविष्कम्भो लाङ्गुलिकमनुष्याणाम्, तथोत्तरापरस्यां त्रीणि शतान्यवगाह्य लवणजलं त्रिशतायामविष्कम्भः प्रथमकाभिधानः प्रथमद्वीपो लाङ्गुलिकमनुष्याणाम्, तथोत्तरापरस्यां ... योजनशतान्यवगाह्य हिमवतो लवणोद्वीपो वैषाणिकनामा वैषाणिकमनुष्याणाम्, एवं हयकर्णगजकर्णगोकर्णशष्कुलीकर्णाश्चत्वारि योजनशतान्यवगाह्य हिमवतो लवणोदधिं पूर्वोत्तरादिविदिक्षु चतुर्योजनशतायामविष्कम्भाश्चत्वारो द्वीपा भवन्ति, एवं शेषचतुष्काण्यपि विजानीयात् यावत् अन्त्यो द्वीपः शतानि नवावगाह्य लवणजलधिं नवयोजनशतायामविष्कम्भो विदिशि भवतीति, गजमुखव्याघ्रमुखादर्शमुखगोमुखा अश्वमुखहस्तिमुखसिंहमुखव्याघ्रमुखा अश्वकर्णसिंहकर्णहस्तिकर्णकर्णप्रावरणा उल्कामुखविज्जुजिह्वमेषमुखविद्युद्दंता घनदंतगूढदन्तविशिष्टदन्तशुद्धदन्ताख्याः, एते च युग्मप्रसवाः पल्योपमासंख्येयभागायुषः अष्टधनुःशतोच्चाः पुरुषा भवन्ति, एवमेवाष्टाविंशतिरन्तरद्वीपकानां हिमवद्गिरिप्राग्परपर्यन्तप्रभवा भवन्त्युक्तेन न्यायेन, तथा हैरण्यवतैरवतकक्षेत्रविभागकारिणः शिखरिणोऽप्येवमेव पूर्वोत्तरादिविदिक्षु क्रमेण अमुनैव नामकलापेन चान्तरद्वीपकानामष्टाविंशतिर्भवति, एकत्र षट्पञ्चाशत् अन्तरद्वीपका भवन्ति, एतच्चान्तरद्वीपकभाष्यं प्रायो विनाशितं सर्वत्रकैरपि दुर्विदग्धैः, येन षण्णवतिरन्तरद्वीपका भाष्येषु दृश्यन्ते, अनार्षं चैतदध्यवसीयते, जीवाभिगमादिषु षट्पञ्चाशदन्तरद्वीपकाध्ययनात्, नापि च वाचकमुख्यः सूत्रोल्लङ्घनेनाभिदधात्यसंभाव्यमानत्वात्, तस्मात् सैद्धान्तिकपाशैर्विनाशितमिदमिति ॥ तदस्मिन् आर्यानार्यविकल्पे मनुष्यक्षेत्रे काः कर्म्मभूमयोऽकर्म्मभूमयश्चेत्यत आह—

भरतैरावतविदेहाः कर्म्मभूमयोऽन्यत्र देवकुरूत्तरकुरुभ्य इति ॥ ३–१६ ॥ सूत्रम् ॥

'मनुष्यक्षेत्र' इत्यादि भाष्यम् (८९-११) अर्द्धतृतीयद्वीपाभ्यन्तरे पञ्च भरतानि पंचैरावतानि पंच विदेहाः पंचदश कर्म्म-

भूमयो भवंति,कार्त्स्येन प्राप्ते कर्मभूमित्वे विदेहानामपवादः क्रियते–देवकुरूत्तरकुरुवर्ज्या विदेहाः कर्म्मभूमयो भवन्तीति, तदन्तःपातित्वान्निषेधः, अथ कः कर्म्मभूमिशब्दार्थ इति, आह–'संसारदुर्गातगमकस्ये'त्यादि (८९-१२),मार्गो विशिष्यते, संसारो नारकादिभेदः स एव दुर्गो–गहनमनेकजातिप्रमुखत्वाद्दुःखात्मकत्वाच्च तस्यान्तः–पारं संसारदुर्गान्तस्तं गमयति–प्रापयति यस्तस्य संसारदुर्गान्तगमकस्य,'सम्यक्त्वज्ञानचरणात्मकस्ये'ति मोक्षाङ्गानामियत्तामावेदयति, एवंविधमोक्षपथस्य ज्ञातारस्तीर्थंकराः, यथावदवगन्तार इत्यर्थः, कर्त्तार इति प्रणेतारः प्रदर्शयितार इतियावत् , नित्यत्वात् प्रवचनार्थस्येति,सम्यक्त्वाद्यात्मकं तीर्थं तत्प्रणयनात् तीर्थंकरा भवन्ति, गणधरादिप्रव्राजनाद्वा, वाग्योगेन चोपदिशन्ति भगवन्त इत्युपदेष्टारः, श्रुतज्ञानाभावादिति सूचयति, यशोलक्ष्म्यादियोगाद्भगवन्तः,परमर्षयः कृतार्थत्वे सति सन्मार्गोपदेशेन भव्यसत्त्वाभ्युद्धरणात्, तीर्थकरणहेतवस्तच्छीलास्तदनुलोमवृत्तयो वा तीर्थंकराः, 'अत्रोत्पद्यन्ते' पंचदशसु क्षेत्रेषु, एतेष्वेव पुनः सकलकर्म्मक्षयं विधाय सिद्धिमभिधावन्ति, नान्यत्र क्षेत्र इति, अतो निर्वाणाय कर्म्मणः सिद्धभूमयः कर्म्मभूमय इति, अतः सकलकर्म्माग्निविध्यापनाय सिद्धिप्राप्तौ भूमयः कर्म्मभूमयोऽभिधीयन्त इति परिशेषः, लब्धमकर्मभूमिशब्दार्थमाख्याति–'शेषास्त्वि'त्यादि (९०–२) जम्बूद्वीपे हैमवतहरिवर्षरम्यकहैरण्यवताख्याश्चतुरो वंशाः, एते एव धातकीखण्डेऽष्टौ द्विगुणाः पुष्करार्द्धेऽष्टौ एकत्र विंशतिर्वंशाः, सह अन्तरीपैरेकोरुकादिभिः षट्पंचाशद्भिरकर्म्मभूमयो भवन्ति, तीर्थकरजन्मादिरहितत्वात्, पूर्वोपोद्दितमर्थमुपसंहरति–'देवकुरूत्तरकुरवस्तु कर्म्मभूम्यभ्यन्तरा अप्यकर्मभूमय इति,(९०-३) सर्वदा चरणप्रतिपत्तेरभावादित्यवगमयति ॥ अथैते मनुष्या आर्यादिभेदवर्त्तिनः कियन्तं कालमनुपाल्यायुः प्राणान् विजहतीत्याह—

नृस्थिती परापरे त्रिपल्योपमान्तर्मुहूर्त्ते ॥ ३-१७ ॥ सूत्रम् ॥

'नरो नर' इत्यादि भाष्यम् (९०-६) पर्यायख्यानेन व्याख्यानमेतत् नृशब्दस्य, परा-उत्कृष्टा स्थितिः-आयुषोऽवस्थानं जीवितकालः त्रीणि पल्योपमानि मनुष्याणां, एतानि चाद्धापल्योपमेन जीवानामायूंषि गण्यन्ते, अपरा अन्तर्मुहूर्त्ता जघन्या स्थितिरायुषोऽन्तर्मुहूर्त्तपरिमाणा भवति।

तैर्यग्योनीनां च ॥ ३-१८ ॥ सूत्रम् ॥

तिर्यग्योनिजानामप्येवमेवोच्यते स्थितिः आयुषः,समानप्रक्रमत्वात्, 'तिर्यग्योनीनां चे' त्यादि भाष्यं (९०-८)तिर्यग्योनयः पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुःपंचेन्द्रियाः तेषामपि परापरे स्थिती जीवितव्यस्य त्रिपल्योपमान्तर्मुहूर्त्ते भवतः, यथासंख्यमुत्कृष्टजघन्यस्थिती बोद्धव्ये, 'पृथग्योगकरणं यथासंख्यदोषविनिवृत्त्यर्थ' मित्यादि, (९०-१०) नृतिर्यग्योनीनां स्थितिः परापरे त्रिपल्योपमान्तर्मुहूर्त्तेत्येवं न्यासे सति त्रिपल्योपमा परा स्थितिर्मनुष्याणां अपरा स्थितिः तिरश्चामन्तर्मुहूर्त्तप्रमाणेत्येवं मा भूत् ग्रहार्थं इत्याचार्याभिप्रायः,×न खल्वेवमपि न्यस्यमाने कश्चिद्दोषः, स्थिती परापरे इति समुदितमेवेदं समासपदत्वादभिसंमन्त्स्यते, नृणां स्थिती परापरे त्रिपल्योपमान्तर्मुहूर्त्ते तिरश्चा च, व्याख्यानतोऽविच्छेदः, आर्षानुवादित्वाद्वा अस्य सूत्रप्रबन्धस्येति× ॥ 'द्विविधा चैषा' मित्यादि भाष्यम् ( ८०-१२ )। नृतिरश्चां द्विप्रकारा स्थितिरायुषो-भवस्थितिः कायस्थितिश्च, तत्र भवस्थितिर्मनुष्यजन्म लब्ध्वा तिर्यग्जन्म वा कियन्तं कालं जीवति जघन्यत उत्कर्षेण चेति,कायस्थितिर्मनुष्यो भूत्वा तिर्यग्योनिजो वा मरणमनुभूय पुनर्मनुष्येष्वेव मनुष्यः तिर्यक्षु च तैर्यग्योनिर्नैरन्तर्येण कतिकृत्वः समुत्पद्यते ?,तत्र मनुष्याणां यथोक्तत्रिपल्योपमान्तर्मुहूर्त्ते

गरापरे भवस्थिती, कायस्थितिः सप्ताष्टौ वा भवग्रहणानि, प्रकर्षतः सप्त वाऽष्टौ वेति नैरन्तर्येण मानुषः स्यात्, कथं पुनरिदं?, भाव्यते–पूर्वकोट्यायुर्मनुष्यो मृत्वा पुनः पुनः पूर्वकोट्यायुरेव मनुष्यः सप्तकृत्वः प्रादुरस्तीति, अष्टमभवे तु देवकुरूत्तरकुरुषूत्पद्यते, पश्चाद्देवलोकं गच्छति, 'तिर्यग्योनिजानां चे'त्यादि, (९०–१६) उक्ते भवस्थिती सङ्ग्रहतः, व्यासतस्तु शुद्धपृथिव्या द्वादश वर्षसहस्राणि खरधरणेः द्वाविंशतिरित्येवमादि सुज्ञानं, एषां पृथिव्यप्तेजोवायुप्रत्येकवनस्पतीनां कायस्थितिरसंख्येया अवसर्पिण्युत्सर्पिण्यः, साधारणवनस्पतेरनन्ता अवसर्पिण्युत्सर्पिण्यः, 'द्वीन्द्रियाणा'मित्यादि (९१–४) सुज्ञाना भवस्थितिः, एषां कायस्थितिः संख्येयानि एव वर्षसहस्राणि, 'पंचेन्द्रिये'त्यादि (९१–६) सुज्ञानं, सप्ताष्टौ वा भवग्रहणानि मनुष्यवद्भावनीयानि, 'सर्वेषा'मित्यादि (८१–१३) मनुष्यतिरश्चामपरा कायस्थितिः जघन्याऽन्तर्मुहूर्त्तप्रमाणैव भवतीति ॥ **तृतीयोऽध्यायः समाप्तः**

नमोऽर्हते ॥ इदानीं चतुर्थ आरभ्यते–अत्र चायं सम्बन्धग्रन्थः, 'अत्राह–उक्तं भवते'त्यादि (८२–१) किमुक्तमित्याह–'भवप्रत्ययोऽवधिर्नारकदेवाना'मिति प्रथमेऽध्याये, तथा द्वितीय औदयिकेषु (भावेषु) प्ररूप्यमाणेषु 'देवगति'रित्युक्तं, एवमष्टमे 'केवलिश्रुतसंघधर्मदेवावर्णवादो दर्शनमोहस्य' आश्रव इति वक्ष्यते, तथाऽत्रैव 'सरागसंयमादयो दैवस्य' आयुष आश्रव इति वक्ष्यते, आदिशब्दात् सरागसंयमसंयमासंयमाकामनिर्जराबालतपांसि (च) दैवस्येति सूत्राक्षेपः, तथा द्वितीये 'नारकसम्मूर्च्छिनो नपुंसकानि' 'न देवा' इत्युक्तं, एवमनेकधा देवशब्दश्रुतेः संजातजिज्ञासः पृच्छति–'तत्र के देवाः' कतिविधा वेति' (९२–५) तत्र–तेषु सूत्रेषु के देवाः प्रतिपत्तव्याः, क्रीडाद्यर्थबहुत्वात्, कतिविधा वा–कतिभेदा वेति प्रश्नद्वये सूरि-

राह-अत्रोच्यते प्रतिवचनं—

देवाश्चतुर्निकायाः इति ॥ ४-१ ॥ सूत्रम् ॥

प्रश्नद्वयेऽप्यनुरूपं प्रतिवचनमिति सूत्रसमुदायार्थः। अवयवार्थं त्वाह-'देवा' (९२-८) इत्यादिना ग्रन्थेन, तत्र दीव्यन्तीति
देवाः-स्वच्छन्दचारिणः अनवरतक्रीडासक्तचेतसः परमद्युतिमन्तः प्राणिन एव, ते चतुर्निकाया भवन्ति, चत्वारो निकाया-नि-
वासाः संघा वा येषां ते चतुर्निकाया भवन्तीति, देवगतिनामकर्मोदयाद्भवनादिषूत्पद्यन्त इत्यर्थः, अनेनातिमुग्धपरिकल्पितनित्य-
देवव्युदासः, 'तान् पुरस्ताद्वक्ष्यामः' इति तान् एतान् निकायभेदभिन्नान् देवान् पुरस्तात्-पुरो वक्ष्यामः, उद्देशमात्रोपन्या-
सस्त्वयं, ननु च भगवत्यां-"कइविहा णं भंते! देवा पण्णत्ता?, गोयमा! पंचविधा देवा पण्णत्ता, तंजहा-भविअदव्वदेवा णर-
देवा धम्मदेवा देवाहिदेवा भावदेवा य," भव्यद्रव्यदेवा-एकभविकादयः, नरदेवाश्चक्रवर्त्तिनः, धर्म्मदेवाः साधवः, देवाधिदेवाः
तीर्थकराः, भावदेवा भवनपत्यादयः, एवं पञ्चभेदेषु सत्स्वेतेषु किमथ चतुर्निकाया इत्युपन्यासः?, उच्यते, भावदेवाभिधानार्थः, तद-
न्येषां मनुष्यभेदत्वात् इत्यादि, अत एव प्राधान्यत इदमाह—

तृतीयः पीतलेश्य इति ॥ ४-२ ॥ सूत्रम् ॥

समुदायार्थः प्रतीतः, अवयवार्थं त्वाह-'तेषा'मित्यादि भाष्यम् (१२-१०) तेषां चतुर्णां देवनिकायानां 'भवणवइवाणमंतर-
जोइसवासी विमाणवासी य'त्ति प्रवचनप्रसिद्धक्रमाणां तृतीयो निकायः तत्सूत्रार्थक्रमोक्तः, किमित्याह-पीतलेश्य इति, तेजोलेश्य एव
भवति, न कृष्णादिलेश्य इति, अवधारणं सूत्रे न, सामर्थ्यगम्यमेतत्, सूचनात् सूत्रमितिकृत्वा, कथमसौ तृतीय इत्याह-ज्योति-

एका इति, लेश्याग्रहणं चेह [डौ] क्रीडार्थप्रधानांगताख्यापनार्थं, तृतीयग्रहणं चाश्रयप्रत्यक्षतया सुखप्रतिपत्त्यर्थमिति ॥ शेषान् निकायान् भेदतोऽभिधातुमाह—

दशाष्टपञ्चद्वादशविकल्पाः कल्पोपपन्नपर्यन्ता इति ॥ ४-३ ॥ सूत्रम् ॥

प्रस्तुताश्चत्वारो निकाया इति सूत्रसमुदायार्थः,अवयवार्थस्तु सुगमः 'ते च देवनिकाया'इत्यादि (१२-१३) भाष्यादेव, नवरं कल्पोपपन्नपर्यन्ता इति, अत्र कल्पशब्दोऽधिवासवाची, सौधर्मादिष्विति कल्पोपलक्षणं,कल्पोपपन्नः पर्यन्त एषामिति विग्रहः,अनेन तदतीतग्रैवेयकमहाविमानद्वयापक्षेप इति॥ दशादीनि प्रत्येकं पुनर्विभित्सुराह—

इन्द्रसामानिकत्रायस्त्रिंशपारिषद्यात्मरक्षलोकपालानीकप्रकीर्णकाभियोग्यकिल्बिषिकाश्चैकैकश इति ॥ ४-४ ॥ सूत्रम् ॥

एकैकदेवनिकाये दश दशैते भेदा उत्सर्गतः भवन्ति, सूत्रसमुदायार्थः, अवयवार्थं त्वाह—'एकैकशश्चे'त्यादिना, (८३-३) एकैकशश्च—एकैकस्मिन् एतेषु देवनिकायेषु, किमित्याह—देवा दशविधा भवन्ति इन्द्रादिभेदेन, 'तद्यथे'त्यादिना, प्रकटार्थं, नवरमिन्द्रास्तद्भवनाद्यपेक्षया परमैश्वर्यभाजः, समानस्थानभवाः सामानिकाः, 'समानस्य तदादेश्चे'ति वचनादौपसंख्यानिकः, त्रयस्त्रिंशदेव त्रायस्त्रिंशाः,स्वार्थे ष्यण्,अर्थचरो राजस्थानीयकल्पः,दण्डनायको—निक्षेपाधिपतिः,अनीकानि—सैन्यानि प्रकीर्णको—विषयाभिमुखीकृतः, कर्म्मविशेषोऽभियोगः तत्कर्म्माभियोग्यं तदेषां विद्यत इत्याभियोग्याः, किल्बिषिकाः—अन्तस्थाश्चण्डालादय इति, लोकस्वभावत एतदित्थमेषामिति॥ एवमिममुत्सर्गमभिधायैकशो ग्रहणेनाधुनाऽपवादमाह—

त्रायस्त्रिंशलोकपालवर्ज्या व्यन्तरज्योतिष्का इति ॥४-५॥ सूत्रम् ॥

समुदायार्थावयवार्थौ प्रतीतावेव ॥ निकायेष्विन्द्रव्यवस्थानियममाह—

पूर्वयोर्द्वीन्द्रा इति (४-६) ॥ सूत्रम् ॥

इदमपि प्रतीतसमुदायार्थमेव, नवरं ज्योतिष्काणां तु बहवः सूर्याश्चन्द्रमसश्चेन्द्राः,असंख्येयद्वीपसमुद्रवर्त्तित्वात्, तथा स्वकल्पाह्वा इति स्वकल्पाख्याः, माहेन्द्रे माहेन्द्रः ब्रह्मलोके ब्रह्मा लान्तके लान्तकः महाशुक्रे महाशुक्रः सहस्रारे सहस्रारः आनतप्राणतयोरप्येक एवेन्द्रः प्राणताभिधानः, आरणाच्युतयोरपि कल्पयोरेक एवेन्द्रः अच्युतः, 'परतस्त्वि' त्यादि (९५-२), अच्युतकल्पात् परतः पुनर्ग्रैवेयकानुत्तरविमानेषु, किमित्याह—इन्द्रादयो दश विकल्पाः प्रागुक्ता न भवन्ति, किं तर्हि?,ते सर्वे एव देवाः स्वतन्त्रा इत्यहमिन्द्रा गमनागमनादिरहिताश्च प्रायः प्रयोजनाभावादिति ॥

पीतान्तलेश्या इति ॥ ४-७ ॥ सूत्रम् ॥

प्रक्रमात् सम्बद्धार्थमेव, प्रतीतसमुदायार्थं च॥ 'पूर्वयो'रित्यादि भाष्यम् (५-४), पूर्वयोर्निकाययोः—भवनपतिव्यन्तरयोः देवानाम्,उपलक्षणत्वाद्देवीनां च, किमित्याह—पीता अन्ते यासां लेश्यानां ताः पीतान्ताः—कृष्णनीलकापोततैजस्यश्चतस्रो लेश्या भवन्ति,लाघवार्थमेतदुत्तरत्रैतयोर्लेश्यानभिधानादिति॥ एते च सर्वे त्रिविधा देवा भवन्ति—सदेवीकाः सप्रवीचाराः १ अदेवीकाः सप्रवीचाराः २ अदेवीकाः अप्रवीचारा ३ इति, तत्राद्यानधिकृत्याह—

कायप्रवीचारा आ ऐशानादिति ॥ ४-८ ॥ सूत्रम् ॥

प्रकटमुदायार्थम्, नवरं आऐशानादित्यभिधानाद् ऐशानान् अवधिकृत्येत्यैशानोऽपि कायप्रवीचार एवेति॥

शेषाः स्पर्शरूपशब्दमनःप्रवीचारा द्वयोर्द्वयोरिति ॥ ४-९ ॥ सूत्रम् ॥

प्रायो निगदसिद्धम्, मैथुनसुखप्रेप्सून् मैथुनसुखप्राप्तीच्छाभिमुखीकृतान् उत्पन्नास्थान् प्रादुर्भूतदशान् विदित्वा तत्प्रभावत एवावबुध्य देव्य उपतिष्ठन्ते अपरिगृहीताः सौधर्मैशानदेव्यो गणिकाकल्पाः, ताः स्पृष्ट्वैव च ते देवाः प्रीतिमुपलभन्ते, अल्पसंक्लेशत्वात्, विनिवृत्तास्थाश्च विनिवृत्तादराश्च भवन्ति, अत एव हेतोरिति, एवं सर्वत्र भावनीयं। नवर एता देव्यः अनेन क्रमेणैषां भवन्ति, "सोहम्मि विमाणाणं छच्चेव हवंति सयसहस्साइ। चत्तारि अ ईसाणे अपरिग्गहिआण देवीणं ॥१॥ सपरिग्गहेयराणं सोहम्मीसाण पलिअ साहीअ। उक्कस्स सत्त पण्णा णव पणपण्णा य देवीणं ॥२॥ पलिओवमाइ समयाहिआ ठिई जासिं जाव दस पलिआ। सोहम्मगदेवीणं ताओ उ सणंकुमाराणं ॥३॥ एएण कमेण भवे समयाहियदसगपलिअवुड्ढीए। बंभमहासुक्काण य आरणदेवाण पण्णासा ॥४॥ साहिअपलिआ समयाहिआ ठिई जासि जाव पण्णरस। ईसाणगदेवीओ ताओ माहिंददेवाणं ॥५॥ एएण कमेण भवे समयाहिअपलिअदसगवुड्ढीए। लंतसहस्सारपाणयअच्चुअदेवाण पणपण्णा ॥६॥ इति, एताः प्रतीतार्था एवेति।

परेऽप्रवीचारा इति ॥४-१०॥ सूत्रम् ॥

ग्रैवेयकानुत्तरविमानवासिदेवा इति सूत्रसमुदायार्थः, अवयवार्थं त्वाह—'कल्पोपपन्नेभ्य'इत्यादिना, (९६-१३) एतेभ्यः परे देवा-ग्रैवेयकविमानवास्यादयः अप्रवीचारा भवन्ति, पञ्चविधप्रवीचारापेक्षया, अल्पसंक्लेशत्वात् मन्दरागत्वात् स्वस्थाः कायक्लेशरहितत्वेन शीतीभूताः स्वल्पवेदाग्नितया, न तर्हि सुखभाज एते इत्याशंक्याह—एवंविधप्रवीचारोद्भवादपि कायादिप्रवी-

यागेन्यस्मादपीत्यर्थः, प्रीतिविशेषात् सुखविशेषात् अपरिमितगुणप्रीतिप्रकर्षाः अपरिमितगुणः-असंख्येयगुणः प्रीतिप्रकर्षो येषां ते तथाविधाः, अविपरीतक्रियया अविपरीतसमाधिजपुण्यविपाक एषां, अत आह-परमसुखतृप्ता एव भवन्ति, स्पर्शादिविषयापेक्षाभावात्, स्वांगस्पर्शादीनामेव तद्भावावियोगिनामत्यन्तसौन्दर्यविलसितमेतत्, प्रतनुमोहोदयत्वेनेत्याचार्याः, कथमेते न ब्रह्मचारिण एव उत्पन्ने ?, चारित्रपरिणामाभावात्, अतोऽप्याशयात् शुभतरोऽयं प्रत्यस्तमितसुखादिविकल्पः क्षायोपशमिकादिभाव भेद इति भावनीयं ॥ ग्रन्थान्तरसम्बन्धार्थमाह-'अत्राहे'त्यादि (९६-१६) 'देवाश्चतुर्निकाया' इत्युक्तमध्यायादौ, तथा 'दशाष्टपञ्चद्वादशविकल्पा' इत्येतच, तत् के निकायास्तेषां के वा विकल्पा भेदा दशादय इति, अत्रोच्यते इति प्रश्नसमाधिः, चत्वारो देवनिकायाः, क एते इत्याह-'तद्यथा भवन्ति इत्यादि (९६-१८) ॥ तत्र-

भवनवासिनोऽसुरनागविद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीपदिक्कुमारा इति ॥ ४-११ ॥ सूत्रम् ॥

समुदायार्थावयवार्थावस्य निगदसिद्धौ प्रायो, नवरं भूमिष्ठत्वाद्भवनानि तेषु वस्तुं शीलाः भवनवासिनः नानाविधा नानाभेदाः, कुमारशब्दप्रवृत्तिनिमित्तमाह-'कुमारवदेनदि'त्यादिना (९६-६) असुरकुमारावासेषु इत्यत्रावासाः कायमानस्थानीयाः अतिमनोहरत्वेषु प्रायोऽसुरकुमाराः प्रतिवसंति, कदाचिद्भवनेष्वपि, शेषास्तु नागादयः प्रायो भवनेषु कदाचिच्चाऽऽवासेष्वपि इति। भवनावासस्थानमाह-'महामन्दरस्ये'त्यादि, (९७-११) महामन्दरग्रहणं धातकीखण्डादिमन्दरव्यावृत्त्यर्थं, चिह्नमात्रं चैतद्स्य, योजनसहस्रमात्रावगाहित्वात्, 'दक्षिणोत्तरयोर्दिग्भागयो'रित्यादि, दक्षिणोत्तरस्यां दिशि तिर्यग् बहीषु योजनलक्षकोटीनां कोटीषु, बाहल्यार्धमवगाह्य नवतिसहस्राणि व्यतीत्येति भावः, मध्ये भवन्तीति, आवासास्तूर्ध्वमधश्च प्रत्येकं

योजनसहस्रं निहायेति भाष्यकाराभिप्रायः, न चायमन्याय्यो, बहुश्रुतत्वेनास्य क्वचिदित्थं विशेषदर्शनसम्भवादिति । 'भवप्रत्ययाथे'त्यादि,(९७-१६) भवप्रत्ययाश्च–जन्महेतुकाश्चैषाम्-असुरकुमाराणां, न तु तपोऽनुष्ठानसाध्याः, इमा वक्ष्यमाणाः नामकर्म्मनियमाद्धेतोः अङ्गोपाङ्गादिनामकर्म्मोदयेन स्वजातिविशेषनियताः प्रतिजातिविशेषकारिण्यः विक्रिया भवन्ति–जायन्ते गम्भीराः घनशरीराः श्रीमन्तः सर्वाङ्गसुन्दरा इति ।

व्यन्तराः किन्नरकिंपुरुषमहोरगगन्धर्वयक्षराक्षसभूतपिशाचा इति ॥ ४–१२ ॥ सूत्रम् ॥

इदमपि प्रायो निगदसिद्धमेव,नवरमध इत्यादिना (९७ १६) अन्वर्थमाह, विविधमन्तरमाश्रमानां येषामिति व्यन्तराः, एतदेव स्पष्टयति 'यस्मादित्यादिना, स्वातन्त्र्यतः स्वेच्छया पराभियोगाच्च शक्राद्याज्ञया मनुष्यानपि चक्रधरादीन् केचित् सामान्या भृत्यवदुपचरन्त्यतो विगतान्तरा मनुष्येभ्य इति, 'विविधेषु चे'त्यादि (९८–१३) अतो व्यन्तरा विगतान्तरत्वादिति ॥ तृतीयो देवनिकायः (१०१–६) प्रवचनक्रमप्रामाण्यात्

ज्योतिष्काः सूर्याश्चन्द्रमसो ग्रहनक्षत्रप्रकीर्णताराश्चेति॥ ४–१३ ॥ सूत्रम् ॥

इदमपि प्राय. प्रकटमसुदायावयवार्थमेन, नवरमममासकरणं सूत्रे सूर्याश्चन्द्रमस इत्येवं मः, तथा चापात्, तत्र चन्द्रसूर्यपाठात्, सूर्यचन्द्रमसोः क्रमभेदः कृतः सूत्रकृता, किमर्थमित्याह–यथा गम्येत प्रतरभेदेन गतदेवैषां सूर्यादीनां ऊर्ध्वं निवेशः मण्डलिकापोहेन आनुपूर्व्यम् अनुपूर्वभाव इति, एतदेव प्रकटयति–'तत्रथे'त्यादिना (१०२–१२) ताराग्रहाः पुनरनियतचारित्वात् कारणात्,किमित्याह–सूर्यचन्द्रमसामूर्ध्वमधश्च चरन्ति, तु (च) शब्दात् तिर्यक्,सूर्येभ्यः सकाशाद्दश-

योजनावलम्बिनो भवंति अङ्गारादयः तथाऽनियतचारित्वाद्भरण्यो यावल्लम्बन्ते, इह किलाधस्ताद्भरण्य एव, सर्वोपरि स्वाति-नक्षत्रं, सर्वत्र दक्षिणतो मूलं,सर्वोत्तरतश्चाभीचीरिति,एतदिह समाद् भूमिभागात् ध्रुवकाश्रयेणेति 'ज्योतिषो वा देवा' इति॥ विमानगज्योतिषः सम्बन्धिनो देवास्तेन दीव्यंति, ज्योतिरेव च भास्वरशरीरत्वाज्ज्योतिष्काः, स्वार्थे कन्। 'मुकुटेष्वि'-त्यादि, (१-२-२) मुकुटेषु चिह्नानि भवन्ति, शिरोमुकुटोपगूढानि प्रभामण्डलस्थानीयान्युज्ज्वलानि सूर्यादीनि, सूर्यस्य सूर्याकारं चन्द्रादीनां चन्द्राद्याकारमिति ॥

मेरुप्रदक्षिणा नित्यगतयो नृलोके इति ॥४-१४॥ सूत्रम् ॥

अपि ज्योतिष्का इति सूत्रसमुदायार्थः ॥ अवयवार्थमाह-'मानुषोत्तरे'त्यादिना (१-२-६) मानुषोत्तरो गिरिस्तत्पर्यन्तो-नृलोक इत्युक्तं प्राक् तस्मिन् लोके ज्योतिष्काः—सूर्यादयः मेरुप्रदक्षिणा नित्यगतयो भवन्ति, एतदेव व्याचष्टे-मेरोः प्रदक्षिणा नित्या गतिरेषामिति, अनवरतप्रवृत्तेत्यर्थः,मेरुप्रदक्षिणा नित्यगतयो ज्योतिष्का इति,विमानभ्रमणशीलत्वे 'तात्स्थ्यात् तद्व्यपदेश' इति,ध्रुवभ्रमणेऽपि तत्तदेकदेशतया अविरोधः,कस्मिँश्चिदगच्छत्यपि स्कन्धावारप्रयाणवत्,अथवा तत्रैव स्थाने ध्रुवभ्रमणादविरोधः, नास्य मेरुप्रादक्षिण्येन गतिरिति चेत्, न नाम, तदेकाप्रादक्षिण्येऽपि तदपरप्रादक्षिण्यात्, एवं च मेरुप्रदक्षिणाऽनित्या गतिर्ज्यो-तिषामिति विगृह्यते, तत्रायं वाक्यार्थः-मेरुप्रदक्षिणा अनित्या गतिः केषांचिद्भवति केषांचिन्नित्येत्यप्यविरोध,'एकादश स्वि'-(१-२-९)त्यादि, एकादशस्वेकविंशेषु योजनशतेषु मेरोर्जम्बूद्वीपसम्बन्धिनः चतुर्दिशमिति दिक्शब्देन समानार्थो दिशाशब्दः, तमनुसमन्धायैतत् प्रदक्षिणं चरन्तीति, प्रादक्षिण्येन चरन्त्येव, न तिष्ठन्त्यपि, नृलोके एव, कियन्मानाश्चैते एतस्मिन्नित्याह-'तत्रे'-

त्यादिना (१०२-१०) द्वौ सूर्यौ जम्बूद्वीपे, तापक्षेत्रानुसारात्, एतच्चान्तः संकटं बहिर्विशालं, मूले च कुसुमाकृति, सप्तचत्वारिंशद्योजनसहस्रादिमानं, यथोक्तम्–"सीयालीस सहस्सा दो अ सया जोयणाण तेवट्ठा। इगवीस सट्ठिभागा कक्कडमाइम्मि पेच्छ णरा ॥१॥" इत्यादि, 'लवणजले चत्वार' इत्यादि, यावद् 'इत्येवं मनुष्यलोके मानुषोत्तरपर्यन्ते द्वात्रिंशं सूर्यशतं द्वात्रिंशदुत्तरं, संपिण्डितं मत, चन्द्रमसामप्येष एव विधिः, सूर्यतुल्यत्वादिति, अष्टाविंशतिर्नक्षत्राणि अभिचिना सह, अष्टाशीतिर्ग्रहाः भस्मराश्यादयः, षट्षष्टिः सहस्राणि नव च शतानि पञ्चसप्तत्यधिकानि ताराकोटाकोटीनामिति, कोटीनां कोट्यः एतावत्यः एकैकस्य चन्द्रमसः परिग्रह इति, इह च सूर्याः चन्द्रमसो ग्रहा नक्षत्राणि च तिर्यग्लोके भवन्ति, शेषास्तूर्ध्वलोके ज्योतिष्काः तारालक्षणा इति वृत्तिकाराभिप्रायः तद्बाहुल्यादविरुद्ध एव, अष्टादशयोजनशतोच्छ्रितत्वेऽपि तिर्यग्लोकस्य अधऊर्ध्वादिभावो भवत्यविरोधात्, 'अष्टचत्वारिंशद्' इत्यादि, इह सूर्यमण्डलविष्कम्भ इति सूर्यविमानविष्कम्भः, षट्पंचाशद्योजनैकषष्टिभागा इति, ग्रहाणामर्द्धयोजनं मण्डलविष्कम्भः गव्यूतं नक्षत्राणां, अयमेव सर्वोत्कृष्टायाः तारायाः, स्थित्यैवेति गम्यते, क्रोशो मण्डलमानं, जघन्यायास्तु स्थित्यैव पञ्च धनुःशतानि, मण्डलविष्कम्भ इति वर्त्तते, विष्कम्भचिन्तया आयामश्चिन्तित एव, परिवर्त्तुलत्वाद्विमानानां, तेषामेव बाहल्यातिदेशमाह–'विष्कम्भार्द्धबाहल्याश्च भवंति' 'तात्स्थ्यात् तद्व्यपदेशः' इति नीतेः सूर्यादय एव गृह्यन्ते, तथा चाह–'सर्वे सूर्यादय' इति, नृलोक इति वर्त्तते, सूत्रोपन्यासाद्, 'बहिस्त्वि' त्यादि(१०३-४) बहिर्नृलोकात्, किमित्याह–विष्कम्भबाहल्याभ्यामुदितलक्षणाभ्यां, मण्डलमानमिति वर्त्तते, किमित्याह–'अतोऽर्द्धं भवती' त्यनन्तरोदिताद्विष्कम्भादिमानादर्द्धं भवति, अष्टचत्वारिंशद्योजनैकषष्टिभागाश्च सूर्यविमानविष्कम्भः नृलोके बहिः

त एव चतुर्विंशतिरिति, एवं शेषाणामपि वाच्यं, एवं बाहल्येऽपि, तद्यथा-नृलोके चतुर्विंशतिर्योजनैकषष्टिभागाः सूर्यविमानबाहल्यं, बहिस्तु द्वादशेत्यादि, एतानि चालोकादारभ्य एकादशस्वेकादशोत्तरेषु योजनशतेष्ववतिष्ठन्ते, यथोक्तम्-"एक्कारसेक्कवीसा सय एक्काराहिआ य एक्कारा। मेरुअलोगाबाहं जोइसचक्कं चरइ ठाइ ॥ १ ॥" कथं नृलोके यथोदितपरिवारमतां चन्द्रादीनामवस्थानं ?, उच्यते, कोटीकोटिनां संज्ञान्तरत्वात्, कोटिवाचकत्वात्, यथोक्तं-"कोडाकोडी सण्णंतरं तु मन्नंति केइ थोवतया। अण्णे उस्सेहंगुलमाणं काऊण ताराणं ॥ १ ॥" 'एतानि चे'त्यादि (१०३-५) अधिकृतानि ज्योतिष्कविमानानि लोकस्थित्या लोकानुभावेन प्रसक्तावस्थितगतीन्यपि प्रसक्ताः-सम्बद्धा अवस्थिता आभीक्ष्ण्येन गतिर्येषामिति विग्रहः, ऋद्धिविशेषार्थं समृद्धिविशेषप्रकटनाय आभियोग्यनामकर्मोदयाच्च नित्यगतिरतयः सदैव गमनक्रीडाशीलाः देवा वहन्ति, नैषां भारजनितं दुःखमस्ति, तथाविधकर्मोदयोपपत्तेः, कामिनीरत्नाभरणभारदुःखवत्, ते च देवाः सिंहाद्याकाराः, यथाह-'तद्यथा-पुरस्तात् केशरिण' इत्यादि ( १०३-७ ) ॥

तत्कृतः कालविभाग इति ॥ ४ १५ ॥ सूत्रम् ॥

ज्योतिष्कगतिकृतः कालविभाग इति सूत्रसमुदायार्थः। अवयवार्थं त्वाह-'कालोऽनन्तसमय'इत्यादिना, (१०३-१०) कलनं कालः कलासमूहो वा कालः सोऽनन्तसमयो द्रव्यविपरिणतिहेतुः, भेदकमन्तरेण तथाविधक्रियानुपपत्तेः, अत एवाह-वर्त्तनादिलक्षण इत्युक्तं सूत्रकृता पञ्चमेऽध्याये, 'तस्ये'त्यादि, तस्यैवंविधस्य कालस्य विभागोऽणुभागादिभेदः, किमित्याह-ज्योतिष्काणां गतिविशेषकृतः परिस्थूरः, कथमित्याह-चारविशेषेण हेतुना, तैः कृतस्तत्कृतः, तैरिति ज्योतिष्कचारविशेषैः, कृत इत्यु-

पलक्षितः, तथथा अणुभागाश्वरा अंशा इत्यादि ( १०३-१२ ) सर्वे एते कालविशेषाभिधायिनः शब्दाः लोकसिद्धा एव, पुनरन्यो विकल्पो लौकिकसमय एव प्रत्युत्पन्नोऽतीतोऽनागत इत्येवं त्रिविधः परिभाष्यते, कालत्वाभेदेऽपि तथोपाधिभेदात्, पुनस्त्रिविधः संख्येयः असंख्येयोऽनन्त इति, तथाविधैकघटादिवस्तुपरिणामनिबन्धनं, एतत्स्वरूपपरिज्ञानार्थेव सकलकालभेदादित्वात् समयमभिधातुमाह-'तत्रे'त्यादि (१०३-१७) तत्र-एतस्मिँस्त्रिविधकालव्याख्यावसरे समयस्तावदभिधीयते यदुत परमसूक्ष्मक्रियस्य अतिस्वल्पक्रियस्येत्यर्थः, एतदेव विवृण्वन्नाह—सर्वजघन्यगतिपरिणतस्य, कस्येत्याह-परमाणोर्द्रव्यभेदस्य स्वावगाहनक्षेत्रव्यतिक्रमकाल इति,एकाकाशप्रदेशव्यतिक्रमकाल इत्यर्थः, समय इत्युच्यते, अयं च परमदुरधिगमः परमाः-अतिशयसम्पन्ना योगिनस्तैरपि दुःखेनाधिगम्यते, सूक्ष्मत्वात्, अत एव चानिर्देश्यः निर्लुठितस्वरूपः,परेभ्यः प्रतिपादयितुमशक्य इत्यर्थः,तं यस्माद्भगवन्तः समग्रैश्वर्यलक्षणाः परमऋषयो मोक्षगामिनः केवलिनः प्रक्षीणछद्मानो विदंति साक्षात्, न निर्दिशन्त्यन्यस्मै, तथैव समयेन, कुत इत्याह-परमनिरुद्धत्वात्, परमनिरुद्धे यस्मात् तस्मिन् समये भाषाद्रव्याणां तत्प्रतिपादकानां ग्रहणनिसर्गयोः-आदानमोक्षयोर्विषये करणप्रयोगासम्भव इति, करणयोः-कायवाक्पर्याययोः प्रयोगस्य असम्भवः, कायकरणप्रयोगेन हि भाषाद्रव्याण्यादाय वाक्पर्याप्तिकरणव्यापारेण निसृज्यते,समय इति चैवेति यावदुच्चार्यते तावदसंख्येयास्ते इति ब्रूमः इत्यसम्भव इति, ते त्वसंख्येयाः समया आवलिकोच्यते, सा च जघन्ययुक्तासंख्येयकसमयमाना:, ताः संख्येया आवलिकाः उच्छ्वास एकः, तथा निश्वासः एकः एवंमान एव, एतद्भेदश्चोर्द्धाधोगमनभेदात,तावुच्छ्वासनिश्वासौ बलवतः शारीरबलेन पटिवन्द्रियस्यानुपहतकरणग्रामस्य कल्पस्य निरुजस्य मध्यमवयस्कः

भद्रयौवनस्तः स्वस्थमनसोऽनाकुलचेतसः पुंसः पुरुषस्य प्राणो नाम कालभेदः, विशेषणकलापस्त्वन्यथाभूतस्य तथाऽभावा-त्वेति, ते सप्त प्राणाः स्तोकः ते सप्त स्तोका लवः तेऽष्टात्रिंशल्लवाः अर्द्धं च लवस्यैव, किमित्याह—नालिका घटिकोच्यते, ते घटिके मुहूर्त्तः, ते त्रिंशन्मुहूर्त्ता अहोरात्रं, तानि पंचदश अहोरात्राणि पक्षः, शुक्लादिः, तौ द्वौ पक्षौ शुक्लकृष्णपक्षौ मासः— फाल्गुनादिः, तौ द्वौ मासौ ऋतुर्वसन्तादिः, ते ऋतवस्त्रयः अयनमुत्तरायणादि,ते द्वे अयने संवत्सरः प्रतीतः, ते पंच संवत्सराः— चन्द्रचन्द्राभिवर्धितचन्द्राभिवर्धिताख्याः युगं,तत्र चन्द्रसंवत्सरपरिज्ञानाय चन्द्रमासः परिमाणमेव तावदाख्यायते—एकोनत्रिंशद्दि-नानि चतुष्पंचाशदुत्तराणि द्वात्रिंशच्च द्विषष्टिभागा दिवसस्य चन्द्रमासः, एवंप्रकारेण मासेन द्वादशमासपरिमाणश्चान्द्रः संवत्सरः. स चायं -त्रीणि शतान्यह्नां द्वादश च द्विषष्टिभागा इति, एतेन शेषाणि चन्द्रसंवत्सराणि व्याख्यातानि, अधुनाऽभिवर्द्धितसंवत्सरपरि-ज्ञानायाभिवर्द्धितमासोऽभिधीयते—एकत्रिंशद्दिनान्येकविंशत्युत्तरशतचतुर्विंशत्युत्तरशता भागानामभिवर्द्धितमासः, एवंविधेन मासेन द्वादशमासप्रमाणोऽभिवर्द्धितः संवत्सरः,स चायं—त्रीणि शतान्यह्नां अशीत्यधिकानि चतुश्चत्वारिंशच्च द्विषष्टिभागाः,एतैश्चन्द्रादिभिः पञ्चभिः संवत्सरैरेकं युगं भवति, तन्मध्ये चान्त्ये चाधिमासको तेषां पञ्चानां संवत्सराणां मध्येऽभिवर्द्धिताख्येऽधिमासकः, एत-दन्ते चाभिवर्द्धित एव,सूर्यमासस्त्ववगन्तव्यः त्रिंशद्दिनान्यर्द्धं च,एवंविधद्वादशमासनिष्पन्नः संवत्सरः सावित्रः,स चायं—त्रीणि शता-न्यह्नां षट्षष्ट्यधिकानि,अनेन च मानेन सर्वकालं सर्वायूंषि समाविभागश्च गण्यंते, सावनमासस्त्रिंशदहोरात्रः, एष एव च कर्ममासो ऋतुमासश्चोच्यते, एवंविधद्वादशमासनिष्पन्नः सावनसंवत्सरः, स चायं—त्रीणि शतान्यह्नां षष्ट्यधिकानि, चन्द्राभिवर्द्धितावुक्तौ, नक्षत्रमासस्त्वयं—सप्तविंशतिर्दिनान्येकविंशतिः सप्तषष्टिभागाः, एवंविधद्वादशमासनिष्पन्नो नक्षत्रसंवत्सरः, स चायं—त्रीणि शता-

न्यहां मसत्रिंशदुत्तराण्येकपञ्चाशच्च मसषष्टिभागा इत्येवं, ते मासाः नामनिष्पन्ना भवन्ति, त्रिशतियुगैर्वर्षशतं भवति, दशभिर्वर्षशतैर्वर्षसहस्रं भवति, शतगुणं वर्षसहस्रं वर्षशतसहस्रं तत्, तच्च चतुरशीतिगुणितमेकं पूर्वांगं, पूर्वांगं चतुरशीतिलक्षेण गुणितं पूर्वं, पूर्वतः पूर्वतो विकल्पात् परः परो विकल्पः चतुरशीतिलक्षगुणो वेदितव्यः, तुट्यंगाद्यावच्छीर्षप्रहेलिकेति, तुट्यं तुटिकं अटटांगं अटटं अववांगं अववो हुंहुकांगं हुहुकं उत्पलांगं उत्पलं पद्मांगं पद्मं नलिनाङ्गं नलिनं अर्थनिपूरांगं अर्थनिपूरं चूलिकाङ्गं चूलिका शीर्षप्रहेलिकाङ्गं शीर्षप्रहेलिका, प्रावचनः क्रमोऽयं, आचार्येण तूद्देशमात्रान्तः स्वल्पस्थानश्चेति, सर्वथा शीर्षप्रहेलिकान्तः संख्येयः कालो भवति, समयादिरिति, सूर्यप्रज्ञप्तौ सर्वाद्युपांतनामादिक्रमः शीर्षप्रहेलिकान्तः, इत्येतावान् गणितशास्त्रविषयोऽपीति, अत ऊर्ध्वमुपमानियतं वक्ष्यामः इति संख्येयादेरनन्तरमसंख्येयः कालो भण्यते, स च गणितविषयातीतत्वादुपमया नियम्यते, सर्वश्चैष चौद्ध्यवहारः परप्रतिपत्तये अभ्युपगम्यते नाह्यार्थशून्योऽन्यथा परमार्थविचारणायामतिदुष्कर स्यादिदं सर्वं, ' नान्यथा ही 'त्यादि, ( १०४–१५ ) स्यादेतत् पल्योपममिति सुज्ञानं, तच्च त्रिविधमद्धापल्योपममुद्धारपल्योपमं क्षेत्रपल्योपमं चेति, पुनर्बादरसूक्ष्मभेदादेकैकं द्विधा, तत्रोक्तलक्षणं भाष्ये बादराद्धापल्योपमं संख्येयवर्षकोटीव्यतिक्रान्तिसमकालं, तान्येव वालाग्राण्येकैकशोऽसङ्ख्येयान्यदृश्यानि कृत्वा बुद्ध्या स एव पल्यो भ्रियते, ततः प्रतिवर्षशतमेकैकवालाग्रोद्धारे वर्षाण्यसंख्येयानि व्यतिक्रमन्ति एतत् सूक्ष्ममद्धापल्यम्, अस्य च प्रयोजनमुत्सर्पिण्या विभागपरिज्ञानं, ज्ञानावरणादिकर्मस्थितयः कायभवस्थितयः पृथिव्यादिकायानां निरूप्यन्त इति, उद्धारपल्योपमं तु बादर स्थूलवालाग्रापहारे प्रतिसमयमेकैकस्मिन् सति भवति, तच्च संख्येयपरिमाणं वेदितव्यं, एतान्येव वालाग्राण्येकैकशोऽसंख्येयखण्डीकृतानि, ततः प्रतिसमयमेकैकवालाग्रोद्धारे वर्षकोटिभिः

संख्येयाभिः सूक्ष्मोद्धारपल्यं भवति, अयं च प्रयोजनं—अर्धतृतीयसागरोपमोद्धारराशिप्रमाणतुल्या द्वीपसमुद्रा इति, क्षेत्रपल्योपममपि बादरसूक्ष्मभेदाद् द्विविधं—बादरलोमखण्डभृतक्षेत्रप्रदेशराश्यपहारे प्रतिसमयं बादरक्षेत्रपल्योपमं, सूक्ष्मलोमखण्डभृतक्षेत्रप्रदेशराश्यपहारे प्रतिसमयं सूक्ष्मक्षेत्रपल्योपमं, असंख्येयोत्सर्पिणीभिश्च परिनिष्ठानमस्य भवति, एतेन च पृथिव्यादिजीवपरिमाणमानीयत इति प्रवचनविदो वर्णयन्ति प्रयोजनं, एषां च त्रयाणामपि पल्योपमानां प्रत्येकं कोटीनां कोटी दशगुणिता सती सागरोपममिति व्यपदिश्यते त्रिविधमेव, एषां सागरोपमाणां चतस्रः कोटीकोट्यः सुषमसुषमा नाम कालविशेषः, तिस्रः कोटीकोट्यः सागरोपमानां सुषमा, सागरोपमानां कोटीकोट्यौ द्वे सुषमदुष्षमा, द्विचत्वारिंशद्वर्षसहस्राणि हित्वा चैका कोटीनां कोटी दुष्षमसुषमा, एकविंशतिर्वर्षसहस्राणि दुष्षमा, तावत्येव दुष्षमदुष्षमा, एकविंशतिवर्षसहस्राणीत्यर्थः, ताः सुषमसुषमाद्या यथोपन्यस्ताः आनुलोम्येन षडप्यवसर्पिणीनामा कालः, शरीरोच्छ्रयायुष्ककल्पवृक्षादिपरिहाणेर्दशसागरोपमकोटीकोट्यः परिमाणतः, तथा प्रातिलोम्येनोत्सर्पिणीनामा कालः, शरीरोच्छ्रयादिपरिवृद्धेर्दशसागरोपमकोटीकोट्य एव परिमाणतः, एतच्चोत्सर्पिण्यवसर्पिणीकालचक्रकं पंचसु भरतेष्वैरवतेषु च पंचस्वनाद्यनन्तं परिवर्त्तते, यथाऽहोरात्रे, वासरो रजनी वा शक्यते न निरूपयितुमादित्वेन, अनादित्वादहोरात्रचक्रकप्रवृत्तेः, तथैतदपीति, तत्रावसर्पिण्यां शरीरोच्छ्रयोऽनन्तगुणपरिहीणः परतः परतः, सुषमसुषमायां गव्यूतत्रितयं शरीरोच्छ्रयो मनुष्याणामायुस्त्रीणि पल्योपमानि शुभपरिणामोऽपि कल्पवृक्षादिरनेकः, सुषमायां गव्यूतद्वयं द्वे पल्योपमे कल्पवृक्षादिपरिणामश्च शुभो हीनतरः, सुषमदुष्षमायामेकं गव्यूतमेकं पल्योपमं हीनतरश्च कल्पवृक्षादिपरिणामः, दुष्षमसुषमायां पञ्चधनुःशतप्रभृतिः सप्तहस्तान्तं शरीरप्रमाणं आयुरपि पूर्वलक्षपरिमाणं, परिहीणश्च कल्पवृक्षादिपरिणामः, दुष्षमायां अनियतं शरीरप्रमा-

णमायुरप्यनियतं, वर्षशताद् अर्वाक्, पर्यन्ते विंशतिवर्षाणि परमायुः, शरीरोच्छ्रयो हस्तद्वयं, ओषधीवीर्यपरिहाणिरनन्तगुणेति, अतिदुष्षमायामप्यनियतं शरीरोच्छ्रायादि सर्वं, पर्यन्ते तु हस्तप्रमाणं वपुः, परमायुः षोडश वर्षाणि, निरवशेषौषधिपरिहाणिश्चेति, एवं वृद्धिः प्रातिलोम्येन वक्तव्या, अशुभानां परिणामविशेषाणामवसर्पिण्यां वृद्धिः उत्सर्पिण्यां हानिरिति, अवस्थिताः स्वरूपेण न भवंति ये च गुणास्तस्यान्ते चावस्थिताः कल्पवृक्षादिपरिणामविशेषाः अतोऽवस्थिताऽवस्थितगुणा अन्यत्रैकैका सुषमदुषमा-दिर्भवति, तद्यथा-देवकुरूत्तरकुरुषु सुषमासुषमानुभावः सर्वदाऽवस्थितः, हरिरम्यकवासे तु सुषमानुभावोऽवस्थितः, हैमवतहिर-ण्यवतेषु सुषमदुष्षमानुभावोऽवस्थितः, हैमवतहैरण्यवतक्षेत्रेषु षट्पंचाशत्सु चान्तरद्वीपेषु दुष्षमसुषमानुभावोऽवस्थितः, एवमा-दिमनुष्यक्षेत्रे पर्यापन्नः कालविभागो ज्ञेय (१०५-११) इति, एवमादिरित्यनेनानेकभेदत्वमादर्शयति कालस्य, पुद्गल-परावर्तादिः सर्वाद्धादिश्चानन्तः काल इति, मनुष्यक्षेत्रपर्यापन्न इति परिमितदेशवर्तित्वं कालस्यावगमयन्ति, इह प्रसिद्धेनान्यत्रापि वर्तमाना देवादयो व्यवहरंति, कालस्य समूहबुद्ध्यङ्गीकृतस्य समयादिविभागो वेदितव्यः, इत्यसंख्येयत्वमनन्तत्वं च कालस्य भाष्यादेव परिगन्तव्यं, गणितविषयातीतोऽसंख्येयः, अविद्यमान्तोऽनन्त इति कृतं प्रसङ्गेन; प्रकृतं प्रस्तुमः । तत्र—

बहिरवस्थिता इति सूत्रम् ॥ ४-१६ ॥

सम्बन्धेन, मेरुप्रदक्षिणा नियता गतागतयो नृलोक इत्यनन्तरसूत्राभिधानात् ज्योतिष्का इति सूत्रसमुदायार्थः। अवयवार्थमाह-'नृलोके' इत्यादिना (१०५-१३) मानुषोत्तरगिरेर्बहिर्ये इति ज्योतिष्का 'तात्स्थ्यात्तद्व्यपदेशः' ते च स्थिता इत्येतदाचष्टे-अवस्थिता इत्यविचारिणः न विचरणशीलाः, स्पष्टतरमाह—अवस्थिताः निश्चलाः विमानप्रदेशा वृक्षादयो येषा-

मिति विग्रहः, किमुक्तं भवति ?-अवस्थितौ लेश्याप्रकाशौ च--वर्णालोकौ येषां ते तथाविधा इत्यर्थः, उपरागोदयाद्यभावादिति, एतदेव निगमयन्नाह-सुखा शीतोष्णाः रश्मयो येषामिति विग्रहः, नात्यन्तशीताश्चन्द्रमसः, नाप्यत्यन्तोष्णाः सूर्यस्य, किन्तु साधारणा द्वयोरपीति, योजनशतसहस्रपरिमाणप्रकाशा इत्याचार्याः ।

उक्ता ज्योतिष्काः, तदभिधानात्तृतीयो देवनिकायः, साम्प्रतं चतुर्थमाह—

**वैमानिका इति ॥ ४-१७ ॥ सूत्रम् ॥**

प्रायो निगदसिद्धं,नवरं अत ऊर्ध्वमिति इतः प्रभृति पूर्वं प्राक् स्थितेरिति,तथा विशेषेण सुकृतिनो मानयन्तीति विमानानि ॥ एते च

**कल्पोपपन्नाः कल्पातीताश्चेति ॥ ४-१८ ॥ सूत्रम् ॥**

एतदपि प्रायो निगदसिद्धमेव, नवरमिन्द्रादिदशभेदकल्पनात् कल्पा इति ।

**उपर्युपरीति ॥ ४-१९ ॥ सूत्रम् ॥**

इदमपि प्रायः सुगममेव, नवरं 'यथानिर्देश'मिति वक्ष्यमाणसूत्रापेक्षया, नैकक्षेत्रे निरवयवे नापि तिर्यगधो वेत्यसमंजस इति ॥ ते चामी क्रमादित्याह—

**सौधर्मैशानसनत्कुमारमाहेन्द्रब्रह्मलोकलान्तकमहाशुक्रसहस्रारेष्वानतप्राणतयोरारणाच्युतयोर्नवसु ग्रैवेयकेषु विजयवैजयन्तजयन्तापराजितेषु सर्वार्थसिद्धे चेति ॥ ४-२० ॥ सूत्रम् ॥**

---

१ योजनशतसहस्रपरिमाणो निष्कम्पत्वाद् अस्तमयोदयाभावाच्चेति सिद्धसेनीयायां वृत्तौ, स्यादनेन तस्याः पश्चाद्भाविता

भिन्नविभक्तिको निर्देश इह देवधर्मख्यापनार्थ इति सूत्रसमुदायार्थः। अवयवार्थमाह–'एतेष्वि'त्यादिना (१०६-१०) सौधर्मस्य कल्पस्य मेरोरुपर्यसंख्येययोजनव्यवस्थितस्य मेरूपलक्षितदक्षिणभागार्द्धे स्थितिः अर्द्धचन्द्राकारस्य, उपर्यैशानः कल्प इति, सोऽप्येवंविध एव, किन्तु मेरूपलक्षितोत्तरभागार्द्धस्थितिः मनागूर्ध्वमर्धमिति, 'ऐशानस्योपरी'ति क्षेत्रविभागमात्रेण, बहूनि योजनान्यतिक्रम्य सनत्कुमारः सौधर्मसमश्रेण्यां व्यवस्थितः, एवं सनत्कुमारस्योपरि मनागूर्ध्वमित्यर्थः, माहेन्द्र इत्यैशानसमश्रेणिव्यवस्थितः, अनयोरुपरि बहूनि योजनान्यतिक्रम्य मध्यवर्त्ती सम्पूर्णचन्द्राकृतिर्ब्रह्मलोकः, इह लोकग्रहणं लोकान्तिकदेवसत्ताख्यापनार्थं, एवमुपर्युपरि लान्तकमहाशुक्रसहस्रारास्त्रयः कल्पाः प्रतिपत्तव्याः, विभक्त्युपन्यासस्त्विह सामान्येनैव तिर्यग्मनुष्येभ्यः उपपातभेदख्यापनार्थः, तत ऊर्ध्वं बहूनि योजनान्युल्लङ्घ्य सौधर्मैशानकल्पद्वयवदानतप्राणतौ भवतः, विभक्त्युपन्यास इति एकेन्द्रत्वभेदप्रदर्शनार्थः, तदुपरि तत्समश्रेणिव्यवस्थितौ सनत्कुमारमाहेन्द्रयोरिवारणाच्युतौ, विभक्तिप्रयोजनं पूर्ववत्, तदुपरि ग्रैवेयकानि या, इहापि विभक्त्यलोपे एतावान् सापायशेषसत्त्वोपपात इति विशेषप्रदर्शनार्थः, तत ऊर्ध्वं विजयादीनि चत्वारि विमानानि, ऐन्द्र्यादिप्रादक्षिण्येन, विभक्त्यलोपस्त्विति निरपायसम्यगुपपातभेदसन्दर्शनार्थः तदुपरि मनाक् सर्वार्थसिद्धमिति, इह विभक्त्यलोपो द्विचरमोपपातभेदप्रदर्शनार्थः। अमुमेवार्थं चेतसि निधायाह–'एवमासर्वार्थसिद्धादि'ति (१०६-१२) सर्वार्थसिद्धं यावदुपरीति। कल्पाभिधाननिबन्धनमाह–'सुधर्मे'त्यादिना (१०६-१३) सभा–प्रासादविशेषः सा तस्मिन् अस्तीति सौधर्मः 'चातुरर्थिकोऽन्' 'ईशानस्ये'त्यादि तस्य निवाससंबंधेन अणिति, 'एवमिन्द्राणा'मित्यादि, अतिदेशवाक्यं, 'ग्रैवेयकास्त्वि'त्यादि, ग्रीवा इति ग्रीवेव ग्रीवा तस्यां भवाः ग्रैवेयकाः, एवं ग्रीवायां भवाः ग्रीव्याः, एवं ग्रैवेयाः 'दिग्ग्रीवात्याश्चे'ति, एवं ग्रैवेयकाः ग्रीवायां प्रायो भवाः

इति कुलकुक्षिग्रीवाभ्यः श्वास्यालङ्कारे ठकञ्' (पा.) अनुत्तराः–सर्वप्रधानाः पंच देवनामान एव विमानविशेषाः, एतदेव नामान्वर्थमाह–'विजिता' इत्यादि (१०६-१८) विजिता अभिभूता अभ्युदयविघ्नहेतवः एभिरिति–देवैर्विजयवैजयन्तजयन्ता इति, तथा तैरेव विघ्नहेतुभिरप्युदयसम्बन्धिभिः न पराजिता इत्यपराजिताः,एवं सर्वेष्वभ्युदयार्थेषु प्रकृष्टेषु सिद्धा–अव्याहतशक्तयः सर्वार्थसिद्धा इति,सर्वार्थैश्च वा विषयवद्भिः प्रख्याताः सर्वे वैषामभ्युदयार्था अतिमनोहरा शब्दादयः सिद्धा इति सर्वार्थसिद्धाः। प्रकारान्तरमाह–' विजितप्रायाणि चे'त्यादिना (१०७–१) विजितप्रायाणि कर्माण्येभिरित्यासन्नभव्यतया, तथा उपस्थितभद्रा इत्युपनतपरमकल्याणाः,तथा परीषहैः क्षुत्पिपासादिभिः साधुजन्मनि न पराजिताः इत्यपराजिताः, एवं सर्वार्थेषु सांसारिकेषु सिद्धाः कृतकृत्या इति सर्वार्थसिद्धाः,एवं सिद्धप्रायः तथाऽऽसन्नतया उत्तमार्थः सकलकर्म्मक्षयलक्षणो येषां ते तथाविधा 'इति' एवमनेन प्रकारेण विजयादय इति विजयादयोऽप्यपराजितसर्वार्थसिद्धा इति॥ उपर्युपरीत्यनुवर्त्तमाने—

स्थितिप्रभावसुखद्युतिलेश्याविशुद्धीन्द्रियावधिविषयतोऽधिका इति ॥ ४–२१ ॥ सूत्रम् ॥

समुदायार्थः प्रकटः, अवयवार्थं त्वाह–'यथाक्रम'मित्यादिना (१०७–६) यथाक्रमं चोक्तनीत्या एतेषु सौधर्मादिषु प्रागुपन्यस्तेषु देवाः,किमित्याह-पूर्वतः पूर्वत इति,पूर्वेभ्यः (पूर्व) प्रकारकल्पदेवेभ्यः एभिः स्थित्यादिभिः सप्तभिरर्थैः,किमित्याह-अधिका भवन्तीति। 'तत्रे'त्यादि,(१०७-७) तत्र स्थितिरायुष उत्कृष्टा जघन्या च परस्तात्-उपरिष्टाद्वक्ष्यते, इह तु 'वचने' उपन्यासेऽस्ति प्रयोजनमिदम्–'येषामपी'त्यादि,येषामपि सम्भवति कथंचिदाधस्त्यतुल्या उपरितनानां तेषामुपर्युपरि,किमित्याह-गुणैः–सुखाहारग्रहणाल्पशरीरत्वादिभिः अधिका भवन्ति,इत्येतद्यथा प्रतीयेत,इदं वचने प्रयोजनमिति,प्रभावतोऽधिका इति,प्रभावः–अचिन्त्या

शक्तिः, एतदेवाह–यः प्रभावो निग्रहानुग्रहविक्रियापराभियोगादिष्विति, निग्रहानुग्रहौ प्रतीतौ,विविधा क्रिया विक्रिया अणिमादिक्रिया,पराभियोगो बलात् पराकर्णं सौधर्मकाणां देवानां स प्रभावोऽनन्तगुणाधिकः उपर्युपर्यैशानादौ,मन्दाभिमाननया तु कारणात् तथाऽल्पतरसंक्लेशाच्च कारणात् न प्रवर्त्तन्ते निग्रहादिष्विति, क्षेत्रस्वभावजनिताच्चोपर्युपरि शुभपुद्गलपरिणामाद् अनादिपारिणामिकात् न प्रवर्त्तेत इति,एवं सुखतः–आल्हादेन द्युतितश्च–देहच्छायया च असंख्येयगुणप्रकर्षेणाधिका उपर्युपरीति, एवं लेश्याविशुद्ध्याऽधिका उपर्युपरि, लेश्यानियमं परस्ताद्–अग्रे एषां देवानां वक्ष्यति सूत्रकृदेव, इह तु वचने प्रयोजनमिदं यथा गम्येतैतत् यत्रापि विधानतो–विधानात् तुल्याः लेश्यादिभिराधस्त्यैरुपरितनाः तत्रापि विशुद्धितः समानजातीया अधिका भवन्तीत्येतद्यथा गम्येत, तथा कर्म्मविशुद्धित एव चोपर्युपरि अधिका भवन्तीति विशुद्धिसूत्रावयवव्याख्या, शुभशुभतरपुण्यफलत्वादुपरिभागस्य, एवमिन्द्रियविषयतोऽधिका इत्येतद् व्याचष्टे–'यदिन्द्रियपाटव'मित्यादि (१०७-८) इति प्रकटार्थं, एवमवधिविषयतोऽधिका इति, एतदेवाह–'सौधर्मैशानयो'रित्यादिना (१०८–१) अवधिविषयेण अनिन्द्रियमर्यादया, तिर्यगसंख्येयानि योजनशतसहस्राण्यधिकानि पूर्वेभ्यः, एवं शेषाः क्रमश इति, ब्रह्मलोकलान्तकयोर्वालुकाप्रभां शुक्रसहस्रारयोः पंकप्रभां आनतप्राणतयोरारणाच्युतयोश्च धूमप्रभां अधो, मध्यमग्रैवेयकास्तमःप्रभां उपरिग्रैवेयकास्तु महाप्रभामिति,अनुत्तरविमानवासिनः पुनः कृत्स्नां समस्तां लोकनाडीं लोकमध्यवर्तिनीं पश्यन्ति, न तु लोकमिति, 'येषा'मित्यादि (१०८-६) येषामपि देवानामितिप्रक्रमः क्षेत्रतस्तुल्योऽवधिविषय उक्तः तेषामुपर्युपरि विशुद्धितो विशुद्ध्याऽधिको भवतीति ॥ एवमाधिक्यमभिधायैषामेव हीनत्वमाह—

गतिशरीरपरिग्रहाभिमानतो हीना इति ॥ ४-२२ ॥ सूत्रम ॥

द्वन्द्वः, तृतीया तसिरिति सूत्रसमुदायार्थः। अवयवार्थं त्वाह—'गतिविषयेणे'त्यादिना (१०८-९) गतिविषयेण गतिगोचरेण उपर्युपरि हीना भवन्ति, एतदेव व्याचष्टे–'तद्यथे'त्यादिना (१०८-१०) द्वे सागरोपमे जघन्या स्थितिर्येषां ते तथाविधास्तेषां देवानां, किमित्याह–आ सप्तम्या इति, सप्तमीं यावदधो गतिगोचरः, तिर्यगसंख्येयानि योजनकोटीनां कोटिसहस्राणि, एते च सनत्कुमारकल्पात् प्रभृति लभ्यन्ते, ततः पर इत्यादि (१०८-१२) सागरोपमद्वयादधः जघन्याल्पस्थितीनामिति, जघन्या अल्पा पल्योपमादिलक्षणा स्थितिर्येषां ते तथाविधाः,तथा च एकैकहीना भूमयोऽधो गतिविषयो यावत्तृतीयेति, यदिह जघन्या न्यूनतरा न्यूनतमा च स्थितिरिति, तत्रैते गतपूर्वा गमिष्यन्ति वा पूर्वसांगतिका तृतीयां देवा, परतस्तु जघन्यावस्थितिभ्यः सत्यपि गतिविषये शक्त्यपेक्षया न गतपूर्वाः कदाचित् नापि गमिष्यंति, महानुभावक्रियातः औदासीन्याच्च कारणादुपर्युपरि देवाः सामान्येनैव न गतिरतयो भवन्ति जिनाभिवन्दनादि मुक्त्वा, एवं शरीरमहत्त्वेनाप्युपर्युपरिहीना इत्येतदाह—'सौधर्मैशानयो'रित्यादिना (१०८–१६) सप्त रत्नयः इत्यत्र रत्निः हस्तः उपर्युपरि द्वयोर्द्वयोः कल्पयोरेकैकाभिर्हीनाः, न व्याप्तौ च, किंत्वासहस्रारात् सहस्रारं यावत्, एवं च सनत्कुमारमाहेन्द्रयोः षड् रत्नयः, ब्रह्मलोकलान्तकयोः पंच, महाशुक्रसहस्रारयोश्चतस्र इति। 'आनतादिष्वि'त्यादि (१०८–१८) आनतप्राणतारणाच्युतेषु तिस्रो रत्नयः शरीरोच्छ्रायो देवानां, ग्रैवेयकेषु द्वे रत्नी अनुत्तरेष्वेका रत्नीति, महापरिग्रहत्वेन चोपर्युपरि हीना इति, तदाह–सौधर्मे विमानानां द्वात्रिंशत् शतसहस्राणि सामान्येन त्रयोदशस्वपि प्रस्तारेषु, ईशानेऽष्टाविंशतिः शतसहस्राणि त्रयोदशस्वपि

प्रस्तारेषु सामान्येन, सनत्कुमारे द्वादश शतसहस्राणि सामान्येन द्वादशसु प्रस्तारेषु, माहेन्द्रेऽष्टौ शतसहस्राणि द्वादशसु प्रस्तारेषु सामान्येनैव, ब्रह्मलोके चत्वारि शतसहस्राणि षट् प्रस्तारेषु, लान्तके पञ्चाशत् सहस्राणि पञ्चसु प्रस्तारेषु, महाशुक्रे चत्वारिंशत् सहस्राणि चतुर्षु प्रस्तारेषु, सहस्रारे षट् सहस्राणि चतुर्ष्वेव प्रस्तारेषु, आनतप्राणतारणाच्युतेषु सप्त शतानि चतुर्षु चतुर्षु, अधोग्रैवेयाणां शतमेकादशोत्तरं त्रिषु प्रस्तारेषु, मध्यम इति मध्यमग्रैवेयाणां सप्तोत्तरं शतं त्रिष्वेव प्रस्तारेषु, उपर्युपरितनग्रैवेयाणामेकमेव शतं त्रिषु प्रस्तारेषु, अनुत्तराः पंचैव विमानभेदा एकप्रस्तार एवेति, 'एवमूर्ध्वलोक' इत्यादिना (१०९-६) सर्वसंख्याभिधानं, अभिमानेन चोपर्युपरि हीना इत्येतद् व्याचष्टे-'स्थानपरिवारे' त्यादिना (१०९-८) स्थानं च परिवारश्चेत्यादि द्वन्द्व, स्थानं कल्पादिः (परिवारः–देवा देव्यश्च) शक्तिः–सामर्थ्यं विषयः–अवध्यादिसम्बन्धी संपद्–विभूतिः स्थितिः–आयुष इयत्ता, एतेषु स्थानादिषु अल्पाभिमाना अल्पाहङ्काराः, अत एव च परमसुखभागिन उपर्युपरि, अभिमानस्य दुःखस्वरूपत्वादिति, न केवलं गत्यादिहीना उच्छ्वासादिभिश्च दुःखनिबन्धनैः, कैरित्याह—

'उच्छ्वासे'त्यादि, (१०८–१०) उच्छ्वासश्चाहारश्चेत्यादि द्वन्द्वः, एभ्यश्च साध्य इति, तत्रोच्छ्वास इति द्वारपरामर्शः, सर्वजघन्यस्थितीनां दशवर्षसहस्रायुषां भवनपतिव्यन्तराणां उच्छ्वासः सप्तस्तोक इति सप्त स्तोकाः कालोऽस्य, सप्तस्तोकान्तरित इत्यर्थः, आहारश्चतुर्थकालः चतुर्थः कालोऽस्येति, एकदिवसान्तरित इत्यर्थः, पल्योपमस्थितीनां देवानामन्तर्दिवसस्य दिवसाभ्यन्तरे उच्छ्वासो, दिवसपृथक्त्वस्याहारः, द्विप्रभृतिः आनवभ्य इत्यर्थः, 'यस्य यावन्ति' इत्यादि (१०८–१३) सुज्ञानं,

१ भाष्येऽवतरणिकाया अभावात् उच्छ्वासादिषु अधिकत्वहीनत्वोभयस्य यथायथं भावात् अत्रापि च सूत्रतयोक्तेरभावात् नैतत्सूत्रमिति.

सद्वेदनानुबन्धाः,न असद्वेदना भवति,यदि भवति तदा अन्तर्मुहूर्त्तमेव, अतः परं सद्वेदनानुबन्धाः,सद्वेदनाः पुनरुत्कृष्टेन षण्मासान् भवन्ति, ततः परं विच्छिद्यन्तेऽन्तमुहूर्त्तं, ततः पुनरनुवर्त्तंत इति, **उपपात** इति द्वारपरामर्शः, **आरणाच्युतादूर्ध्वमन्यतीर्थानां** द्रव्यलिङ्गमधिकृत्य **उपपातो न भवति स्वलिङ्गिनां** साधुद्रव्यलिङ्गापेक्षया **भिन्नदर्शनानां** मिथ्यादृष्टीनां यावद् ग्रैवेयेभ्यः, ऊर्ध्वं उपपातो भवतीति वर्त्तते, ग्रैवेयेष्वेवोपपात इत्यर्थः, उपपातोऽन्यस्येति मिथ्यादृष्टेरन्यस्य, एतदाह–**सम्यग्दृष्टेः संयतस्य** भाज्यो विकल्पनीयः **आ सर्वार्थसिद्धादिति**, सौधर्मादारभ्य सर्वार्थसिद्धिं यावत्, जघन्यतस्तु न भवनपतिव्यन्तरेष्वित्यर्थः, 'ब्रह्मलोका'दित्यादि, ब्रह्मलोकादूर्ध्वं, नातो जघन्यतो, नापि **आ सर्वार्थसिद्धात्** सर्वार्थसिद्धिं यावत् चतुर्दशपूर्वधराणां उपपात इति वर्त्तते । अनुभाव इति द्वारपरामर्शः, एतद्व्याचष्टे–'**विमानाना**'मित्यादिना (११०–३) आसनादिभिः प्रचलन्ति प्रमोदगर्भाः, तत्रासनैः कल्पोपपन्नाः शक्रादयः, शयनैः कल्पातीता अनुत्तराः, स्थानाश्रयैः ग्रैवेयकादय इति, तत्रस्था एव **परमसंविग्नास्तथाजीतकल्पत्वादित्यनेन** संवेगोऽत्र कारणमागमने किंचिदित्येतदाहेति ॥ 'अत्राहे'त्यादि (११०–१६) सम्बन्धग्रन्थः, त्रयाणां देवनिकायानां भवनवास्यादीनां लेश्यानियमोऽभिहितः प्राक्, अथ **वैमानिकानां** सौधर्म्मादिनिवासिनां केषां का लेश्येति. अत्रोच्यते—

पीतपद्मशुक्ललेश्या द्वित्रिशेषेषु ॥ ४–२३ ॥ सूत्रम् ॥

पूर्वत्र बहुव्रीहिः, उत्तरत्र द्वन्द्व इति सूत्रसमुदायार्थः । अवयवार्थं त्वाह 'उपर्युपरी'त्यादिना (११०–१९) सुज्ञेयः, 'अत्राहोक्तं भवते'त्यादि (१११–५) सम्बन्धः सूत्रभाष्ये ऋज्वर्थं एव, नवरं 'सभाजयंतीति पूजयंतीति चेति, 'अत्राहे'त्यादि

पातनिकाग्रन्थः, सम्बन्धभाष्ये प्रकटार्थं एव, नवरं जन्मादिलोकान्तवर्तित्वात् लोकान्तिकाः, परित्तसंसारा इत्यर्थः, एते चाष्टविकल्पा भवन्ति, 'तद्यथे'त्यादि (११२-११) सपातनिकं सूत्रं निगदसिद्धमेव, नवरं अत्र दिग्ग्रहणं सामान्येन दिग्विदिक्प्रतिपत्त्यर्थं, ब्रह्मलोकाधोऽव्यवस्थितरिष्टविमानप्रस्तरवर्त्तिभिः मल्लाक्षवाटकसंस्थिताः अरुणवरसागरसमुद्भूतातिवहलतमस्कायप्रभवाः कृष्णराज्योऽष्टौ भवन्ति,× यासां मध्येन प्रयान् देवोऽप्येकः संक्षोभमापद्येतेति वृद्धाः×, तत्र द्वयोर्द्वयोः कृष्णराज्योर्मध्यभागे एते भवन्ति, तत्र मध्येऽरिष्टा इति, एते चासन्नभव्या इत्येतत् सामान्यादेवाह ॥

विजयादिषु द्विचरमा इति ॥ ४-२७ ॥ सूत्रम् ॥

चतुर्षु विमानेष्विति सूत्रसमुदायार्थः। अवयवार्थं त्वाह-'विजयादिष्वि'त्यादिना (११३-२) 'विजयादिष्वि'ति विजयवैजयंतजयन्तापराजितेषु चतुर्षु अनुत्तरेष्विति,तदन्यव्यावृत्त्यर्थमेतत्, एतेषु विमानेषु देवाः किमित्याह-द्विचरमा भवन्ति, द्विचरमत्वमेव स्पष्टयन्नाह-द्विचरमा इति किमुक्तं भवति ?, ततश्च्युता इति विजयादिभ्यश्च्युताः परमुत्कर्षेण द्विर्जनित्वा द्विरुत्पद्य सिद्ध्यन्तीति, विजयादिविमानाच्च्युतो मनुष्येषु सिद्ध्यतीत्यर्थः, सकृत् सर्वार्थसिद्धमहाविमानवासिन इति, सकृद् एक वारं जनित्वा सर्वार्थसिद्धे महाविमाने समुत्पद्य ततश्च्युता मनुष्येषु सिद्ध्यन्तीति, शेषास्तु भाज्या इति, शेषाः पुनर्वमानिकाः सामान्यदेवा भाज्या इति कदाचित् सकृद् द्विस्त्रिः चतुःप्रभृति वा मनुष्येषु जन्मासाद्य सिध्यंतीति॥ 'अत्राहे'-

१ प्राग् ग्रैवेयकेभ्यः कल्पा. (४-२४) २ ब्रह्मलोकालया लोकान्तिकाः (४-२५)
३ सारस्वतादित्यवह्न्यरुणगर्दतोयतुषिताव्याबाधमरुतः (अरिष्टाश्च) (४-२६)

त्यादि (११३-५) सम्बन्धग्रन्थः, उक्तं भवता-द्वितीयेऽध्याये जीवस्यौदयिकेषु भावेषु निरूप्यमाणेषु तिर्यग्योनिरित्युक्तं, तथा स्थितौ निरूप्यमाणायां तृतीयाध्यायपरिसमाप्तौ तिर्यग्योनीनां चे'त्युक्तं. आश्रवेषु निरूप्यमाणेषु 'तैर्यग्योनस्ये'ति वक्ष्यते पद इति, तत्के तिर्यग्योनय इति प्रक्रमात् प्रश्न इति, उच्यते—

औपपातिकमनुष्येभ्यः शेषास्तिर्यग्योनय इति ॥ ४-२८ ॥ सूत्रम् ॥

प्रायो निगदसिद्धमेव, नवरमेकेन्द्रियादयः पञ्चेन्द्रियावसाना इति ॥ 'अत्राहे'त्यादि सम्बन्धग्रन्थः (११३-१२) स्थितिरुक्ता तृतीयेऽध्याये, अथ देवानां भवनवास्यादीनां का स्थितिः ? इति, अत्रोच्यते—

स्थितिरिति ॥ ४-२९ ॥ सूत्रम् ॥

एतदधिकृतं-स्थितिरित्यत ऊर्ध्वमध्यायपरिसमाप्तेर्वक्ष्यति ॥ तथा चाह—

भवनेषु दक्षिणार्द्धाधिपतीनां पल्योपममध्यर्द्धमिति ॥ ४-३० ॥ सूत्रम् ॥

समुदायार्थः प्रकटः,अवयवार्थं त्वाह-'भवनेष्वि'त्यादिना(११३-१७) भवनेषु तावत् सामान्येन दक्षिणार्द्धाधिपतीनां रुचकविभागेनार्द्धनिकायेन्द्राणां धरणादीनां पल्योपममुक्तलक्षणं अध्यर्द्धमिति अधिकमर्द्धमस्मिंस्तदिदमध्यर्द्धं, सार्द्धमित्यर्थः, किमित्याह-परा स्थितिरुत्कृष्टेत्यर्थः,अनेन जघन्याया आक्षेपः,सन्देहापनोदाय स्पष्टमाह-'द्वयोर्द्वयो'रित्यादि (११४-१)द्वयोर्द्वयोरेकैकयोरिति पूर्वोक्तयोर्भवनवासीन्द्रयोः चमरबलिधरणभूतानन्दादिक्रमेण पूर्वः उपन्यासक्रमाद् दक्षिणार्द्धाधिपतिः अपर उत्तरार्द्धपतिरिति ॥ तदाह —

**शेषाणां पादोने इति ॥ ४–३१ ॥ सूत्रम् ॥**

समुदायार्थः प्रकटः, अवयवार्थमाह–'शेषाणा'मित्यादि (११४–४) शेषा दक्षिणार्द्धपतिभ्यः उत्तरार्द्धाधिपतयः तेषां भवनवासेष्वधिपतीनां भूतादीनां द्वे पल्योपमे पादोने चतुर्थभागोने परा स्थितिर्भवतीति पूर्ववत्, केवलं शेषा उत्तरार्द्धाधिपतय इति ॥ एवं सामान्येन तदभिधाय विशेषेणायुर्द्वारमाह—

**असुरेन्द्रयोः सागरोपममधिकं चेति ॥ ४–३२ ॥ सूत्रम् ॥**

समुदायार्थः प्रकटः, अवयवार्थं त्वाह–'असुरेन्द्रयो'रित्यादिना (११४–७), असुरेन्द्रयोः पुनः दक्षिणार्द्धाधिपत्यूत्तरार्द्धाधिपत्योश्चमरबलिसंज्ञयोः किमित्याह–यथासंख्यं सागरोपममधिकं च कियतापि परा स्थितिर्भवतीति पूर्ववत् ॥ सागरोपमस्थितिसाधर्म्यात् व्यन्तरज्योतिष्कौ विहायेदमाह—

**सौधर्मादिषु यथाक्रममिति ॥ ४–३३ ॥ सूत्रम् ॥**

एतद् व्याचष्टे–'सौधर्ममादि'मित्यादिना (११४-१०) सौधर्मं कल्पमादिं कृत्वा सर्वार्थसिद्धविमानान्तानां यथाक्रममिति ऊर्ध्वं परा उत्कृष्टा स्थितिर्वक्ष्यते ॥ एनामेवाह—

**सागरोपमे इति ॥ ४–३४ ॥ सूत्रम् ॥**

एतद् व्याचष्टे–'सौधर्मे'त्यादिना (११४–१२) सौधर्मे कल्पे प्रागुपन्यस्ते देवानामिन्द्रसामानिकादीनां परा उत्कृष्टा स्थितिर्द्वे सागरोपमे इति ॥

अधिके चेति ॥ ४–३८ ॥ सूत्रम् ॥

एतद् व्याचष्टे–'ऐशान'इत्यादिना (११४-१४) यथाक्रमं ग्रहणात् ऐशाने कल्पे द्वे सागरोपमे अधिके कियताऽपि परा स्थितिर्भवतीति । 'सनत्कुमार' इत्यादि निगदसिद्धं यावत् सर्वार्थसिद्धे अजघन्योत्कृष्टा त्रयस्त्रिंशदिति, नवरं नवसु ग्रैवेयकेष्विति विभक्त्यलोपः सूत्रे एकैकेनाधिकानीति नियतविषयनियमार्थः, विजयादिष्विति तु द्व्यधिकसंख्यानियमार्थः, सर्वार्थसिद्ध इति चाजघन्योत्कृष्टसंख्यानियमार्थ इति, आरणाच्युतादिति कृतैकवद्भावो निर्देशः, आरणोपलक्षितो वा इतिकृत्वा ॥ 'अत्राहे'त्यादि (११६-३) सम्बन्धग्रन्थः, मनुष्यतिर्यग्योनीनां किमित्याह-परापरे जघन्योत्कृष्टे स्थिती व्याख्याते 'नृस्थिती' इत्यादिना प्राक्, अथौपपातिकानां नारकदेवानां किमेकैव परा स्थितिः, परापरे न विद्येते स्थिती इति, अत्रोच्यते—

अपरा पल्योपममधिकं चेति ॥ ४–३९ ॥ सूत्रम् ॥

निगदसिद्धमेव, एवं—

सागरोपमे इति ॥ ४–४० ॥ सूत्रम् ॥

एतद् व्याचष्टे–सनत्कुमारे कल्पे तृतीये अपरा जघन्या स्थितिः, द्वे 'सागरोपमे' इति ॥

अधिके चेति ॥ ४–४१ ॥ सूत्रम् ॥

---

१ सत्र सनत्कुमारे (३६) विशेषत्रिसप्तदशैकादशत्रयोदशपञ्चदशभिरधिकानि च (३७) आरणाच्युतादूर्ध्वमेकैकेन नवसु ग्रैवेयकेषु विजयादिषु सर्वार्थसिद्धे च (३८)

एतद् व्याचष्टे-माहेन्द्रे कल्पे जघन्या स्थितिः, किमित्याह-अधिके द्वे सागरोपमे इति ॥

परतः परतः पूर्वा पूर्वाऽनन्तरा इति ॥ ४-४२ ॥ सूत्रम् ॥

एतद् व्याचष्टे-'माहेन्द्रकल्पात् परत' इत्यादिना (११६-१५) माहेन्द्रात् कल्पात् परतः ब्रह्मलोकादारभ्य पूर्वा स्थितिः परा उत्कृष्टा,किमित्याह-अनन्तरा-जघन्या स्थितिर्भवति,उपरितनकल्प इत्यर्थः,एतदेव दर्शयति-'तद्यथे'त्यादिना(११६-१६) माहेन्द्रे कल्पे परा स्थितिः सप्त सागरोपमाणि उक्ता सा ब्रह्मलोके जघन्या भवति, एवं ब्रह्मलोके दश सागरोपमाणि परा स्थितिरुक्ता, सा लान्तके जघन्या भवन्ति, अतिदेशमाह-'एव'मित्यादिना (११७-१) आ सर्वार्थसिद्धादिति सर्वार्थसिद्धं यावत्, आङ् मर्यादायां, विजया दिषु चतुर्षु विजयवैजयंतजयंतापराजितेषु परा स्थितिस्त्रयस्त्रिंशत्, एवं परतः परतः पूर्वा पूर्वाऽनन्तरेति यावत् भयभवः (उभयसंभवः) तावद्द्रष्टव्यम्,अत एव एतेष्विति,जघन्या एकत्रिंशदेव, उत्कृष्टा त्रयस्त्रिंशत्, मुख्यवृत्त्यैव सूत्रेऽभिधानात्, यथोक्तं प्रज्ञापनायाम्-विजयवेजयंतजयंतापराजिअदेवाणं केवइअं कालं ठिती पण्णत्ता ?,गोयमा ! जहण्णेणं एगतीसं सागरोवमाइं, उक्कोसेणं तेत्तीसं, सव्वट्ठसिद्धगदेवाणं पुच्छा, गोयमा ! अजहण्णमणुक्कोसेणं तेत्तीसं सागरोवमाइं ठिती पण्णत्ता," एतदाह-'से'त्यादि (११७-२) तासां विजयादिसम्बन्धिनी उत्कृष्टा स्थितिः, किमित्याह-अजघन्योत्कृष्टा तथैकरूपैव सर्वार्थसिद्ध इति ।

नारकाणां च द्वितीयादिष्विति ॥ ४-४३ ॥ सूत्रम् ॥

परतः परतः पूर्वा पूर्वाऽनन्तरेति सूत्रमुक्तसम्बन्धमेवेति न सम्बन्ध उक्तः, एतद्व्याचष्टे-'नारकाणां चे'त्यादिना (११७-५),

नारकाणां च, न केवलं देवानां, द्वितीयादिषु भूमिषु शर्कराद्यासु पूर्वा पूर्वा परा उत्कृष्टा स्थितिः सागरोपमादिलक्षणा, न व्यवहिता, किन्त्वनन्तरा, किमित्याह-परतः परतः अग्रतोऽग्रतः अपरा भवति, जघन्येत्यत्यर्थः, एतदेव व्याचष्टे-'तत्र-घे'त्यादिना (११७-६) निगदसिद्धं यावत्-

दशवर्षसहस्राणि प्रथमायामिति ॥ ४-४४ ॥ सूत्रम् ॥

एतदपि निगदसिद्धमेव, एवं भवनेषु चे (४-४५) त्याद्यपि, एवं 'व्यंतराणां चेति (४-४६) एवं 'परा पल्योपमे'[1]-त्यादि, सर्वं सपरं भाष्यं निगदसिद्धं यावत् अध्यायपरिसमाप्तिरिति ॥

आचार्यहरिभद्रोद्धृतायां श्रीतत्त्वार्थडुपडिकावृत्तौ चतुर्थोऽध्यायः समाप्तः ।

अधुना पञ्चम आरभ्यते-इह चोक्ता जीवाः, अजीवान् वक्ष्याम इति सम्बन्धग्रन्थः, अभिहिता जीवाः संसारिणो' इत्यादिना ग्रन्थेन प्रागुद्दिष्टा जीवाजीवादिसूत्रे, अजीवान् वक्ष्यामः, उद्देशक्रमप्रामाण्यादित्याह ॥

अजीवकाया धर्माधर्माकाशपुद्गला इति ॥ ५-१ ॥ सूत्रम् ॥

एते धर्मादयः अजीवकायाः उच्यंते इति सूत्रसमुदायार्थः। अवयवार्थं त्वाह-'धर्मास्तिकाय' इत्यादिना (१२८-५।६) गति-

[1] परा पल्योपमं (४७) ज्योतिष्काणामधिकं (४८) ग्रहाणामेकं (४९) नक्षत्राणामर्धं (५०) तारकाणां चतुर्भागः (५१) जघन्या त्वष्टभागः (५२) चतुर्भागः शेषाणाम् (५३)

परिणतं जीवादिद्रव्यं, तन्नियमधारणात् धर्मः, अस्तयः-प्रदेशाः कायः-संघातः, अस्तीनां कायः अस्तिकायः, धर्मश्चासावस्तिकायश्चेति समासः, एवमधर्मास्तिकायोऽपि, नवरं यथोदितनियमाधारणाद् अधर्मः, रूढिषु क्रिया व्युत्पत्त्यर्था नार्थक्रियार्थेति, एवमाकाशास्तिकायोऽपि, नवरं सर्वद्रव्यस्वभावदीपनादाकाशमिति, एवं पुद्गलास्तिकायोऽपि, नवरं पूरणगलनधर्माणः पुद्गला इति, सूत्रेऽस्तिशब्दानुपादानं पदैकदेशे पदप्रयोगनीत्या, सूचनात् सूत्रमितिकृत्वा इति, अजीवकायाः जीवकायादन्ये एतावन्त एवेति, तान् स्वलक्षणतः प्रत्येकं आत्मलक्षणभेदेन परस्ताद्वक्ष्यामः इत्यग्रे प्रतिपादयिष्यामः, कायग्रहणप्रयोजनमाह-'कायग्रहणमिह सूत्रे प्रदेशावयवबहुत्वार्थं' तत्र प्रकृष्टा देशाः-निर्विभागाः विभागाः धर्म्माधर्म्माकाशानामसंख्येयाः, लोकाकाशमधिकृत्य, अपृथग्भवनाच्च प्रकृष्टत्वं, एवमवयूयन्त इत्यवयवाः स्कन्धेषु बहव एव, सङ्ख्येयासङ्ख्येयानन्ता इति, ननु परमाणुरपि पुद्गलास्तिकाय एव, यथोक्तं-"खंधा खंधदेसा खंधपदेसा परमाणुपुग्गला" इति, कथं सावयव इति, अत्रोच्यते, भावावयवैर्वर्णादिभिः, तथा चोक्तं-"कइविहे णं भंते ! भावपरमाणू पण्णत्ते ?, गोयमा ! चउव्विहे, तंजहा-वण्णमंते गंधमंते रसमंते फासमंते" इत्यादि, कथं परमाणुत्वं ?, द्रव्यावयवैर्निरवयवत्वादिति, द्वितीयं कायग्रहणे प्रयोजनमाह—'अद्धे'त्यादिना (१२०-४।५) अद्धा चासौ समयश्च अद्धासमयः-समयक्षेत्रवर्ती समय एव निर्विभागः, तस्य प्रतिषेधार्थं, स हि समय एव, न काय इत्यर्थः, कायत्वे तु तत्प्रदेशावयवाना सदैव भावात् सदा तत्साचिव्यजधर्म्मभेदभाव इति भावनीयं, चशब्दः, प्रकार(कारणा)न्तरसमुच्चयार्थ इति ॥ एते धर्मादयः किमित्याह—

द्रव्याणि जीवाश्चेति ॥ ५-२ ॥ सूत्रम् ॥

द्रवन्तीति द्रव्याणि, न गुणादिमात्रं, पञ्च एवेति सूत्रसमुदायार्थः। अवयवार्थं त्वाह-'य एत' इत्यादिना (१२०-६।७) य एते धर्मा-दयः प्रथमसूत्रोपदिष्टाः चत्वारो धर्माधर्माकाशपुद्गला जीवाश्च प्रागुक्ताः, किमित्याह-पंच द्रव्याणि भवन्ति, तथा तथा द्रवणात, तदेते कायाश्च द्रव्याणि च, उभयव्यवहारदर्शनात्, एतदाह-'उक्तं ही'त्यादिना, उक्तं यस्मादिहैव प्रथमे ऽध्याये, किमि-त्याह-मतिश्रुतयोर्ज्ञानयोर्निबन्धो ग्रहणता द्रव्येषु धर्मादिष्वसर्वपर्यायेषु तथाऽविशुद्धग्रहणतया, विशुद्धग्रहणतस्तु केवलस्ये-त्याह-सर्वद्रव्यपर्यायेषु केवलस्य निबन्ध इति, एतेन तथा द्रवणमाह, विशिष्टज्ञेयतयाऽपरिणतस्य ग्रहणायोगादिति॥ एतानि च—

नित्यावस्थितान्यरूपीणीति ॥ ५-३ ॥ सूत्रम् ॥

समुदायार्थः प्रकट। अवयवार्थं त्वाह-'एतानी'त्यादिना (१२०-१०।११) एतानि द्रव्याणि धर्मादीनि नित्यानि भवन्ति, तद्भावाव्ययतया, नाप्रच्युतानुत्पन्नस्थिरैकस्वभावतया, इहोपपत्तिमाह-तद्भावाव्ययं नित्यमिति वक्ष्यते, नैते धर्मादयः कदा-चिद्धर्मादिभावं परित्यक्तवन्तः परित्यजन्ति परित्यक्ष्यन्ति चेति, अवस्थितार्थं परिव्याचष्टे-अवस्थितानि न न्यूनाधिकानि चेत्यर्थः, एतदेवाह-'न ही'त्यादिना, न हि यस्मात् कदाचित् कस्मिन् काले पंचत्वं संख्यामविकृत्य भूतार्थत्वं सतत्त्व-लक्षणं व्यभिचरन्ति, अतद्भावापत्त्या, अरूपिपदं व्याचष्टे-अरूपीणि च अपुद्गलद्रव्याणि, अत एवाह-नैषां रूपमस्तीति विशिष्टरूपप्रतिषेधोऽयं, तथा न समुदायप्रतिषेधः, किं तर्हि?, आद्यानां चतुर्णां विद्वत्सदस्येकमूर्खभावेऽपि मौर्ख्यनिषेधवत्, किमिदं रूपमित्याह-रूपं मूर्तिः रूपरसगन्धस्पर्शाना तथाविधविशिष्टैकपरिणतिरूपा चक्षुरादिग्राह्या, तथा चाह-मूर्त्याश्रयाश्च स्पर्शा-दयः, रूपादिदपि विशिष्टसंस्थानशून्यानामभावादिति ॥ नित्यावस्थितान्यरूपाणीति विशेषाभिधाने विशेषवादमाह—

रूपिणः पुद्गला इति ॥ ५-४ ॥ सूत्रम् ॥

धर्म्मादीना मध्य इति सूत्रसमुदायार्थः। अवयवार्थं त्वाह–'पुद्गला एवे' (१२१–२)त्यादिना, पुद्गला एव परमाणुप्रभृतयोऽनन्तप्रदेशस्कन्धावसानाः रूपिणो भवन्ति, मूर्त्तिमत्तया परिणतिमासादयंति, न धर्म्मादयः रूपिणः, व्याचष्टे–'रूपमेषा'-मित्यादिना, रूपं मूर्त्तिः एषां पुद्गलाना परमाण्वादीना अस्ति विद्यते, षष्ठीप्रदेशनात् कथंचिदभिन्नं, एषु वा पुद्गलेष्वस्तीति, तिलतैलवत् कथंचिद्भिन्नमिति सप्तम्योक्तं, तदेवमेते रूपिणः, नित्यत्वमवस्थितत्वं चैतेषामपि समस्त्येन, सामान्येन तद्भावाव्ययतया न्यूनाधिकत्वाभावेन चेति ॥ एतद्विशेषाभिधित्सयोवाच—

आकाशादेकद्रव्याणीति ॥ ५–५ ॥ सूत्रम् ॥

आकाशान्तानि धर्मादीनि एकद्रव्याणीति सूत्रसमुदायार्थः॥ अवयवार्थं त्वाह-'आकाशादि'त्यादिना (१२१-५) अभिविधिवाचित्वादाङो द्वित्वं, ततश्च सहितया सूत्रपाठस्तं निवृणोति, आ आकाशाद्, अध्यायादिसूत्रोपपन्नं क्रममुद्दिश्याकाशं यावत् धर्म्माधर्म्माकाशानि सूत्रानुपूर्व्योक्तानि, किमित्याह–एकद्रव्याण्येव, तेषा समानजातीयानि द्रव्यान्तराणि न सन्तीत्यर्थः, अवधारणफलदर्शनायाह–पुद्गलजीवास्त्वनेकद्रव्याणीति समानजातीयद्रव्यान्तरभावात्, अनेनात्मैकत्वप्रत्येकत्वनिरासः, तदेकत्वे संसाराद्यमात्र इति भावनीय। एतद्विशेषाभिधित्सयैवाह—

निष्क्रियाणीति ॥ ५–६ ॥ सूत्रम् ॥

अगमनशीलानीति सूत्रसमुदायार्थः। अवयवार्थं त्वाह–'आ आकाशादि'त्यादिना (१२१–८) आ आकाशादेव आका-

ग्रमेन यावत् धर्मादीन्यनन्तरोदितानि, किमित्याह–निष्क्रियाणि भवन्ति, विशिष्टक्रियाप्रतिषेधोऽयं, यदाह–पुद्गलजीवास्तु पुद्गलजीवाः पुनः क्रियावंतः, अभिमतक्रियाविशेषमाह–क्रियेति गतिकर्माह सूत्रकारः, गतिक्रियामित्यर्थः, नापेक्षिकां उत्पादक्रियामिति, सा हि धर्मादीनामपि समस्त्येवेत्यभिप्रायः ॥ सूत्रान्तरसम्बन्धमाह–'अत्राह्योक्त'मित्यादिना (१२२-१) अत्राह्योक्तं भवता प्रदेशावयवबहुत्वं सामान्येन कायसंज्ञ धर्मादिकायाभिधानमिति तत् क एषां धर्मादीनां कायाना प्रदेशावयवनियमः?, केषा प्रदेशाः केषा वा अवयवा इति, अमूर्तेष्ववयवव्यवहारो दुर्घटः, मूर्तेषु चान्त्यावयवेषु परमाणुषु प्रदेशव्यवहार इत्यभिप्रायः, एवं पराभिप्रायमाशंक्याह–अत्रोच्यते, सर्वेषाममूर्तानां धर्मादीना प्रदेशाः सन्निकृष्टा देशाः प्रदेशा इतिकृत्वा, परमाणोरित्येतत् प्राप्तेऽन्यत आह–अन्यत्र परमाणोः परमाणुं मुक्त्वा, द्रव्यतोऽशक्यभेदस्य परमाणुत्वात्, समानजातीयप्रदेशप्रतिषेधोऽयं, रसादयस्तु पर्याया विद्यन्ते, अवयवास्तु विसकलितभेदवृत्तयः स्कन्धानामेवानन्तानन्तप्रदेशक्रान्तानां, वक्ष्यति यस्मात् सूत्रकारः,किमित्याह-'अणव'इत्यादि (१२२-४) अणवः–परमाणवः स्कन्धाश्च–तत्संहतिरूपाः (भेद) संघातेभ्यः स्कन्धाः भेदेभ्योऽणव उत्पद्यन्ते, अत एवैते अवयूयमानत्वादवयवा इति चैतत्, स्कन्धावस्थायां सर्वथाऽणुत्वासिद्धेः, सिद्धौ वा प्रत्येकपरमाणुपुद्गलेष्विव स्कन्धायोगाद् ,एतेन तत्प्रदेशत्वासिद्धिरिति ॥ एवं प्रदेशावयवविभागमेषामभिधाय तादियत्तामभिधातुमाह–

असङ्ख्येयाः प्रदेशा धर्माधर्मयोरिति ॥ ५–७ ॥ सूत्रम् ॥

समुदायार्थः प्रकटः। अवयवार्थं त्वाह–'प्रदेशो नामे'त्यादिना (१२२–७) प्रदेश उक्तार्थः, नामशब्दः किल एवार्थः, स च परोक्षात्तागमवादसूचकः, एवमाप्ताः कथयंति, यदुत अपेक्षाप्रयोजनस्तन्निर्वृत्तये वा आपेक्षिकः, स्थिरा विभागापेक्षया, सर्वलघुरि-

त्यर्थः, तदयं मूर्त्तेतरेषु साधारणसत्तानिबन्धनत्वात्, स्पष्टतराभिधित्सयाऽऽह–सर्वसूक्ष्मस्य परमाणोः सर्वलघोरित्यर्थः, अवगाह इत्यवगाहोऽवस्थानमित्येषः प्रदेशः, एवम्भूता असंख्येया धर्माधर्मयोरिति ।

जीवस्य चेति ॥ ५–८ ॥ सूत्रम् ॥

एतद् व्याचष्टे–'एकजीवस्ये'त्यादिना (१२२–९) एकजीवस्य–एकजीवव्यक्तेः चः समुच्चये असङ्ख्येयाः सङ्ख्यातीताः प्रदेशा भवन्ति, न केवलं धर्माधर्मयोरेवेति ।

आकाशस्यानन्ता इति ॥ ५–९ ॥ सूत्रम् ॥

एतद् व्याचष्टे–'लोके'त्यादिना (१२२-११) लोकालोकाकाशस्य सामान्येनाखिलस्य, किमित्याह–अनन्ताः प्रदेशाः, अपर्यवसाना इत्यर्थः, विशेषेण लोकाकाशस्य पुनः धर्माधर्मैकजीवैः, किमित्याह–तुल्याः सदृशाः समानाः प्रदेशा इति, इयांस्तु विशेषः–धर्मादीना वितता एव, जीवस्य तु संकोचविकाशधर्माण इति ॥

संख्येयासंख्येयाश्च पुद्गलानामिति ॥ ५–१० ॥ सूत्रम् ॥

एतद् व्याचष्टे–'संख्येया' इत्यादिना (१२२-१४) यथा सम्भवति परिणामवैचित्र्यात्, केषामित्याह–पुद्गलानाम्, इह पुद्गलाः परमाण्वादयः अचित्तमहास्कन्धावसाना गृह्यन्ते, पूरणगलनधर्मात्, अनन्ताः सूत्रेऽनुपात्ता अपि चशब्दात् लभ्यन्ते, अनुवृत्तेरिति, एतदाह–अनन्ता इति वर्त्तते, तदेतदुक्तं भवति–अनुवर्त्तन्ते नाम विधयो न चानुवर्त्तनादेव भवति, किं तर्हि ?, यत्नादिति ।

नाणोरिति ॥ ५–११ ॥ सूत्रम् ॥

पूर्वसूत्रापवादोऽस्य पिण्डार्थः। अवयवार्थं त्वाह–'अणो'रित्यादिना (१२३-२)अणोः–परमाणुपुद्गलस्य प्रदेशाः–आरम्भकाः परमाणवः न सन्ति,न चैवमप्यभावोऽस्येत्याह–'अनादिमध्यप्रदेशो हि परमाणु'रिति, यस्मादादिमध्यान्तप्रदेशैः रहित एवायमिष्यते, न चैवंभूतोऽपि न सम्भवति, विज्ञानवद्भावाविरोधात् कार्यगम्यत्वाच्चेति॥ व्यवहारनयमधिकृत्यावगाहिनामवगाहमाह–

लोकाकाशेऽवगाह इति ॥ ५–१२ ॥ सूत्रम् ॥

एतद् व्याचष्टे–'अवगाहिना'मित्यादिना (१२३-४) अवगाहिनामित्यनुप्रवेशवतां धर्मादीनां, किमित्याह-अवगाहः–प्रवेशः, क्वेत्याह–'लोकाकाशे' चतुर्दशरज्ज्वात्मक एव भवति, नालोकाकाशे, तस्य एतत्स्वभावत्वादिति॥ तथा चाह–

धर्माधर्मयोः कृत्स्ने इति ॥ ५–१३ ॥ सूत्रम् ॥

एतद् व्याचष्टे–'धर्माधर्मयो'रित्यादिना (१२३-६) धर्मास्तिकायाधर्मास्तिकाययोः कृत्स्ने सम्पूर्णे लोकाकाशे–चतुर्दशरज्ज्वात्मकेऽपि, किमित्याह–अवगाहो भवति, अनादिकालीनः,परस्पराश्लेषपरिणतेरिति भावः॥

एकप्रदेशादिषु भाज्यः पुद्गलानामिति ॥ ५–१४ ॥ सूत्रम् ॥

'एकप्रदेशादिष्वि'ति (१२३-८) समानाधिकरणे बहुव्रीहिः,एकश्चासौ प्रदेशश्चेति, प्रदेशः उक्तलक्षणः, एकः प्रदेश आदिर्येषां तेष्वेकप्रदेशादिषु भाज्योऽवगाहः पुद्गलानामिति सूत्रसमुदायार्थः। अवयवार्थं त्वाह 'अप्रदेश' इत्यादिना (१२३–८) अविद्यमानद्रव्यान्तरप्रदेशोऽप्रदेशः–परमाणुः, स्वयमेव प्रदेशत्वात्, पुद्गलश्चायं पूरणगलनधर्मत्वत एव, संख्येयप्रदेशैः प्रचयविशेषात् संख्येयः स्कन्धः, सोऽपि पुद्गलः, एवमसंख्येयानन्तप्रदेशावपि वाच्यौ, तेषां पुद्गलानां सर्वेषामेव एकादिष्वाकाशप्रदेशेषु, किमि-

त्याह–'भाज्योऽवगाह' इति,अनेकार्थत्वाद्धातूनाम्,एतद् व्याचष्टे–'भाज्यो विभाज्यो विकल्प्य इत्यनर्थान्तरम्' विशेषेण अतिशयेन परमाण्वादिना भाषणीयो व्याख्येयः, विकल्पस्तु भेदसम्भवे, यथा द्व्यणुकस्यैकस्मिन् द्वयोश्च, परिणामवैचित्र्यादिति, एतदेवाह–'तद्यथे'त्यादिना (१२३-१०) परमाणोरेकस्मिन्नेव प्रदेशेऽवगाहः,तस्य प्रदेशत्वात्, द्व्यणुकस्यैकस्मिंश्च द्वयोश्च,परिणामवैचित्र्यात्, यत्नमाण्डादौ तथोपलब्धेः, एवं त्र्यणुकादिष्वपि भावनीयं यावदनन्तप्रदेशस्य च असंख्येयप्रदेशेष्वेव, तथा परिणामवैचित्र्यात्, लोकाकाश एव तद्भावादिति ॥

असंख्येयभागादिषु जीवानामिति ॥ ५–१५ ॥ सूत्रम् ॥

एतद् व्याचष्टे–'लोके' (१२३-१५) त्यादिना, लोकाकाशप्रदेशानां यथोक्तानां, किमित्याह--असंख्येयभागादिषु कदाचिदेकस्मिन् असंख्येयभागे कदाचिद् द्वयोः कदाचित्त्रिष्वित्यादि, जीवानां पृथिवीकायिकादीनां,किमित्याह–अवगाहो भवति, प्रवेशः, कियद्यावदित्याह–आ सर्वलोकादिति, सर्वलोकं यावत्, केवलिनः समुद्घात इति ॥ 'अत्राहे' (१२३–१७) त्यादि सम्बन्धग्रन्थः कण्ठ्यः, को हेतुः–का युक्तिः, असंख्येयभागादिषु जीवानामवगाहो भवति लोकस्य, तेऽपि तुल्यप्रदेशा एव, न च तुल्यप्रदेशानां पटादीनामवगाहभेद इत्यभिप्रायः, अत्रोच्यते समाधिः—

प्रदेशसंहारविसर्गाभ्यां प्रदीपवदिति ॥ ५–१६ ॥ सूत्रम् ॥

अन्योऽन्यानुप्रवेशादिना प्रदीपवत्तुल्यत्वेऽप्यवगाहभेद इति सूत्रसमुदायार्थः। अवयवार्थं त्वाह–'जीवस्य ही'त्यादिना (१२४-२) जीवस्य यस्मात् प्रदेशानाम् उक्तलक्षणानां संहारविसर्गौ संकोचविकाशाविष्टौ–अभ्युपगतौ प्रदीपस्येवेति दृष्टान्तः, एवमेव.

व्याचष्टे–'तद्यथे'त्यादिना (१२४–३) तैलवर्त्यग्न्युपादानप्रवृद्धः इत्यनेन अविकलां हेतुसामग्रीमाह, प्रदीपो विशिष्टज्वालात्मकः प्रतिबद्धप्रभासंघातपरिवारः महतीमपि शालामपि कूटाकारशालां सन्निवेशविशेषरूपां प्रकाशयति, अण्वीमपि लघ्वीमपि अपरित्यक्तस्वपरिवार एव, एवं माणिकावृतो माणिकां प्रकाशयति, माणिका मानभेदः, एवं द्रोणावृतो द्रोणं प्रकाशयति,द्रोणोऽपि मानभेद एव,आढकावृतश्चाढकं प्रकाशयति,मानभेदमेव.एवं प्रस्थावृतः प्रस्थं मानभेदमेव,पाण्यावृतः पाणिमेव प्रकाशयति, एवं दृष्टान्तः, अयमर्थोपनयः–एवमेव प्रदेशानामुक्तलक्षणानां संहारविसर्गाभ्यां कर्म्मसचिवतत्स्वभावतया संकोचविकाशभ्यां जीवः–आत्मा महान्तं प्रमाणतः हस्त्याद्यपेक्षया अणुं वा प्रमाणत एव कुन्थ्वाद्यपेक्षया, किमित्याह–पंचविधं शरीरस्कन्धमौदारिकादिलक्षणमभिहितस्वरूपं, अयमेव विशेष्यते–'धर्मे'त्यादिना (१२४–७) धर्मश्चाधर्मश्चाकाशं च पुद्गलजीवप्रदेशाश्चेति समासस्तेषां समुदायः तं व्याप्नोति जीव इति, किमुक्तं भवति?–अवगाहत इत्यर्थः, तदित्थं 'धर्माधर्मे'त्यादि (१२४–८) धर्मश्चाधर्मश्चेति द्वन्द्वः, एषां धर्माधर्माकाशजीवानामिति,अमूर्त्तत्वसाधर्म्यादित्थमुपन्यासः, परस्परेण वृत्तिरितीतरेतरानुवेधस्तत्स्वभावतया न विरुध्यते, पुद्गलेषु च स्कन्धादिषु न विरुध्यते, कुत इत्याह–अमूर्त्तत्वाद् धर्मादीनां, एवं व्यवहारनयमतादवगाहादि,निश्चयतस्तु सर्व एव भावाः स्वावगाहा इति॥ 'अत्राहे'त्यादि (१२४-९) सति प्रदेशसंहारविसर्गसंभवे उक्तनीत्या कस्मादसंख्येयभागादिषु लोकस्य जीवानामवगाहः–प्रवेशो भवति?, सर्वप्रदेशोपसंहारेण नैकप्रदेशादिषु?, प्रतिबन्धकस्याभावात्, संहरणादिति तथा संहरणोपपत्तेरित्यभिप्रायः, अत्रोच्यते–'सयोगत्वा'दित्यादि (१२४–१२) सयोगत्वात् संसारिणां योगमधिकृत्य नैकप्रदेशादिष्ववगाहः, सरूपत्वादित्यभिप्रायः, सिद्धानां किं न इत्याशङ्कापोहायाह–'चरमे'त्यादि

(१२४-१२) चरमशरीरम्–अपश्चिमं तत् त्रिभागहीनत्वाच्च चरमशरीरत्रिभागोनावगाहित्वात् शुषिरापूरणतः सिद्धानामिति भावनीयं । 'अत्राहे'त्यादि (१२४-१४) सम्बन्धग्रन्थः, उक्तं भवताऽधिकृताध्यायप्रथमसूत्रे धर्मादीनस्तिकायान् परतः तल्लक्षणतो वक्ष्याम इति, तत् किमेषां धर्मादीनां लक्षणमिति, अत्रोच्यते—

गतिस्थित्युपग्रहो धर्माधर्मयोरुपकार इति ॥ ५–१७ ॥ सूत्रम् ॥

गतिस्थित्योरुपग्राहकौ धर्माधर्माविति सूत्रसमुदायार्थः । अवयवार्थं त्वाह–'गतिमता'मित्यादिना (१२४-१७) 'गतिमतां' स्वत एव गतिपरिणामवतां जीवादीनां गतेः–देशान्तरप्राप्तिलक्षणायाः स्थितिमतां च स्थितिपरिणामवतां च स्वत एव स्थितेः–एकदेशावस्थानलक्षणायाः उपग्रह इति निमित्तं धर्मास्तिकायाधर्मास्तिकाययोः उपकारः प्रयोजनं, यथासंख्यं, न व्यत्ययेन, नाप्येक एव द्वयोः, तदेतदुक्तं भवति–गतिलक्षणो धर्मास्तिकायः स्थितिलक्षणश्च अधर्मास्तिकाय इति, गतिस्थिती अपेक्षाकारणवत्यौ कार्यत्वाद् घटवत्, उपग्रहशब्दं व्याचष्टे 'उपग्रह' इत्यादिना (१२४–१८) एते पर्यायशब्दाः,एते सामान्येन, नवरं उपग्रहकारणं उपग्राहकं, वह्न्यादितद्धूमादेर्निमित्तकारणं सहकारि दण्डादिवद् घटादेः,अपेक्षाकारणं भिक्षादिवत्तथाविधवासादेः, भिक्षाः तत्र वासयन्तीति, कारीषोऽग्निरध्यापयति, निश्चौरता पन्थानं वाहयतीतिवचनात्, हेतुरुपादानकारणं मृदादि घटादेरिति, उपकारशब्दव्याचिख्यासयाऽऽह–'उपकार' इत्यादि (१२४–१९) एतेऽपि पर्यायशब्दा एव सामान्येन, नवरं यथोक्तोपग्रहादिषु यथासंख्यमिति, उपग्रहकारणस्योपकारः कार्यं, निमित्तकारणस्य प्रयोजनं, अपेक्षाकारणस्यानुपघातो गुणः, हेतोरर्थ इति, एवं गतिपरिणामपरिणतस्य जलवद्गतेरुपग्राहको यथोक्तजीवानां धर्मास्तिकायः, एवं तिष्ठासोः पुरुषस्य गमभूमिवत् उपग्राहकः अध-

र्मास्तिकाय इति, एवं गतिस्थित्युपग्रहप्रयोजनताऽनयोः, सदोभयाभावश्च जीवादीनां धर्मादिभावे स्वगततथाविधपरिणामकादाचित्कतया, स त्वनादितद्भावकालादिसापेक्ष इति भावनीयं, न हि मत्स्यानामपि जलमित्येव गतिः, अपि तु तथापरिणतस्य जलात्, एवं पुरुषस्यापि न समा भूमिरिति स्थितिः, अपि तु तथापरिणतस्य समभूमेः, मही पातालं किं ततः ?, तद्भावपरिणतिशून्यस्य पातालागमनादित्यत्र बहु वक्तव्यं तत्तु नोच्यते ग्रन्थविस्तरभयात् अक्षरगमनिकामात्रफलत्वात् प्रारम्भस्येति ॥

आकाशस्य अवगाह इति ॥ ५-१८ ॥ सूत्रम् ॥

अवगाह उपकारः आकाशस्येति समुदायार्थः । अवयवार्थं त्वाह–'अवगाहिना'मित्यादिना (१२५-२) अवगाहिनां धर्माधर्मपुद्गलजीवानां चतुर्णामपि अवगाहः तथातत्प्रवेशलक्षणः, किमित्याह—आकाशस्योपकारः आकाशस्य सम्बन्धि प्रयोजनं, भिन्नाधारमिति विभक्त्यलोपः, अवगाह्यावगाहकयो रूपाधीनत्वेऽपि चावगाहस्याकाशेन व्यपदेशः तदसाधारणत्वात्, असाधारणेन च हेतुना व्यपदेशः प्रवर्त्तते, तद्यथा–भेरीशब्दो यवाङ्कुर इति, धर्मादयो ह्यवगाहहेतवो गत्यादिहेतवश्च, आकाशं त्ववगाहहेतुरेव, आकाशस्योपकार इत्युक्तं, कथं केषामयमित्येतदाह–'धर्मे'त्यादिना (१२५–३) धर्माधर्मयोः–उक्तलक्षणयोः अन्तःप्रवेशसम्भवेन स्वमध्ये धर्मादिप्रवेशदानेन, आकाशदेशाभ्यन्तरवर्त्तिनो हि धर्माधर्मप्रदेशाः, सम्भवग्रहणमलोके तदसम्भवात्, न तर्हीदं व्याप्याकाशलक्षणं इति चेत् को वा किमाह ?, लोकाकाशस्यैवैतदभिधानात्, अत एवोक्तं लोकाकाशेऽवगाह इति, तथा पुद्गलजीवानां उक्तलक्षणाना, किमित्याह–संयोगविभागैश्च तथा नियतैर्बहुभिस्तेषामन्यत्र गमनात्, चशब्दादन्तःप्रवेशेन आकाशस्योपकार इति ॥

शरीरवाङ्मनःप्राणापानाः पुद्गलानामिति ॥ ५–१९ ॥ सूत्रम् ॥

शरीरादयः पुद्गलानामुपकार इति समुदायार्थः। अवयवार्थं त्वाह–'पंचविधानी'त्यादिना (१२५–६) पंचविधानि पंचप्रकाराणि शरीराण्यौदारिकादीनि प्रागुक्तानि पुद्गलानामुपकार इति योगः, तथा वाङ्मनः प्राणापानौ, वाङ्मनःपर्याप्त्येकत्वविवक्षयैकवचनं, प्राणापानयोरप्युच्छ्वासनिश्वासयोर्जात्यपेक्षमिति, इतिशब्दश्चार्थे, वाङ्मनः प्राणापानौ चेत्यर्थः, पुद्गलानां स्कन्धादीनां सम्बन्धि प्रयोजनं, जीव इति गम्यते, एतदेव विशेषेण व्याचिख्यासुराह—'तत्रे'त्यादि (१२५–७) शरीराणि यथोक्तानि द्वितीयाध्याये तथेह द्रष्टव्यानि प्राणापानौ चाष्टमेऽध्याये नामकर्मणि 'गतिजाती'त्यादिसूत्रे पञ्चप्रकारपर्याप्तिकर्मणि प्राणापानक्रियायोग्यद्रव्यग्रहणशक्तिनिर्वर्त्तनक्रियापरिसमाप्तिः प्राणापानपर्याप्तिरित्यत्र भाष्ये व्याख्यास्येते, किं तर्हि वृत्तौ व्याख्याताविल्याह ?,उच्यते–'आशंसायामर्थे भूतवद्वर्त्तमानवच्च प्रत्यया भवन्ति,उपाध्यायश्चेदागमिष्यते तद् व्याकरणमधीतम्',एवमिहापि नामकर्म्मापि संमतमित्यदोपः,तथा 'द्वीन्द्रियादय' इत्यादि,द्वीन्द्रियादयः कृम्यादयः जिह्वेन्द्रिययोगात् पर्याप्तिरसनेन्द्रियसम्बन्धेन भाषात्वेन गृह्णन्ति, तदुचितस्कन्धानामिति, नान्ये जिह्वेन्द्रियरहिताः पृथिव्यादयः, जिह्वेन्द्रियप्रतिबद्धत्वाद्भाषापर्याप्तेरिति, 'संज्ञिनश्चे'त्यादि, संज्ञिनः समनस्का एव,चशब्दस्यावधारणत्वात् मनस्त्वेन मनोभावेन गृह्णन्ति, मननार्थं,नान्ये एकेन्द्रियासंज्ञिपंचेन्द्रियावसानाः,मनःपर्याप्तिकारणाभावादिति। कथमात्मा शरीरादियोग्यान् पुद्गलानादत्ते इत्याक्षिप्ते सत्याह–'वक्ष्यते ही'त्यादि,अभिधास्यते यस्मादष्टमेऽध्याये बन्धाधिकारे,किमित्याह–सकषायत्त्वाज्जीवः कर्म्मणो योग्यान् पुद्गलानादत्ते स बन्ध इति, उक्तमन्यत्रापि–"उष्णगुणः सन् दीपः, स्नेहं वृत्त्या यथा समादत्ते। आदाय शरीरतया परिणमयति

चापि तं स्नेहं ॥१॥ तद्वद्रागादिगुणः सयोगवृत्त्याऽऽत्मदीप आदत्ते । स्कन्धानादाय तथा परिणमयति तांश्च कर्म्मतया ॥२॥" तस्माच्छरीराद्याकारेणोपकारिणः प्राणिनां पुद्गला इति ॥ किं चान्यत् प्रकारान्तरेणापि पुद्गलानामुपकारित्वमित्याह—

सुखदुःखजीवितमरणोपग्रहाश्चेति ॥ ५–२० ॥ सूत्रम् ॥

सुखादिनिमित्तता चोपकारः पुद्गलानामिति सूत्रसमुदायार्थः। अवयवार्थं त्वाह–'सुखोपग्रह' इत्यादिना (१२५–१४) स्रगादिसम्बन्धादात्मनः आल्हादः सुखं तस्योपग्रहो–निमित्तता पुद्गलानामुपकार इति योगः, एवं दुःखोपग्रहः, नवरं कण्टकादिसम्बन्धात् परितापो दुःखं, एवं जीवितोपग्रहः, नवरं प्राणापानक्रियानुपरमो जीवितं, एवं मरणोपग्रहो, नवरं प्राणाद्युपरमो मरणं, अयं च पुद्गलानामुपकारः, पुद्गलसम्बन्धि प्रयोजनमात्मसमवायि, चशब्दाच्छरीरादि च, तस्मिन् सत्येतदिति, भेदेन सूत्राभिधानं पुद्गलात्मोभयाधीनत्वेऽप्यधिकृतफलस्य पुद्गलानामसाधारणतया व्युद्घटिष्यत इत्युक्तं, एवं सर्वत्र योजनीयमिति । सुखोपग्रहादित्वमेव स्पष्टयन्नाह–'तत्रथे'त्यादि (१२५–१५) इष्टाः–स्पर्शादयः अवस्थाऽपेक्षं वल्लभा मनोऽनुकूलतया सुखस्योक्तलक्षणस्य उपकार इति, सुखमात्मपरिणामस्वभावमनुकुर्वन्तीति, कर्मणि षष्ठी द्रष्टव्या, एवमनिष्टाः स्पर्शादयः अवस्थापेक्षमनल्लभा मनःप्रतिकूलतया दुःखस्योक्तलक्षणस्यैव उपकार इति पूर्ववत्, दुःखमात्मपरिणामस्वभावमुपकुर्वन्तीत्यर्थः, 'स्नाने'त्यादि (१२५-१६) स्नानादीनि प्रतीतान्येव,विधिप्रयुक्तानीति देशकालमात्रासात्म्ययोजितानि जीवितस्योपकार इति वर्त्तते, केन भावेनेत्याह–अनपवर्त्तनं चायुष्कस्येति जन्मान्तरोपनिबद्धस्य अनुग्राहकं हेतुसन्निधानतस्तथा, तावन्मात्रे वेदनमित्यर्थः, एवं विषशस्त्राग्निमन्त्रादीनि प्रतीतान्येव, एतानि किमित्याह–मरणस्योपकारा इति वर्त्तते, नैतान्येवेत्याह–अपवर्त्तनं चायुष्कस्य

तथा पूर्ववदस्य दण्डादिभिः कृस्वतापादनमितिभावः, सुखादौ, असातसातवेदनीयाद्युदयोपलक्षणमेतत्, 'अत्राहे'त्यादि, उपपन्नं तावदेतज्जीवितमरणोपग्रहत्वं सोपक्रमायुषां विषादिसम्बन्धवतां अपवर्त्तनीयायुषां (परं अनपवर्त्तनीयायुषां विषादिसंबन्धरहितानां कथं उपकारः?, अत्रोच्यते, तेषामपि) जीवितमरणयोर्निमित्तता, किमित्याह—पुद्गलानामुपकार इति, पुद्गलानां संबन्धि प्रयोजनमात्मनि, विभक्त्यलोपे प्रयोजनं पूर्ववत्, एतत् सम्यग्दर्शनेनावधारयन्नाह—कथमिति चेद् अनन्तरोक्तः पुद्गलानामुपकारः, उच्यते—कर्म्मण इत्यादि, कर्म्मणः ज्ञानावरणीयादेः स्थितिक्षयाभ्यामिति, स्थित्याः क्षयाच्च तत्स्थित्या जीवितोपग्रहः तद्द्वारेण जीवनात्, क्षयेण मरणोपग्रहः, तद्विपाकक्षयात् मरणात्, क्रियामात्रतत्त्वे कर्मणि कथमेतदित्याशङ्कापोहायाह—कर्म्म हि पौद्गलमिति अनन्तप्रदेशात्मकस्कन्धविकाररूपं, न क्रियामात्रतत्त्वमेवेत्याशङ्कानुपपत्तिः। आहारश्च त्रिविध इत्यादि, आहारः अभ्यवहरणं, त्रः समुच्चये, ओजःलोमप्रक्षेपभेदतस्तत्प्रकारः, (ओजआहारः) सर्वप्रदेशैरात्मनः सर्वस्य अपर्याप्तकावस्थायां जन्मकाले प्रथमसमयप्रक्षिप्तपूपवत्, पर्याप्तकावस्थायां तु लोमाहारस्त्वगिन्द्रियग्रहणः, प्रक्षेपाहारस्तु कावलिकः, सोऽपि पर्याप्तकानामेव, पृथिवीकायाद्येकेन्द्रियनारकदेववर्जानां, एवमयं सर्वेषामपि संसारिणां, विग्रहगतिसमापन्नसमुद्घातगतशैलेशीकेवल्युपकाराभावेऽपि स्तोकतया बाहुल्यमधिकृत्याह—उपकुरुते, किंकारणमित्यनवगतभावार्थः प्रश्नः, इहोत्तरं—'शरीरे'त्यादि (१२६–५) स्थितिश्च उपचयबलादिरूपः, शरीरस्य स्थित्यादय एतदर्थं यस्मात् उपकार इति तस्मादाहारः सर्वेषामेवोपकुरुत इति, तत्र स्थितिः—शरीरस्य संधारणं उपचयः—परिपोषः बलं—शक्तिः वृद्धिः—आहारादिरूपा प्रीतिः—परितोषणेति ॥ 'अत्राहे'त्यादि (१२६-७) सम्बन्धग्रन्थः, गृहीमस्तावत्, किमित्याह—धर्म्माधर्माकाशपुद्गलाः उक्तलक्षणा जीवद्रव्याणां संसारिणामुपकुर्वन्ति इत्युक्तनीत्येति

गृह्णामहे-अथ जीवानां पृथिव्यादीनां क उपकारः?, परस्परतः, इत्यनवबोधात् प्रश्निते सत्याह-अन्योऽन्य इत्यादि,

परस्परोपग्रहो जीवानामिति ॥ ५-२१ ॥ सूत्रम् ॥

अन्योऽन्योपग्रहो जीवानामुपकार इति सूत्रसमुदायार्थः। अवयवार्थं त्वाह-'परस्परे'त्यादिना,(१२६-१०) परस्परस्य-अन्योऽन्यं हिताहितोपदेशाभ्यामिति हितप्रतिपादनेन अहितप्रतिषेधेन च उपग्रहो जीवानामिति, तथाऽन्यत्राक्षिप्ता हिताहितनिमित्तता जीवानां प्रयोजनमिति, प्राग् उपयोगो लक्षणमित्युक्तं असाधारणं, तत्र साधारणा च निमित्ततेति न सूत्रान्तरोपन्यासदोषः, 'अत्राहे'त्यादि (१२६ १०) सम्बन्धग्रन्थः॥ अथ कालस्य पाक्षिकत्वेनेष्टस्य 'कालश्चेत्येक' इति वचनात्, उपकारः प्रयोजनाख्यः कः? इति, अत्रोच्यते—

वर्त्तना परिणामः क्रिया परत्वापरत्वे च कालस्य ॥ ५-२२ ॥ सूत्रम् ॥

वर्त्तनादिलक्षण उपकारः कालस्येति सूत्रसमुदायार्थः। अवयवार्थं त्वाह-'तत्रथे'त्यादि (१२६ १४) सर्वभावानां धर्मादीना, वर्त्तमानकालाश्रयास्ते हि वर्त्तन्ते स्वयमेव, तेषां वर्त्तमानानां प्रयोजकः, कालाश्रया वृत्तिस्तथा वर्त्तनाशीलता वर्त्तना कालस्योपकार इति सम्बन्धः, तत्रावर्त्तनार्थमेवाह-उत्पत्तिस्तथा तद्भावप्रादुर्भावलक्षणा अधिगतिः-अविच्युतिस्तदाऽस्याः प्रथमसमयाश्रया वा प्रथमसमया भावोत्पत्तिः वर्त्तनेति भण्यते, तथा परिणामो द्विविध इत्यादि, (१२७-१) द्रव्यस्य स्वजात्यपरित्यागेन परिस्पन्देतरप्रयोगजपर्यायस्वभावः परिणामस्तद्यथा—अङ्कुरावस्थवनस्पतेर्मूलकाण्डत्वक्स्कन्धशाखाविटपपुष्पफललक्षणः परिणामः, आसीद् अङ्कुरः, सम्प्रति स्कन्धवान् एषमः पुष्पिष्यतीति, पुरुषद्रव्यस्य वा बालकुमारयुवमध्यमस्थविरावस्थाः परि-

णामस्तद्भावलक्षणः, स द्विविधः—अविद्यमानादिरनादिरमूर्त्तेषु धर्मादिषु, मूर्त्तेषु पुनरादिमान् अभ्रेन्द्रधनुरादिषु स्तम्भकुम्भादिषु च, चशब्दोऽवधारणार्थः, परिणामो द्विविध एव, तं चाध्यायपरिसमाप्तौ वक्ष्यामः तद्भावः परिणाम इति, स च वस्तूनां ऋतुविभागवेलानियमकृतः 'क्रिया गति'रित्यादि (१२७-३) भाष्यं, करणं क्रिया—द्रव्यपरिणामस्तस्यानुग्राहकः कालः, तथाऽऽकाशदेशानल्यामङ्गुली वर्त्तते, अतीतानागतेति च, अन्यथाऽतीत एव वर्त्तमानोऽनागतश्च स्याद्, एवमनागतो वर्त्तमानश्च संकीर्येत, अनिष्टं चैतत्, तस्मादस्ति कालो यदपेक्षयाऽतीतादिव्यपदेशाः परस्परासंकीर्णाः संव्यवहारानुगुणाः प्रथन्ते, तत्रातीतो द्विविधः भावविषयभेदात्, विनष्टो घट इति भावातीतः, विषयातीतश्चक्षुरादिग्रहणानन्तरमद्राक्षं घटं, तथाऽनागतदिदृक्षाभ्यर्णो घटो विषयानागतः, अलब्धात्मभावो भावानागत इति, तत्र प्रयोगगतिः—जीवगतिपरिणामसंप्रयुक्ता शरीराहारवर्णगन्धरसस्पर्शसंस्थानविषया, विश्रसागतिः प्रयोगमन्तरेण केवला जीवद्रव्यस्वपरिणामरूपा परमाण्वभ्रेन्द्रधनुःपरिवेषादिरूपा, विचित्रसंस्थाना, मिश्रिका प्रयोगविश्रसाभ्यामुभयपरिणामरूपत्वाज्जीवप्रयोगसहचरिताचेतनद्रव्यपरिणामा कुम्भस्तम्भादिविषया, कुम्भादयो हि तेन तादृशा परिणामेनोत्पत्तुं स्वत एव शक्ताः कुम्भकारसाचिव्यादुपजायन्ते, वर्त्तनापरिणामयोः क्रियाजातीयत्वादेव पर्यन्ते क्रियोपादानं, परिणामश्चात्र प्रधानमित्यतो वर्त्तनाक्रिययोः स मध्येऽधीतः सूत्रकारेण, परिणतिविशेषा एव वर्त्तनाक्रियाभेदा इति, परत्वापरत्वेत्यादि, प्रशंसाक्षेत्रकालभेदात्त्रैविध्यं, तत्र प्रशंसायां परो धर्म्मः सर्वोत्तमत्वात् प्रशस्तः सकलमङ्गलनिलयत्वात् प्रकर्षकाष्ठां गत इति, अपरोऽधर्मो जघन्यः स्वल्पगुणत्वात् निकर्षावस्थां प्राप्तः, तथा परं ज्ञानं यथावस्थितवस्तुवेदित्वादपरमन्यथा, तच्चाज्ञानमेव अप्रशस्तत्वात् कुत्सितमसम्यग्दृष्टेरिति, क्षेत्रकृते इत्यादि, एकस्यां दिश्येकदा विप्रकृष्टो—दूरवर्त्ती परः

प्रत्यासन्नोऽन्यः, सन्निकृष्ट इत्यर्थः, दिशः प्राधान्यम्, अविनाभावित्वात् कालोऽप्यत्राक्षिप्यते, कालैकत्वेऽप्युपदेशो भवत्येकदि-न्यासन्निधयोः परोऽपर इति, कालकृते इत्यादिव्यतिकरेण परस्मिन् परमपरस्मिँश्चापरमिति यन्निमित्ते प्रत्ययाभिधाने स कालः, तपसा-षोडशवर्षात् परो वर्षशतायुः, वर्षशतायुषोऽपरो द्विरष्टवर्षायुः, प्रशंसाक्षेत्रकृते परत्वापरत्वे चैते न भवतो, लुब्धकादा-पि दर्शनात्, यस्माल्लुब्धकेऽपि देशकुलजातिविद्यापरिहीणे परत्वापरत्वप्रत्ययाभिधानसम्भवः, न च बन्धुजनापेक्षे, एकाकि-न्यपि भावात्, न तपश्चरणालम्बने, अतपस्विन्यपि दर्शनात्, न कर्म्मसंस्कारापेक्षे, तथाऽनधिकारात्, न चादित्यनिमित्ते, तत्रापि दृष्टत्वात्, परोऽभियोग्यः अपर आदित्यः परः सविता अपरोऽभियोग्य इति, अतः सामर्थ्यात् कालकृते, तयोर्विशेषणार्थमिद-मुच्यते-प्रशंसाक्षेत्रकृते वर्जयित्वेति, वर्त्तनादयः सर्वे कालकृताः कालस्यापेक्षाकारणस्यानुग्रह उपकार इति, सूत्रार्थ एव नार्थं यत् परत्वापरत्वे ग्रन्थभेदेन समस्य निर्दिष्टे सूरिणा तदवगमकं-न प्रशंसाक्षेत्रकृतयोरत्र परिग्रहः,वर्त्तना परिणामः क्रियाश्च द्रव्यस्वभावः कालापेक्षो निरदेशि, परत्वापरत्वे चानधित्वे तत् काललिङ्गमिति ॥ अत्राहोक्तं भवेत्यादि (१२७-११) सम्ब-न्धग्रन्थः, अत्र प्रस्तावे परोऽभिधत्ते-प्रतिपादितं भवता शरीरादयः सुखादयश्च पुद्गलानामुपकार इति, तन्त्रान्तरीयाश्च मायासू-नवीयाः पुद्गला इत्येनेन शब्देन जीवान् परिभाषन्ते, पुद्गलशब्दं जीवेषु संकेतयन्ति व्यवहारसिद्ध्यर्थमिति, ननु च तेषां जीव एव नास्ति कथं तद्विषयं पुद्गलध्वनि परिभाषेरन्निति ?, उच्यते-अस्त्यार्यसम्मितीयानामात्मा,सौत्रान्तिकानां तु "चित्ततद्धु-र्मकसन्तती तत्पुद्गलप्रज्ञप्तिः," चित्तसन्ततौ वेदनासंज्ञाचेतनादिधर्म्मयुक्तायां चक्षुरादिसहितानां च चित्तेनान्योऽन्यानुविधानादित्येषा नियतयुक्तानां धर्माणां सन्ततिरहङ्कारः वस्तुत्वादात्मन्युपचर्यते, तथा पुनः पुनर्गत्यादीनां पुद्गल इत्युपचर्यते, योगाचाराणां तु

विज्ञानपरिणामः पुद्गलो, यथाऽऽह–"आत्मधर्मोपचारो हि, विविधो यः प्रवर्त्तते । विज्ञानपरिणामोऽसौ, परिणामः स च त्रिधा ॥१॥" एवं तन्त्रान्तरीयैः पुद्गलो जीव उक्तः, त्वया पुनः शरीराद्युपकारिणः पुद्गला इत्युच्यन्ते तदेतत् कथं?,विप्रतिपत्तेरित्यादिति प्रश्न इति, नन्वनुपपन्नः संशयः, पूर्वमुक्तमेव 'रूपिणः पुद्गला' इति, न च रूप्यात्मा प्रतीत इति, उच्यते, रूपशब्देन तत्र मूर्त्ति-रुक्ता, सा च मूर्त्तिरन्यैः असर्वगतद्रव्यपरिमाणमिष्यते, यथा मनः, तच्च स्पर्शादिरहितं, एतन्निरासार्थमिदमवश्यं वक्तव्यं भवति सूत्रं स्पर्शादियुक्ता मूर्तिः,तथा चतुःत्रिद्व्येकगुणानि पृथिव्यादीनि कणभुजोक्तानि तत्प्रतिषेधार्थं चावश्यंतया विधेयं,सर्वाणि तानि चतुर्गुणानीत्येता विप्रतिपत्तीः सर्वाश्चैतस्याध्यायात्रोच्यते इत्याह–'एतदादी'त्यादि, एषा आदिर्यासां ता एतदादयः, पुद्गलश-ब्देनात्मोच्यत इत्येषा विप्रतिपत्तिराद्या, कुत्सिता प्रतिपत्तिर्विप्रतिपत्तिः,तथा असर्वगतं द्रव्यं स्पर्शादिरहितं चेति द्वितीया विप्रतिप-त्तिस्तन्निषेधाय सूत्रारम्भः, तथा पृथिव्यादीनि विशेषवचनैर्वक्तुमिष्टानि पृथक् पृथक् चतुर्गुणानीत्येतदभिधीयते—

स्पर्शरसगन्धवर्णवन्तः पुद्गला इति ॥ ५–२३ ॥ सूत्रम् ॥

प्राग्निर्दिष्टेन्द्रियक्रमापेक्षः स्पर्शादिविन्यास इति सूत्रसमुदायार्थः । अवयवार्थं त्वाह–'स्पर्शे'त्यादिना (१२८–२) स्पर्शादि-विन्यासे स्वविषयबलवत्त्वादादौ स्पर्श', सत्यस्मिन् रसादिसद्भावात्, कर्मसाधनाश्च सर्वे स्पर्शादयः, स्पृश्यन्त इति, इत्येवंलक्षणाः पुद्गला भवन्ति, सर्वदैव स्पर्शादि (मन्तः) पुद्गला इति नित्ययोगे मतुः, यतश्चैवमतो न जीवशब्दवाच्याः, मूर्त्तत्वात्तेषां, एवं मनोऽपि, स्पर्शादिमत्पुद्गलमयत्वात्, आपादीन्यपि स्पर्शादिमन्ति असर्वगतद्रव्यत्वात् पार्थिवाणुवत्, 'तत्र स्पर्शोऽष्टविध' इत्यादि (१२८–३) निगदसिद्धं यावत् सूत्रसमाप्तेरिति ॥ किंचान्यदिति सम्बन्धग्रन्थः ॥

शब्दबन्धसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायातपोद्योतवन्तश्चेति ॥ ५-२४ ॥ सूत्रम् ॥

न केवलं स्पर्शादिमन्तः पुद्गलाः, शब्दादिमन्तश्च, शब्दादयः कृतद्वन्द्वा मतुपा निर्दिश्यंत इति सूत्रसमुदायार्थः। अवयवार्थं त्वाह– 'तत्रे'त्यादिना (१२८-१०) तत्र–तेषु पुद्गलपरिणामेषु शब्दादिषु शब्दस्तावत् श्रोत्रेन्द्रियग्राह्यः षड्विधः षट्प्रकारः, प्रकारानेवाह– 'तत' इत्यादिना, ततो–मृदङ्गपणवाद्यातोद्यसमुत्थः विततो–वीणात्रिसरिकादितन्त्रीप्रभवः घनः–कांस्यभाजनकाष्ठशलाकादिजन्यः शुषिरो वेणुविवरादिसमुत्थः घर्षः–क्रकचकाष्ठादिसंघर्षप्रसूतः भाष्यो वर्णपदवाक्याकारेण भाष्यत इतिकृत्वा, अभिव्यञ्जकभेदतः परिणामविनिश्चित एते भेदाः, एतेन निरवयवगुणविकाराकाशगुणवासनाभावरूपशब्दव्यवच्छेदमाह, एकान्तनिरवयवात् सावयवविकारयोगात् शब्दस्य तारतारादिभेदेन तद्भावोपलब्धेः, कृत्स्नगुणरूपकत्वाच्च गुणानां, सर्वगतगुणत्वे देशाभिव्यक्त्यसिद्धेः, वासनामात्रत्वे ग्रहणायोग्य इति पौद्गलिक एव शब्दः इत्यत्र बहु वक्तव्यं तत्तु नोच्यते, ग्रन्थविस्तरभयाद्, अक्षरगमनिकामात्रसारत्वात् प्रारम्भस्य। एवं 'बन्धस्त्रिविध'इत्यादि, (१२८-११) बन्धनं बन्धः–परस्पराश्लेषलक्षणः स त्रिप्रकारः, प्रकारानेवाह– प्रयोगबन्धो जीवव्यापारनिर्वर्तितः औदारिकादिशरीरजतुकाष्ठादिविषयः, विस्रसाबन्धः–विस्रसा–स्वभावः तेन बन्धो द्विधा– आदिमाननादिमांश्च, विद्युदुल्कादिविषय आद्यः, धर्माधर्माकाशगोचरस्त्वितरः, मिश्रबन्धः प्रयोगविस्रसाभ्यां स्तम्भकुम्भादिविषय इति, सामान्यबन्धविधिं बन्धस्याह–स्निग्धरूक्षत्वाद्भवति, बन्ध इति वर्तते, एतच्चोपरिष्टाद् दर्शयिष्यामः, 'सौक्ष्म्यं द्विविध'मित्यादि, सूक्ष्मभावः सौक्ष्म्यं, तद् द्विविधं–द्विप्रकारं, एतदेवाह–अन्त्यम्–अन्ते भवम् आपेक्षिकं च प्रतीते, बुद्धिप्रयोजकत्वमपेक्षा सा प्रयोजनमस्येतिकृत्वा, अन्त्यं सौक्ष्म्यं परमाणुष्वेव, अन्यत्रासंभवात्, आकाशादिषु देशानाममूर्त्तत्वात्, आपेक्षि-

कम्-अपेक्षाप्रयोजनं,किमित्याह-द्व्यणुकादिषु, द्व्यणुके त्र्यणुकापेक्षया सौक्ष्म्यं, चतुरणुके त्र्यणुकापेक्षयेत्येवं सङ्घातपरिणामापेक्षं भवति, संघातपरिणामस्यानेकभेदत्वात्, 'तद्यथे'त्यादिना, तद्यथेत्युदाहरणोपन्यासार्थः, आमलकाद्बदरमिति आमलकं प्रतीत्य बदरं सूक्ष्मं, एवं स्थौल्यमपि स्थूलभावलक्षणं द्विविधं-द्विप्रकारं, प्रकारावेवाह—अन्त्यमापेक्षिकं च, एतदपि संघातपरिणामापेक्षमेव भवति, परमाणुप्रचयपरिणामापेक्षमित्यर्थः, तत्रान्त्यं स्थौल्यं सर्वलोकव्यापिनि तथापरिणामभेदात् महास्कन्ध इति, इहावयवविकाशमात्रं स्थौल्यं गृह्यते, न बादरपरिणामरूपं, तत्र लोकव्यापिनि पर्वत इव लोकाच्छादनसंगात्, आपेक्षिकं तु स्थूलत्वं बदरादिभ्यः सकाशात् आमलकादिष्विति, आदिशब्दात् दाडिमादिग्रहः, न चातात्त्विकमेतत् सौक्ष्म्यं स्थौल्यं वा, मन्मूर्त्ताचेतनत्वादिवदनन्तधर्मात्मके वस्तुनि तद्वाचिशब्देन प्रतीतेः, सर्वार्थे न, निमित्तत्वाद् धियो भेदायोगात्, न हि नीलं कृष्णपीताद्यपेक्षयापि नीलानीलधीजनकमिति भावनीयं, 'संस्थान'मित्यादि, (१२८-१७) संस्थानं-रचनाविशेषः, तदनेकविधं—अनेकप्रकारं, जीवसंस्थानभेदेन दीर्घह्रस्वादिः, दीर्घमायतं ह्रस्वं तद्विपरीतं, समचतुरस्रपरिमण्डलाद्युपलक्षणमेतत्, अनित्थंत्वपर्यन्तमिति, दीर्घादिना प्रकारेण यदित्थमिति निरूपयितुमशक्यं तदनित्थं तद्भावोऽनित्थंत्वं तत्पर्यन्तं संस्थानमिति, धीभेदगम्यं चैतदिति भावितमेतद्, भेदः पञ्चविध इत्यादि, द्रव्यैकत्वपरिणतिविश्लेषो भेदः, स पञ्चविधः प्रञ्चप्रकारः, प्रकारानाह -'औत्कारिक'इत्यादि (१२९-१) तत्रौत्कारिकः समुत्कीर्यमाणदारुकप्रस्थकभेरीत्वगाकर्पादिविषयः, अवयवशः चूर्णनं चौर्णिकं क्षिप्तपिष्टमुष्टिवत्, खण्डशो विचरणं खण्डभेदः क्षिप्तमृत्पिण्डवत् प्रतरो भेदोऽभ्रपटलभूर्यपत्रादिषु बहुतिथपुटोत्रोटनलक्षणः अनुतटभेदस्तु वंशेक्षुयष्टित्वगुत्पाटकः, इतिशब्दो भेदेयत्तावधारणार्थः, 'तमश्छाये'त्यादि (१२९-२) समानविचारत्वादेकनिर्देशः,

गतभेदादि द्वन्द्वः, एते च परिणामजाः पुद्गलपरिणामभवा इति, अत्र तमः पौद्गलं दृष्टिप्रतिबन्धकारित्वात् कुड्यादिवत्, ए छायापि पुद्गलमयी शिशिरत्वाज्जलवत्, आतपोऽपि पुद्गलात्मकः तापकत्वादग्निवत्, उद्योतोऽपि आल्हादादिहेतुत्वात् दृष्टिवत्. शब्दात् वृष्टिदीपोद्योतादिरोधादिपरिणामपरिग्रहः, सूत्रद्वयोक्तमर्थमुपसंहरन्नाह—'सर्वे एवैते' इत्यादि (१२९–२) स्पर्शादि इति स्पर्शरसगन्धवर्णशब्दादयः पुद्गलेष्वेव भवन्ति, तत्परिणामत्वादिति, अतः पुद्गलाः परमाण्वादयः तद्वन्तः स्पर्शादिमन्त इ नेन गुणगुणिनोर्भेदाभेदमाहेति, भावितमेतत्, 'अत्राहे'त्यादि (१२९–४) किमर्थं शब्दादीनां स्पर्शादीनां च पृथक् पृथ सूत्रं,एकार्थप्रतिबद्धत्वादिति, अत्रोच्यते—एकार्थप्रतिबद्धत्वेऽपि चेत्येतदाह-स्पर्शादयः पूर्वसूत्रोक्ताः परमाणुषु केवलेषु स्कन्धे च द्व्यणुकादिषु परिणामजा एव भवन्ति, प्रयोगादेस्तथा दर्शनात्, शब्दादयस्तु द्वितीयसूत्रोक्ताः स्कन्धेष्वेव भवन्ति, न द्व्य णुकादिषु,किन्त्वनेकाणुकेषु,अनेकनिमित्ताश्च शब्दादयः संघातभेदादिभ्यो भावादित्यतः पृथक्करणं सूत्रयोरिति॥ 'त एत'इत्यादि (१२०–८) पुद्गलाः प्रस्तुताः समासतः सामान्येन द्विधा भवन्ति, तद्यथा—

अणवः स्कन्धाश्चेति ॥ ५–२५ ॥ सूत्रम् ॥

अणवस्त्वे इत्यणवः पृथक्परिणामाः, स्कन्धाश्च तथाविधैकपरिणामभाजः, पूर्वाचार्योक्तमधिकृतवस्तुसंवाद्येवाणुकलक्षणमाह-उक्तं च पूर्वाचार्यैः, किमित्याह—'कारणमत्रे'त्यादि, करोतीति कारणं, अत्र पुद्गलाधिकारे, अन्त्यमिति अन्ते भवमन्त्यं. द्व्यणुकोऽन्त्यभेदस्य परमाणुरस्तुत्वात्, सूक्ष्मः सर्वलघुरतीन्द्रियः नित्यश्च तद्भावाव्ययतया भवति परमाणुरेवंभूत इति. एकरसस्तिक्तरसाद्यपेक्षया एकगन्धः सुरभिगन्धाद्यपेक्षया एकवर्णः कृष्णादिवर्णापेक्षया द्विस्पर्शः शीतकठिनताद्यविरुद्ध-

स्पर्शापेक्षया, कार्यलिङ्गश्चेति बादरघटादिकार्यदर्शनान्यथाऽनुपपत्तिगम्य' इति, अन्ये तु कारणमेवेति पठन्ति, तच्चसाम्प्रतिकमिति गुरवः, भेदस्य कार्यतयाऽपि तदन्त्यत्वावधारणानुपपत्तेः, पाठेऽपि कारणं अन्त्यमेवेति केचिद् व्याचक्षते, एतदपि यत्किंचिद्, भेदस्य कार्यस्यापि तदन्त्यत्वादिति, 'तत्रे'त्यादि, अणवः-परमाणवः अबद्धाः,परस्परेणासंयुक्ता इत्यर्थः, स्कन्धास्तु स्कन्धाः पुनः बद्धा एव बन्धपरिणाम एव स्कन्धत्वोपपत्तेरिति॥ 'अत्राहे'त्यादि (१२९-१३) कथं पुनरेतद्द्वैविध्यमणुस्कन्धलक्षणं भवतीति प्रश्नः, अत्रोच्यते समाधिः, स्कन्धास्तावत्, किमित्याह—

सङ्घातभेदेभ्य उत्पद्यन्त इति ॥ ५-२६ ॥ सूत्रम् ॥

इत्थं भवतीति सूत्रसमुदायार्थः । अवयवार्थं त्वाह-' सङ्घात 'इत्यादिना (१२९-१६) संघातात् केवलात्, एवं भेदात् केवलादेव, संघातभेदाद्वा मिश्रादिति, एवं एभ्यः संघातादिभ्यः कारणेभ्यः स्कन्धा उक्तलक्षणाः, किमित्याह-उत्पद्यन्ते, किम्भूता इत्याह-द्विप्रदेशादयः, तद्यथेत्यादि प्रकटार्थमासूत्रपरिसमाप्तेः, नवरं अनन्तानामनन्तानन्तानां च प्रदेशानां परमाणूनां संघातात्तु तथाविधैकपरिणामलक्षणात् तावत्प्रदेशा इति तावन्तः प्रदेशा येषु ते तावत्प्रदेशाः, यथाऽनन्तानन्तप्रदेशानां संघातः तावदनन्तानन्तप्रदेश इति, तथा एषामेवानन्तरोदितस्कन्धानां अनन्तानन्तप्रदेशान्तानां भेदादेकपरमाण्वादिरूपात् द्विप्रदेशपर्यन्ताः भूयांसः स्कन्धा भवन्ति, तथातथैकाण्वादिविगमे तत्तद्यूनाः, परापरस्कन्धभेदोत्पत्तेरिति, त एव चेत्यादि, तृतीयादिविकल्पभावना त एव च स्कन्धाः संघातभेदाभ्यां एकसामयिकाभ्यां, भिन्नकालाभ्यां न, किमित्याह -द्विप्रदेशादयः स्कन्धा उत्पद्यन्ते, यस्मिन्नेव समये द्व्यणुकस्कन्धादेकोऽणुर्भिद्यते तदैवापरः संहन्यते तेनेत्येकसामयिकत्वं,

कादेशाह–अन्यस्य परमाणोः संघातेन अन्यतो भेदेन तत एव स्कन्धादिति, एवं व्यणुकादिष्वपि भावनीयं॥ 'अत्राहे'त्यादि (१३०-७) सम्बन्धग्रन्थः, अथ परमाणुरुक्तलक्षणः कथमुत्पद्यत इति, अत्रोच्यते—

भेदादणुरिति ॥ ५-२७ ॥ सूत्रम् ॥

प्रकारद्वयप्रतिषेधोऽस्य समुदायार्थः। अवयवार्थं त्वाह—'भेदे'त्यादि (१३०-९) भेदादेव स्कन्धविचटनरूपात् परमाणुरुत्पद्यते, तथा तद्भावापत्त्या, न संघातात् नापि संघातभेदात्, परमाणुत्वायोगादिति। आह–नित्योऽयमुक्तमि(इ)ति, तथा तत् कथं उत्पद्यते ?, तद्भावाव्ययतया, द्रव्यार्थादेशतस्तु तथैव तत्, उत्पद्यते, तथा स्कन्धरूपं परित्यजतः, एकरूपतापत्त्याऽन्यथाऽभूतेरिति, यदेवं न भेदादेवास्य जन्म, पूर्वांशादित्यागतोऽप्यन्यथाऽभूतेः साधुत्वेनैव, तथा भवनात्, व्यवहारत इयमुत्पादादिचिन्ता, निश्चयतस्तु सर्वमेव नित्यमिति, यथोक्तं–" सर्वव्यक्तिषु नियतं क्षणे क्षणेऽन्यत्वमथ च न विशेषः। सत्योश्चित्यपचित्योराकृतिजातिव्यवस्थाना ॥१॥ "दिति—

भेदसंघाताभ्यां चाक्षुषा इति ॥ ५-२८ ॥ १३०-१० ॥ सूत्रम् ॥

अधिकारात् सम्बद्धमेव, अचाक्षुषस्कन्धविषय एव संघातादिभिरुत्पत्तिक्रम इति सूत्रसमुदायार्थः। अवयवार्थं त्वाह–'भेदसंघाताभ्या'मित्यादिना, (१३०-११) पश्यतीति चक्षुः चक्षुष इमे गोचरीभूता इति, 'तस्येद'मित्यण् चक्षुर्ग्राह्याः चाक्षुषाः—बादरपरिणामवन्तः प्रयोगविस्रसाजनितात् सांगत्यादपि स्कंधनात् स्कन्धाः, एते संघातभेदाभ्यामेवोत्पद्यन्त इति नियमः, न त्वयं नियमो भेदसंघाताभ्यामुत्पन्नाः सर्वे चाक्षुषा इति, चक्षुर्ग्रहणाच्च समस्तेन्द्रियपरिग्रह', पश्यति–उपलभत इति चक्षुः, एवं

स्पर्शरसगन्धशब्दा अपि एवं बुद्धिपरिणामभाज एव निजोपलम्भनैरुपलभ्यन्त इति, 'अचाक्षुषास्त्वि'त्यादि (१३०–११) ये पुनरचाक्षुषा द्व्यणुकादयोऽनन्ताणुकपर्यवसानाः सूक्ष्मास्ते' यथोक्ता'दिति यथाऽभिहितात् संघाताद् भेदात् संघातभेदाच्च त्रिविधात् कारणादुत्पद्यन्त इति, सूक्ष्मबादरत्वं च परिणामभेद एवेति। 'अत्राहे'त्यादि (१३०–१३) सम्बन्धग्रन्थः, धर्मादीनि द्रव्याणि सन्तीत्येतं कथं गृह्यत इति?,नन्वेषा गत्याद्युपकारेणानुमानमस्तित्वे तत् कुतः सन्देह इति?,उच्यते, तत्तथाऽनुमिताः, अनुमानेनानुमितमेव कथं गृह्यत इति तु कथं निश्चीयत इति विशेषार्थः प्रश्नः, अत्रोच्यत इति समाधिः,तदाह–लक्षणत इति, इहापि सामान्याभिधानात् सन्देहान आह–किं च सतो लक्षणमिति किं पुनः सतो लक्षणं?,लक्ष्यते येन सदिति, अत्रोच्यते–

उत्पादव्ययध्रौव्ययुक्तं सदिति ॥ ५–२९ ॥ सूत्रम् ॥

उत्पादादिमदेव सदिति सूत्रसमुदायार्थः। अवयवार्थं त्वाह–'यदिहे'त्यादिना (१३१–२) प्रवचनगर्भसूत्रमेतदित्यैहिकामुष्मिकव्यवस्थानिनन्धनतया व्याचष्टे–यस्मादिह लोके मनुष्यत्वादिना पर्यायेण, आदिशब्दात्तिर्यगादिपरिग्रहः, अव्ययतः अविनाभावतः,मनुष्यत्वादिरूपस्यैवेत्यर्थः,कस्येत्याह–आत्मनो जीवस्य देवत्वादिना पर्यायेण आदिशब्दान्नारकादिपरिग्रहः, उत्पादः प्रादुर्भाव इति, अत उत्पादव्ययध्रौव्ययुक्तं सदिति। इहैव विपक्षे बाधामाह–'एकान्तध्रुवे' इत्यादिना, एकान्तध्रुवे सर्वथाऽप्रच्युतानुत्पन्नस्थिरैकस्वभावे आत्मनि तत्तथैकस्वभावतया तस्य आत्मनस्तथा–मनुष्यत्वादिना प्रकारेण एकस्वभावतया कारणेन अवस्थाभेदानुपपत्तेः देवादिभेदानुपपत्तेरित्यर्थः, 'एवं चे'त्यादि, एवं चावस्थाभेदाभावे सति किमित्याह–संसारापवर्गभेदाभावः अवस्थाभेदानान्तरीयकत्वादनयोः, तथाहि–संसरणं संसारः, अपवर्जनमपवर्ग इति, अवस्थाभेदग-

मांशिमौ, कल्पितत्वेऽस्येत्यादि (१३१–६) कल्पितत्वेऽस्य संसारापवर्गभेदस्याभ्युपगते, किमित्याह–निःस्वभावतया कार-
णेन तथा संसारादिरूपतयाऽनुपलब्धिप्रसङ्गात्, कल्पितं अपारमार्थिको, न किंचित्, न भाव इतिकृत्वा, अथ मा भूदेष दोष
इति गम्यमान एव कल्पितोऽभिधीयत इत्याह–सत्स्वभावत्वे तु पुनरस्य अधिकृतभेदस्येति वर्त्तते, किमित्याह–एकान्तध्रौव्या-
भावः, कुत इत्याह–तस्यैव तथा भवनादिति आत्मन एव संसारापवर्गावस्थाभेदभावेन वृत्तेः, संसारिस्वभावस्यापवर्गस्वभाव-
त्वाद्विरोध इत्याशङ्कापोहायाह–तत्तत्स्वभावतयेत्यादि, तस्य–आत्मनस्तत्स्वभावतया, किमित्याह–विरोधाभावात्, न हि
स्वभावः पर्यनुयोज्य', इतश्चैतदेवं इत्याह–तथोपलब्धिसिद्धेः तथा संसार्यादिभेदेन उपलब्धिसिद्धेः, तिर्यगादिभेदेनेत्यभिप्रायः,
भ्रान्तोऽयमिति विभ्रमनिरासायाह–'तदुभ्रान्तत्व' इत्यादि (१३१–९) तस्या उपलब्धेर्भ्रान्तत्वे, किमित्याह–प्रमाणाभावः,
वाङ्मात्रेणाभिधानात्, 'योगिज्ञाने'त्यादि, योगिज्ञानप्रमाणाभ्युपगमे तु तद्भ्रान्तत्वविषये, किमित्याह अभ्रान्तस्तदवस्था-
भेदः, योग्ययोगिनोरवस्थाभेदसिद्धेः, प्रस्तुतवस्तुनो दार्ढ्यायैवाह—'इत्थं चैतदि'त्यादि, (१३१–१०) इत्थं चैतदभ्युपग-
न्तव्यं, अन्यथैवमनभ्युपगम्यमाने, किमित्याह–न मनुष्यादेर्देवत्वादि, इत्येवं यमादिपालनानर्थक्यं आदिशब्दान्निय-
मपरिग्रहः, आगमागारतामाह–'एवं चे'त्यादिना, एव सति 'अहिंसासत्यास्तेयब्रह्मचर्यपरिग्रहा यमाः' 'शौचसंतो-
षतपःस्वाध्यायेश्वरप्रणिधानानि नियमा' इत्यागमवचनं वचनमात्रमर्थशून्यमित्यर्थः, 'एव'मित्यादि, एवमेकान्तध्रौ-
व्येऽपि, प्रकृत्यैकक्षणस्थितिधर्मणीत्यर्थः, न मनुष्यत्वादिनाऽन्वयवतः आत्मनो देवत्वादिनोत्पाद इति वर्त्तते, कुत इत्याह–सर्वथा
तदभावापत्तेः 'न तत्र किंचिद् भवति, न भवत्येव केवल'मिति वचनात्, एवं 'तत्त्वत' इत्यादि, तत्त्वतः परमार्थेनाहेतुकमव-

स्थान्तरं देवत्वादि त्वन्नीत्या, मनुष्यत्वाद्यभावापत्तेः, इति एवं सर्वदा सर्वकालं तद्भावाभावप्रसङ्गः देवत्वाद्यवस्थान्तरभावाभावप्रसङ्गः, कुत इत्याह–अहेतुकत्वाविशेषात् पूर्वहेतुनिरन्वयाभावेन, पराभिप्रायमाशङ्क्य परिहरन्नाह–'न हेत्वि'त्यादि, (१३१–१६) यस्माद् यदा हेतोरेवासौ स्वभाव इति, किमुक्तं भवति ?–स्वो भाव इति, आत्मीया सत्ता हेतोरेवेयं यत्तदनन्तरं तद्भावः–कार्यभावो यदा तदा ध्रुवोऽन्वयः, कुत इत्याह–तस्यैव हेतोः तथा भवनात् कार्यत्वेन भवनात्, त्वदभ्युपगमेनैवाभ्युदयमाह –'एवमेव चे'त्यादिना, एवमेव च तत्तथा भवनेन तुलोन्नामावनामवदित्यमुना दृष्टान्तेन हेतुफलयोः कारणकार्ययोः युगपदेककालं व्ययोत्पादसिद्धिः, तथाहि–तौ यदि व्ययोत्पादौ कारणकार्ययोर्व्यतिरिक्तौ न कारणस्य व्ययो नापि कार्यस्योत्पादः, अथाव्यतिरिक्तौ कारणकार्ये एव तौ तत्कथमनयोर्यौगपद्यं ?, योगपद्ये वा हेतुफलभाव इति, न सव्येतरयोर्विषाणयोरयमिति भावनीयं, तदेवमेव च तत्तथाभवनेन हेतुफलयोर्युगपद् व्ययोत्पादसिद्धिरन्यथाऽयोगादिति स्थितं, तदित्थं न मनुष्यत्वादेः प्राणिनो देवत्वं, तन्निरन्वयाभवनेनेत्यायातं मार्गवैफल्यमागमस्येति, 'एवं चे'त्यादिना, एवं सम्यग्दृष्टिः सम्यक्संकल्पः सम्यग्वाक् सम्यग्मार्गः सम्यगार्जवः सम्यग्व्यायामः सम्यक्स्मृतिः सम्यक्समाधिरिति वाग्वैयर्थ्यमर्थशून्यतया, एवं सकलपुरुषार्थाधारभूते आत्मन्युत्पादादिमत्त्वमभिधायाचेतने घटादावभिधातुमाह–'एव'मित्यादि (१३२–१) एवं घटव्ययवत्या इति, घटस्य व्ययो घटव्ययः सोऽस्यास्तीति घटव्ययवती तस्याः मृदः, किमित्याह–कपालोत्पादभावाद्, अन्यस्यास्त्वभावात्, उत्पादव्ययध्रौव्ययुक्तं सदिति, विपक्षे बाधामाह–एकान्तध्रौव्ये मृदः तत्तथैकस्वभावतया तस्या मृदस्तथाघटरूपभवनरूपभावतया अवस्थाभेदानुपपत्तेः कपालोत्पादाभाव इति प्रायः समानं पूर्वेण आत्मसम्बन्धिनाऽभिहितेन, 'एव'मि-

मित्यादि,एवमुक्तप्रकारेण परिस्थूरनीत्यैतदुत्पादादिमत्त्वं व्यवहारनयतः तथाऽनेकप्रकारेण मनुष्यादिदिवति–मनुष्याद्यधि-
द्रव्यमधिकृत्य दर्शितमुत्पादादिमत्त्वं, निश्चयतस्तु प्रतिसमयमुत्पादादिमत् मनुष्याद्यपि, कुत इत्याह–' तथे 'त्यादि, तथा तेन
प्रकारेण बालादिनादिमनुष्याद्यधिकृत्यभेदसिद्धेः, अन्यथा तदयोगात्, ' यदाह–सर्वे 'त्यादि, (१३२–७) सर्वव्यक्तिषु
मनुष्यादिलक्षणासु नियतं स्थितमेतत् क्षणे क्षणेऽन्यत्वं कालभेदात्, अथ च न विशेषो नैकान्तभेदः, सत्योः विद्यमा-
नयोश्चित्यपचित्योः अवस्थाभेदरूपयोः,किमित्याह—प्रकृतिजातिव्यवस्थानात् एतच्चानुभवसिद्धमेव, नान्यथा सदृशापराप-
गेत्पत्तिज्ञानोपाय इति भावनीयं ॥१॥ 'नरके'त्यादि, नरकादिगतिविभेदश्चतुर्गतिलक्षणः पर्याप्तेतरादिभेदभिन्नः भेदः संसा-
रमोक्षयोश्चैव अन्यः संसारोऽन्यश्च मोक्षः, अन्यथा तत्साध्यत्वासिद्धेः; हिंसादिस्तद्धेतुः आदिशब्दादनृतादिग्रहः संसारहेतुः
सम्यक्त्वादिश्च उक्तलक्षणो मोक्षहेतुर्मुख्य इति निरुपचरित इत्यर्थः ॥२॥ एतत् सर्वं किमित्याह–' उत्पादादी 'त्यादि, उत्पा-
दादियुते खल्विति उत्पादव्ययध्रौव्ययुक्त एव वस्तुनि सति एतद् अनन्तरोदितं उपपद्यते सर्वं,न्याय्यत्वात्,तद्रहिते उत्पादादिशून्ये
तदभावात् वस्त्वभावकारणात् सर्वमपि न युज्यते नीत्या, अनन्तरोदितमिति ॥ ३ ॥ एतद्भावनायैवाह–' निरुपादान 'इत्यादि,
निरुपादानः कारणशून्यः न भवत्युत्पादः,अहेतुकत्वप्रसङ्गात्, नापि तादवस्थ्योऽस्य हेतोरुत्पाद इति,सदा तत्प्रसङ्गात्, तद्वि-
क्रियया तु हेतुविक्रियया पुनः तथा तेन प्रकारेण तदन्यथाभवनलक्षणेन भवत्युत्पाद इति त्रितययुते उत्पादादियुते वस्तुन्येष
उत्पाद इति ॥४॥ ' सिद्धत्वेने 'त्यादि, सिद्धत्वेनोत्पादस्तथाऽभूतप्रादुर्भावात् व्ययोऽस्य सिद्धस्य संसारभावतः संसारभावेन
भेदः,तस्यातीतसंसारभावत्वात्, जीवत्वेन ध्रौव्यं उभयत्र तद्भावात्, त्रितययुतं उत्पादादियुतं सर्वमेव एवं खल्विति ॥५॥

'तदित्थ'मित्यादि,उत्पादश्च व्ययश्चोत्पादव्ययौ, समस्यैकत्वेन निर्दिष्टौ पर्यायत्वात्, ध्रुवतीति ध्रुवं–शाश्वतं तद्भावो ध्रौव्यं, चः समुच्चये,एतत्त्रितययुक्तं तत एतद्योगः,'एतत्समुदितमेव किमित्याह–सतो लक्षणं सल्लक्ष्यतेऽनेन,तेन वियुक्तस्य सत्ताऽयोगात्, न वन्ध्यासुते उत्पादव्ययौ, न च तद्रहितं तत्र ध्रौव्यमपीति तदसत्त्वं, अथवा समाध्यर्थयुजेर्युक्तं–समाहितं त्रिस्वभावं सत्, एते च त्रयः स्वभावाः, न त्वेभिर्युक्तिमन्यत्, एतदाह–'यदुत्पद्यत' इत्यादि, यद्धर्मादि उत्पद्यते प्रयोगविश्रसाभ्यां तथा तथाऽभूतप्रादुर्भवितस्तद्वत्यादिनिबन्धनावध्यभावेन, एवं यद्व्येति विनिवर्त्तते अधिकृतोत्पादपूर्वरूपेण, अन्यथा तद्गत्याद्ययोगात्; एवं यच्च ध्रुवं–शाश्वतं तदुभयाधारभावेन, निराधारयोस्तयोरसंभवात्,नामृदाधाराः कपालादयो घटविनाशो वा,तथा तद्बुद्धिसिद्धयोरित्यत आह–तत् सदिति, किमुक्तं भवति?–तत् सदित्यस्य ध्वनेर्विषयः, सद्विद्यमानमित्यर्थः, व्यतिरेकमाह–अतोऽन्यदसदिति अत उत्पादादिमतोऽन्यदुत्पादादिरहितं किमित्याह–असदिति, असदित्यस्य ध्वनेर्विषयः, असदविद्यमानमित्यर्थः। 'अत्राहे'त्यादि (१३३–३) सम्बन्धग्रन्थः, अत्रावसरे परः प्रश्नयत्यव्युत्पन्नः, गृह्णीमस्तावदेतल्लक्षणं उत्पादादिलक्षणं सदित्येवमनुमन्यामहे, तावच्छब्दः क्रमावद्योतनार्थः इतिशब्दो हेत्वर्थः, यस्मात्सत्तस्मादिदं तु वाच्यं, किमित्याह–'तत् कि'मित्यादि, तत् सत् किं नित्यं स्थिरं आहोश्विद् अनित्यम्–अस्थिरमिति प्रपच्छ, निबन्धनं तु नित्यावस्थितान्यरूपाणीति वचनं, इहारूपिग्रहणाद्रूपिष्वनित्यतापत्त्या सम्मोहः, अत्रोच्यते अव्युत्पन्नचोदकचोदितेसमाधिः—

तद्भावाव्ययं नित्यमिति ॥ ५–३० ॥ सूत्रम् ॥

यदुत्पादादियुक्तं तन्नित्यानित्यमेवेति व्याप्त्या नित्यांशलक्षणमेतदिति सूत्रसमुदायार्थः। अवयवार्थं त्वाह–'यत् सत्' इत्या-

दिना (१३३-६), यद्वस्तु सामान्येन सतो भावादस्तित्वादित्यर्थः न व्येति न विनश्यति न व्येष्यति विनशिष्यत्युपलक्षणत्वात् न च विनष्टमतीतकाले तन्नित्यमिति तन्नित्यमुच्यते, जीवत्वादिवत्, एतद्धि मनुष्यदेवादिपर्यायेष्वपि न व्येति, जीवो जीव इत्यधिगमप्रतीतेः, एवं पिण्डघटादिष्वपि मृदपेक्षं भावनीयं, धर्मादिष्वपि तथा तथा गत्यादिनिबन्धनावस्थाभेदेऽपि तच्छब्दाप्रच्युतेरिति, तद्भावाव्ययत्वेन साक्षात् ध्रौव्यलक्षणमुक्तं, उत्पादव्यययोस्तद्भावाव्ययताऽन्यथाऽनुपपत्त्या, मनुष्यदेवाद्यवस्थाऽभावे जीवत्वायोगात्, न पुनः साक्षात्, कुत इत्याह—

अर्पितानर्पितसिद्धेरिति ॥ ५-३१ ॥सूत्रम् ॥

विवक्षितात् ध्रौव्यलक्षणात् अविवक्षिता उत्पादव्ययसिद्धिः, पूर्वमुत्तरं च पर्यायं ध्रौव्यमासादयतीति सूत्रसमुदायार्थः । अवयवार्थं त्वाह—'तच्चे'त्यादिना (१३३-८) तच्च त्रिविधमपि उत्पादादिभेदेन किमित्याह—नित्यं च उभे अपीति चशब्दो भिन्नक्रमः समुच्चये नित्यमुभे च सदसती च अपिः सम्भावने अनुभे च असदसतीति, एतदुक्तं भवति—नित्यं सचेतनत्वादिना, सत् प्रक्रान्तमिति नपुंसकलिङ्गनिर्देशः, सदसती च वर्त्तमानातीतादिपर्यायापेक्षया हि जीवद्रव्यमिति मनुष्यावस्थायां तथैव सत्, अतीतभावितिर्यग्देवाद्यवस्थया च असत्, अन्यथा तया सत्त्वे मनुष्यावस्थाया असत्त्वप्रसङ्गात्, न चैकान्तेनासदेव तथा, सच्छक्तियोगात्, अन्यथा तदतीताद्यवस्थाऽभावे असदिति प्रसङ्गात्, सूक्ष्मधिया भावनीयमिति, अनुभे वा असदसती च वर्त्तमानातीतादिपर्यायापेक्षयेत्यर्थः, चित्तविवक्षानिबन्धनमेतदित्थमित्याह—अर्पितानर्पितसिद्धेरिति, अर्पितं निदर्शितमुपात्तं विवक्षितमित्यनर्थान्तरं, तद्विपरीतमनर्पितं, ताभ्यां सिद्धिर्ज्ञानं ततोऽर्पितानर्पितसिद्धेः, अर्पितेन हि मनुष्यत्वादिना अनर्पिततिर्यग्देवादिपरिज्ञानं, तन्नान्त-

रीयकत्वादेवेति; यत्रापि च विवक्षितगुणपरिज्ञानमविवक्षितसत्त्वादिज्ञाननान्तरीयकमितरदपि सत्त्वादिज्ञानमितरनान्तरीयकमिति विमलबुद्धय इति कृतं प्रसङ्गेन। एतदेव प्रपञ्चतोऽभिधातुमाह–'अर्पिते'त्यादि, प्रस्तुतं सत् अर्पितं–विवक्षितं साक्षाद्वाचकेन शब्देनाभिहितं व्यवहारः प्रयोजनमस्येति व्यावहारिकं,अर्पितं च तद् व्यावहारिकं चेति समासः; किंचित् सद्वस्तु विशिष्टाभिधानार्पितं तद्व्यवहारं साधयति; दध्यानयनचोदनायां दध्यादिवत्, अपरमनर्पितमेव साक्षात् कल्पनया प्रतीयमानं सद् व्यवहाराय व्यापृतं इत्याह–अनर्पितव्यवहारिकं चेत्यर्थः, अक्षरार्थः पूर्ववदिति, इहैव तन्त्रगर्भप्रक्रियासारं चतुर्भिरनुयोगद्वारैरभिधातुमाह–'तत्र चतुर्विधं'इत्यादि (१२३–९) तत्रेति वाक्योपन्यासार्थः सदुक्तलक्षणं चतुर्विधं चतुष्प्रकारं अनयाऽनुयोगद्वारनिरूपणया, तदुपदेशार्थमाह–'तद्यथे'त्यादि (१२३–१०) तद्यथेत्युदाहरणोपन्यासार्थः, 'द्रव्यास्तिक'मित्यादि, अस्ति मतिरस्येति आस्तिकं, भावस्य प्रस्तुतत्वादभिसम्बन्धे नपुंसकलिङ्गता, द्रव्ये आस्तिकं द्रव्यास्तिकं, अथवा आस्तिकम्–अस्तिमतिकं, किं तत्?, नयरूपं प्रतिपादयितृ, कस्य प्रतिपादकं?, द्रव्यस्य, स च प्रतिपाद्यप्रतिपादकभावलक्षणसम्बन्धः, विवक्षायां षष्ठी समासस्य, एवं मातृकापदास्तिकादिष्वपि योज्यं, इह सङ्ग्रहाभिप्रायानुसारि द्रव्यास्तिकं व्यवहारनयानुसारि तु मातृकापदास्तिकं, तत्र शुद्धाशुद्धभेदोऽयमित्थं द्रव्यास्तिकः स्थित इति, तत्र द्रव्यास्तिकमशेषविशेषविमुखं सन्मात्रमेव, मानमेययोरपि सन्मात्रत्वानतिक्रमात् अन्यतरासत्त्वाद् इति, मातृकापदास्तिकं तु पञ्च धर्मादयोऽस्तिकाया एव तत् सन्मात्रं, न तेभ्योऽन्यद् द्रव्यास्तिकमिति, इह धर्मास्तिकायादयोऽशेषसामान्यविशेषाश्रयत्वान्मातृकापदशब्दवाच्याः, मातृकापि ह्यशेषवर्णपदवाक्यप्रकारादीनामाश्रयत्वे मातृकेति, उत्पन्नानामेव सत्त्वात् स्थूलसूक्ष्मोत्पादकलापेऽस्तिमत्युत्पन्नास्तिकं, अनुत्पन्नस्य वान्ध्येयव्योमोत्पलादेरसत्त्वात् उत्पत्तिमतोऽवश्यं

विनाशाद्विनाशितमिति पर्यायास्तिकं प्रायो विनाश उच्यते, प्राप्तपर्यायो देवदत्त इति प्रयोगदर्शनात्, उत्पादव्ययभेदेन तत्, पर्यायास्तिको हि तद्, इत्थं द्रव्यास्तिकं मातृकापदास्तिकं च द्रव्यनयः, उत्पन्नास्तिकं च पर्यायनय इति, एषामर्थपदानीत्यादि (१३३-१) एषां-द्रव्यपर्यायनयभेदानां द्रव्यास्तिकादीनां अर्थानि पदान्यर्थपदानि,कानि तानीत्याह-'द्रव्यं चे'त्यादि, द्रव्यं चेति शुद्धद्रव्यास्तिकप्रकृतेर्द्रव्यमेव सत्, गुणकर्म्मसामान्यविशेषसमवायानामपि तन्मात्रत्वात्,तदग्रहे तु तद्बुद्ध्यभावाद्, पितृपुत्रभ्रातृ-भागिनेयादिसम्बन्धविशिष्टैकपुरुषवत्, एवं द्रव्यं द्रव्ये द्रव्याणि वा सदेव, संख्याया अपि सत्त्वाव्यतिरेकात्, अन्यथा तदसत्त्व-प्रसङ्गात्,खरविषाणादिकल्पत्वात्, प्रतीत्यनुपपत्तेरिति,यत्र तु नैवं प्रतीतिः तदसदित्याह,असदिति यस्य नाम-संज्ञिता तत् संज्ञि-रूपमसन्नामकं,नास्ति, संज्ञिरूपाभावाच्च संज्ञापि नास्ति, परस्परापेक्षितत्वात् संज्ञासंज्ञिनोः, एवं वा शब्देन गुणाद्यभाव एवोच्यत इति, तन्नासतो व्यावृत्त्या सद्, अपि तु सदेवेति, अतः असन्नाम नास्तीति तुच्छं तत्, न किंचिदित्यर्थः, तत्तोऽपि व्यावृत्त्यादि-वृत्ताभावः, एवं द्रव्यास्तिकस्य सङ्ग्रहात्मनः शुद्धप्रकृतेः सन्मात्रतत्त्वमिति, मातृकापदास्तिकस्यापि प्राग्निरूपितशब्दार्थस्याशुद्धद्र-व्यास्तिकस्येति योऽर्थः, किमित्याह-मातृकापदं वा धर्म्मास्तिकायादि सत्, सर्वास्तिकायानामस्तिकायत्वात्, मातृकापदे च जीवात्मके सती, भेदनिबन्धनत्वात् द्वित्वादिसंख्यायाः, मातृकापदानि च धर्म्माधर्म्माकाशादीनि सन्ति, व्यवहार्यव्यवहारतादि-भावव्यवहारसिद्धेः, अन्यथैकसंख्यायाः अयोगादिति, यथा चैकवचनादेः सद्भैकादिसंख्याप्रतीतिरेव, यतो मातृपदमित्युक्ते सत् प्रतीयते, मातृकापदे चेति सती मातृकापदे इति, सन्ति मातृकापदानि चेति सन्ति,एते च धर्मादयः परस्परविलक्षणा इत्याह-अमातृकापदं चेत्यादि(१३३-१४)धर्म्मास्तिकायस्वलक्षणमधर्मास्तिकायस्वलक्षणं न भवति,इतरेतररूपापत्त्येतरेतराभावप्रसंगात्,

तदिहास्त्यंशगोचरं मातृकापदं, इहैव पररूपनास्तित्वागोचरं मातृकापदमसत्, तस्येति चेत् रूपेण नास्तित्वादिति, एवं शेषेष्वपि भावना कार्या, सर्वसंगतिविशेषाणां सर्वहेतुत्वात्, धर्म्मास्तिकायो मातृकापदं, स एव च सर्वस्थितिविशेषः प्रसवव्यावृत्त्यपेक्षया मातृकापदम्, एवं च द्विवचनबहुवचने अपि भावनीये, असद् असती असंतीत्यपि, तदुपाध्यभेदतोऽदुष्टमेव, नयत्वं च तथा तदंशप्रतिपत्त्येति। उक्तो द्विभेदोऽपि द्रव्यास्तिकः, पर्यायास्तिकमधिकृत्याह–उत्पन्नास्तिकस्य प्राग् निरूपितशब्दार्थस्य, किमित्याह–उत्पन्नं चेत्यादि (१३४–१) उत्पन्नं वा वर्त्तमानक्षणस्थित्येव सत्, अतीतानागतयोर्विनष्टानुत्पन्नत्वेनासत्त्वात्, एवमेवैकं धर्मास्तिकायादि, उत्पन्ने वा द्वे वस्तुनी सती, उत्पन्नानि वा बहूनि सन्ति, भिन्नान्येव, इत्थं चैतद्, अन्यथाऽभावः, एतेन पर्यायास्तिको व्याख्यातः, तत्त्वतो वस्तुन एव पर्यायत्वात्, अत एवैतन्मतानुसारिप्रलापो यदुत क्षणस्थितिधर्म्माभाव एव नाश इति, विपक्षे बाधामाह–परपरिकल्पितं च सत् उत्पन्नं वा स्यात् अनुत्पन्नं वा ?, आद्यपक्षेऽसत्पक्षसिद्धिः, उत्तरपक्षेऽसत्त्वं, तदाह–'अनुत्पन्नं चे'त्यादि, अनुत्पन्नं च–अप्रादुर्भूतं वान्ध्येयादि, अनुत्पन्ने वा खरविषाणशशविषाणौ, अनुत्पन्नानि वा खकुसुमभेकजटाभारकूर्मरोमादीनि, किमित्याह–असत्, सर्वमिदमसत्, सल्लक्षणस्योत्पादस्याभावात्, एवमुक्तनीत्या धर्म्मादि द्रव्यं स्यात् सत् स्यात् असत्, स्यान्नित्यं स्यादनित्यमिति तत्त्वेन सूचितं, इह द्रव्यार्थनयप्रधानतायां पर्यायगुणभावेन च प्रथमभङ्गः, प्राधान्यं चेह शब्देन विवक्षितत्वात् सदादीनां, शब्दानुपात्तस्य त्वर्थतो गम्यमानस्य गुणभावः, पर्यायनयप्रधानतायां द्रव्यनयगुणभाभावेन च द्वितीयः, 'अर्पित' इत्यादि (१३४–३) अनेन तु तृतीयः स्यादवक्तव्यमिति, युगपद्वस्त्वात्मन्यस्तित्वनास्तित्वाभ्यामर्पितस्य विवक्षिते क्रमेण चानुपतीते क्रमेणाक्रमेण चाभिधातुमविवक्षिते पूर्वभङ्ग(म)प्राप्तः यतश्चैवमतो न वाच्यं, कथमित्याह–

मदित्यसदिति चैकेन रूपेण, किं तर्ह्युभयेनैकेनार्पितं तच्च तथा अवाच्यं,तद्विवक्षितस्यार्थस्य शब्दस्य चासम्भवाद् अतः स्यादवक्तव्यमिति,एते त्रयः सकलादेशाः, यदा ह्यस्ति तन्नामकं वस्त्वेकेन गुणरूपेणोच्यते, गुणिनां गुणरूपमन्तरेण विशेषप्रतिपत्तेरभावात्, तदिह धर्म्येकं वस्तु सत्त्वादेरेकस्य गुणस्वरूपेणाभेदोपचारेण विवक्षां प्रापितो यया निरंशं सकलं व्याप्तुमिष्यते, विभागनिमित्तस्य प्रतियोगिनो गुणान्तरेऽस्यासत्त्वादेस्तत्रानाश्रयणात्, तत्र द्रव्यार्थाश्रयं सत्त्वगुणमाश्रित्य तदा स्यात् सन्नित्युच्यत इति सकलादेशः,गुणद्वयं तु गुणिनो भागवृत्तिरिति भवत्युभयात्मकत्वात् गुणिनः, न त्वेको गुणभागवृत्तिरिति, एवं स्यान्नित्यमित्यपि वाच्यं, तथा पर्यायनयाश्रयमसत्त्वमनित्यत्वमङ्गीकृत्य स्यादसत् स्यादनित्यमिति भवति, युगपद्भावादुभयगुणयोरप्रधानतायां शब्देनाभिधेयायां तथाऽभिधेयतयाऽनुमतत्वात् स्यादवक्तव्यमिति, एतेन विकलादेशा अपि संयोगभंगाः स्यादस्ति च नास्ति चेत्येवमादयो द्रष्टव्याः, एवमेतान् द्रव्यास्तिकनयानुसारतोऽपि भावयन्नाह–'पर्यायास्तिकस्ये'त्यादि,(१२४–२) पर्यायास्तिकस्य प्रागनिरूपितशब्दार्थस्य,पर्यायास्तिकग्रहणं धर्म्मविषयस्याद्वादप्रतिपत्त्यर्थं, धर्माश्च रूपित्वसत्त्वमूर्त्तत्वादिरूपाद्धर्मिणः पारिणामिनो नात्यन्तं व्यतिरिक्ता इत्यतस्तत् प्रतीत्य कयाचिद्धर्मिविषयत्वमपि,द्रव्यपर्याययोः संसृष्टत्वाद्, एवमेव च द्रव्यास्तिकपर्यायास्तिकनयद्वयमाश्रयस्तुगमाश्रयः सिद्ध्यति स्याद्वादः, अन्यथा पर्यायनयाश्रय एव च विकल्पसप्तकेन सकलवस्तुव्यापी स्याद्वादो, न चैतदेवमिति, तत् सतो भवनं भाव', तद्भावलक्षणः परिणामः, स चानेकरूपः क्रमयुगपद्भावी धर्मद्वये यावत्, तत्र जीवपुद्गलापेक्षया तथा तथा गतिनिबन्धकत्वं तथा सत्त्वामूर्त्तत्वासंख्येयप्रदेशात्मकत्वादिति,स एषोऽस्य सद्भावपर्यायाश्रयः,चित्रा धर्मादिद्रव्यवृत्तिः पुनरसद्भावपर्याय इति, वर्त्तमानकालावधयो वा सद्भावपर्यायाः, अतीतानागताश्च पर्याया इति, परस्परपर्यायाऽपेक्षयाऽनन्तधर्मात्मकाः

मयं भाना इति, तदित्थं व्यवस्थिते पर्यायास्तिकस्याधिकृतनयस्य सद्भावपर्याये वा सत्त्वादौ सद्भावपर्याययोर्वा वस्तुद्वयाश्रययोः सद्भावपर्यायेषु वा बहुवस्त्वाश्रयेषु, किमित्याह—आदिष्टं विवक्षितं पर्यायाः प्रधानतया द्रव्यं वा वस्तुस्थित्या द्रव्ये वा द्रव्याणि वा, किमित्याह—सत् सती सन्तीति, अथैकस्मिन् सद्भावपर्यायविषय आदिष्टं द्रव्यं वा द्रव्ये वा द्रव्याणि वा सत्, तथा द्वयोर्बहुषु च विभाव्यं, अविशिष्टस्य च द्रव्यपदार्थस्यैकत्वद्वित्वबहुत्वपर्यायाः, तथा च तदादिष्टं स्यादस्त्येकत्वेनादिष्टत्वात्, एकसंख्यादिरूपनयेनाऽस्ति, धर्मान्तराणां सतामप्यविवक्षितत्वात्, प्रथमभङ्गभावनाय त्वाह—सद्भावपर्यायः स्थित्यादिलक्षणः परपर्यायः अतीतानागतौ चेति, तदित्थंभूतेऽसद्भावपर्याये वा विवक्षिते कस्मिंश्चित् असद्भावपर्याययोर्वा विवक्षितयोः असद्भावपर्यायेषु वा बहुषु आदिष्टं विवक्षितं 'द्रव्यं चे'त्यादि पूर्ववत्, किमित्याह—अतः स्यान्नास्ति परपर्यायैर्नास्तित्वादिति, इदानीमवक्तव्यताविभावनायाह—' तदुभयपर्याये चे 'त्यादि, (१३४-७) तदित्यतिक्रान्तद्वयपरामर्शः, सद्भावासद्भावपर्यायद्वयसंपरिग्रहार्थं, उभयश्चासौ पर्यायश्च उभयपर्यायः—अस्तित्वनास्तित्वलक्षणः स चासावुभयपर्यायश्च तदुभयपर्यायस्तदुभयपर्यायनिमित्तस्तद्विषयो वाऽऽदेशः नार्पितधर्मतत्त्वमस्ति(अस्ति)नास्तिरूपेण युगपद्विवक्षायामुक्तप्रकारभावनया न शक्यं वक्तुमित्यवाच्यं, ताभ्यामुभयपर्यायाभ्यां आदिष्टं युगपद्धर्मरूपं द्रव्यं चेत्यादिकल्पतो न वाच्यं, सदित्यसदिति वा सद्द्रव्यमसद्वा द्रव्यं न वक्तव्यं, क्रमेण त्वादेशे भवत्येतद्, एवं सहभावार्पणायां तु तच्छब्दवाच्यं नासच्छब्दाभिधेयं, एकस्मिन् काले तादृग्विधवाचकशब्दाभावात्, ननु च तदुभयपर्याये त्वेकवचनमनुपपन्नम्, एकपर्यायविवक्षायामवक्तव्यत्वाभावाद्, अत्रोच्यते, उभयग्रहणाद्द्वाऽयमत्र गृह्यते, एवं तर्हि तदुभयपर्याययोरित्यस्मादविशेषः, नैतदेवं, यतस्तदुभयपर्याये शेषविवक्षाया अस्तित्वं हि स्वपर्यायविषयं चेत्युभयपर्यायस्त्ववस्तु.न, स्वपर्या-

नेनापरि-छ्यमानमिहास्तीति गृह्यते तदेव परपर्यायेणानच्छिद्यमानमात्मनि नास्तीति ग्राह्यम्, इदानीमयमुभयपर्यायियुगपदर्पणायां भाल्यवक्त-गः,इतरत्र तु भेदप्रधान-याख्यायां द्विवचनादिनिर्देशः समीचीनः,जातिविवक्षा,जातेरेकत्वादेकवचनसिद्धिरिति। एवमेते त्रयः सकलादेशा भाष्येण न विभाविताः,सम्प्रति विकलादेशविभावनार्थमाह भाष्यकारः–'देशादेशेन विकल्पयितव्य'-मिति (१३३-९) इतिकरणो विकल्पेयत्ताप्रतिपादनार्थः, पर्यायास्तिकमिति नपुंसकलिङ्गप्रक्रान्ते विकल्पयितव्यमित्याह, किं पुनः कारणं भाष्यकृता सकलादेशत्रयवदितरेऽपि चत्वारो विकलादेशा भाष्येण नोक्ता इति, अयमभिप्रायो भाष्यकारस्य लक्ष्यते—सकलादेशसंयोगाच्चतुर्णां निष्पत्तिरिति सुज्ञानाः, तत्राद्यद्वितीयविकल्पसंयोगे चतुर्थविकल्पनिष्पत्तिः, स्यादस्ति च नास्ति चेति, प्रथमतृतीयविकल्पसंयोगे पञ्चमविकल्पनिष्पत्तिः, स्यादस्ति चावक्तव्यं चेति, द्वितीयतृतीयविकल्पसंयोगे षष्ठविकल्पनिष्पत्तिः, स्यान्नास्ति चावक्तव्यं चेति, आद्यद्वितीयतृतीयविकल्पसंयोगे सप्तमविकल्पनिष्पत्तिः, स्यादस्ति च स्यान्नास्ति चावक्तव्यं चेति, तत्राद्येषु त्रिषु विकल्पेषु सकलमेव द्रव्यमादिश्यते, चतुर्थादिषु पुनर्विकलीकृतं खण्डश आदिश्यते, तदाह–'देशादेशेने'त्यादि, सकलस्य वस्तुनो बुद्धिच्छेदविभक्तोऽवयवो देशस्तस्मिन् देशे आदेशो देशादेशस्तेन, देशेन विकल्पनीयं व्याख्येयं धर्म्मादितत्त्व-मित्येवं विकल्पचतुष्टयस्यापि ग्रहणमिति॥ 'अत्राहे'त्यादि (१३४-१०) सम्बन्धग्रन्थः, अत्र प्रस्तावे आह परः–उक्तं भवता, किमित्याह–सङ्घातभेदेभ्यः स्कन्धा उत्पद्यन्त इत्येतत्, किमित्याह–तत् किं संयोगमात्रादेव सङ्घातो भवति,स्कन्ध इत्यर्थः, आहोस्विदस्त्यत्र संयोगे कश्चित् प्रतिविशेष इति, अत्रोच्यते इत्यादि, सति संयोगे परस्परसंघट्टलक्षणे बद्धस्यैक-त्वपरिणतिमतः संघातो भवति, स्कन्धः, नाबद्धस्य, संयोगमात्रात् स्कन्धासिद्धेः, अत्राह–'अथे'त्यादि, अथेत्यानन्तर्यार्थः,

बन्धः स्कन्धपरिणामहेतुः कथं भवतीति, अत्रोच्यते—

स्निग्धरूक्षत्वाद्बन्ध इति ॥ ५–३२ ॥ सूत्रम् ॥

नेतरेतरानुवेधादिति सूत्रसमुदायार्थः। अवयवार्थं त्वाह–'स्निग्धरूक्षयो'रित्यादिना (१३४-१६) स्नेहो हि गुणः स्पर्शाख्यः, तथा रूक्षोऽपि, एकः स्निग्धः अपरो रूक्षस्तयोः स्निग्धरूक्षयोः पुद्गलयोः परमाण्वोः परमाणूनां वा बहूनां, द्विवचनोपन्यासस्तु सर्वलघुस्कन्धदर्शनार्थः, स्पृष्टयोरिति संयुक्तयोस्तथैकपरिणामात्, किमित्याह–बन्धो भवति रूक्षस्नेहविशेषात्, श्लेपमष्टपबन्धनत्, चिक्कणलक्षणः परिणामः स्नेहस्तद्विपरीतो रूक्ष इति, घटादिप्रत्यक्षसिद्धकार्यगम्योऽयमित्यविषयः सुधियां विवादस्य, तदिह देशादिसंयोगविकल्पाः हस्तिव्यापादनोक्तौ प्राप्ताप्राप्तविकल्पतुल्या इति न तेष्वास्था विधेया इति ॥ 'अत्राहे'त्यादि (१३४-१७) सम्बन्धग्रन्थ एव, किमेष एकान्त इति, किमिति प्रश्नार्थः, एष इत्यनन्तरयोगार्थाभिसम्बन्धः एकान्तो नियमः, यदुत सर्वस्य स्निग्धस्य सर्वेण रूक्षेण बन्धः ?, इत्यत्रोच्यते—

न जघन्यगुणानामिति ॥ ५–३३ ॥ सूत्रम् ॥

अतिप्रसक्तस्य विधेरपवादः सूत्रसमुदायार्थः। अवयवार्थं त्वाह–'जघन्यगुणाना'मित्यादिना (१३४–१९) अणवो ह्येकगुणस्निग्धादिक्रमेण संख्येयासंख्येयानन्तगुणस्निग्धा भवन्ति, एवं रूक्षा अपि, जघने भवो जघन्यः जघन्य इव अन्त्यो निकृष्ट इत्यर्थः, जघन्यश्चासौ गुणश्च जघन्यगुणः जघन्यगुणः स्निग्धो येषां ते जघन्यगुणस्निग्धाः, तेषां, जघन्यगुणरूक्षाणां च परस्परेण अन्योऽन्यं स्वतः परतश्च बन्धो न भवति, तथास्वभावत्वादिति ॥ 'अत्राहे'त्यादि (१३५-१) उक्तं भवता अनन्तरसूत्रे

"जघन्यगुणवर्जाना"मिति, एकगुणस्निग्धैकगुणरूक्षवर्जानां स्निग्धानां रूक्षेण सह रूक्षाणां स्निग्धेन सह सम्बन्धो भवतीति सामर्थ्यादुक्तं, अथ तुल्यगुणयोरिति प्रस्तुतानन्तरवचनोऽथशब्दः,तुल्यगुणयोरिति सदृशगुणयोः स्निग्धाद्यधिकरणयोः द्व्यादिगुणापेक्षया किमेकान्तेनैन प्रतिषेधो बन्धस्येति,अत्रोच्यते समाधिः–न जघन्यगुणानामिति यदुक्तं एतदधिकृत्योच्यते, किमित्याह–

गुणसाम्ये सदृशानामिति ॥ ५–३४ ॥ सूत्रम् ॥

यथैव स्निग्धरूक्षाणां जघन्यगुणानां न बन्धस्तथैव गुणसाम्ये सदृशानां न बन्ध इति सूत्रसमुदायार्थः। अवयवार्थं त्वाह–'गुणसाम्ये सती'त्यादिना (१३५-६) गुणाः–स्निग्धरूक्षाः तेषां साम्यं–समत्वं, गुणानां साम्यं गुणसाम्यं तस्मिन् गुणसाम्ये तुल्यसंख्यत्वे सति, सदृशानां बन्धो न भवति, पूर्वापवादविशेषसमर्थनार्थमेतत्, न जघन्यगुणानामित्यभिधाय तद्विषयमपवादभेदं या चोद्यमानं तमुदाहरणेनाह–'तद्यथे'त्यादिना, तुल्यगुणस्निग्धस्य–द्व्यादिगुणस्निग्धादेरनन्तगुणस्निग्धावसानस्य तुल्यगुणस्निग्धेनैवंभूतेनैव,एवं तुल्यगुणरूक्षस्य द्व्यादिगुणरूक्षादेरनन्तगुणरूक्षावसानस्य तुल्यगुणरूक्षेणैवंभूतेनैव बन्धो न, भवति तु येषां न प्रकर्षापकर्षवृत्त्या गुणसाम्यं संख्यया तत्सदृशा एव भवन्तीति तदित्थमेतत् समपेक्षन्त इति प्ररूपयति, सूरिस्तु विशिष्टार्थप्रतिपत्त्यर्थमेतदिति चेतसाध्यायाह–अत्रोच्यत इत्यादि, गुणवैषम्ये सदृशानां बन्धो भवतीति,स्निग्धरूक्षतया वैषम्ये सति सदृशानामुपसंख्यया बन्धो भवतीति गुरवः,यतः किलायमागमः "णिद्धस्स णिद्धेण दुयाहिएणं, लुक्खस्स लुक्खेण दुयाहिएण। णिद्धस्स लुक्खेण उवेइ बंधो, जहण्णवज्जो विसमो समो वे" ॥१॥ त्यादि, अन्ये तु व्याचक्षते–स्नेहगुणवैषम्य एव संख्यया रूक्षगुणवैषम्येन सदृशानामिति न स्नेहादिमात्रगुणनिबन्धनमेव सादृश्यमिति 'अत्रा-

हे'त्यादि(१३३ ११) सम्बन्धग्रन्थः, किमविशेषेण गुणवैषम्ये सति संख्यया सदृशानां स्निग्धत्वेन बन्धो भवति, एकगुणस्निग्धादेर्द्विगुणाद्यनन्तगुणावसानस्निग्धादिनाऽपीति, अत्रोच्यते, नाविशेषेण गुणवैषम्ये, किन्तु—

द्व्यधिकादिगुणानां त्विति ॥ ५–३५ ॥ सूत्रम् ॥

समुदायार्थः प्रकटः। अवयवार्थं त्वाह–'द्व्यधिकादिगुणानां त्वि'त्यादिना, (१२५–९) द्वाभ्यां गुणविशेषाभ्यां अन्यस्मादधिको यः परमाणुः स आदिर्येषां गुणानां ते द्व्यधिकादिगुणाः, गुणशब्दोऽत्र गुणिवचनः, गुणवंतो गुणाः, परमाणव इत्यर्थः, तेषां द्व्यधिकादिगुणानां अणूनां सदृशानां बन्धो भवति, सदृशानामिति स्नेहसामान्यं चाश्रित्य सादृश्यं, तद्यथा–'स्निग्धस्ये'त्यादिना उदाहरति, एकगुणस्निग्धस्येत्यनुक्तेऽपि संख्या गम्यते, गुणश्च सामर्थ्यात् तद्द्विगुणाभ्यधिकस्निग्धेनाणुना, द्वाभ्यां हि गुणविशेषाभ्यामेकगुणस्निग्धादधिकः तेन सहास्ति बन्धः, यथैकगुणस्निग्धः एकस्ततोऽन्यस्त्रिगुणस्निग्धः, अत्र एकगुणस्निग्धस्य एकः समानगुणः त्रिगुणस्निग्धेऽणौ शेषेण गुणद्वयेनाधिकः, द्विगुणाद्यधिकस्निग्धेनेत्यादिग्रहणादेकगुणस्निग्धस्य चतुर्गुणपंचगुणादिस्निग्धेनापि बन्धसिद्धि, तथा द्विगुणाद्यधिकस्निग्धस्यैकगुणस्निग्धेन सह सम्बन्धसम्भवः, ननु च प्रथमविकल्पे नास्ति कश्चिद्विशेषोऽस्य स्फुटः, सत्यं, न कश्चिद्भेदः, तथापि तथा द्व्यादिवृत्तिरित्यनियतो बन्धभाव इति संदर्शनार्थः, एवं रूक्षस्य द्विगुणाद्यधिकरूक्षेणेत्यपि भावनीयं, यावद् द्विगुणाद्यधिकरूक्षस्य रूक्षेणेति, एकादिगुणाधिकयोस्तु संख्यया सदृशयोः स्निग्धादिसादृश्येन किमित्याह–बन्धो न भवति, सामर्थ्यगम्यमेतद्विप्रतिपत्तिनिरासार्थमुपन्यस्तमिति गुरवः, 'अत्रे'त्यादि, अत्राधिकृतसूत्रे तुशब्दो व्यावृत्तिविशेषणार्थ इति, व्यावृत्तिश्च विशेषणं चेति विग्रहः, ते अर्थौ यस्य स तथोक्तः, कस्येह व्यावृत्तिः? किं वा

विशेषणमित्याह–प्रतिषेधं व्यावर्त्तयति, बन्धं च विशेषयतीति, जघन्यगुणानामिति प्रकृतः प्रतिषेधस्तं व्यावर्त्तयति, यथाऽधिकृतं
न बन्धं विशिनष्टि, गुणवैषम्ये सति सदृशानां गुणद्वयाधिकानां बन्धो भवतीत्येवम् ॥ 'अत्राहे'त्यादि (१३५–२०) सम्बन्ध-
ग्रन्थः, अत्रौत्सर्गिके सापवादे बन्धलक्षणे प्रतिपादिते सत्यज्ञानतः पृच्छति–परमाणुषु केवलेषु स्कन्धेषु च तदेकत्वपरिणामरूपे
ये स्पर्शादयो गुणास्ते किं व्यवस्थिता–नित्याः तेष्वण्वादिषु आहोश्विदव्यवस्थिता–अनित्या इति, अत्रोच्यते समाधिः–अव्य-
वस्थिताः–अनित्या इति, कुत इत्याह–**परिणामात्**, त एव हि द्विप्रदेशिकादिस्कन्धपरिणताः परिणमन्ते परिमण्डलादिसंस्थान-
रूपेण, व्यवस्थितत्वे त्वयं नोपपद्यते, तथैकत्वादिव्यवस्थानेनेत्यभिप्रायः, अत्राहेत्यादि (१३६–३) पुनरपि द्वयोरणुस्कन्धाद्योः
गुणबन्धे सति तुल्यगुणयोर्विषमगुणयोर्वा संख्यया कथं परिणामो भवति?, कः कथं परिणामयतीति, अत्रोच्यते—

**बन्धे समाधिकौ पारिणामिकाविति ॥ ५–३६ ॥ सूत्रम् ॥**

बन्धयोग्यतायां समाधिकौ संख्यागुणाभ्यां परिणामकाविति सूत्रसमुदायार्थः। अवयवार्थं त्वाह–'बन्धे सती'त्यादि (१३६-६)
बन्धे–संयोगे सति च बन्धयोग्यतया स **समगुणः**–तुल्यगुणः संख्यया **समगुणस्य** अपरस्य संख्ययैव **परिणामको भवति**,
यथा द्विगुणस्निग्धो द्विगुणरूक्षस्य, रूक्षो वा स्निग्धस्य, परिणामवैचित्र्यात्, सदृशानां बन्धप्रतिषेधः, तथाऽधिकगुणः संख्यया
हीनगुणस्य इत्येव परिणामको भवति, यथा त्रिगुणस्निग्धः एकगुणस्निग्धस्येति, स एकगुणोऽपि त्रिगुणतामापाद्यते, कस्तूरि-
कांशानुविद्धविलेपनवत् ॥ 'अत्राहे'त्यादि (१३६-७) अत्राहोक्तं भवता इहैव, किमित्याह–द्रव्याणि धर्मादीनि जीवाश्चेति,
एवं पञ्च द्रव्याणीत्युक्तं सामान्येन, तत्तु किमुद्देशतः एव तथाभिधानादिमात्रादेव द्रव्याणां धर्मादीनां प्रसिद्धिः परिज्ञान-

लक्षणा आहोस्विल्लक्षणतोऽपि व्यापकात् स्वरूपसिद्धिरिति, अत्रोच्यते लक्षणतोऽपि व्यापकात् प्रसिद्धिः, तदुच्यते व्यापकं लक्षणं, ननूत्पादव्ययध्रौव्ययुक्तं सदित्युक्तमेव, सत्यमेतदपि अन्यथोच्यते द्रव्योपाध्यनन्तधर्मत्वाद्वस्तुन इति ॥ तदाह—

गुणपर्यायवद्द्रव्यमिति ॥ ५-३७ ॥ सूत्रम् ॥

उभयवदिति सूत्रसमुदायार्थः । अवयवार्थं त्वाह–'गुणानि'त्यादिना (१३६-१२) संख्येयादिसंख्यया समाख्यायमानत्वाद्गुणाः–शक्तिविशेषरूपास्तान् लक्षणतो वक्ष्यामः 'द्रव्याश्रया निर्गुणा' इत्यत्र, पर्यायलक्षणमाह–भावान्तरं संज्ञान्तरं च पर्याय इति, भावादन्यो भावो भावान्तरं, समभिरूढनयाभिप्रायेणेदं, न शकनपूर्दारणाद्यर्थान्तरं, संज्ञान्तरं च तद्वाचकं इन्द्रादेव, किमित्याह–पर्याय इति, आह–क इत्थमनयोर्विशेषः ?, उच्यते, तत्त्वतो न कश्चित्, द्रव्यस्यैव ह्येते परिणतिविशेषाः, न त्वेभ्यः केचिदन्ये गुणपर्याया इति, केवलं सहभाविनो गुणाः क्रमभाविनः पर्याया इति व्यवस्था, अन्यथा रूपादीनामेवासौ परिणाम इति निश्चयः, तदुभयमित्यादि, तदुभयं–व्यवहारनिश्चयात्मकं यत्र विद्यत इति यस्मिन् समानपरिणामरूपेऽस्ति तद् द्रव्यं भवति, एतदेव स्पष्टयति–गुणपर्याया इत्यादिना, गुणपर्याया यथोक्तलक्षणा अस्य द्रव्यस्य सन्ति, न जातुचित् निष्परिणामं द्रव्यं भवति, विकारलक्षणा चेयं षष्ठी यवानां धाना इति, यथा तेषामेव तथाभवनात्. अस्मिन् वा सतीति परिणामयोराधाराधेयविवक्षायामेकं विज्ञानमित्यादि, एवं गुणपर्यायवदिति, एवं धर्म्मादिष्वप्यमूर्त्तधर्म्मापेक्षया योजनीयमिति ॥ न चैतानि पंचैव द्रव्याणीत्याह—

कालश्चेत्येक इति ॥ ५-३८ ॥ सूत्रम् ॥

न धर्मादीनि जीवान्तान्येवेति सूत्रसमुदायार्थः। अवयवार्थं त्वाह–'एके त्वाचार्या' इत्यादिना (१३६-१६) अन्ये नयवादान्तरप्रधानाः पुनराचार्या व्याचक्षते विशेषेण आचक्षते व्याचक्षते–व्यक्तीकुर्वन्ति, कथमित्याह–कालोऽपि द्रव्यमिति कालोऽपि, चशब्दोऽपिशब्दार्थः, विशिष्टमर्यादावच्छिन्नोऽर्द्धतृतीयद्वीपसमुद्रान्तवर्त्ती मनुष्यादीनां बालत्वादिपरिणामहेतुः, बलाकाप्रसवे र्विशिष्टर्तौ वा प्रबोधवत्, द्रव्यमिति तथा तस्य परिणतिहेतुतया द्रवणात्, तथा चागमः—'अद्धासमय'त्ति, एकग्रहणं मतान्तरपरिग्रहार्थं, यथोक्तं–"कोऽयं भंते! कालत्ति वुच्चइ?, गोअमा! जीवा चेवे"त्यादि, एके इत्थमाचक्षते, अन्ये त्वन्यथेति, वर्णनादीनां सर्वत्र भावादिति।

सोऽनन्तसमय इति ॥ ५–३९ ॥ सूत्रम् ॥

नरोऽपरिणाम्येवेति सूत्रसमुदायार्थः। अवयवार्थं त्वाह–'स चैषे'त्यादिना (१३६-१८) स इति प्रकान्तपरामर्शः, एष इत्यनन्तरयोगः, चशब्दोऽनुकर्षणे, कालः प्रस्तुतः, किमित्याह–अनन्तसमयो नियमत एव, तत्रेत्यादि तत्रेति तस्मिन् काले एक एवावगमवृत्तः वर्त्तमानसमयस्तत्प्रदेशः, अतीतानागतयोः पुनः समययोरतीतादित्वेन न वर्त्तमानवत् तद्भावेन अतीतादित्वविरोधात् तत्कार्याप्रसङ्गात्, अस्ति चान्येन स व्यवहारः सिद्धेभ्योऽतीतसमयराशेरसंख्येयगुणत्वेनाभिधानादिति॥ अत्राहेत्यादि,(१३७-१) उक्तं भवता इहेन गुणपर्यायवद्द्रव्यमित्येतत्, तत्र गुणाः पर्यायव्यतिरिक्ताः, द्रव्ये के गुणा इति, पर्यायोपलक्षणमेतत्, अत्रोच्यते समाधिः—

द्रव्याश्रया निर्गुणा गुणा इति ॥ ५–४० ॥ सूत्रम् ॥

परिणामिपरिणामलक्षणाश्रयाऽऽश्रयिभावघृत्तयः आश्रितद्रव्याः परगुणाभाव इति सूत्रसमुदायार्थः ॥ अवयवार्थं त्वाह–द्रव्य-मेषा(१३७ ४)मित्यादिना, द्रव्यं धर्मादि सुखप्रतिपत्त्यर्थं वा घटादिः एषां गुणानां सहभाविनां रूपादिपरिणतिभेदानां आश्रय इतिकृत्वा द्रव्याश्रया उच्यन्ते, तथा नैषां गुणाः सन्तीति, परिणामस्य परिणामान्तराभावाद् अनवस्थाप्रसङ्गादिति निर्गुणा इति, कथमनन्तगुणालीढत्वमण्वादेः ?, उच्यते, तथोत्कृष्टपरिणतिभेदेन, क्रमभावे त्वितरस्तद्भावात् तदाकारतापत्तिरिति भावनीयं, एतेन पर्याया व्याख्याताः,तेषामेव च क्रमभाविनां पर्यायत्वादिति ॥ अत्राहेत्यादि (१३७-६) सम्बन्धग्रन्थः,अत्राहोक्तं भवता इहैव, किमित्याह–बन्धे समाधिकौ पारिणामिकावित्येतदुक्तं तत्र सूत्रे कः परिणाम ? इति, अत्रोच्यते प्रश्ने समाधिः—

तद्भावः परिणाम इति ॥५–४१॥ सूत्रम् ॥

यद्धर्मादिभिस्तथा भूयत इति सूत्रसमुदायार्थः। अवयवार्थमाह–'धर्म्मादीना'मित्यादिना (१३७–९) धर्म्मादीनामिति धर्म्माधर्म्माकाशजीवपुद्गलाद्धासमयाना ततो यथोक्तानां च गुणानामिति रूपादिघटादी(घटादिरूपादी)नां, किमित्याह— स्वभाव इति निजो भावः, एतदेवाह–स्वतत्त्वं धर्मादीनामेव निजमवस्थान्तर परिणाम इति सूत्रं,परिशब्दो व्याप्तौ, दोषेण व्याप्ता इति यथा, नमिः प्रह्वमाह, अवस्थान्तरप्राप्त्यानुगुण्यं, धर्मो हि गन्तुर्गत्युपग्रहाकारेण परिणमते, न तदवस्थ एवास्ते, नच विनर्त्तत एव,उपग्रहासिद्धेः, एवमधर्मादिष्वपि भावनीयं, नाणुद्वयतादवस्थ्ये द्व्यणुकं, न च तद्भाव एव, तदहेतुकत्वप्रसङ्गादिति,स द्विविध इत्यादि (१३७-१०) सम्बन्धग्रन्थः, स परिणामो द्विविधः द्वे विधे यस्यासौ द्विविधः, के पुनस्ते ? इत्याह–

अनादिरादिमांश्च ॥ ५–४२ ॥ सूत्रम् ॥

अविपमानप्रथमारम्भः आदिमांश्च प्रथमारंभवान् चशब्दः परिणामेयत्तोपसङ्ग्रहार्थः, 'तत्रानादि'रित्यादि (१२७-१२) तत्र
नयोरनाद्यादिमतोः परिणामयोरनादिः परिणामः, केष्वित्याह—अरूपेषु अमूर्त्तेष्वित्यर्थः, तानेवाह—धर्माधर्माकाशजीवेषु इष्टितः
क्रियापदाध्याहाराद्भवति, इह चशब्दोऽनुक्तसमुच्चयार्थः, कालतोऽनादिरेव तत्तद्, धर्मद्रव्यपरिणामोऽनादिरसंख्येयप्रदेशवत्त्वं लोका-
कानभ्यापित्वं गन्तृगत्यपेक्षाकारणत्वमगुरुलघुत्वमित्यादिः अधर्मद्रव्यस्य तु स्थातृस्थित्यपेक्षकारणत्वं अगुरुलघुत्वादीति, आकाश-
स्यानन्तप्रदेशत्वमवगाहदातृत्वमित्यादि, जीवस्य तु सिद्धत्वादि, कालस्य तु वर्त्तना इति ॥ रूपिष्वभिधातुमाह—

रूपिष्वादिमानिति ॥ ५-४३ ॥ सूत्रम् ॥

परिणाम इति सूत्रसमुदायार्थः । अवयवार्थं त्वाह—'**रूपिषु**' इत्यादि (१२७-१४) रूपिषु पुना रूपस्पर्शरसगन्धवत्सु द्रव्येषु
पुद्गलद्रव्येषु आदिमान् परिणामः, प्रवाहानादित्वेऽपि देशाद्यनियतत्वात्, स चानेकविधोऽनेकप्रकारः स्पर्शपरिणामादिः
स्पर्शरसगन्धवर्णादिः, तद्यथा—स्पर्शोऽष्टविधः शीतादिः शीततरशीततमादिश्च, रसः पंचविधः तिक्तादिः तिक्ततरादिश्च, गन्धो द्विविधः
-सुगन्धिः दुर्गन्धिः सुरभितर दुरभितरादिः, शुक्लादिः वर्णः पंचविधः शुक्लतरादिश्च, आदिशब्दाद् द्व्यणुकादिः संघातभेदलक्षणः शब्दा-
दिश्चैवमनेकप्रकारः, अयं हि द्रव्यत्वमूर्तत्वसत्त्वाद्यनादित्वेऽपि न धर्मादिस्थित्यनादित्ववच्च लब्धेन तथा वृत्तिरित्यादिमानिति ।

योगोपयोगौ जीवेष्विति ॥ ५-४४ ॥ सूत्रम् ॥

आदिमान् परिणाम इति सूत्रसमुदायार्थः। अवयवार्थं त्वाह—'**जीवेष्वि**' (१२८-२) त्यादिना, जीवेष्वरूपिष्वपि प्रकृत्या तथा-
ऽनादिरूपसम्बन्धाद्रूपिष्वपि सत्सु, किमित्याह—योगोपयोगावित्यत्र योजनं योगः—पुद्गलसम्बन्धादात्मनो वीर्यपरिणतिविशेषः,

एवमुपयोजनमुपयोगः चैतन्यस्वभावस्यात्मनो ज्ञानदर्शनलक्षणः, एतौ द्वावपि परिणामौ शक्तिदौ, अनेनात्मनो मुख्यतद्भावापत्तिमाह, एतौ चादिमन्तौ भवतः, उपजायमानकालावधिकत्वाद् आदिमन्तौ सन्तौ सन्तत्या त्वनादिसन्तावेव। 'तत्रे'त्यादि (१३८–३) तत्रोपयोगः पूर्वोक्तः, द्वितीयेऽध्याये 'उपयोगो लक्षण'मित्यादिना, योगस्तु योगः पुनः पुरस्तादुपरिष्टात् षष्ठाध्यायादिसूत्रे वक्ष्यते–अभिधास्यते, 'कायवाङ्मनःकर्म्म' योग इत्यादिनेति ॥

॥ आचार्यहरिभद्रोद्धृतायां तत्त्वार्थटीकायां(डुपडुका)भिधानायां पञ्चमोऽध्यायः समाप्तः ॥

---

अधुना षष्ठ आरभ्यते, तत्र चायं सम्बन्धग्रन्थः–'अत्राहे'त्यादि (१३९–२) अत्र जीवादिपदार्थसप्तके आह परः उक्ता जीवाजीवाः द्रव्यतः पर्यायतश्च, अथाश्रवस्तदनन्तरोपन्यस्तः क इति?—

कायवाङ्मनः कर्म्म योग इति ॥ ६–१ ॥ सूत्रम् ॥

न जीवाजीवव्यतिरेकतोऽयमुपपद्यत इति सूत्रसमुदायार्थः। अवयवार्थं त्वाह–'कायिक'मित्यादिना (१३९-४) कायो–देहस्तत्प्रयोजनं कायिकं, कायेन वा निर्वृत्तं तत्र वा भवमिति, एवं वाचिकं मानसं च, इतिशब्दः कर्मेयत्ताप्रदर्शनार्थः, एष त्रिविधः–त्रिप्रकारो योगो भवति सामान्येन, विशेषतस्तु पञ्चदशविधः, काययोगस्य औदारिकादिभेदेन सप्तविधत्वाद् वाग्योगस्य च सत्यादिभेदेन चतुर्विधत्वात् मनोयोगस्य चेति, तथा चार्षम्–"ओरालियसरीरकायजोगे ओरालियमीससरीरकायजोगे वेउव्विअसरीरकायजोगे वेउव्वियमिस्ससरीरकायजोगे आहारगसरीरकायजोगे आहारगमीससरीकायजोगे कम्मणसरीरकायजोगे सच्चमइजोगे

असणइजोगे मचामोसवइजोगे असचामोसवयजोगे, एवं सचमणजोगे” इत्यादि, तत्रौदारिकादिशरीरयुक्तस्यात्मनो योगः–वीर्यपरिणतिविशेषः काययोगः, तथौदारिकवैक्रियाहारकशरीरव्यापाराहृतवाग्द्रव्यसमूहसाचिव्याज्जीवव्यापारो वाग्योगः, एवमौदारिकवैक्रियाहारकशरीरव्यापाराहृतमनोद्रव्यसमूहसाचिव्याज्जीवपरिणामो मनोयोगः, 'स एकश' इत्यादि (१३९-५) स त्रिविधो योगः, स एकश इत्येकैकः कायादियोगः द्विविधो–द्विभेदः शुभोऽशुभश्च शुभं–पुण्यं सातादि सकलकर्मक्षयो वा तद्धेतुत्वाच्छुभः एवमशुभं–पापमसातादि संसारो वा तद्धेतुत्वादशुभः, चशब्दोऽपरिकल्पितत्वेनोभयोस्तात्त्विकत्वज्ञापनार्थः, तत्राशुभः संवेगनिबन्धनत्वादादावुच्यते, स च हिंसाऽनृतस्तेयाब्रह्मादीनि कायिको हिंसादीनि वक्ष्यमाणानि 'प्रमत्तयोगात् प्राणव्यपरोपणं हिंसे'-त्यादिना, अयं च कायप्रधानत्वात् कायिकः, केवलोऽप्ययमसंज्ञिमत्स्यादीनां प्रवचने सिद्ध इति, वाचिकमाह–सावद्यानृतपरुषपिशुनादीनि वाचिकः, वदनीयं वद्यं, न वक्तव्यं अवद्यं सहावद्येन सावद्यं, यथा हन्यतां तस्करोऽयं इत्यादि, अनृतम्–अयथार्थं अचौरे चौर इति प्रवचनं, परुषं–स्नेहरहितं, धिग्जाल्म इत्यादि, पिशुनं प्रीतिशून्यतापादनं परदोषसूचकत्वेन, आदिशब्दादसभ्यादिपरिग्रहः, अयमपि वाक्प्रधानत्वात् वाचिकः, मानसमाह–अभिध्याव्यापादेर्ष्यासूयादीनि मानसः अयमपि मन प्रधानत्वान्मानसत्वेऽभिद्रोहध्यानमभिध्या यथाऽस्मिन् मृते सुखं वत्स्यामीत्यादि, सोपाय उत्सादनारम्भो व्यापादः, यथाऽस्त्यस्य रिपुः शक्तः एनं हन्तुमिति तं कोपयामीत्यादि, ईर्ष्या परगुणविभवाद्यक्षमा, सुभगे! अयमस्यै रोचते तत् कथमियं दृष्येत्यादि, असूया क्रोधपरिणाम एव, यथाऽयं ते पिता गतासुकस्तनुरित्यादि, आदिशब्दात् मानमायादिग्रहः, एवमशुभयोगमभिधायैतद्भेदमेव शुभमतिदिशन्नाह–'अतो विपरीतः शुभ' इति, अतः–अशुभयोगात् काययोगादेः विपरीतो–विसदृग् शुभ इति शुभो योगः,

अहिंसास्तेयब्रह्मचर्यादिलक्षणः, एवमसावद्यागमपरिशुद्धं वचनं, एवमभिध्यादिव्यावृत्तं मन इति ॥ एवं शुभाशुभं योगमभिधाय साश्रवत्वमभिधातुमाह—

स आश्रव इति ॥ ६–२ ॥ सूत्रम् ॥

प्रकृतसमुदायार्थमेव, एतद् व्याचष्टे 'स एष' इत्यादिना (१३९–१०) स एष इत्यनेन प्रागुद्दिष्टनिर्देशः, त्रिविधो योग इति तिस्रो विधा यस्य स तथाविधः, अपिशब्दः समुच्चये,एकोऽपि समुदायोऽपि योगः कायादिव्यापारः, किमिति ?, आश्रवसंज्ञो भवति, आश्रवः संज्ञा इत्याश्रवसंज्ञो भवतीत्यर्थः,एनमेवाह–'शुभे'त्यादिना (१३९-१०) शुभाशुभे–पुण्यापुण्ये कर्म्मणी पुद्गलात्मके वक्ष्यमाणलक्षणे तयोः कर्म्मणोराश्रवणाद् ग्रहणात् तेन क्रियाविशेषेणोपादानात् स तादृशः क्रियाकलाप आश्रवः, तथापरिणतो जीवः कर्म्मादत्तेऽन्यथा त्वभाव एव कर्म्मबन्धस्येति, स च द्रव्यभावाद् द्विप्रकारः आश्रवः, तत्र द्रव्याश्रवप्रदर्शनेन भावाश्रवं प्रतिपादयन्नाह–सरःसलिलावाहिनिर्वाहिश्रोतोवदिति सलिलमावहति तच्छीला च सलिलावाहि तथा सलिलनिर्वाहि सलिलावाहिनिर्वाहिनी च स्रोतसी चेति सलिलावाहिनिर्वाहिश्रोतसी तस्यास्तुल्य आश्रवः, सलिलावाहिनिर्वाहि श्रोतो–विवरं रन्ध्रं, कस्य सम्बन्धि ?–सरसः तडागस्य, किंप्रयोजनं तत् स्रोतः?,सलिलवाहि–सलिलप्रवेशः प्रयोजनं, एवं सलिलनिर्गमप्रयोजनं सलिलनिर्वाहि, तद्वदाश्रवोऽप्यात्मनः सरस्तुल्यस्य सम्बन्धी तत्परिणामविशेषः कर्म्मसलिलस्य प्रवेशे निर्गमे च–निर्जरणे कारणमाश्रवः, कर्म्माण्याश्रवत्यनेनात्मनोऽपयंति चेत्यर्थः ॥ अयं च

शुभः पुण्यस्येति ॥ ६–३ ॥ सूत्रम् ॥

एतद् व्याचष्टे, शुभपरिणामबन्धात् शुभः योगः–कायादिव्यापारः पुण्यस्य सातसम्यक्त्वादेः आश्रवो भवति, एतद् व्याचष्टे–आश्रवो भवतीत्यनुवर्त्तमाने पुण्यपापलक्षणमेवाह, 'तत्रे'त्यादिना (१४०–२) तत्र–तयोः पुण्यपापयोः सद्वेद्यादि पुण्यं, वक्ष्यतेऽष्टमेऽध्याये 'सातसम्यक्त्वहास्यरतिपुरुषवेदशुभायुर्नामगोत्राणि पुण्य'मित्यादिना शेषं पापमिति (अ० ६–४ सू०) उपर्युक्तात् अन्यच्छेषम्–असातादि पापमुच्यत इति, सामर्थ्यसूत्रोपन्यासः स्पष्टार्थो विप्रतिपत्तिनिरासार्थश्च, पुण्यमेव कनिष्ठं पापमिति केचित्तन्न तथेति। अयं च—

सकषायाकषाययोः सांपरायिकेर्यापथयोरिति ॥ ६–५ ॥ सूत्रम् ॥

समुदायार्थः प्रकटः॥ अवयवार्थं त्वाह–'स एष' इत्यादिना (१४०-४) स एष त्रिविधोऽपि योगः कायादिव्यापारादिलक्षणोऽधिकृतः, किमित्याह–सकषायाकषाययोः क्रोधादियुक्ततद्रहितयोः प्राणिनोः कर्त्रोरित्यर्थः, किमित्याह–साम्परायिकेर्यापथयोः कर्म्मणोराश्रवो भवति, तत्र सम्पर्त्यस्मिन्नात्मेति सम्परायः–संसारः, समित्यव्ययं समन्ताद्भावे संकीर्णादिवत्, परा भृशार्थे पराजयतिवत्, सम्परायः प्रयोजनमस्य कर्मणः साम्परायिकं–संसारपरिभ्रमणहेतुः ईरणमीर्या–गतिरागमानुसारिणी विहितप्रयोजने सति पुरस्ताद्युगमात्रदृष्टिः स्थावरजङ्गमानि भूतानि परिवर्जयन् अप्रमत्तः शनैर्यायात् तपस्वीति सैवंविधा या गतिः पन्था–मार्गः प्रवेशो यस्य कर्मणः तदीर्यापथम्, एवंविधगत्युपादानं कर्म्म, साम्परायिकईर्यापथयोः समासः तयोराश्रवो भवति यथासंख्यमिति यथासंख्यं, न व्यत्ययेन, यथासम्भवं चेति यस्य यावान् योगः सम्भवत्येकेन्द्रियादेः, यथासंख्यमेवाह–सकषायस्य योगः साम्परायिकस्याश्रवः, यथासम्भवं कषायोत्कर्षादिभेदात्, अकषायस्येर्यापथस्यैवाश्रवो, न साम्परायिकस्य,

तस्याप्येकसमयस्थितिः एकस्मिन् समये मध्यमेऽवस्थितिः–अवस्थानं यस्य कर्मण इति भापितपुंस्कत्वादेवं निर्देशः,तथा चागमः –'पढमसमए बद्ध' मित्यादि,आह–यद्येवं कथमेतत् यदुक्तं–उच्चालिअम्मि पाए इरिआसमिअस्स संकमट्ठाए। वावज्जेज्ज कुलिंगी मरेज्ज तं जोगमासज्ज ॥१॥ न य तस्स तण्णिमित्तो वंधो सुहुमोवि देसिओ समए। सुद्धस्स उ संपत्ती अफला भणिआ जिणवरेहिं ॥२॥" इत्यादि, उच्यते, अप्रमादप्रसङ्गपरमेतत्, एवम्भूताया अवस्थाया अबन्धकारणत्वेन, यथा "एकोऽवि नमुक्कारो जिणवरवसहस्से"-त्यादि, इत्थं चैतत्, प्रमत्तसंयतानामप्यष्टमौहूर्तिकवन्धश्रुतेः, यथोक्तं–अपमत्तसंजयाणं वंधठिती होइ अट्ठ उ मुहुत्ता। उक्कोसेण जहण्णा भिन्नमुहुत्तं तु विण्णेया ॥१॥ जे उ पमत्ता समणा उट्टियाएँ वंधंति तेसिं वंधठिई। संवच्छराणि अट्ठ उ उक्कोसिआ मुहुत्तो ॥ २ ॥ इत्यादि ॥ आद्याश्रवभेदानभिधातुमाह—

इन्द्रियकपायाव्रतपञ्चचतुःपञ्चपञ्चविंशतिसंख्याः पूर्वस्य भेदा इति ॥ ६–६ ॥ सूत्रम् ॥

पंच चत्वारः पंच पंचविंशतिश्च संख्या येषां हिंसादिभेदानां ते तथाविधाः पूर्वस्य भेदाः साम्परायिकाश्रवस्येति सूत्रसमुदायार्थः। अवयवार्थं त्वाह–'पूर्वस्ये'त्यादिना (१४०–९) पूर्वस्य प्रथमस्य, प्राथम्यं च सूत्रक्रमप्रामाण्यात् तत्परिपाटिमधिकृत्य साम्परायिकस्येत्याह, एतदेवाह–साम्परायिकस्य कर्म्मणः आश्रवभेदाः, किमित्याह–पंच चत्वारः पंच पंचविंशतिरिति भवन्ति, एतानेव दर्शयति 'पंचे'त्यादिना, पंच हिंसानृतस्तेयाब्रह्मपरिग्रहा एव आश्रवभेदाः, एते च सप्तमेऽध्याये वक्ष्यमाणाः, तानुपलक्षयति "प्रमत्तयोगात् प्राणव्यपरोपणं हिंसे"त्येवमादय आश्रवभेदाः वक्ष्यंते सप्तमेऽध्याये,तथा चत्वारः क्रोधमानमायालोभाः कषायाः अनन्तानुबन्ध्यादयो वक्ष्यन्ते अभिधास्यन्ते, एवं पंच प्रमत्तस्ये-

न्द्रियाण्याश्रवभेदाः, एतानि प्रतिपादितान्येव स्पर्शादीनि, तथा पंचविंशतिः क्रिया आश्रवभेदाः, 'तत्रे'त्यादि (१४०-१४) 'तत्र' तेषु साम्परायिककर्म्माश्रवभेदेषु 'इमे' वक्ष्यमाणलक्षणाः 'क्रियाप्रत्यया' इति क्रिया एव प्रत्ययः कारणं, तत्र सम्यक्त्व-क्रिया सम्यक्त्वं च-मोहशुद्धदलिकानुभवः प्रायेण तत्प्रवृत्ता क्रिया सम्यक्त्वक्रिया, अतो विपरीतं मिथ्यात्वं, तदपि त्रिविधं-अभिगृहीतानभिगृहीतसन्देहभेदेन, तत्क्रिया तत्त्वार्थाश्रद्धानरूपा, अभिगृहीता अतथाऽभिनिविष्टानां, अनभिगृहीता मनःप्रस्थानसंदिग्धप्रपन्नैः अक्षरादिरूढानां, प्रयोगक्रिया विचित्रः कायादिव्यापारो वाचनादिः, समादानक्रिया चित्राभिग्रहणरूपा, ईर्यापथक्रिया तत्कर्म्मबन्धाय चेष्टा, 'एवं कायाधिकरणे'त्यादि, कायक्रिया द्विविधा-अनुपरतकायक्रिया दुष्प्रयुक्तकायक्रिया, आद्या मिथ्यादृष्टेः, द्वितीया प्रमत्तसंयतस्य, अधिकरणक्रियाऽपि द्विधा निर्वर्त्तनसंयोजनभेदेन, निर्वर्त्तनं मूलोत्तरगुणानां, आद्यमौदारिकादीनां शरीराणां तत्कर्मसंधानादि चेतरत्, संयोजनं विषगरलादीनां, प्रदोषक्रिया द्विविधा-जीवाजीवप्रदोषभेदेन, परितापनक्रियाऽपि द्विधा-स्वपरपरितापनभेदात्, प्राणातिपातक्रियाऽप्येवं, स्वपरप्राणातिपातभेदात्, इह क्रोधलोभमोहान् हेतूनभिदधति विद्वांसः, स्वःपुण्यक्रोधादेर्गिरिपातादिभावादिति, 'एवं दर्शने'त्यादि, दर्शनक्रिया द्विविधा-नृपनिर्याणादिगोचरा देवकुलादिगोचरा च, स्पर्शनक्रियाऽपि द्विधा-सुरादिस्पर्शविषया क्रकचपत्रादिस्पर्शविषया च, प्रत्ययक्रिया अपूर्वाद्युत्पादनेन, समन्तानुपातक्रिया स्थण्डिलादौ भक्तादित्यागक्रिया, अनाभोगक्रिया अप्रत्युपेक्षिताप्रमार्जितदेशे शरीरोपकरणनिक्षेपः 'स्वहस्ते'त्यादि, स्वहस्तक्रियाऽभिमानाद् भापितेन चेतसा अन्यपुरुषं निवर्त्य या स्वहस्तेन क्रियते, निसर्गक्रिया चिरकालप्रवृत्तिः, परदेशितयाऽपार्थानुज्ञा विदारणाक्रिया, अनवकाङ्क्षक्रिया, जिनोक्तेषु कर्तव्यं किंतु प्रमत्तवशवर्त्तितयाऽनादरः,

'आरम्भे'त्यादि (१४०-१८)आरम्भक्रिया-भूम्यादिकायोपघातलक्षणा, परिग्रहक्रिया तदर्जनरक्षणमूर्च्छालक्षणा, मायाक्रिया, धर्मेऽपि मायाप्रधाना, मिथ्यादर्शनक्रिया तदनुमोदमानस्य, अप्रत्याख्यानक्रिया प्रमादात् तदग्रहणरूपा, इतिशब्दः साम्परायिकक्रियेयत्तावधारणार्थः,एवमेताः क्रियाः पञ्चविंशतिः स्थूलस्थूलाकारा विस्तरभीत्याऽऽख्याताः साम्परायिककर्म्महेतवः, काश्चित् परस्परतः किंचिद्भेदभाजः काश्चिद्विभक्तार्थाः,-संक्षेपतः कायवाङ्मनोदुश्चरितलक्षणाः,सूक्ष्मतरभूरिभेदा अपि भाष्यकारेण प्रदर्शिताः समस्तकायादिदुश्चरितकलापसङ्ग्रहाय, प्रवचनाभिज्ञेन तु युक्त्यागमाभ्यां विशेषेण व्याख्येया इति।

तीव्रमन्दज्ञाताज्ञातभाववीर्याधिकरणविशेषात् तद्विशेष इति ॥ ६-७ ॥ सूत्रम् ॥

प्रक्रमात् सम्बद्धमेव, यथोदिताश्रवभेदेभ्योऽपि तीव्रादिभावभेदादेव च भेद इति सूत्रसमुदायार्थः॥ अवयवार्थं त्वाह-'एषा'मित्यादिना (१४१-३) 'एषा'मित्यनन्तरसूत्रोपन्यस्तानां,संख्यामाह-'एकोनचत्वारिंशता'मि(त इ)त्यत्राव्रतानि पंच कषायाश्चत्वारः इन्द्रियाणि पंच क्रियाः पञ्चविंशतिरित्येवमेकान्नचत्वारिंशत इति,नशब्देनैवोक्तत्वान्न बहुवचनं संख्याशब्दात् ,केषामित्याह-'साम्परायिका(णामा)श्रवाणा'मिति,ईर्यापथव्यवच्छेदार्थमेतत् , 'तीव्रभावा'दिति तीव्रः-प्रकृष्टः भावः-परिणामः तस्मात्तीव्रः भावाद्धेतोः, विशेषो भवतीति सम्बन्धः,कर्मबन्धस्य,स मन्दभावात् स्तोकपरिणामात् मंदो विशेषो भवति, सिंहघातकगोघातकौ निदर्शनमत्र लोकप्रशंसानिन्दाभ्यामिति, तीव्रताऽप्यत्राधिमात्रादिभेदात् , एवं मन्दताऽपीति,एवं ज्ञातभावादिति, ज्ञातस्य भावो ज्ञातभावः, ज्ञातमस्य स्पर्शादिपाठात् अत् , अभिसन्धिप्रवृत्तेः, मृगाभिसन्धिमुक्तबाणमृगव्यापत्तिवत् , अ(ज्ञातभावात्-अ)नभिसन्धिपरिणामात् स्थाण्वभिसन्धिमुक्तबाणपक्षिव्यापत्तिवत् ,एवं वीर्यविशेषादधिकरणविशेषाच्चेति, वीर्य-शक्तिविशेषो, अधिमा-

ग्रादिभेद एव तद्विशेषात् हस्तिप्राणाभिधारणवदुत्कर्षभावात्, अल्पवीर्यप्रहारेऽपि तद्गमने भयादिसिद्धेः, अधिकरणविशेषात् कूटयन्त्रकलादिलक्षणाद्विशेषो भवति कर्म्मबन्धस्य, अयं चैकैक आश्रवो मृद्वादिभेदादनेकधेत्याह–'लघुर्लघुतर' इत्यादि (१४१–५) ग्रभूतगत्त्वाश्रयत्त्वादस्यैवमुपन्यासः,स्वरूपं वास्य कथंचित् क्रम्यादि घातयतोऽवसेयं,एवं 'तीव्रस्तीव्रतर'इत्यादि,अयमपि सिंहादिघातयतोऽवसेयः, अत्र अस्योपन्यासः आश्रवाधिकारात् तत्प्राधान्यप्रदर्शनार्थः, अनेन मध्यममध्यमतरादिग्रहः, लघुतीव्रादि 'तद्विशेषाने'त्यादि, आश्रवलघ्वादिभेदाच्च बन्धविशेषो भवति लघ्वादिरेवेति। 'अत्राहे'त्यादि (१४१-७) सम्बन्धग्रन्थः। अत्रातीतसूत्रव्याख्यावसाने परः प्रश्नयति–तीव्रमन्दादयो भावाः अनन्तरोपन्यस्ताः लोकप्रतीताः प्रकर्षाप्रकर्षादिलक्षणाः वीर्यं च जीवस्य–आत्मनः क्षायोपशमिकः क्षायिकश्च भाव इत्युक्तं प्राक्, अथाधिकरणं किमित्यत्रोच्यते समाधिः—

अधिकरणं जीवाजीवा इति ॥ ६–८ ॥ सूत्रम् ॥

अधिक्रियते आत्मा नरकादिषु येन तदधिकरणं, एतच्च तत्त्वतो जीवाजीवा इति सूत्रसमुदायार्थः। अवयवार्थं त्वाह–'अधिकरणं द्विविध'मित्यादिना (१४१–११) अधिकरणं प्राग्निरूपितशब्दार्थं द्विविधं–द्विप्रकारं जीवाजीवभेदमप्येकैकं, कथं द्विविधमित्याह–'द्रव्याधिकरण'मित्यादि, छिद्यतेऽनेनेति छेदनं–परश्वादिः एवं भिद्यतेऽनेनेति भेदनं–मुद्गरादिः, आदिशब्दात्रोटनादिग्रहः, शस्त्रं च दशविधं–संख्याविशेषनिर्द्धारणार्थं भेदाभिधानमस्य,दशविधमेव शस्त्रमिति,यथोक्तं–"दव्वं सत्थग्गिविसं नेहंबिलखारलोणमादीयं। भावो य दुप्पउत्तो वाया काओ अविरई अ ॥ १॥" इहाविरतेर्भावान्तर्गतत्वाद्दशविधमिति, 'भावाधिकरण'मित्यादि, भावः–तीव्रादिपरिणामः स एवाधिकरणमुक्तनीतेः, एतदष्टोत्तरशतभेदं अनन्तरसूत्रे वक्ष्यते, 'एतदि'त्यादि,

एतद्-द्रव्यशस्त्रादि उभयं वर्त्तते, एतदेवाह-जीवाधिकरणमजीवाधिकरणं च, सोऽपरोऽधिकरणभेद इति ॥ तयोरधिकरणयोः

**आद्यं संरंभसमारम्भारम्भयोगकृतकारितानुमतिकषायविशेषैस्त्रिस्त्रिस्त्रिश्चतुश्चैकश इति ॥ ६-९ ॥ सूत्रम् ॥**

जीवाधिकरणमित्थं विचित्रमिति सूत्रसमुदायार्थः। अवयवार्थं त्वाह-'आद्य'मित्यादिना (१४१-१७) आदौ भवं आद्यं, इतिशब्दः पदार्थवाचकः, कुत आदित्वमित्याह-सूत्रक्रमप्राधान्याद्, अधिकरणं जीवाजीवा इति सूत्रक्रमः तत्प्रामाण्याद्, एतावता जीवाधिकरणमिहाद्यमिति, 'नदि'त्यादि, तत्-जीवाधिकरणं **समासतः**-संक्षेपतस्त्रिविधं त्रिप्रकारम्, आह-**संरंभः समारम्भः आरम्भ** इति, तत्र प्राणातिपातादिसंकल्पः संरंभः तत्साधनजनितपरितापकरः समारम्भः प्राणातिपातादिक्रियावृत्तिरारम्भः, 'एतदि'त्यादि (१४१-१८) एतद्-जीवाधिकरणं **पुनः**- भूयः '**एकैकश**' इत्येकैकं '**कायवाङ्मनोयोगविशेषादि**'ति कायसंरम्भाधिकरणं प्रक्रान्तत्वादधिकरणस्य, एवं शेषेष्वपि, योगभेदेन च विकल्प्य संरंभादीनधुना क्रियाद्वारेण योगान् विकल्पयति-(तद्यथेत्यादि) संरंभं कायेन करोति वाचा करोति मनसा करोतीति, एवं कारयत्यपि विकल्पत्रयं, तथाऽनुमन्यते, विकल्पत्रयमेव, कृतवचनं स्वतन्त्रकर्तृप्रतिपादनार्थं, कारिताभिधानं प्रयोज्यपरतन्त्रप्रदर्शनार्थं, अनुमतिवचनं प्रयोजकस्य मानसपरिणामप्रदर्शनार्थं, एतदेव भाष्यकारो दर्शयति-तद्यथा कृतकायसंरंभ इत्यादिना (१४२-४) वचननवकेन, यथा चायं कायसं : कृतकारितानुमतिभेदेन विकल्पितः एवं समारम्भारम्भावपि कृतकारितानुमतिविकल्पितौ वाच्यौ, समारम्भं करोति समारम्भं कारयति समारम्भमनुमन्यते कायेनेत्यादि नवधा विकल्पना, तथाऽऽरम्भं करोति कारयत्यनुमोदते चेति नवैव विकल्पा वेदितव्याः, 'तदपी'त्यादिना (१४२-७) पुनश्चतुर्द्धा भिनत्ति, कृतकायसमारम्भाधिकरणादि पुनरेकैकं कषायविशेषाच्चतुर्विधं भवति,

कषायाः प्रागभिहितलक्षणाः सामान्येन विशेषो-भेदः तद्भेदाच्चतुर्विधं भवति, तद्यथेत्यादिना दर्शयति, यथाऽभिहितलक्षणात् विकल्पात् क्रोधकृतकायसंरंभः एवं मानमायालोभकृतकायसंरंभ इत्यपि वाच्यं, एवं क्रोधकारितकायसंरम्भः मानमायालोभकारितकायसंरम्भ इत्यपि वाच्यं, तथा क्रोधानुमतकायसंरम्भः मानमायालोभानुमतकायसंरम्भ इत्यपि वाच्यं, एवं वाङ्मनः(सं)योगाभ्यामपि वक्तव्यमित्यतिदेशवाक्यं एवमित्युक्तप्रकारेण वाग्योगेनापि क्रोधादिविशिष्टेन वाच्यं क्रोधकृतवाक्संरंभः मानमायालोभकृतवाक्संरंभ इत्यपि वाच्यं तथा क्रोधकारितवाक्संरम्भ इत्यपि वाच्यं तथा क्रोधानुमतवाक्संरंभः मानमायालोभानुमतवाक्संरंभ इत्यपि वाच्यं, एवं मनोयोगेनापि क्रोधादिविशिष्टेन विकल्पा एतावन्त एव वाच्याः, क्रोधकृतमनःसंरम्भः मानमायालोभकृतमनःसंरम्भ इत्यपि वाच्यं, तथा क्रोधकारितमनःसंरम्भः मानमायालोभकारितमनःसंरम्भ इत्यपि वाच्यं, तथा क्रोधानुमतमनःसंरम्भः मानमायालोभानुमतमनःसंरंभ इत्यपि वाच्यं, एवमेते षट्त्रिंशद्भेदास्तद्यथा-क्रोधकृतकायसंरंभ इत्यादिना ग्रन्थेन प्रतिपादिताः, तथा समारम्भारम्भाविति अतिदेशेन समारम्भस्य षट्त्रिंशद्भेदत्वं संरम्भवत् प्रतिपादयति, क्रोधकृतकायसमारम्भ इत्येवमतिक्रान्तग्रन्थः पुनरावर्त्तनीयः, ततश्च द्वितीया षट्त्रिंशल्लभ्यते, तथा क्रोधकारितकायारम्भ इत्यप्यनुवर्त्तमाने ग्रन्थे षट्त्रिंशदेव विकल्पानां प्राप्यते, एवमेषा षट्त्रिंशत् त्रिप्रकारापि पिण्डिताऽष्टोत्तर परिणामशतं भवतीत्येतदेवोपसंजिहीर्षन् दर्शयति -तदेवं जीवाधिकरणं समासेनेत्यादि, यत् प्रस्तुतं जीवाधिकरणं तदेवं समासेन-संक्षेपेण एकशः-एकैकं संरंभाधिकरणं समारम्भाधिकरणमारम्भाधिकरणं च षट्त्रिंशद्विकल्पं भवति त्रिविधमपि, समुच्चयेऽपिशब्दः, तिस्रोऽपि षट्त्रिंशतः शतमष्टोत्तर शतं विकल्पानां भवतीति भाष्याक्षरानुसरणमवसेयं, सूत्रावयवस्फुटीकरणाय पुनरुच्यते-संरम्भादीनां कषायावसानानामाहितद्व-

न्धानां विशेषशब्देन समानाधिकरणस्तत्पुरुषः, षष्ठीसमासो वा, प्रत्येकं वा विशेषशब्देनाभिसम्बन्धः सामर्थ्यात्, संरंभादिविशेषैरिति तृतीयानुपपत्तिः, क्रियावाचिपदार्थान्तराभावात्, न, वाक्यशेषोपपत्तेः, प्रविश पिण्डीमिति यथा, तथेहापि क्रियापदावधारणम्, एकैकं भिन्द्यात् एकमेकं त्रीन् भेदान् कुर्यादिति, वाग्योगादीनामानुपूर्व्या वचनं पूर्वापरविशेषणत्वात्, तस्मात् क्रोधादिचतुष्टयकृतकारितानुमतिभेदात् कायादीनां संरंभसमारम्भारम्भविशेषाः षट्त्रिंशद्विकल्पाः स्फुटीक्रियन्ते यन्त्रेण, उद्भूतक्रोधपरिणाम आत्मा करोति संरंभं कायेनेति प्रथमः, जातमानपरिणाम आत्मा करोति संरंभं द्वितीयः, तथोपजातमायापरिणतिरात्मा करोति स्वयं कायेन संरम्भमिति तृतीयः, तथा लोभकषायग्रस्तः करोति स्वयं कायेन संरम्भमिति चतुर्थः, एवं कृतेन चत्वारो विकल्पाः,कारितेन चत्वारोऽनुमत्याऽपि चत्वारः, एते द्वादश कायेन लब्धाः,तथा च द्वादश वचसा, मनसाऽपि द्वादश, एते षट्त्रिंशत् संरंभेण लब्धास्तथा समारंभेणापि षट्त्रिंशत्, तथाऽऽरम्भेणापि षट्त्रिंशदिति, वचनाद्बन्धस्थितिः कोपादिकषायैर्जनवशीकारात् स्वयं करणपरिणतौ सत्यां कारितानुमतिपरिणामद्वारेण च प्राणातिपातादिसंकल्पपरितापनाव्यापत्तयः साम्परायिककर्म्मबन्धहेतवो भवन्तीति प्रतिपादितं, प्राक्कायादयो व्यस्ताः समस्ताश्च बन्धहेतवः,समस्तास्तु प्रधानोपसर्जनतया प्रधानतया अप्रधानतया च बन्धहेतव इति प्रतीतम्, एवमेतज्जीवाधिकरणं विकल्प्य भावनीयमिति। 'अत्राहे'त्यादिना (१४२-१८) सम्बन्धं प्रतिपादयति, अत्रेति जीवाधिकरणव्याख्यानावसाने परोऽनवबुध्यमान आह–अथाजीवाधिकरणं किमिति, अथेत्यानन्तर्यार्थः, जीवाधिकरणादनन्तरमजीवाधिकरणं प्राक् निरदेशि सूत्रकारेण तत् किमिति–किंस्वरूपं–किंस्वभावं तद् ?,इतिकरणं प्रश्नेयत्ताप्रतिपादनार्थः, अथ पृष्टे अत्रोच्यत इत्याहाचार्यः, अत्र प्रश्नेऽनुरूपमुत्तरमभिधीयते—

निर्वर्त्तनानिक्षेपसंयोगनिसर्गा द्विचतुर्द्वित्रिभेदाः पर ॥ ६–१० ॥ सूत्रम् ॥

निर्वर्त्तनादयः कृतद्वन्द्वाः यथाक्रम कृतद्वन्द्वैरेव द्व्यादिभिः समानाधिकरणा द्रष्टव्याः, अधिकरणमित्यनुवर्त्तते, तत् परमित्यनेनाभिसम्बध्यतेऽजीवाधिकरणं तन्निर्वर्त्तनादिभेदाच्चतुर्द्धा अजीवविषयान्निवर्त्तनानिक्षेपसंयोगनिसर्गान् कुर्वन् रागद्वेषवानात्मा साम्परायिकं कर्म्म बध्नाति, निर्वर्त्यमानमजीवद्रव्यं निर्वर्तना निर्वर्त्यमानप्रयोजना निर्वर्त्तनेति भावसाधना वा, सा द्विविधा मूलोत्तरगुणभेदात्, निक्षिप्यतेऽसाविति निक्षेपः– स्थाप्यः कश्चिदजीव एव, स चतुर्विधः अप्रत्यवेक्षितादिभेदात्, भावसाधनो वा, संयोजनं संयोगः—एकत्रीकरणं व्यामिश्रणं, तद्द्विधा–आहारोपकरणभेदात्, निसर्जनं निसर्गः त्यागः उज्झनं, तत्त्रिधा कायादिभेदात्, परवचनमनर्थकं, पूर्वत्राद्यवचनाद्, अस्मिन् वा सत्याद्यवचनमनर्थकमर्थापत्तिसिद्धेरिति चेत्, तन्न, अन्तरङ्गताप्रतिपादनार्थत्वाद् आद्यशब्दस्य, बहिरङ्गताप्रतिपादनार्थत्वाच्च परशब्दस्येति, विशिष्टार्थप्रतिपत्तिहेतुत्वादुभयं न्याय्यमिति, अमुमेवार्थं भाष्येण स्पष्टयति–परमिति सूत्रक्रमप्रामाण्यादजीवाधिकरणमाहेत्यादि (१४३–२ भाष्यम्) पर–बहिरङ्गमितिकरणः शब्दपदार्थकः प्रतिविशिष्टपुरुषप्रणीतसूत्रप्रक्रमस्य प्रमाणत्वात्, परं बहिरङ्गमप्रधानमजीवाधिकरणमाह, जीवपरिणामोऽभ्यन्तरङ्गं तदायत्तत्वात् कर्म्मबन्धस्य, निमित्तमात्रत्वाद् बहिरङ्गमजीवाधिकरणं, इष्टाभिधायी वा परशब्दः, प्रायोगिकाः वैश्रसा वा निर्वर्त्तनादयोऽध्यवसेयाः, आद्यं च जीवविषयत्वाज्जीवाधिकरणमुक्तं, कर्म्मबन्धहेतुर्मुख्यतः, इदं तु द्रव्याधिकरणमुच्यते–परम्–अमुख्यं निमित्तमात्रत्वात्, तद्–अजीवाधिकरणं समासतः संक्षेपतः चतुर्विधं चतुष्प्रकार भवति, समासग्रहणान्मूलोत्तरगुणादिभेदशरीरादिशस्त्रकलापश्च व्यासः सूक्ष्मप्रभेदः आपादितो भवति, 'तद्यथे'त्यादिना चतुरो विकल्पान् स्वरूपतः पठन्ति, 'निवर्त्तने'-

त्यादि इतिकरणो मूलभेदद्वयत्ताप्रतिपादनार्थः प्राग्व्याख्यातः, शब्दनिर्भेदद्वारेण स्वरूपकथनमेषां क्रियते 'तत्रे'त्यादि, तत्र तेषु निर्वर्त्तनादिषु निर्वर्त्तना तावद् व्याख्यायते, निर्वर्त्तनैवाधिकरणं निर्वर्त्तनाधिकरणमिति समानाधिकरणमिति भावः, साधनपक्षे षष्ठीतत्पुरुषः, निर्वर्त्तनाया अधिकरणमेवमन्यत्रापि योज्यं, तद् द्विविधं—द्विप्रकारं, प्रकारद्वयप्रदर्शनार्थमाह—मूलगुणनिवर्त्तनाधिकरणं उत्तरगुणनिवर्त्तनाधिकरणं च, चशब्दः समुच्चये, मूलं चासौ गुणश्च मूलगुणः मूलम्—आद्यं प्रतिष्ठासंस्थानाख्यो गुणो मूलगुणः स एव निर्वर्त्तनाधिकरणं, स हि निर्वर्त्तितः सन्नधिकरणीभवति कर्म्मबन्धस्य, तथाऽङ्गोपाङ्गसंस्थानसूजादितैक्ष्ण्यादिरुत्तरगुणः, सोऽपि निर्वृत्तः सन्नधिकरणीभवति कर्म्मबन्धस्य, उत्तरगुण एव निवर्त्तनाधिकरणं, तत्र मूलगुणनिवर्त्तना पञ्च शरीराणीत्यत्राधिकरणशब्दो नोदितो भाष्यकृता लाघवैषिणा, अनुक्तोऽपि च प्रत्यासत्तितो गम्यतेऽतो मूलगुणनिवर्त्तनाधिकरणमौदारिकादीनि पञ्च शरीराणि, तानि च द्वितीयेऽध्याये व्याख्यातानि, प्रकृते वस्तूनि योज्यन्ते, औदारिकशरीरवर्गणाप्रायोग्यद्रव्यैर्निर्मापितमौदारिकशरीरसंस्थानं प्रथमसमयादारभ्य मूलगुणनिवर्त्तनाधिकरणमात्मनो भवति, बन्धनिमित्तत्वात्, उत्तरगुणनिवर्त्तनाधिकरणमौदारिकस्याङ्गोपाङ्गसूजाकर्णवेधानयनस्थापनादि, वैक्रियस्यापि वपुषः स्ववर्गणाप्रायोग्यद्रव्यनिर्मापितमादिसमयादारभ्य संस्थानं मूलगुणनिवर्त्तनाधिकरणम्, अस्योत्तरगुणनिवर्त्तनाधिकरणमङ्गोपाङ्गकेशदशननखादिकं, आहारकशरीरस्यापि स्ववर्गणायोग्यपुद्गलद्रव्यनिर्मापितं संस्थानं मूलगुणनिवर्त्तनाधिकरणं उत्तरगुणनिवर्त्तनाधिकरणमङ्गोपाङ्गादि, कर्म्मसंघातलक्षणस्य कार्म्मणस्यापि तद्योग्यनिर्मापितस्वसंस्थानं मूलगुणनिर्वर्त्तनाधिकरणं, उत्तरगुणनिर्वर्त्तनाधिकरणमस्य नास्त्येव, तैजसस्याप्यूष्मलक्षणस्याशितपीतपाचकशक्तिभाजो लब्धिप्रत्ययस्य च परनिग्रहानुग्रहकारिणः स्ववर्गणानिर्मापितसंस्थानं मूलगुणनिर्वर्त्तनाधिकरणम्, अस्याप्युत्तरगुणनिर्वर्त्तना नैवास्ति, वाङ्मनः प्राणापानश्चे-

ति चशब्दान्मूलगुणनिर्वर्त्तनाधिकरणाभिसम्बन्धः, वाङ्मनोवर्गणायोग्यद्रव्यनिर्मापितौ वाङ्मनःसंस्थानविशेषौ मूलगुणनिर्वर्त्तनाधिकरणं, तथा प्राणापानवर्गणायोग्यद्रव्यनिर्मापित उच्छ्वासनिःश्वासाकारौ मूलगुणनिर्वर्त्तनाधिकरणम्, एषामप्युत्तरगुणनिर्वर्त्तना न सम्भवत्येवेति। मूलगुणनिर्वर्त्तनाधिकरणमित्थं व्याख्याय प्रकारान्तरेणोत्तरगुणनिर्वर्त्तनागुणमाचिख्यासुराह-काष्ठपुस्तचित्रकर्म्मादीनीति, कर्म्मशब्दं प्रत्येकमभिसम्बद्ध्यते, तत्र काष्ठकर्म्म कुट्टिमं पुरुषादीना प्रतिकृतिः, अत एवोत्तरगुणनिर्वर्त्तनोच्यते, प्रसिद्धपुरुषाद्याकृतेः प्रतिबिम्बनिर्वर्त्तनाद्, एवं पुस्तचित्रकर्म्मणी अपि वाच्ये, पुस्तकर्म्म वस्त्रचीवरकादिग्रथितं कृत्रिमपुत्रकादिकं चित्रकर्मोत्यन्तप्रसिद्धमादिग्रहणाल्लेप्यपत्रच्छेद्यजलकर्म्मभूकर्म्मपरिग्रहः, शस्त्रमप्यनेकाकारमाख्यातं कृपाणादि स्वसंस्थानतो मूलगुणनिर्वर्त्तनाधिकरणं, तीक्ष्णतोज्ज्वलताद्युत्तरगुणाधिकरणमिति। अधुना निक्षेपाधिकरणनिर्द्धारणायाह—'निक्षेपे'त्यादि (१४३-८) निक्षेपाधिकरणं चतुर्विधं चतुष्प्रकार, तद्यथा—तथाऽऽह, अप्रत्युपेक्षितेत्यादिना, अप्रत्युपेक्षिते—चक्षुषाऽनिरीक्षिते, भूभाग इति गम्यते, निक्षेपाधिकरणमिति, निक्षेप्यस—दण्डकादेः स्थापनमसामाचारित्वात्, एवं दुष्प्रमार्जितनिक्षेपाधिकरणं दुष्प्रमार्जितं प्रमाददनेकशः सकृद्वा, सुप्रमार्जितं त्वेकतस्त्रिरिति, एवं सहसानिक्षेपाधिकरणं चेतयतोऽपि कथंचित् प्रमादादशुद्धभूभागे निक्षेपाधिकरणं अनाभोगनिक्षेपाधिकरणं अत्यन्तविस्मृत्यानुचिते भूभागेत्यादि, संयोगाधिकरणं द्विविधं द्विप्रकार, प्रकारानाह—भक्तपानेत्यादि (१४३-११) भक्तम्—अशनादि त्रिधा, पानं तु—पानमेव द्राक्षापानकादि, एतत्संयोजना वहिरोदनादिलाभे क्षीरादिमार्गणया अन्तर्वा मुखे उपदंशादिप्रक्षेपेण ग्रासे, एवं पाने वहिरुचितलाभे चातुर्जातकादिमार्गणया अन्तर्मुख एव तत्तदाहारोपरि, अधिकरणमेतदसामाचारित्वात्, एवमुपकरणेत्यादि, उपकरणं—वस्त्रपात्रादि तत्संयोजना तथाविधविचित्रलाभे तदनु-

रूपाऽपरमार्गणया परिभोगेन चैवमधिकरणमिति। 'निसर्गे'त्यादि, निसर्गाधिकरणं त्रिविधं त्रिप्रकारं, प्रकारानाह 'काये'-त्यादिना, कायः-औदारिकादि शरीरं तन्निसर्गः अविधिना त्यागोऽधिकरणं, कायान्तरपीडापत्तेः, एवं वाङ्मनोनिसर्गावपि वाच्यौ, शास्त्रबोधेन विधिना, विना विधिमधिकरणमेव, आह-कथमिदमजीवाधिकरणं?,उच्यते, बहिर्व्यापारापेक्षया,कायादीनामचेतनत्वात्, मूलगुणनिर्वर्त्तनाधिकरणमपि संस्थानमात्रमेषामिति विशेषः। 'अत्राहे'त्यादि, सम्बन्धग्रन्थः, अत्र सामान्याश्रवविचारे भवतोक्तं, किमित्याह-सकषायाकषाययोः बन्धकयोर्योगः कायादिव्यापारः यथासंख्यं साम्परायिकेर्यापथयोः कर्मणोराश्रव इत्येवमुक्तं भवता, साम्परायिकं च कर्म्म अष्टविधं ज्ञानावरणादि वक्ष्यते बन्धाध्याये,तत् किं सर्वस्य कर्मणो ज्ञानावरणादेः अविशिष्टः आश्रवस्तुल्यः कायादिव्यापारो हेतुः आहोश्वित् प्रतिविशेषो भेदः कर्म्म कर्म्म प्रति कश्चिदस्तीति, अत्रोच्यते समाधिः, 'सत्यपी'त्यादिना,सत्यपि भवत्यपि योगत्वाविशेषे योगसामान्ये किमित्याह-प्रकृतिं प्राप्याश्रित्य ज्ञानावरणादिलक्षणादिलक्षणा आश्रवविशेषा भवन्ति, एनमेव दर्शयति-'तद्यथे'त्यादिना—

तत्प्रदोपनिह्नवमात्सर्यान्तरायासादनोपघाता ज्ञानदर्शनावरणयोरिति ॥ ६-११ ॥ सूत्रम् ॥

प्रदोषश्च निह्नवश्चेत्यादिर्द्वन्द्वः,तयोर्ज्ञानदर्शनयोः प्रदोषादयः ज्ञानदर्शनावरणयोराश्रवा इति सूत्रसमुदायार्थः। अवयवार्थं त्वाह-'ज्ञानस्ये'त्यादिना (१४४-२) ज्ञानस्य-मत्यादेः सामान्येन तथा ज्ञानवतामाचार्यादीनां ज्ञानसाधनानां च पुस्तकादीनां किमित्याह-प्रदोष इति, प्रकृष्टो दोषः, किमनेन क्रियारहितेन? अनन्तगममेतत् परलोकस्यैते मत्सराः निह्नवो वाचनाऽऽचार्यापलापः ज्ञाननिह्नवो वा नाहमिदं वेद्मीति, मात्सर्यं योग्यार्थिनोऽपि ज्ञानादानं, मा मत्समो भवतु कश्चिदिति परिणामः, विघ्नक-

रणं अन्तरायः श्रवणादौ आसादना अविध्यादिग्रहणादिना उपघातो मतिमोहेनाहाराद्यदानेन इत्येवमाद्याः प्राणातिपाताद्यप्र,द्वीन्द्रियादीनामपि तद्भावात् व्यापितापत्तेः, ज्ञानावरणस्य कर्म्मणः आश्रवा भवन्ति, प्रवेशमार्ग इत्यर्थः, आश्रवभावार्थमाह–एतैर्हि ज्ञानावरणं पुद्गलात्मकं कर्म्म बध्यते, तस्मादेते आश्रवा इति, एवमेवेत्यादि, एवमेवेत्यनेनातिदेशमाह, यथा ज्ञानावरणस्य तत्प्रदोषादयः तथा दर्शनावरणस्यापि चक्षुर्दर्शनावरणादेः, नवरं दर्शनस्य तत्त्वार्थश्रद्धानलक्षणस्य दर्शनिनां–विशिष्टाचार्याणां दर्शनसाधनानां च सम्मत्यादिपुस्तकानामिति वाच्यं । असद्वेद्यस्याश्रवानाह—

दुःखशोकतापाक्रन्दनवधपरिदेवनान्यात्मपरोभयस्थान्यसद्वेद्यस्येति ॥ ६–१२ ॥ सूत्रम् ॥

दुःखादीन्यात्माद्यधिकरणान्यसद्वेद्यस्याश्रवा भवन्तीति सूत्रसमुदायार्थः । अवयवार्थं त्वाह–'दुःख'मित्यादिना (१४४ ९) तत्र दुःखयतीति दुःखं–बाधालक्षणं शारीरादिः,शोको मानसवैक्लव्यं मानसः परिणामः,तापस्तत्फलभूतो देहपीडाविशेषः, आक्रन्दनमुच्चैरार्त्तविलपनं,वधः कशादिताडनं परिदेवनं, मुहुर्मुहुर्नष्टचित्ततयैव समन्ताद्विलपनं इत्येवमादीनि आत्मस्थान्यात्मनि वर्तमानानि आगमोक्तविधिनाधया,परस्य क्रियमाणान्यविधिलोचकरणादिना, उभयोस्तूभयोः क्रियमाणान्यविधिशिक्षाग्रहणादिना असद्वेद्यस्येति असदित्यशोभनविधिना वेद्यते यत् कर्म्म तस्याश्रवा भवन्तीति पूर्ववत् ॥ सद्वेद्यस्याश्रवानाह—

भूतव्रत्यनुकम्पा दानं सरागसंयमादि योगः क्षान्तिः शौचमिति सद्वेद्यस्येति ॥ ६–१३ ॥ सूत्रम् ॥

भूतानुकम्पादयो जातिभेदेन सद्वेद्यस्याश्रवा भवन्तीति सूत्रसमुदायार्थः । अवयवार्थं त्वाह–'सर्वभूतानुकम्पे'त्यादिना, (१४४–१३) सर्वभूतानुकम्पा अविशेषेण सर्वभूतदया अगारिष्वित्यगारं—गृहमधिकरणव्यापारवत्तया एषामगारिणः

लिङ्गस्था अलिङ्गस्था वा तेषु, अनगारेषु च तद्विपरीतेषु गृहव्यापारविरतेष्वित्यर्थः, अत एवाह–व्रतिषु प्राणातिपातादिविरतिमत्सु अनुकम्पाविशेष इत्यतिशयवत्यनुकम्पा, तथा दानं सर्वेष्वेतेषु स्वस्याहारादेः अतिसर्जनलक्षणं, एवं सरागसंयमः मूलगुणोत्तरगुणसम्पद् लोभाद्युदयवान् प्राणवधाद्युपरमः, एवं संयमासंयमः स्थूलप्राणातिपातादिनिवृत्तिरूपः,तथा अकामनिर्जरा कुतश्चित् पारतन्त्र्यादुपभोगनिरोधरूपा तथा पालनाया अयोगः,अज्ञानतपो बालतपस्विनस्तपो यत् योगः व्यापारः पञ्चाग्न्याद्यनुष्ठानलक्षणः प्रवचनेऽपि शास्त्रबाधाप्रवृत्तेः एवं क्षान्तिः उपकार्यादिभेदात् क्रोधनिवृत्तिः, एवं शौचं शुचिभावः शुचिकर्म्म वा, एतल्लोभोपशमलक्षणं, परमत्र, पूतोदकांगप्रक्षालनं त्वपरमिति,इतिशब्दः प्रकारार्थः, एवंप्रकारा अन्येऽपि सद्वेद्यस्याश्रवा भवन्तीति समानं पूर्वेण ॥ दर्शनमोहाश्रवानाह—

केवलिश्रुतसंघधर्मदेवावर्णवादो दर्शनमोहस्य इति ॥ ६–१४ ॥ सूत्रम् ॥

केवल्यादिनिन्दादि दर्शनमोहस्याश्रवो भवतीति सूत्रसमुदायार्थः । अवयवार्थं त्वाह-'भगवता'मित्यादिना(१४५-२)भगवतां समग्रैश्वर्यादियोगिनां परमर्षीणां परमार्थगामिनां केवलिनां सर्वज्ञानां अवर्णवाद इति सम्बन्धः, एवं अर्हत्प्रोक्तं तदर्थाभिधानतः साङ्गोपाङ्गस्य श्रुतस्य आचारराजप्रसेनजिद्रूपस्य, एवं चतुर्वर्णस्य संघस्य, इह चत्वारो वर्णाः साधुसंयतिश्रावकश्राविकाख्या वर्ण्यन्त इति वर्णा इतिकृत्वा, एवं पञ्चमहाव्रतस्य धर्मस्य यतिसम्बन्धिनः क्षान्त्यादिप्रधानस्य, एवं चतुर्विधानां भवनवास्यादीनां (देवानां) अवर्णवादः–अवर्णभाषणं, किं केवलिना निवृत्तभोगसुखेन ? किं श्रुतेन प्राकृतादिदोषवता ? किं संघेन मलगेन कल्पेन ? किं धर्मेणानुपभोगस्थानास्तिरूलेन ? किं देवैर्भोजनादिक्रियारहितैरित्येवमाद्यवर्णवादो दर्शनमोहस्य कर्म्मणो मिथ्यात्वप्रधानस्याश्रवो

भवतीति व्याख्यातमेव ॥ चारित्रमोहाश्रवानाह—

कषायोदयात्तीव्रात्मपरिणामश्चारित्रमोहस्य इति ॥ ६–१५ ॥ सूत्रम् ॥

समुदायार्थः प्रकटः ॥ अवयवार्थं त्वाह–'कषाये'त्यादिना (१४५-६) कषायाः–क्रोधादयः तदुदयात् सामान्येन तीव्रो–रौद्रः आत्मपरिणामः आत्मपरिणामविशेषः चारित्रमोहस्याश्रवो भवति, विशेषतस्तु शब्दादिविषयेषु गार्द्ध्यमीर्ष्यालुत्वमनृतवादित्वं वक्रता परदाराभिप्रियता स्त्रीवेदबन्धहेतवः, ऋजुसमाचारता मन्दक्रोधकषायादिता स्वदाररतिप्रियता अनीर्ष्यालुत्वं पुरुषवेदबन्धहेतवः, तीव्रक्रोधादिना पशूनां बन्धलक्षणमुण्डनरतित्वं स्त्रीपुरुषेष्वनङ्गसाधनशीलता शीलगुणव्रतधारि [ता] पाखण्डयोषित्सु व्यभिचारकारिता तीव्रविषयानुसंगिता च नपुंसकवेदबन्धहेतवः, उत्प्रासनदीनाभिलापकन्दर्पोपहसनबहुप्रलापहासशीलता हास्यवेदनीयस्याश्रवः, स्वशोकोत्पादशोचनपरदुःखाधिकरणशोकमूकताभिनन्दिता शोकमोहनीयस्य, विचित्रपरिपीडनपरचित्तावर्जनबहुविधपीडाभावदेशाद्यौत्सुक्यप्रीतिसंजननादी रतिमोहनीयस्य, परराजप्रादुर्भावनं रतिविनाशः पापशीलता अकुशलक्रिया प्रोत्साहनासूयादयस्त्वरतिवेदनीयस्य, स्वयम्भयपरिणामपराभयोत्पादननिर्दयत्वशसनादीनि भयवेदनीयस्य, सद्धर्मप्रसक्तचतुर्वर्णशिष्टवर्गकुशलक्रियाचारप्रवणजुगुप्सापरिवादनशीलत्वादयो जुगुप्साऽऽश्रवा भवन्तीति, स्वपरकषायोदीरणा च कषायस्येत्याचार्याः॥ अधुना आयुष आश्रवा उच्यन्ते, तत्र नारकादिभेदाच्चतुर्द्धेत्याह—

बह्वारम्भपरिग्रहत्वं च नारकस्यायुष इति ॥ ६–१६ ॥ सूत्रम् ॥

एतद् व्याचष्टे–'बह्वारम्भे'त्यादिना(१४५-८) बहुः–प्रभूतो वाङ्मनःकायभेदैः आरम्भणमारम्भः, प्राणातिपातहेतुर्लाङ्गलादि-

व्यापारः तद्भावो बह्वारम्भता, एवं परिगृह्यत इति परिग्रहः-द्विपदादिः बहुश्चासौ विचित्रजातिभेदेन गवादिना परिग्रहश्चेति समासः तद्भावो बहुपरिग्रहत्वं,× चशब्दात् कुणिमाहारपञ्चेन्द्रियवधादिग्रहः, यच्चोक्तं-"चउहिं ठाणेहिं जीवा नरयं गच्छंति, तंजहा-महारंभयाए महापरिग्गहयाए कुणिमाहारेणं पंचिंदियवहेण'मित्यादि×" तदाह-नारकस्यायुष आश्रवा भवन्तीति ॥

माया तैर्यग्योनस्येति ॥ ६-१७ ॥ सूत्रम् ॥

एतद् व्याचष्टे 'माये'त्यादिना (१४५-१०) माया निकृतिः शाठ्यमिति पर्यायाः,सर्वविषयस्यैव गृह्यते, अविशेषेण लौकिकलोकोत्तरेषु व्यवहारेषु, सा तैर्यग्योनस्यायुषः कर्म्मणः आश्रवो भवति प्रवेश मार्गो जायते,तद्द्वारेण तद्भावादिति ॥ एवम्-

अल्पारम्भपरिग्रहत्वं स्वभावमार्दवमा(वा)र्जवं च मानुषस्येति ॥ ६-१८ ॥ सूत्रम् ॥

एतद् व्याचष्टे-'अल्पारम्भपरिग्रहत्व'मित्यादिना (१४५-१३) अल्पौ-स्तोकौ आरम्भपरिग्रहौ पूर्वोक्तौ तयोर्भावः अल्पारम्भपरिग्रहत्वं, असदिच्छाव्यावृत्त्या, स्वभावमार्दवार्जवमिति सहजं मार्दवम्-अकृत्रिमं प्रकृत्यैव जात्यादिमदस्थानेष्वनुद्धतत्त्वं एवं स्वभावार्जवं प्रकृत्यैवार्जवं, चशब्दात् प्रकृतिभद्रतादयो गृह्यन्ते, मानुषस्यायुषः आश्रवा भवन्तीति पूर्ववत् ।

निःशीलव्रतत्वं च सर्वेषामिति ॥ ६-१९ ॥ सूत्रं ॥

निःशीलतां व्याचष्टे-निश्शीलव्रतत्वं शीलव्रतं प्राणातिपातनिवृत्त्यादि तदभावोऽनिवृत्तत्वं च,एवं भावप्रत्ययः प्रत्येकमभिसम्बध्यते, सर्वेषामित्यनन्तरोदितानां नारकतैर्यग्योनिमानुषाणां यदायुस्तस्यायुषः आश्रवो भवति, चशब्दार्थं व्याचष्टे-'यथोक्तानि चे'ति प्रत्येकसूत्रेषु बह्वारम्भपरिग्रहादीनीति ॥ 'अत्रे'त्यादिसम्बन्धग्रन्थः, अथेति प्रश्ने देवानामिदं दैवमायुस्तस्य दैवस्यायुषः क

आश्रव इति, अत्रोच्यते, अत्र पृष्टेऽभिधीयते—

सरागसंयमसंयमासंयमाकामनिर्जराबालतपांसि दैवस्येति ॥ ६–२० ॥ सूत्रम् ॥

एतद् व्याचष्टे–'संयम'इत्यादि (१४६-७), तत्र संयमनं संयमः–विषयकषाययोरुपरमः,विरतिः सम्यग्ज्ञानपूर्विका प्राणातिपातादिनिवृत्तिः, नियमो व्रतमित्यनर्थान्तरं एकार्थता रागः संज्वलनकषायोऽर्थतः सह रागेण सरागः तस्य संयमो–व्रतं, एतच्च स्वरूपतः किंभूतमित्याह–हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो विरतिर्व्रतमिति वक्ष्यते सप्तमेऽध्याये, एवं संयमासंयमः क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिरित्येवंरूपः, अस्य पर्यायानाह–देशविरतिः–स्थूलप्राणातिपातादिनिवृत्तिः सर्वविरतेः सर्वप्राणातिपातादिनिवृत्तिरूपायाः सकाशात् देशत्वात्, अणुव्रतं महाव्रतापेक्षया इत्येवमेकोऽयमर्थः,एतं संयमासंयमं 'देशसर्वतोऽणुमहती' विरतिरित्येवं वक्ष्यन्ते–भणिष्यन्ति सप्तमेऽध्याये,'अकामनिर्जरे'त्यादि निर्जरा-कर्म्मपुद्गलशाटः न कामः–अपेक्षापूर्वकारिता यत्रानुष्ठाने साऽकामनिर्जरा, अबुद्धिपूर्वेत्यर्थः,सा पराधीनतया चारकादिवासेन धावनाद्यकरणतः प्राणातिपाताद्यकरणेन तथा अनुरोधत्वाद्दाक्षिण्यादित्यर्थः, कस्मिंश्चिद्विशेषणं कुर्वन्ति अन्यभक्ता इत्यादि,एतदाह–अकुशलनिवृत्तिः धावनाद्यकरणेन आहारादिनिरोधश्च पित्राद्यनुरोधेनेति, बालतप इति, द्वाभ्यामाकलितो बालः रागद्वेषाभ्यामिति, एतत्पर्यायानाह–बालो मूढः अतत्त्वाभिनिविष्ट इत्यनर्थान्तरमेवमेकोऽर्थः, तस्य बालस्य तपो बालतपः तच्चाग्निप्रवेशनमिति, मौढ्यादग्नौ धर्माय पतनं मरुत्प्रपातो भृग्वादिपतनं जलप्रवेशो जले निमज्जनं आदिशब्दादुद्बहनगृध्रभक्षणादिग्रहः तदेवमुक्तनीत्या सरागसंयमः संयमासंयमादीनि चोक्तलक्षणानि, चः समुच्चये, दैवस्यायुषः प्रागुनिरूपितशब्दार्थस्य आश्रवा भवन्तीति समानं पूर्वेण।

'अत्राहे'त्यादि सम्बन्धग्रन्थः, अत्र आश्रवाधिकार एव पर आह—अथ नाम्नः कर्मणः क आश्रव इति, अत्रोच्यते समाधिः—

योगवक्रता विसंवादनं चाशुभस्य नाम्न इति ॥ ६–२१ ॥ सूत्रम् ॥

एतद् व्याचष्टे—'काये'त्यादिना (१४६-१७) कायवाङ्मनोयोगानां प्रागुक्तानां वक्रता मायाव्यवहारः तथाऽज्ञानादिक्रिया विसंवादनं च तत्तत्प्रतिज्ञाताकरणं, चशब्द उभयविशेषसमुच्चयार्थः, अधार्मिकदर्शनसंभ्रमादि च, किमित्याह—अशुभस्य नाम्नो नरकगत्यादेश्चतुस्त्रिंशद्भेदस्य कर्मण आश्रवो भवति उपादानद्वारमित्यर्थः॥

विपरीतं शुभस्येति ॥ ६–२२ ॥ सूत्रम् ॥

एतद् व्याचष्टे—'एतदुभय'मित्यादिना (१४७ २) एतदुभयमनन्तरसूत्रोक्तं विपरीतमिति कायवाङ्मनोयोगावक्रता अविसंवादनं चेत्येव धार्मिकदर्शनसम्भ्रमादि च, किमित्याह—शुभस्य नाम्नो मनुष्यगत्यादेः सप्तत्रिंशद्भेदस्याश्रवो भवतीति समानं पूर्वेण। किंचान्यदित्यनेन सम्बन्धमाह—

दर्शनविशुद्धिर्विनयसंपन्नता शीलव्रतेष्वनतिचारोऽभीक्ष्णं ज्ञानोपयोगसंवेगौ शक्तितस्त्यागतपसी संघसाधुसमाधिवैयावृत्त्यकरणमर्हदाचार्यबहुश्रुतप्रवचनभक्तिरावश्यकापरिहाणिर्मार्गप्रभावना प्रवचनवत्सलत्वमिति तीर्थकृत्त्वस्येति ॥ ६-२३ ॥ सूत्रम् ॥

सामान्येन शुभनामकर्म्माश्रवाभिधानेऽपि अचिन्त्यानुपमशक्तिप्रभावस्य तीर्थकृतस्तन्नामकर्म्माश्रवाभिधानमिति सूत्रसमुदायार्थः। अवयवार्थं त्वाह—'परमप्रकृष्टा दर्शनविशुद्धि'रित्यादिना (१४७ ९) परमेत्यतिशयेन प्रकृष्टा पर्यन्तवर्त्तिनी ग्रन्थि-

भेदाविशेषेऽपि तथाभव्यत्वलक्षणोत्तमस्वभावभेदात्, कैपेत्याह–दर्शनविशुद्धिरिति, सम्यग्दर्शननिर्मलता शङ्काद्यपायाभावेन, सम्यग्दर्शनस्थिरतेत्यर्थः, तीर्थंकरनाम्नः आश्रवो भवतीति सम्बन्धः, तथा विनयसम्पन्नता चेति विनीयतेऽनेनाष्टप्रकारं कर्मेति विनयः—ज्ञानदर्शनचारित्रोपचारभेदाच्चतुर्द्धा, तत्र ज्ञानविनयः कालबहुमानोपधानादि, दर्शनविनयो निःशङ्कनिःकाङ्क्षादिभेदः, चरणविनयः समितिगुप्तिप्रधानः, उपचारविनयोऽभ्युत्थानासनप्रदानाञ्जलिप्रग्रहादिभेदः, एतत्संपन्नतेति, तथाऽतिगाम्भीर्यादेतत्सम्भृततेत्यर्थः, चः समुच्चये, तथा शीलव्रतेष्वात्यन्तिको भृशमप्रमादोऽनतिचार इति, इह शीलमुत्तरगुणाः पिण्डविशुद्ध्यादयः, मुमुक्षोः समाधिहेतुत्वात्, व्रतग्रहणात् पञ्च महाव्रतानि रात्रिभोजनविरतिपर्यन्तान्युच्यन्ते, शीलानि च व्रतानि च शीलव्रतानि तेष्विति–तद्विषयः आत्यन्तिकोऽत्यन्तभवः असावपि भृशम्–अत्यर्थं, क एवंभूत इत्याह–अप्रमादः, कषायादिनिद्राविकथादिलक्षणः प्रमादः, अयमेवानतिचारः स्वकीयागमानतिक्रम इत्यर्थः, अभीक्ष्णं मुहुर्मुहुः प्रतिक्षणं ज्ञानं द्वादशाङ्गं प्रवचनं प्रदीपाङ्कुशप्रासादप्लवस्थानीयं, तत्रोपयोगः प्रणिधानं सूत्रार्थोभयविषयः आत्मनो व्यापारस्तत्परिणामितेति, संवेगश्चेति अभीक्ष्णमिति प्रवर्त्तते, संवेजनं संवेगः–संसारभीत्या तद्विचलनपरिणामः,चः समुच्चये, तथा यथाशक्ति त्यागेति इह शक्तिः–सामर्थ्यं यथाऽनुरूपा शक्तिर्यथाशक्ति तत्पूर्वकस्य त्यागो न्यायार्जितस्य दानं पात्रे यो निसर्गः तथा तपश्चेति कर्मणः तापनाच्चोपणात्तप इति, तद्द्विधा–बाह्याभ्यन्तरभेदात्, बाह्यमनशनादि इतरत् प्रायश्चित्तादि, एतद्द्वयं यथाशक्तीत्यभिसम्बध्यते, तथा सङ्घस्य साधूनां च समाधिवैयावृत्त्यकरणमिति, तत्र संघो–ज्ञानाद्याधारः साध्वादिसमूहस्तस्य समाधिः–स्वस्थता एतत्करणं साधवः–प्रव्रजिता एव, तेषां च किमित्याह–वैयावृत्त्यकरणं व्यावृत्तिः–तत्कार्यानुष्ठानप्रवणता तस्या भावो वैयावृत्त्यं,

एतत्करणं च, एतद्यथासंख्यमेव, प्रायः श्रावकादेर्वैयावृत्त्याकरणात्, समाधिकरणं तु सर्वविषयमेव तथाऽधिकरणाद्यकरणेन, एवं अर्हत्स्वाचार्येषु बहुश्रुतेषु प्रवचने च परमभावविशुद्धियुक्ता भक्तिरिति, इहार्हन्तः–तीर्थकराःतेषु अर्हत्सु ज्ञानादिपंचविधाचाराचरणादाचार्यास्तेषु, बहु श्रुतं येषां ते बहुश्रुताः–प्रकृष्टश्रुतधराः उपाध्याया इत्यर्थः तेषु, प्रोच्यन्तेऽनेन जीवादयः पदार्था इति प्रवचनम्–आगमस्तस्मिँश्च, किमित्याह–परमः–प्रकृष्टो भावः–चित्तपरिणामः तस्य विशुद्धिः–औचित्यप्रवृत्त्या निर्म्मलता तद्युक्ता भक्तिः, औचित्येन बाह्यसेवा इत्यर्थः, आयतनगमनधर्मश्रवणसिद्धान्तलेखनादिरूपा, तथा सामायिकादीनामावश्यकानां भावतोऽनुष्ठानस्यापरिहाणिरिति, इहारक्तद्विष्टः समः तस्यायः–प्राप्तिः स प्रयोजनमस्येति सामायिकं–सकलसावद्ययोगविरतिलक्षणं प्रतिक्रमणादि तदादिर्येषां आवश्यकानां तानि सामायिकादीनि तेषां सामायिकादीनामावश्यकानाम्–अहोरात्राभ्यन्तरे कर्त्तव्यान्यावश्यकानि–अवश्यंतयाऽनुष्ठेयानि, तानि च सप्तदशविधानसंयमविषयव्यापाररूपत्वादनेकप्रकाराणि इच्छामिथ्यातथाऽऽकारादीनि तेषां भावतोऽनुष्ठानस्यापरिहाणिः, भावत इति तदुपयोगानन्यत्वकथनं, अनुपयुक्तस्य हि सर्वक्रियानुष्ठानं द्रव्यमात्रत्वात् शुभबन्धनिर्जराफलशून्यं प्रवचने अवघुष्यते तत् सद्भावावहितचेतसो यदनुष्ठानकरणं तस्यापरिहाणिः–यथाविहितकालसेवनमन्यूनातिरिक्ततयेत्येवमेषा आवश्यकापरिहाणिस्तीर्थकरनामकर्म्मण आश्रवो भवति,' 'सम्यग्दर्शने'त्यादि, (१४७-१४) तत्त्वार्थश्रद्धानलक्षणं सम्यग्दर्शनं सकलगुणाधारः तदादिर्यस्यासौ तदादिः तस्य सम्यग्दर्शनादेर्मोक्षमार्गस्य सकलकर्म्मक्षयोत्तरकालमात्मनः स्वात्मन्यवस्थानं मोक्षस्तस्य मार्गः–पन्थाः प्राप्त्युपायः सम्यग्दर्शनज्ञानक्रियालक्षणस्तस्य प्रभावना प्रख्यापनं प्रकाशनं, केन प्रकारेणेत्याह–निहत्य मानं करणोपदेशाभ्यामिति, मानोऽहङ्कारः, स च जात्यादिस्थानोद्भूतः श्रेयोवि-

घातकारी, यथाऽऽह—'श्रुतशीलविनयसंदूषणस्य धर्मार्थकामविघ्नस्य। मानस्य कोऽवकाशं मुहूर्त्तमपि पण्डितो दद्यात्?॥१॥(प्रश.२७) तमेवंविधं मानं न्यत्कृत्य करणं स्वयमनुष्ठानं श्रद्धावतः कालविनयबहुमानाद्यासेवनं मूलोत्तरगुणप्रपञ्चानुष्ठानं चेति, उपदेशः— अन्यस्मै प्रतिपादनं बहुविधविद्वज्जनसमितिषु स्याद्वादन्यायावष्टम्भेन प्रसभमपहृत्य प्रतिभामेकान्तवादिनामर्हत्प्रणीतस्यानवद्यस्य सर्वतोभद्रस्य मार्गस्यैकान्तिकात्यन्तिकनिरतिशयाबाधकल्याणफलस्योच्चैः प्रकाशनं प्रभावना, सा खल्वेषा तीर्थकरनामकर्मण आश्रवः। 'अर्हच्छासने'त्यादि (१४७-१५) वन्दननमस्कारपूजासत्कारार्हा अर्हन्तस्तेषां शासनमुपदेश आगमाख्यस्तदनुष्ठायिनामागमविहितक्रियानुष्ठायिनां श्रुतधराणामित्यनेन स्वयमधिगतज्ञानानामिति प्रतिपादयतीति, परप्रत्ययानुष्ठायित्वं निषेधयति, अधीतप्रवचनार्थो हि विदितोत्सर्गापवादप्रपञ्चः स्वातन्त्र्यात् क्रियाप्रवृत्तौ न व्याहन्यते, बालः—क्षुल्लकः कारणात् प्रव्रजितो जघन्यादिभेदः, जातिश्रुतपर्यायस्थविरास्त्रयः षष्टिवर्षः समवायाङ्गधरो व्रतारोपणोत्तरकालं विंशतिवर्षश्च यथाक्रमं वृद्धः, तपो बाह्यमनशनादि आन्तरं च प्रायश्चित्तादिस्तदस्यास्तीति तपस्वी विचित्रं वा तपः कनकरत्नावल्यादिभेदं वक्ष्यमाणं तद्योगात्तपस्वी, शिक्षत इति शिक्षः शिक्ष एव शैक्षः, स्वार्थे प्राज्ञादिवत्, शिक्षणशीलो वा छात्रादिपाठाण्णः प्रत्ययः शैक्षः, सूत्राधिगमेऽभियुक्तो, यथाविहितकालमध्येतव्ये श्रोतव्ये वाऽभ्युद्यत इत्यर्थः, ग्लानो मन्दपाटवः सव्याधिकत्वाद्भक्तपानाद्यन्वेषणे न प्रत्यलः, आदिग्रहणात् कुलगणममनोज्ञपरिग्रहः, चशब्दः समुच्चये, श्रुतधराणां बालादीनां च संग्रहादिकारित्वं, तत्र संग्रहः परिग्रहणमुपसंपदालोचनापूर्वकं संयमानुष्ठानश्रुताध्ययनचोदनार्थं, उपग्रहो वस्त्रपात्रोत्पादनबहुगुणक्षेत्राक्रान्तिलक्षणः, अनुग्रहो भक्तपानयथायोग्यवसतिप्रदानादिलक्षणः एतत् करोति तच्छीलश्च तद्भावः सङ्ग्रहोपग्रहानुकारितत्त्वं तत्परिणामितेतियावत्, प्रवक्तीति प्रवचनं अत

एव श्रुतधरादयो भगवज्ज्ञापितार्थप्रतिपादनपरिणामाः प्रवचनशब्दवाच्यास्तेषु वात्सल्यमुक्तं सङ्ग्रहोपग्रहानुग्रहलक्षणं, इतिशब्दः आद्यर्थः, विंशतेः कारणानां सूत्रकारेण किंचित् सूत्रे किंचिद्भाष्ये किंचिदादिग्रहणात् सिद्धपूजाक्षणलवध्यानभावनाख्यं अनुपात्तमुपयुज्य च वक्ता व्याख्येयम् , इदानीं उपसंहरति–'एते गुणा'इत्यादिना (१४७-१७) एते यथोदिता गुणा दर्शनविशुद्ध्यादयः आत्मनः परिणामाः समुदिताः प्रत्येकं च तीर्थंकरनामकर्मण आश्रवा भवन्ति, न पुनर्नियमोऽस्ति समस्ता एव व्यस्ता एव वा, विकल्पार्थो वाशब्दः, इतिशब्दः तीर्थंकरनामकर्म्माश्रवेयत्ताप्रतिपादनार्थं इति ॥ नामानन्तरनिर्देशभाजो गोत्रस्योपादाने किं निबन्धनमिति, तद्द्विधा गोत्रं–नीचैरुच्चैश्च, तत्र तावन्नीचैर्गोत्राश्रवप्रसिद्ध्यर्थमिदमाह—

परात्मनिन्दाप्रशंसे सदसद्गुणाच्छादनोद्भावने च नीचैर्गोत्रस्येति ॥ ६–२४ ॥ सूत्रम् ॥

एतदेव विवृण्वन्नाह–'परनिन्दे'त्यादि भाष्यम् (१४८-३) परश्चात्मा च परात्मानौ, निन्दा च प्रशंसा च निन्दाप्रशंसे, यथाक्रममभिसम्बन्धः परात्मनिन्दाप्रशंसे,सन्तोऽसन्तश्च सदसन्तः विद्यमानाश्चाविद्यमानाः ते च ते गुणाश्च सदसद्गुणाः, आच्छादनं चोद्भावना चाच्छादनोद्भावने, अत्रापि क्रमेणाभिसम्बन्धः, सदसद्गुणाच्छादनोद्भावने,चशब्दात् परात्मनिन्दाप्रशंसे समुच्चीयेते,नीचैर्गोत्रस्य कर्मण आश्रवा भवन्ति तत्र स्वात्मव्यतिरिक्तः परः तस्य गुणवतोऽपि गुणाच्छादनद्वारेण निन्दा–अपवदनमभूतानां भूतानां च दोषाणामुद्भावनं, स्वात्मनः प्रशंसनं स्तुतिर्गुणोद्भावनम्–अभूतानां भूतानां च गुणानामात्मनैव प्रख्यापनं, सन्तो गुणा विद्यमानास्तेषां छादनं संवरणं स्थगनं द्वेषात् पृष्टोऽपृष्टो वा नाचष्टे गुणान् सतोऽपि, प्रस्तुतत्वात् परसम्बन्धिगुणगणाच्छादनमेव सम्बन्ध्यं,आत्माऽभिसम्बन्धेनासतामभूतानामेव गुणानामुद्भावनं करोति पृष्टोऽपृष्टो वा प्रख्यापयतीतियावत् , एतदेव

च स्फुटतरं विभजते—'आत्मपरोभयस्थ'मिति, आत्मस्थमसद्गुणोद्भावनं परस्थं सद्गुणच्छादनं, आत्मपरावेवोभयं तत्र स्थितं वर्त्तमानं, नीचैरिति नीचं जघन्यं हीनं, गोत्रमिति गूयतेऽभिधीयते आहूयते चानेनेति गोत्रं, यत् कर्म्माशुभं तन्निमित्तीकृत्याभिधा प्रवर्त्तते चण्डालश्वपचमत्स्यबन्धादि तन्नीचैर्गोत्रं कर्म्म, अभिसम्बन्धाच्चशब्दः कुत्साहेतुष्वेव प्रयुज्यते, एवमेते परनिन्दादयो जातिकुलरूपबलश्रुताज्ञैश्वर्यतपोमदपरावज्ञानोत्प्रासनकुत्सनादयश्च नीचैर्गोत्रस्याश्रवा भवन्तीति॥ इदानीमुच्चैर्गोत्राश्रवाभिधित्सयेदमाह—

**तद्विपर्ययो नीचैर्वृत्त्यनुत्सेकौ चोत्तरस्येति ॥ ६–२५ ॥ सूत्रम् ॥**

तदिति सर्वनाम पूर्वप्रकृतापेक्षं, प्राक् प्रकृता नीचैर्गोत्राश्रवाः तेषां विपर्ययो यथाऽभिहितवैपरीत्यं परगुणप्रशंसा आत्मनिन्दा च सद्गुणप्रकाशनमसद्गुणच्छादनमप्यात्मोत्कर्षपरिहारार्थं तथा नीचैर्वृत्तिः नीचैर्वर्त्तनं विनयप्रवणवाक्कायचित्तता, उत्सेको गर्वः श्रुतजात्यादिजनितः नोत्सेकोऽनुत्सेको विजितगर्वता एतौ नीचैर्वृत्त्यनुत्सेकौ, चशब्दात्तद्विपर्ययश्च, उत्तरस्येति सूत्रक्रमप्रामाण्यादुच्चैर्गोत्रस्याह, इतिशब्दः पदार्थवाचकः, नीचैर्गोत्रमुक्तलक्षणं तस्याश्रवविपर्ययाः परगुणप्रशंसादयः परं चाश्रवद्वयं नीचैर्वृत्तिरनुत्सेकश्चोच्चैर्गोत्रस्याश्रवा भवन्ति, उच्चैरित्युच्चमुत्कृष्टमिक्ष्वाकुकरि(कुरु)भोजराजन्यादीति॥ उक्तं गोत्रम्, आश्रवाधिकार एवायमनुप्रवृत्तः, तत्र समस्तकर्म्मप्रत्यवसाननिर्दिष्टस्यानुग्राहकसुखव्यवच्छेदकृतोऽन्तरायस्य क आश्रव इति ?, उच्यते—

**विघ्नकरणमन्तरायस्य ॥ ६–२६ ॥ सूत्रम् ॥**

विघ्नो विघातः प्रतिषेधः सव्याजो निर्व्याजश्च तस्य करणम्—अनुष्ठानं तत्परिणामयोगिनोऽन्तरायाभिधानस्य कर्म्मण आश्रवो भवति, एतदेव भाष्येण स्पष्टयति—'दानादीना'मित्यादि(१४८-९) दानमादिर्येषां ते दानादयो—दानलाभभोगोपभोगवीर्याख्याः,

तत्र दानं विशिष्टपरिणामपूर्वकं स्वस्य परस्वत्वापादनं, तदेव गृह्यमाणं प्रतिगृहीत्रा देयं लाभ उच्यते, भोगो मनोहारिशब्दादि-विषयानुभवनं, उपभोगः–अन्नपानवसनाद्यासेवनं, वीर्यम्–आत्मपरिणामो विशिष्टचेष्टालक्षणः, एषां दानादीनां विघ्नकरणं येन येनोपायेन न दत्ते तं तमुपायमापादयति दातुः, एवं येन येनोपायेन न लभते लिप्सुः तथा भोगोपभोगानुभवनसमर्थो येन येनो-पायेन न भवति यथा चास्य वीर्यमुत्साहः पराक्रमो न भवति तथा तथाऽनुतिष्ठतोऽन्तरायस्य कर्म्मणः आश्रवो भवति, इति-शब्दो विघ्नकरणविशेषप्रदर्शनार्थः, अधुना सकलाश्रवप्रकरणपरामर्शद्वारेणोपसंहरत्यध्यायार्थम्–'एत'इत्यादिना, एते तत्प्रदोष-निह्नवादयः सांपरायिकस्य संसारभ्रमणकारणस्याष्टविधस्य ज्ञानावरणादेरन्तरायपर्यवसानस्य कर्म्मणः पृथक् पृथक्–विवेकेन अपुनरुक्ततया आश्रवविशेषा–सामान्याश्रवापेक्षया विशेषा भवन्ति इतिशब्दोऽत्राभिधित्सितसंक्षिप्तार्थः परिसमाप्ताविति ॥

इत्याचार्यश्रीहरिभद्राब्धायां (त्रयोविंशतिसमसूत्रेविनयसंपेत्यंतं) श्रीयशोभद्राचार्यनिर्यूढायां

॥ भाष्यानुसारिण्यां तत्त्वार्थटीकायां षष्ठोऽध्यायः समाप्तः ॥



अत्रालोकं भवतेत्यादिना सम्बन्धाति भाष्यकारः, सूत्रेऽप्युक्तं षष्ठाध्याये सद्वेदनीयकर्म्माश्रवेषु 'भूतव्रत्यनुकम्पे'ति, सकलगृहोपलक्षणं, अथवा यावत् संबंधोपयोगि तावत एवोपादानं, व्रतीति श्रूयते मत्वर्थीयप्रत्ययान्तः, तत्र किं व्रतं को वा व्रतीति प्रश्नेनोपक्रमते, ननु व्रतप्रश्न एव न्याय्यः, तत्प्रस्तावात्, तत्परिज्ञानात्तु तत्संबंधे व्रती सुज्ञान एवेति, उच्यते, विशिष्टसम्बन्धख्यापनार्थं व्रतिग्रहणं, वक्ष्यत उपरिष्टान्निःशल्यो व्रती (७-१३) ति, प्राणातिपातादिविरतयो मायादिशल्यविविक्ता व्रतव्यपदेशमश्नुवते, तथाविधव्रतसम्बन्धाच्च व्रतीति, अत्रोच्यत इति व्रतस्वरूपनिर्णयार्थमाह—

हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो विरतिर्व्रतम् ॥ ७–१ ॥ सूत्रं ॥

व्रतिस्वरूपं नेदमेव भाष्यमनूद्योपरिष्टात् प्रतिपादयिष्यति 'गृह्णीमस्तावद्व्रतान्यथ व्रती क' इत्यत्रेति, हिंसादयः कृतद्वन्द्वाः पञ्चम्यन्ताः, पञ्चमी च जुगुप्साविरामप्रमादार्थानामुपसंख्यानादपादानलक्षणा, तां च प्रत्येकं हिंसादय इत्यादिना भाष्येण दर्शयति, हिंसादयश्च वक्ष्यमाणाः, तत्र कषायादिप्रमादपरिणतस्यात्मनः कर्त्तुः कायादिकरणव्यापाराद् द्रव्यभावभेदेन प्राणव्यपरोपणं हिंसा, प्रागभिहितसामान्यलक्षणयोगे सति सद्भूतनिह्नवासद्भूतोद्भावनविपरीतकटुकसावद्यादि मृषावचनं, परपरिगृहीतस्य स्वीकरणमाक्रान्त्या चौर्येण शास्त्रप्रतिषिद्धस्य वा स्तेयं, पूर्वलक्षणयोगान् मोहोदये सति चेतनाचेतनयोरासेवनमब्रह्म, सचित्ताचित्तमिश्रेषु द्रव्यादिषु शास्त्राननुमतेषु ममत्वं परिग्रहः, चशब्दः समुच्चयार्थः, एभ्यो हिंसादिभ्यः कायवाङ्मनोभिर्विरतिर्व्रतं, विरतिर्निवृत्तिः, ननु चाश्रितत्वात् कायादित्रयमनुपादेयं भाष्येण, नायं दोषः, आत्मना हि विरतिः साध्या, सा च करणमवश्यंतयाऽपेक्षते, तच्च कायाद्येव योग्यम्, अथवा प्रमत्तयोगादित्यत्र योगग्रहणं लक्षणसूत्रे सर्वव्रतविशेषणार्थं यत् तच्चेतसि सन्निवेश्य विवृतं

भाष्यकारेण, आश्रवाध्यायवक्तव्यशेषमेव चाधिकृत्य सप्तमाध्यायमाह, व्रतशब्दः शिष्टसमाचारान्निवृत्तौ प्रवृत्तौ च प्रयुज्यते लोके, निवृत्तौ तावद्धिंसातो विरतिर्निवृत्तिः व्रतं, यथा वृषलान्नं व्रतयति–परिहरति, वृषलान्नान्निवर्त्तत इति, ज्ञात्वा प्राणिनः प्राणातिपाताद्निवर्त्तन्ते केवलम्, अहिंसादिलक्षणं तु क्रियाकलापं नानुतिष्ठन्तीति तदनुष्ठानप्रवृत्त्यर्थश्च व्रतशब्दः, पयो व्रतयतीति यथा, पयोऽभ्यवहार एव प्रवर्त्तते, नान्यत्र, इत्येवं हिंसादिभ्यो निवृत्तः शास्त्रविहितक्रियानुष्ठान एव प्रवर्त्तते, अतो निवृत्तिप्रवृत्तिक्रियासाध्यं कर्म्मक्षपणमिति प्रतिपादयति, निवृत्तिप्रवृत्ती च शास्त्रचोदिते, तदनुष्ठानान्मोक्षावाप्तिरिति, ननु च भाष्यकारो निवृत्तिवचनमेव व्याचष्टे व्रतशब्दं, न प्रवृत्तिवचनमपीति तदेतत् कथं?, अयमभिप्रायो भाष्यकृतः–अन्यतरोपादानेऽन्यतरप्रतीतिः सम्बन्धिशब्दत्वाद्भवत्येव, पितापुत्रादिवत्, यत उक्तं–"ज्ञानक्रियाभ्यां मोक्ष"इति, प्राधान्यात्तु निवृत्तिरेव साक्षात् प्राणातिपातादिभ्यो दर्शिता, तत्पूर्विका च प्रवृत्तिर्गम्यमाना, अन्यथा तु निवृत्तिर्निष्फलैव स्यादिति । विरतिशब्दस्यार्थं निरूपयति–'विरतिर्नामे'त्यादिना (१४९-५) विरमणं विरतिः, नामशब्दो वाक्यालङ्कारार्थः, हिंसनं हिंसा–प्राणवियोजनं, प्राणाश्चेन्द्रियादयः तत्सम्बन्धात् प्राणिनः–एकद्वित्रिचतुःपञ्चेन्द्रियाख्याः, तान्विकज्ञानानुसारात् अभ्युपेत्येति श्रद्धाय प्रतिपद्य भावतोऽकरणं विरतिज्ञानश्रद्धानपूर्वकं चारित्रमितियावत्, तदेव चाकरणं विवृणोति पर्यायैः–अकरणं निवृत्तिरुपरमो विरतिरित्यनर्थान्तरमिति, चरणस्यैते पर्यायाः, तत्राकरणमिति निवृत्तिप्रवृत्तिक्रियालक्षणं चारित्रं मनोवाक्कायकृतकारितानुमतिभेदोत्पन्नसप्तचत्वारिंशच्छतविकल्पभावनया परिहारानुष्ठाने, एवं निवृत्त्यादयोऽपि भावनीयाः, पर्यायशब्दैश्च व्याख्यानमसम्मोहार्थं प्रदेशान्तरेष्विति ॥ तदेतदविशेषचोदितं पञ्चतयाविषयं व्रताभिधानं विरत्याश्रवद्वयविवक्षावशेनासकलकृत्स्नभावादुभयथा वेदितव्यमित्याह—

देशसर्वतोऽणुमहती ॥ ७-२ ॥ सूत्रम् ॥

देशश्च सर्वं च देशसर्वे ताभ्यां देशसर्वतः, विरामार्थापेक्षा पञ्चमी, अणु च महती च अणुमहती, कथं पुनर्विरतिसामान्यमेकं सद् द्विधा भिद्यते ?, विवक्षावशेन देशसर्वाभिधानाद्वा एकत्वादिविवक्षायामेकवचनादिवत्, हिंसादिविरतिव्रतप्रस्तावाच्च यथाक्रममभिसम्बन्धः, देशसर्वग्रहणं विरत्या सहाभिसम्बध्यते अणुमहद्ग्रहणं व्रतेन, देशतो विरतिरणुव्रतं, सर्वतो विरतिर्महाव्रतं, एनमेव सूत्रार्थं भाष्येण स्पष्टयति 'एभ्य' इत्यादिना, 'एभ्य' इति (१४९-८) प्रस्तुतानि परामृश्य हिंसादीनि सर्वतो व्यवच्छिन्दन्नाह-एकदेशविरतिरणुव्रतमिति सकलप्राणिगणविषया हिंसा, तस्याश्च विरतिः न सर्वस्याः, किन्तु देशत इति, एकदेशग्रहणेनैव स्पष्टयति-न सर्वस्मात् प्राणव्यपरोपणाद् विरतिः, किन्त्वेकदेशात्, स्थूलादित्यर्थः, स्थूलसूक्ष्मप्राणिभेदात् सङ्कल्पजारम्भजभेदाद्वा स्थूलसूक्ष्मत्वं, सा चैकदेशाद्विरतिरणुव्रतं स्तोकत्वादुच्यते, स्तोकमल्पमण्विति पर्यायाः, स्वल्पविषयमणुव्रतं, स्थूलात् प्राणातिपाताद् विरमामि, स्थूलान् मृषावादादिति, कूटसाक्ष्यदानादिः स्थूलः, नर्मादिप्रयोगतः सूक्ष्मः, स्थूलादत्तादानादिति, हठहरणादि स्थूलं यत्रैहिकामुष्मिकाश्चौर्यदोषा गृहिणां, सूक्ष्मं परिहासतः, परकीयपरिलघुतृणकाष्ठादिग्रहणं वा, स्थूलान्मैथुनाद् विरमामीति, स्थूलत्वमेकदेशजनितमत्र प्रतीयते, स्वदारसन्तोषः परदारनिवृत्तिर्वा, स्वदारसन्तुष्टः शेषयोषितो मातृवदनुपश्यति, परदाराभिगमात् निवृत्तः परपरिगृहीतयोषितः परिहरति, अपरिगृहीतवेश्यामभिगच्छति, तथेच्छापरिमाणादन्यतो विरमामीति, केचित् महाव्रतानुयानात् स्वल्पव्रतत्वाच्चाणुव्रतमिति व्याचक्षते ॥ सम्प्रति महाव्रतव्याचिख्यासया सर्वतो विरतिर्महाव्रतमिति आह-सर्वत इति, सर्वस्मात्-सूक्ष्मात् स्थूलाच्च प्राणव्यपरोपणाद् विरमामीति, एवं शेषाण्यपि सर्वतो वाच्यानि, महाविषयत्वान्महाव्र-

तमित्येतानि पञ्च महाव्रतानि भवन्ति, सम्यक्त्वयुक्तानि मूलगुणवाच्यानि, ननु च यथैव मृषादिनिवृत्तिरहिंसाव्रतपालनार्थत्वात् मूलगुणा एवं निशीथभोजनविरतिरपि मूलगुणः स्यात्, उच्यते, अहिंसाव्रतपालनार्थत्वादिति समितिभिरनैकान्तः, अपिच–महाव्रतधारिण एव तन्मूलगुणः, तद्विरहितस्य यस्मात् मूलगुणा एव अपरिपूर्णाः स्युरतो मूलगुणग्रहणे तद्ग्रहणमर्थाक्षिप्तं, यथा च सर्वव्रतोपकारिरात्र्यभोजनं तथोपवासादि, अतस्तन्मूलगुणो महाव्रतिनः शेषमुत्तरगुणः, अणुव्रतधारिणस्तूत्तरगुणो निशाभोजनविरतिराहारादित्यागादुपवासवत् तप एव तदिति प्रतीतं,कः पुनर्दोषः रात्रिभोजन इति चेत्,एवं मन्यते–उद्गमादिदोषरहितस्य वासरपरिगृहीतस्याभ्यवहारेणान्धसो नक्तं न किल दोष इति, एतदयुक्तं, कालातिक्रान्तस्य प्रतिषिद्धत्वात्, गृहीतआनीतालोचितक्षणविश्रान्तिसमनन्तरमेव च भुजेरभ्यनुज्ञानात्, निशाहिण्डने चेर्यापथविशुद्धेरसंभवात्, दायकगमनागमनसस्नेहपाणिभाजनाद्यदर्शनात्, आलोकितपानभोजनासम्भवात्, ज्योत्स्नामणिप्रदीपप्रकाशसाध्यमालोकनमिति चेत्तदप्यसद्, अग्निशस्त्रारम्भनिषेधात् रत्नपरिग्रहाभावात् ज्योत्स्नायाः कादाचित्कत्वात् आगमे निषिद्धत्वात् हिंसादिवदनासेवनीयमेव विभावरीभक्तमिति ॥ उक्तं व्रतं सविधानमणु महच्च, तत्र महाव्रतान्यधिकृत्य भावनासूत्रम्–

तत्स्थैर्यार्थं भावनाः पञ्च ॥ ७–३ ॥ सूत्रम् ॥

अणुव्रतस्य चोपरि बन्धवधादिकातिचारपरिहाररूपा वक्ष्यमाणाः अपायावद्यदर्शनादिकाश्च सामान्यरूपाः, महाव्रतं चोपभोगाभिलाषिभिर्धृतिसंहननपरिहाण्या प्रमादबहुलैर्दूरक्षमतस्तत्प्रतिपातपरिहारार्थं भाव्यन्त इति भावनाः, तदित्यनेन पञ्चविधस्येति सर्वनाम्नाऽनन्तरत्वात् महाव्रतमिति सम्बध्यते,भाष्यकारस्तु यद्यपि सामान्येन व्रतस्येति विवृणोति तथापि तच्छब्दोपादानसामर्थ्या-

न्महाव्रताभिसम्बन्धः, अन्ये तु व्याचक्षते–द्वयोरपि व्रतयोर्न्याय्यः सम्बन्धः, सम्भवति हि श्रावकस्यापि कस्यचिद्यथोक्तं भावनाजालमेवं,एवं तस्य व्याप्तिः स्यात्,व्यापिन्यश्च व्रतिनो भावना इष्यन्ते, तस्य पञ्चविधस्येति पञ्चप्रकारस्य प्राणातिपातविरत्यादेः स्थैर्यार्थं दाढर्यापादनार्थं स्थिरत्वं प्रयोजनमुद्दिश्य अभ्यस्यन्ते, अनभ्यस्यमानाभिर्भावनाभिर्मलीमसीभवन्ति अनभ्यस्यमानविद्यावत् महाव्रतानीति, एकैकस्येति व्रतस्य, सामानाधिकरण्येन षष्ठी, न समुदितानां पञ्चानामपीति, ननु च पञ्च पञ्चेति वीप्सा विवक्षिता अत एकैकस्येति लप्स्यते एव, अन्यथा वीप्सानर्थक्यं स्यादिति, उच्यते, सामान्यविशेषाभ्यां व्याख्यातृभिः प्रतिपद्यतेऽर्थः, पञ्चविधस्य व्रतस्येति सामान्येनोपक्रम्य पुनर्विशेषेणैकैकस्येत्याह, समुदाये मा भूदिति, पञ्चेति वीप्सायां द्विर्वचनं, अपरे तु सूत्रमधीयते–तत्स्थैर्यार्थं भावनाः पञ्चपञ्चश इति । ते चैवमिदधति–संख्यावाचिनः प्रातिपदिकाद् वीप्सायां द्योत्यायां 'कारकात् शस्प्रत्ययोऽन्यतरस्या'मिति द्वौ द्वौ ददाति द्विशो ददातीति वाक्यं वृत्तिश्च, तदेतदनुपपन्नं, यतः शस्प्रत्ययान्तेन व्रतानि भावना वा सम्बध्येरन् ?, यदि व्रतानि ततः षष्ठ्यन्तेन सम्बन्ध्यानि पञ्चानामिति, ततः कारकत्वा(भावा)त् षष्ठ्याः शस्प्रत्ययो न लभ्यते, अथ भावनाभिः सम्बन्धस्ततः पञ्च पञ्च भावना भवन्तीति पञ्चश इति वक्तव्यं, द्वितीयं पंचग्रहणं न कर्त्तव्यं, तत्स्थैर्यार्थं भावनाः पञ्चश इति पठितव्यं, एवमुभयथापि न घटते शस्प्रत्ययः, अतस्तत्स्थैर्यार्थं भावनाः पञ्च पञ्चेति न्याय्यं सूत्रं, 'तद्यथे'त्यनेन प्रस्तुतभावनोपन्यासः, अहिंसायास्तावदिति, अहिंसा–प्राणातिपातविरतिः, तावच्छब्दः क्रमावद्योतकः, अस्य प्रथममुच्यते, पश्चात् मृषावादादिविरतेरभिधास्यते, ईरणमीर्या गमनं तत्र समितिः–सङ्गतिः श्रुतरूपेणात्मनः परिणामः तदुपयोगिता–पुरस्ताद्युगमात्रया दृष्ट्या स्थावरजङ्गमानि भूतानि परिवर्जयन्नप्रमत्त इत्यादिविधिरीर्यासमितिः १। मनसो

गुप्तिः मनोगुप्तिः—मनसो रक्षणमार्त्तरौद्रध्यानाप्रचारः धर्मध्याने चोपयोगे मनोगुप्तिः २। एषणा गवेषणग्रहणग्रासभेदात्त्रिधा, तत्रासमितस्य षण्णामपि कायानामुपघातः स्याद् अतस्तत्संरक्षणार्थमेषणासमितिः समस्तेन्द्रियोपयोगलक्षणा ३। आदानं—ग्रहणं निक्षेपणं—मोक्षणमौघिकौपग्रहिकभेदस्योपधेरादाननिक्षेपणयोः समितिः—आगमानुसारेण प्रत्युपेक्षणप्रमार्जने ४। आलोकितपानभोजनमिति प्रतिगेहं पात्रमध्यपतितपिण्डश्चक्षुराद्युपयुक्तेन प्रत्युपेक्षणीयः तत्समुत्थागन्तुकसत्त्वसंरक्षणार्थम् आगत्य च प्रतिश्रयं भूयः प्रकाशवति प्रदेशे स्थित्वा सुप्रत्यवेक्षितं पानभोजनं विधाय प्रकाशप्रदेशावस्थितेन वल्भनीयं ५। इतिकरणः प्राणवधविरतेर्भावनेयत्ताव्यवस्थापनार्थः, एवमेताः पञ्च भावना मुहुर्मुहुर्भावयन्—वासयन् बहुलीकुर्वन् सकलामहिंसां पातुं प्रत्यलो भवतीति। सम्प्रति सत्यवचनस्य भावनाः पञ्च प्रतिपादयन्नाह—'सत्यवचनस्ये'त्यादि (१५०-१) सत्यम्—अवितथं सद्भूतार्थप्रतिपत्तिकारि असद्भूतं च—विपरीतार्थप्रतिपादनं प्राण्युपघातश्च 'अनुवीची'ति देशीवचनमालोचनार्थे वर्त्तते, भाषणं—वचनस्य प्रवर्त्तनं, अतोऽयमर्थः—समीक्ष्यालोच्य वचनं प्रवर्त्तयितव्यम्, अनालोचितभाषी कदाचिन् मृषाऽप्यभिदधीत, ततश्चात्मनो लाघवैरपीडाः फलमैहिकं परमत्रोपघातश्च नियत इति, तस्मात् समीक्ष्योदाहरणेनात्मानं भावयन् न मृषावचनजनितेनैनसा संपृच्यते १। क्रोधः—कषायविशेषो मोहकर्मोदयनिष्पन्नोऽप्रीतिलक्षणः प्रद्वेषप्रायस्तदुदयाच्च परवान् वक्ता स्वपरनिरपेक्षो यत्किंचनभाषी मृषापि भाषेत अतः क्रोधस्य प्रत्याख्यानं—निवृत्तिरनुत्पादो वा श्रेयानित्यात्मनि भावयेद्, एवं च वासयन् सत्यवादितां न व्यभिचरतीति २। लोभः—तृष्णालक्षणः कूटसाक्षित्वादिदोषाणामग्रणीः समस्तव्यसनैकराजा जलनिधिरिव दुर्भरः, कर्मोदयाविर्भूतो रागपरिणामस्तदुदयादपि वितथभाषी भवति, अतः सत्यव्रतमनुपालयता तदाकारपरिणामः प्रत्याख्येय इति भावनीय ३। भयशीलो भीरुः, तच्चैहिकादिभेदात्

गतथा मोहनीयकर्म्मोदयजनितम्, उदयाच्च तस्यानृतभाषणं सुलभं भवतीत्यभीरुत्वं भावयेद्, अभीरुश्च न जातुचिद्वितथं भाषते, तस्करोऽयं पिशाचो वा मया रजन्यां दृष्ट इति, तस्मान्निर्भयवासनाध्यानमात्मनि विधेयमिति ४। हास्यं हसनमोहोद्भवः परिहासः तत्परिणतो ह्ययमात्मा परिहसन् परेण सार्द्धमलीकमपि ब्रूयात्, तत्परिजिहीर्षया च हास्यप्रत्याख्यानमभ्युपेयं, एताः पञ्चापि भावनाः भावयन् सत्यव्रतरक्षणक्षमो भवतीति ५। तथा अदत्तादानविरतेः पंचैव भावनाः, तद्व्याचिख्यासयाऽऽह–'अस्तेयस्य चे'-(१५०-२)त्याद्युपन्यस्यति, आलोच्यावग्रहो याचनीयः, स चापे पञ्चप्रकारः पठितो देवेन्द्रराजगृहपतिशय्यातरसाधर्मिकभेदेन, अत्र पूर्वः पूर्वो बाध्य उत्तर उत्तरो बाधक इति संचिन्त्य यो यत्र स्वामी स एव याच्यः, अस्वामियाचने तु दोषबाहुल्यमुक्तमार्ष एव, अकाण्ड-नाडयार्थेहिकमामुष्मिकमदत्तपरिभोगजनितं, तस्मादालोच्यावग्रहो याच्य इत्येवमात्मानं भावयेत्, इत्थं च भावयन्नादत्तादाने प्रवर्त्तत इति १। सकृद्दत्तेऽपि परगृहे स्वामिनो भूयो भूयोऽभीक्ष्णावग्रहयाचनं कार्यं, अभीक्ष्णं नित्यं मुहुर्मुहुः पूर्वलब्धपरिग्रहो ग्लानाद्यवस्थासु मूत्रपुरीषोत्सर्गपात्रकरचरणप्रक्षालनस्थानानि दातृचित्तपीडापरिहारार्थं याचनीयानि, एवं च याच्ञामाचरन्नादत्तादानजनितेनागसा स्पृश्यते २। तथा एतावदित्यवग्रहावधारणं एतत् परिमाणमस्यैतावत् परिमितं सर्वतः क्षेत्रमनग्रहीतव्यं इत्येतदेवावधारणं सर्वतश्च परिणामावधारणं, तदभ्यन्तरवर्त्तिनीमूर्ध्वस्थानादिक्रियामासेवमानो न दातुः उपरोधकारी भवति, याच्ञाकाल एव चानवधारणे विपरिणतिरपि चेतसि स्याद्दातुरन्यस्येति, आत्मनोऽपि चादत्तपरिभोगजनितः कर्म्मबन्ध इति ३। 'समानधार्मिकेभ्य'इत्यादि (१५०-३) धर्मं चरन्ति–आसेवन्त इति धार्मिकाः, समानाः–तुल्याः प्रतिपन्नैकशासनाः सम्यक्त्वादिमुक्तिसाधनसमन्विताः साधवस्तेभ्यः पूर्वपरिगृहीतक्षेत्रेभ्योऽवग्रहो याच्यः, तदनुज्ञाताद्धि तत्रासनं, अन्यथा स्तेयं स्यात्, तदनुज्ञायां तु प्रतिश्रयादि

समरः गृह्णीयादित्येवात्मानं भावयेत् ४। तथाऽनुज्ञापितपानभोजनमिति पञ्चमी भावना, अनुज्ञापितं–अनुज्ञां प्रापितं-अनुज्ञया
स्वीकृतं पानभोजनं सूत्रोक्तेन विधिनाऽपचमानकं पाषण्डमनुप्रविश्य व्यपगताङ्गविकारः पिण्डैषणोपयुक्तः अकृतकारितानुमत-
मतिसृष्टं कल्पनीयमानीय गुरवे निवेद्यालोचनापूर्वकमभ्यनुज्ञातो गुरुणा मण्डल्यामेकको वा भुञ्जीत, भुजिर् पालनेऽभ्यवहारे च
व्याख्येयः, ततश्च यावत्किंचिद्धर्मसाधनमुपकरणमौघिकौपग्रहिकभेदं तत् सर्वमनुज्ञातं गुरुणा वन्दनपुरस्सरं गुरुवचनविधिना परि-
भोक्तव्यम्, एवमात्मनि वासनामादधानो नातिक्रमत्यस्तेयव्रतमिति ५॥ अब्रह्मसेवननिवृत्तिः ब्रह्मचर्यं तस्यापि पञ्च भावनाः,तद्यथा
–स्त्रियो रूढ्या देवमानुषभेदाद्द्विविधाः, पशुग्रहणात्तिर्यग्जातिपरिग्रहः, तत्र वडवावालेवीगोमहिष्यजातिकादिषु सम्भवति मैथुनम्,
एताश्च सचित्ताः, अचित्ताः स्त्रियः पुस्तलेपचित्रकर्म्मादिषु बहुप्रकाराः,पण्डकास्तृतीयवेदोदयवर्त्तिनो महामोहकर्म्माणः योषास्य-
सेवनाभिरताः क्लीबा इति प्रसिद्धाः, कृतद्वन्द्वैरेभिः संसक्तम्–आकुलं शय्यते यत्रास्यते च तच्छयनासनं–प्रतिश्रयसंस्तारकासनादि,
तच्च बह्वपायत्वाद्वर्जनीयमित्येवमात्मानं भावयेत् १। तथा स्त्रीपशुपण्डकानां असन्निधानेऽपि रागसंयुक्तः स्त्रीणां कथा स्त्रीकथा राग-
संयुक्तस्य स्त्रीकथा अथवा रागसंयुक्ता चासौ स्त्रीकथा चेति रागानुबन्धिनी देशजातिकुलनेपथ्यभाषागतिविभ्रमेङ्गितहास्यलीला-
कटाक्षप्रणयकलहशृङ्गाररसानुविद्धा वात्ययेव चित्तोदधिरवश्यंतया विक्षोभमातनोति तस्माद्वर्जनं श्रेय इति भावयेत् २। तथा स्त्रीणां
मनोहरेन्द्रियालोकनवर्जनं मनोहराणि मानोन्मानलक्षणयुक्तानि दर्शनीयानि मृजावंतीन्द्रियाणि योषितामपूर्वविस्मयरसनि-
र्भरतया विस्फारितलोचनः प्रेक्षते विकचकुवलयविपुलदलच्छविनयनयुगलमस्याः कर्णजाहमकटाक्षमप्यालोकितं झगिति मनसिज-
ज्वलनमादीपयति, किमुत विकटकटाक्षकरम्बितम् १, एवं यथाविभागसन्निविष्टावयवानि श्रोत्रघ्राणवदनपयोधरभरजघनस्थलादीनि

याच्यानि, त्वगिन्द्रियभेदत्वात् स्तनकलशाद्युपन्यास इत्येवं तदालोकनाद्युपरतिः श्रेयसीति भावयेत्, तथा पूर्वरतानुस्मरणवर्जनं प्रव्रज्यापर्यायात् पूर्वो गृहस्थपर्यायस्तत्र रतं–क्रीडितं विलसितं यदङ्गनाभिः सह तस्यानुस्मरणात् कामाग्निः तत्स्मरणेन्धनानुसन्धानतः संधुक्षते अतस्तद्वर्जनं श्रेय इति भावयेत् ४, तथा प्रणीतरसभोजनवर्जनमिति, प्रणीतो वृष्णः स्निग्धमधुरादिरसः क्षीरदधिनवनीतसर्प्पिर्गुडतैलपिशितमधुमद्यापूपादि तदभ्यवहारो भोजनं ततो मेदोमज्जाशुक्राद्युपचयस्तस्मादपि मोहोद्भवः, अतः प्रणीतरसाभ्यवहारो वर्जनीय इत्यात्मानं भावयेत् ब्रह्मचर्यमिच्छन्निति ५। किंचनं–बाह्याभ्यन्तरपरिग्रहः अविद्यमानकिंचनः अकिञ्चनः तद्भाव आकिञ्चन्यम्–अपरिग्रहिता तद्भावनाः पञ्च, तदभिधित्सयेदमाह–'पञ्चाना'मित्यादि, (१५०–७) पञ्चानामिन्द्रियाणां अर्थाः–विषयाः स्पर्शादयः पञ्चैव तेषां मनोज्ञा–रागहेतवः तेषां मनोज्ञानाम्–इष्टानां स्पर्शरसगन्धवर्णशब्दानां प्राप्तौ–ग्रहणे सति गार्द्ध्यं स्नेहस्तेषु रागपरिणामोऽतस्तद्वर्जनं श्रेयः, तथा अमनोज्ञानाम्–अप्रीतिहेतूनां ग्रहणे द्वेषवर्जनं द्वेषः–क्रोधमानपरिणामः तत्त्यागात् पञ्चैता भावनाः भाव्यमानाः प्रतिक्षणमाकिंचन्यं परिपूरयन्ति, ममत्वलक्षणो भावतः परिग्रहस्तद्व्यवच्छेदादपरिग्रह इति ॥ किंचान्यदिति सम्बध्नाति, भावनाप्रस्तावेऽन्यदपि मोक्षानुगुणं भावयेदिति वर्त्तते, इतिशब्दोऽप्यर्थे, प्रतिव्रतं पञ्च पञ्च भावनाः प्रतिपादिताः, सम्प्रति तु सर्वव्रतसामान्यभावनाः कथ्यन्त इति ।

हिंसादिष्विहामुत्र चापायावद्यदर्शनमिति ॥ ७–४ ॥ सूत्रम् ॥

एतद् व्याचष्टे–'हिंसादिष्वि'ति, हिंसादिष्वाश्रवेषु कियत्सु ?, पंचस्वित्याह–हिंसानृतस्तेयब्रह्मपरिग्रहेषु आश्रवा उक्तलक्षणास्तेष्वपायदर्शनमवद्यदर्शनं च भावयेत्, इहैवामी प्रत्यवाया हिंसादिषु प्रवृत्तस्य दृश्यन्ते, पापविपाकश्च दारुणोऽमुत्रामुष्मिन् परलोके

नरकादिजन्मनि अपायानर्थपरम्परा मुहुर्मुहुर्भानयेत्, तद्यथेति हिंसायास्तानदपायान् व्याचष्टे—'हिंस्र' इति हिंसनशीलो हिंस्रः प्राणव्यपरोपणजातसक्तिः हिशब्दो यस्मादर्थे नित्यं सततं उद्वेजनीयः संत्रासकारी, यतो भीषणवेषो ललाटतटारोपितभ्रूभङ्गः,अतः सत्त्वानामुद्वेगकारीति,नित्यानुबद्धवैरश्चेति अनुबद्धं—प्रसक्तं वैरमस्येति नित्यानुबद्धवैरः सर्वदाप्रवृत्तवैरसन्तानश्च, तस्मान्नित्योद्वेजनीयो नित्यानुबद्धवैरश्च स्यात्, इहैव लोके वधस्ताडनं कशादिभिर्बन्ध पश्चात् पिण्डनं—निगडादिकः परिक्लेश.—अङ्गुष्ठग्रहणोष्णस्थापनजलावसेकनादिः,आदिग्रहणादुल्लम्बनशिरश्छेदनादि,प्रतिलभते प्रतिप्राप्नोति,प्रेत्येति मृत्वा अशुभां गतिं नारकतिर्यक्कुमानुषादिका प्राप्नोति, गर्हितो निन्द्यः, प्राक्तनजन्मोपात्ताशुभकर्मविपाकोऽयमस्य वराकस्येत्येवं भावयतो विवेकबलात् सर्वसत्त्वदयापरो भवति, अतो हिंसायास्त्यागो—व्युपरमः श्रेयानिति। यथा प्राणातिपातकारी प्रत्यपायान् प्राप्नोति तथेति तथा अनृतवाद्यपि अनृतं वक्ष्यमाणलक्षणं तद्वादी अश्रद्धेयं वचनमस्येति, इहैवेति इहलोके जिह्वाछेदादीन् प्रतिलभते प्राप्नोतीति, आदिशब्दात् कर्णनासिकाकरचरणच्छेदपरिग्रहः, तथा मिथ्या—अलीकमभ्याख्यानमनृतवचनं तेनेति अभ्याख्यानेन दुःखितेभ्यः, चशब्दः पूर्वदोषापेक्षः, किंभूतेभ्यः?—'बद्धवैरेभ्यः' बद्धम्—अविच्छिन्नं वैरं येषां तेभ्यः बद्धवैरेभ्यः तदधिकानिति जिह्वाछेदादिभ्योऽप्यतिशयेन यातनाप्रकारान् मिथ्याभ्याख्यानाधिकांस्तान् दुःखहेतून् वधबन्धनादीन् आप्नोति, तीव्राशयो हि तीव्रस्थित्यनुभावमेव कर्मादत्ते,'प्रेत्ये'त्यादिना आमुष्मिकं फलमादर्शितं, यस्माच्चैवंविधो विपाकोऽनृतवचनस्य तस्माद् व्युपरमः श्रेयानिति। यथाऽलीकानुष्ठानप्रत्ययोऽयमुक्तः तथा स्तेनः परकीयद्रव्याद्यपहारे प्रसक्तचित्तः सर्वस्य इति अपह्रियमाणद्रव्यादिस्वामिनः उद्वेगं जनयति, इहैवेत्यादिना, हस्तादीनामवयवानां छेदनं शरीरात् पृथक्करणं भेदनं तु सन्निविष्टानामेव वेधनं पाटना-

दिक वध्यपानमिति वध्यो–व्यापाद्यस्तस्य पानं–मद्यपानं तस्य प्रधानत्वात्, तत्पूर्वकमन्यदपि कणवीरकुसुममालाभरणखरघटिकावलम्बनादि मारणं व्यपरोपणं आदिग्रहणात् स्वमांसखादनादि प्रतिलभते, प्रेत्येति गतार्थं,अतश्चौर्याद् व्युपरमः श्रेयानिति। यथा प्राणातिपातालीकस्तेयप्रवृत्ता दुःखं संस्पृशन्ति तथाऽब्रह्मचारीत्यादि, (१५१–३) अब्रह्मचारी मैथुनसेवी विभ्रमो विलासविशेषः तेनोद्भ्रान्तं चित्तं चलम्–अनवस्थितं यस्येति, विप्रकीर्णेन्द्रिय इति, तुच्छे विशिष्टे च विषये प्रवर्त्तितेन्द्रियवृत्तिः, मनोज्ञेषु शब्दादिषु रागाङ्गेषु रागानुरक्तः अमनोज्ञेषु द्विष्टेषु शब्दादिषु द्वेषाभ्युक्तात्मस्वरूपः, मदान्धो गज इवेत्यादिना हस्तिमूर्खेण सह साधर्म्यं दर्शयति, इतरथाऽपि तिर्यग्जातिः हिताहितप्रवृत्तिनिवृत्तिपर्यालोचने अक्षमा, स्वल्पज्ञानक्षयोपशमत्वात्, अतिशयेन तु मदकाले गुंजन्मनोहारिध्वनिमधुकरालीढमदवारिनिर्भरस्नपितकपोलभित्तिः अनादृताधोरणव्यापारितनिशान्ताङ्कुशतिग्माग्रवेधजनितव्यथोन्मत्तगज इव शर्म–सुखं नोपलभते नावाप्नोतीतियावत्, विभ्रमोद्भ्रान्तचित्तत्वात् विप्रकीर्णेन्द्रियत्वाच्चेति युक्तिद्वयम्, अवितृप्तस्य च कुतः सुखेन सम्बन्ध इति ?, मोहाभिभूतश्चेत्यादिना मोहनीयकर्मोदयं सूचयति, स्त्रीपुंनपुंसकवेदोदयाभिभूतः स तथा विजृम्भत इति, चशब्दात् पूर्वोक्तविधिसमुच्चयः, इदमकार्यं इदं कार्यं वा नाभिजानाति ग्रहाविष्टपुरुषवत् परवशत्वात्, ततश्च न किंचिदकुशलं न प्रारभते, निर्विवेकत्वात् सर्वमेव कुशलं मन्यत इत्यभिप्रायः॥ 'परदारे'त्यादिना (१५१–६) ऐहिकामुष्मिकप्रत्यवायोपप्रदर्शन, परेषां दाराः परदाराः–परपरिगृहीतयोषितः, श्रुतज्ञानप्रतिषिद्धश्च सर्वो मैथुनव्यापारः परदारशब्दवाच्यः, तदभिगमनं–तदासेवनं तज्जनितानिहैव वैरपरम्परा शिरच्छेदनं ताडनं बन्धनं द्रव्यापहारमादिग्रहणाद् यातना नानाविधाः प्रतिलभत इत्येत एव प्रत्यपायाः, 'प्रेत्य चे'त्यादिना, पारलौकिकप्रत्यपायप्रदर्शनं, तस्मादब्रह्मणो

व्युपरमः श्रेयानिति ॥ यथा प्राणातिपातादिप्रवृत्तः प्रत्यपायेन युज्यते तथा **परिग्रहवानित्यादि** (१५१–९) शास्त्रानुज्ञातो मूर्च्छास्पदं च परिग्रहः तद्वान् परिग्रहवानिति, ऐहिकप्रत्यवायप्रदर्शनार्थं शकुनिरिवेत्यादिदृष्टान्तग्रन्थोपन्यासः परप्रत्यायनप्रयोजनः, **मांसपेशीति** मासखण्डमेव दीर्घं पेश्युच्यते,आदानमोक्षणव्यापारवत्त्वात् पादोऽपि हस्त एव शकुनेः,मांसपेशी हस्तेऽस्येति मासपेशीहस्तः,व्यधिकरणानामपि गमकत्वाद्बहुव्रीहिः, कण्ठेकालवत्, **अन्येषां क्रव्याच्छकुनानामिति**, आममासभक्ष्याः क्रव्यादोऽभिधीयन्ते, कृतविकृतशब्द उपपदे क्विप्प्रत्ययादेः, पृषोदरादित्वाच्च कृतविकृतशब्दस्य क्रव्यादेशः, कृतविकृतमांसभक्षाः स्युः क्रव्यादः, कर्मण्यणेवेति, मासपेशीपरिग्रहहेतोः क्रव्यात् पतत्रिणामिहैन गम्योऽभिभवनीयश्चञ्चुचरणनखमुखपक्षतिप्रहतः परिशटत्पतत्रत्रजः शरणार्थी वियति नश्यति निरालम्बनः,परिश्रान्तस्तरुशिखरानुपघ्नप्राप्तिसमनन्तरमाक्रम्य बलादाहृतमासपेशीकः किंचिदुच्छ्वसन् कण्ठागतप्राणः कृच्छ्राद् विमुच्यते शकुनिभिः,तस्करादीना च गम्यः परिग्रहवान्,आदिग्रहणाद्राजदायादादिपरिग्रहः,तस्करादयः प्रसभं चौर्येण चापहारमाचरन्त्यभिभूयेति, अर्जनम्–उपादानमुपात्तस्य परिपालनं रक्षणं क्षयो–नाश इति, अर्जनादिकृतांश्च परिग्रहवानवाप्नोति दोषान्, तत्रार्जन न्याय्यमन्याय्यं च, न्याय्यं वाणिज्यकर्मकरत्वकृष्याद्युपायं, तच्चातिक्लेशयुक्तं, अन्याय्यं तस्करत्वाद्युपायसाध्यं, तत्रापि वधबन्धविशसनादिदोषाः, रक्षणमपि सत्रस्तचेतसो रात्रिंदिवं नृपदहनतस्करदायादमूषिकादिभ्यः क्लेशबहुलं, क्षयोऽप्युपभोगादपुण्योदयाच्च, तत्रोपाभोगकालमधिकृत्येदमाह–**न चास्य तृप्तिर्भवतीन्धनैरिवाग्नेरिति** (१५१–११) उपभुञ्जानस्यापि चास्य तृप्तिरसम्भाव्याऽग्नेरिन्धनैरिव प्रक्षिप्यमाणैः प्रवृद्धज्वालाकलापस्य, प्रत्युत वृद्धिरेव जायते, एवं परिग्रहवतः प्राज्यद्रविणराशेरपि प्रतिक्षणमपूर्वापूर्वद्रव्यावाप्तौ सन्ततीवेच्छा विजृम्भते, इच्छायाश्चानिवृत्तौ तृप्त्यभावः, न चातृप्तः सुखलेश-

शेनापि युज्यत इति, अपुण्योदयादपि क्षयो भवति विभवस्य, दक्षिणोत्तरमथुराधिवासिवणिग्द्वयप्राप्तिप्रणाशाख्यानकाद्भावनीयः, तन्नाशे च हृदयातिसारग्रहणीदोषग्रहावेशाः, दौर्बल्यमरणावसानः शारीरो मानसश्च परिक्लेशः, लोभाभिभूतत्वाच्चेत्यादि, लोभकपायानुरक्तचित्तो लोभाभिभूतः-तृष्णापिशाचिकया वशीकृतस्तद्भावो लोभाभिभूतत्वं तस्माच्चेति, चशब्दः समुच्चयार्थः, इदं कर्त्तव्यमिदं न कर्त्तव्यमिति नापेक्षते नालोचयति, तत्र कर्त्तव्यं कार्यं, यत्र प्रवर्त्तते पुरुषस्तदात्वायत्योः सुखार्थी, तच्च नापेक्षते तृष्णान्धः शुचिकर्म्मानुष्ठानं, अकर्त्तव्यम्-अकार्यं तत्राप्यनालोच्य प्रवर्त्तते, न प्रत्यपायान्निभालयति, यतः पितरमपि हिनस्ति मातरमप्युच्छिनत्ति पुत्रमपि व्यापादयति भ्रातरमपि जिघांसति, प्रियां जायामपि क्षपयतीत्येवमकार्यमेतदिति नापेक्षते, 'प्रेत्य चे'त्यादिना पारलौकिकप्रत्यपायप्रदर्शनं, प्रकर्षकाष्ठाप्राप्तस्तृष्णाकषायः कृमिरागानुकारी, तत्परिणामश्चायमात्मा नरकादिषूपपद्यत इत्यागमः, लुब्धोऽयमित्यादिना (१५१-१३) त्वैहिकमेव प्रत्यपायशेषमाचष्टे, लुब्धस्तृष्णावान् अदाता संचयैकचित्तो न कस्मैचिदुष्कृतमपि ददातीत्यक्षिलम्भनं निन्द्यते च, जनसमवायेष्वयशो लभत इति प्रतिपादयति, अतः परिग्रहाद् व्युपरमः श्रेयानिति ५। किंचान्यदित्यनेन सम्बन्धमाह-हिंसादयः प्रक्रान्ताः किंचानेनापेक्ष्यन्ते, एतेषु हिंसादिष्विदमन्यद्भावयेत्, तदाह-

दुःखमेव वा ॥ ७-५ ॥ सूत्रम् ॥

वाशब्दो विकल्पार्थः, अपायावद्यदर्शनं भावयेद्दुःखमेव वा भावयेदिति समुच्चयार्थो वाशब्दः, दुःखमेव च भावयेत् अपायावद्यदर्शनं चेति, एवकारोपादानात् सुखलवगन्धोऽपि नास्तीति प्रतिपादयति, दुःखमेव केवलं हिंसादयो, न सुखमपीति॥ एनमेवार्थं भाष्येण स्पष्टयति-'दुःखमेव चे'त्यादिना, (१५१-१६) हिंसादिष्विति हिंसानृतस्तेयाब्रह्मपरिग्रहेषु विषयभूयमापन्नेषु दुःख-

हेतुषु दुःखस्वभावेषु च दुःखबहुलतामेव भावयेदिति, केन प्रकारेणेत्याह–यथा मम अप्रियं न प्रीतिकारि दुःखम्–अनिष्टसंयोगनिमित्तं शरीरमनःपीडात्मकं व्यापत्तिपर्यवसानम्, एवं सर्वेषां सत्त्वानामप्यप्रियं, वधबन्धच्छेदपाटनोल्लम्बनादिहेतुकमात्मानुमानादवगेयमित्येवमालोचयतः कृतिनो मनसि निश्चितमवतिष्ठतेऽतो हिंसाया व्युपरमः श्रेयानिति॥ अतोऽनृतभाषणमपि दुःखमेवेत्यभिधित्सुराह–'यथा ममे'त्यादि (१५१–१७), मिथ्याभ्याख्यानं प्राग्व्याख्यातं तेन मिथ्याऽभ्याख्यानेनालीकाध्यारोपेणाभ्याख्यातस्याभिमुखमाख्यातस्याभियुक्तस्य, प्रकाशितवानिदं कृतमुक्तं चेति तन्निमित्तं यथा मम प्रकृष्टं तीव्रं दुःखं भूतमुत्पन्नपूर्वमित्यर्थः, सम्प्रति वा भवत्यलीकाध्यारोपात्, तथा सर्वसत्त्वानां तादृगेव तीव्रं दुःखमभ्याख्यानहेतुकमुपजायतेऽस्मिन्नेव लोके, अमुष्मिन् पुनर्लोके मिथ्याऽभ्याख्यानपरो यत्र यत्र जन्म प्रतिलभते तत्र तत्र तादृशैरेवाभ्याख्यानैरभियुज्यमानः सदा दुःखमनुभवतीत्यनृताद्व्युपरमः श्रेयानिति ॥ हिंसानृतभाषणदुःखवत् स्तेयमपि दुःखमेवेत्याह–यथा ममेत्यादि, यथा मम स्वद्रव्यस्येष्टस्य वियोगेऽपहारक्रियया तस्करैः कृते दुःखं मानसं शारीरं वा पूर्वमभूद्भवति चाधुना तथा सर्वसत्त्वानामतः स्तेयाद्व्युपरमः श्रेयानिति॥ यथा च हिंसानृतस्तेयानि दुःखस्वभावानि तथा रागद्वेषात्मकत्वान्मैथुनं दुःखमेवेत्यादि (ना) पूर्वदुःखतुल्यतामतिदिशति, मायालोभौ रागः क्रोधमानौ द्वेषः, माया–छद्मरूपा तदाकारपरिणतश्च हिंसानृतस्तेयेषु प्रवर्त्तते, लोभोऽपि गार्द्ध्यलक्षणः तत्परिणामश्च मांसादिगार्द्ध्याद्दत्ताऽऽत्तग्रहणेन चौर्येण वा तेषु प्रवर्त्तते, तथा क्रोधमानाभ्यामपि प्रेरितो हिंसादिषु प्रवर्त्तते इत्यत्यन्तप्रसिद्धं, मैथुनस्यापि तावेव रागद्वेषौ निदानं, रागद्वेषकारणत्वाच्च मैथुनमपि दुःखमेवेत्यवधार्यते, रागद्वेषावात्मा–स्वभावः कारणं यस्य तद्दुःखमेव रागद्वेषात्मकत्वाद्धिंसादिवत्, स्यादेतदित्यादिना (१५२–२) ग्रन्थेनाशङ्कते, प्रसिद्धिरियं योषि-

तामुपभोगे दशनच्छदपानाभिचुम्बनवपुःपरिरम्भणपीनस्तनतटीनखमुखावदारणगुह्यसंयोगबीजनिसर्गगमकालभाविस्पर्शनेन्द्रियद्वारकं सुखमनुभवप्रमाणसिद्धं भूयसा प्राणिनां अपह्नुवानस्य प्रतीतिप्रत्यक्षविरोधाववश्यं भाविनावित्यारेकिते भाष्यकृदाह—'तच्च ने'-त्यादि,(१५२–२)तदित्यनेन स्पर्शनसुखमभिसम्बध्यते, न खलु तत् सुखं, दुःखमेवेत्यभिप्रायः, वक्ष्यमाणपामनदृष्टान्तबलात् प्रतीतिप्रत्यक्षविरोधावनास्पदौ, इतस्तमेव दृष्टान्तमभिधापयन्नाह–कुत इति, कस्मादेतत् स्पर्शनसुखं दुःखमेव प्रतिपत्तव्यं,युक्त्यन्तरात्, साध्यसाधनसंगतेन हि साधर्म्यदृष्टान्तेन प्रतिपत्तिरुपजायते, साध्यसाधनशून्येन व्यतिरेकदृष्टान्तेन चेति, भाष्यकार आह—'व्याधिप्रतीकारत्वादि'त्यादि,राजपुत्रक्षयकुष्ठादयो व्याधिविशेषास्तेषां प्रतीकारः प्रतिक्रिया तन्निदानपरिहारेण भेषजोपयोगः पथ्यासेवनं च, उद्भूतो हि व्याधिः शरीरमनसो बाधामाधत्ते, बाधाप्रतिक्षेपश्च भेषजाद्युपयोगसाध्य', कर्म्मणां च क्षयोपशमोदयादयः क्षेत्रकालद्रव्यभावाद्यपेक्षा न खल्वात्यन्तिकं सुखोपजननमाधातुं समर्थाः, दुःखप्रतिबन्धमात्रकारित्वात्, मूढाश्च तमवस्थाविशेषं सुखमिति मन्यन्ते,व्याधिश्च मकरध्वजः प्रथमोद्दिष्टव्याधितुल्यविपाकवत्, हेतुविवरणायाह–असुखे ह्यस्मिन्निति दुःखमेव भ्रान्ताः सुखमित्युपचरन्ति मोहादज्ञानाच्चेत्यतोऽसुखं दुःखं तस्मिन् सुखबुद्धिर्यथा गण्डादिषु पाकाभिमुखेषु परिपक्वेषु च तीव्रवेदनापरिगतस्य जन्तोस्तत्पाटनपूयनिःसरणेन वेदनामात्रप्रशमः तथा पुरुषवेदाद्युदयात्तीव्रार्त्तिभाजोऽवधारितविवेकबलस्य यत्किंचनकारिणो ग्रहाविष्टस्येवार्त्तध्यानोपगतस्य स्त्र्यादिसंयोगे विलपतोऽसभ्यानि प्राप्तमूर्च्छागमस्येव गाढं क्लिश्यतो बीजलेशानुत्सृजतः पृषत्वानिव सुखमभिमन्यमानस्य तस्य तत् परमार्थतः दुःखं,तत्र सुखाभिमानो मूढस्याज्ञस्य, दृष्टान्तं व्याचष्टे–तद्यथेति कामसुखं दुःखमेवेति ख्याप्यते, तीव्रयेत्यादि (१५२ ४) तीव्रा इति परां काष्ठां गता त्वक्–चर्म्म शोणितम्–असृक् मांसं–पिशितं गता–प्राप्ता, तयैवंविधया कण्डूवा

परिगतात्मा–व्याप्तशरीरः काष्ठादिकंडूयनक्रियायाः कारणं नानारूपमुपदिशति, काष्ठशकलं–काष्ठखण्डं लोष्ठः–इष्टकादिखण्डं शर्करा–शर्करांटकः नखशुक्तयो–नखमुखानि, प्रदर्शनमात्रमेतत्, एभिः काष्ठशकलादिभिर्विच्छिन्नगात्र इति विदारितगात्रः, ततश्च श्रवता रुधिरेणार्द्रः कंडूयमानः एवंविधाऽवस्थो दुःखमेव सुखमिति मन्यते मोहात्, तद्वत् मैथुनोपसेवीति, अनेन साम्यतामापादयति दृष्टान्तेन सह, ततश्च दुःखभावनावासितचेतसो मैथुनाद्युपरमः श्रेयानिति ॥ यथा प्राणातिपातादयो दुःखं तथा परिग्रहोऽपीति, परिग्रहः–सचित्तादिभेदो ममत्वसम्बन्धः, अप्राप्त्यादीनि त्रीण्यपि परिग्रहविशेषणतयोपात्तानि, तेषु कांक्षा–अभिलाषः, स च दुःखं खेदकारित्वात्, प्राप्तेषु च परिग्रहेषु नष्टेष्विति, नृपदहनतस्करदायादमूषिकादिभ्यो नष्टेषु शोकः, स च दुःखं, तथा 'प्राप्तेषु रक्षण'मिति प्राप्तेषु–स्वीकृतेषु रक्षणं परिपालनं, उपभोग इति आहारादिकः तत्र अवितृप्तिः–अतृप्तिता तत्रापि महत् दुःखं, अतः परिग्रहाद्युपरमः श्रेयानित्येवं भावयेत्, परिग्रहेष्वप्राप्त्यादिका वृत्तिर्न तु सूत्राणि। किंचान्यदि(१५२-१०)त्यनेन सम्बन्धमाह, भावनाधिकारे अन्यच्च किं भावयितव्यं?, आह—

मैत्रीप्रमोदकारुण्यमाध्यस्थ्यानि सत्त्वगुणाधिकक्लिश्यमानाविनेयेष्विति ॥ ७–६ ॥ सूत्रम् ॥

एतद् व्याचष्टे–कृतद्वन्द्वानां द्वितीयया निर्देशः मैत्र्यादीन् भावयेद्यथासङ्ख्यं, मैत्रीं सत्त्वेषु प्रमोदं गुणाधिकेषु एवमन्यत्रापि योज्यं, मैत्री–सर्वसत्त्वविषयस्नेहपरिणामः येऽपि कृतापकाराः प्राणिनस्तेष्वपि मित्रतां चेतसि सन्निवेश्य क्षमेऽहमिति सर्वसत्त्वानां सम्यग्मनोवाक्कायैर्येषां च मयाऽपकारः कृतस्तानपि सत्त्वान् क्षमयेऽहं, क्षमां ग्राहयामीत्यर्थः, तत्र परः क्षमते वा न वेति, एतदेव स्पष्टतरं विवृणोति–'मैत्री मे सर्वभूतेऽपि वैरं मे न केनचिद्' वीराणामिदं कर्म्म वैरं, पुनः पुनः पानककरणमित्यर्थः, प्रमोदो गुणाधिकेषु

एतद् व्याचष्टे–'प्रमोदो नामे'ति सम्यक्त्वादिगुणाधिकेषु प्रमोदो–हर्षस्तं भावयेत्, नामशब्दो वाक्यालङ्कारार्थः, अलङ्कारः श्रोत्रसुखत्वं, विनीयतेऽनेन कर्म्मेति विनयः–ज्ञानदर्शनचरणोपचारभेदक्रियाविशेषः, विनयहेतुर्वन्दनं–प्रह्वता मनोवाक्कायैः विशेषत उत्तमाङ्गेन, स्तुतिः–सद्भूतगुणोत्कीर्त्तनरूपा वर्णवादो–यशःप्रख्यापनं वैयावृत्त्यं–व्यापृतता बालग्लानगुरूपवासिशैक्षप्राघूर्णिकान् उद्दिश्य आगमविहितभक्तपानवस्त्रपात्रप्रतिश्रयदण्डकाद्युपकरणमार्गणानयनप्रदानलक्षणो व्यापारस्तस्यानुष्ठानं–करणं, आदिशब्दाद्देशकालापेक्षः साधूद्देशेन अनेकप्रकारः पूजाहेतुः संगृहीतः, सम्यक्त्वं–तत्त्वार्थश्रद्धानलक्षणं ज्ञानं–हिताहितावबोधकारि चारित्रं–मूलोत्तरगुणरूपं तपो–बाह्याभ्यन्तरविधानं एभिः सम्यक्त्वादिभिरधिकाः साधवो गृहस्थादिभ्यः तेषु परेणात्मना उभाभ्यां वा कृता या वंदनादिलक्षणा पूजा तया जनितः–उत्पादितः 'सर्वेन्द्रियाभिव्यक्त' इति सर्वग्रहणं सम्भ्रमापेक्षं साधुगुणोत्कीर्त्तनसमये चित्तकर्णदानविकसदुत्फुल्ललोचनाविर्भूतरोमाञ्चतनुत्वं यत् स मनःप्रहर्षः प्रमोद इत्याख्यायते। कारुण्यमित्यादि (१५३–८) करुणा–अनुकम्पा तद्भावः कारुण्यं, कः पुनरस्य विषयः?, क्लिश्यमानेष्वित्याह–क्लिश्यमानेषु–उपतापमनुभवत्सु, दीना–दुःखिताः शारीरमानसदुःखाभिभूताः तेषामनुग्रहः कारुण्यं घृणा दयेति पर्यायाः तदिति तत् कारुण्यं भावयेत् स्वक्षेत्रे, तत्क्षेत्रमाह–महामोहो–मिथ्यादर्शनानन्तानुबन्ध्यादिः तेनाभिभूतेषु–वशीकृतेषु, अत एव च मतिश्रुतविभङ्गाज्ञानपरिगतेष्वित्याह, मतिश्रुतविभंगाज्ञानान्युक्तलक्षणानि प्रथमे, तत्परिगतेषु–तदाकारपरिणतेषु, विषयाः–शब्दादयस्तेषु तर्षो विषयतर्षः, पिपासेति, तर्ष इवाग्निः परितापकारित्वात् तेन दंदह्यमानचित्तेषु, न खलु विषयासेविनः कदाचित्तृप्यन्ति, स्थविरावस्थायामपि कांक्षासद्भावाद्, एवंविधावस्थेषु हितमित्यादि, हितं–मुक्तिसाधनम् अहितं–संसारसाधनं तयोः प्राप्तिपरिहारौ तत्र विपरीता प्रवृत्तिर्येषां, हितं परिहरंति अहितं आसे-

यन्ते तेषु विविधम्–अनेकप्रकारमैहिकामुष्मिकभेदं शरीरमनोविषयं दुःखं तेनार्दितेषु–हिंस्यमानेषु दैन्यसम्बन्धादीना:–अभिहितयाच्ञायुक्ताः कृपणाः–उत्सन्नान्वयाः अनाथाः–अबान्धवाः केनचिदपि अगृहीताः स्वयं चासमर्थाः बालाः–शिशवः मोमुहाः–काहलाः वृद्धाः–सप्ततिसंवत्सरसंख्यामतीत्य वर्त्तमानाः तेषु कारुण्यमविच्छिन्नं भावयेत्, तथाहीत्यादि (१५३–१२) तथा च भावयन् उक्तेन प्रकारेण हितोपदेशादिभिरिति, हितोपदेशो–मुक्तिसाधनसम्बन्धः, आदिशब्दाद्देशकालापेक्षान्नपानप्रतिश्रयकर्पटभैषजैरपि तान् अनुगृह्णातीति, माध्यस्थ्यमविनेयेष्विति व्याचष्टे, रागद्वेषयोरन्तरालं मध्यं तत्र स्थितो मध्यस्थः–रागद्वेषेष्ववृत्तिरिति, अरक्तद्विष्ट उदासीनस्तद्भाव औदासीन्यं तत् उपेक्षेति, ईक्षणमालोचनं, सामीप्येन अरक्तद्विष्टतया–अरागवृत्तिना अद्वेषवृत्तिना, एकार्थाभिधायिनः शब्दाः, अविनेयानामिति(१५३-१४)विनीयन्ते–शिक्षां ग्राहयितुं शक्यन्त इति विनेयाः न तथा अविनेयाः–अशिक्षार्हाः प्रकृष्टमिथ्यादर्शनावगृहीतचित्ताः पूर्वव्युद्ग्राहिताश्चाविनेया इति, मृत्पिंडकाष्ठकुड्यानीव मृत्पिण्डकाष्ठकुड्यभूताः, यथा मृत्पिंडादयो निश्चेतनाः श्रोत्रादीन्द्रियव्यापारशून्या नोपदिष्टमपि हितं समादत्ते तद्वदेते, तथा चोक्ताः, तदेव स्पष्टयति 'ग्रहणधारणे'त्यादिना (१५३-१५) उपदेशस्य ग्रहणं–प्रतिपत्तिः गृहीतस्याविस्मरणं धारणं एवमेतदिति निश्चितप्रत्ययो विज्ञानं ईहा तत्त्वान्वेषिणी जिज्ञासा विचारणोत्तरकालमपोहः, एभिर्ग्रहणादिभिर्वियुक्ता महामोहो–मिथ्यादर्शनं तेनाक्रान्ताः अभिगृहीतमिथ्यादृष्टयो दुष्टावग्राहिताश्चेति दुष्टाः–रागादिदोषभाजस्तैश्च स्वपक्षानुरागात् परपक्षद्वेषाच्चान्यथावस्तु ग्राहिताः इति विप्रलब्धाः, ते चाजीवितावधेस्तमसद्ग्रहणं न मुञ्चन्ति, तेषु पुनर्माध्यस्थ्यं भावयेत्, तेषु तत्त्वावगतेरभावाद्विफल उपदेशः, कस्मात् कारणान्माध्यस्थ्यं भावनीयं ?, 'नहि तत्रे'त्यादि, नैव तत्र मृत्पिंडादितुल्ये दुष्टावग्राहिते च वक्तुर्हितोपदेशदानं साफल्यं भवति, निष्फलं

चोपदेशं तीर्थकृतोऽपि नाद्रियन्ते, यथाह–सर्वं च देशविरति'मित्यादि, एवं च भावयतो व्रतानां स्थैर्यं भवतीति ॥ किंचान्यदित्यनेन सम्बन्धयति, अन्यदपीदं भावनीयमित्याह—

जगत्कायस्वभावौ च संवेगवैराग्यार्थमिति ॥ ७-७ ॥ सूत्रम् ॥

एतद् व्याचष्टे–ताँस्तान् देवमानुपतिर्यग्नारकपर्यायान् गच्छतीति जगत् प्राणिजातमुच्यते, धर्म्मादिद्रव्यसन्निवेशो वा, चीयत इति कायः–शरीरं, जगच्च कायश्च जगत्कायौ तयोः स्वभावौ, तौ भावयेत् संवेगवैराग्यार्थं, यथासंख्यकेन सम्बन्धः, जगत्स्वभावं भावयेत् संवेगार्थं,कायस्वभावं वैराग्यार्थं,तत्र संवेगः–संसारभीरुत्वादिलक्षणः, वैराग्यं–शरीरनिष्प्रतिकर्म्मतादिलक्षणं, तत्र जगत्स्वभावो 'माता भूत्वा दुहिता भगिनी'(प्रश.)त्यादि, तथा जगत्-जीवाजीवद्रव्याणि तत्स्वभावः परिणामः, तेषामेव जगच्छब्दवाच्यानां द्रव्याणां जीवपुद्गलादीनां अनाद्यादिमत्परिणामयुक्ता इति, कश्चिदनादिपरिणामो जीवस्यासंख्येयप्रदेशवत्वचेतनत्वज्ञानत्वादिः कश्चिदादिमान् देवत्वादिः, पुद्गलद्रव्यस्यापि मूर्त्तिमत्त्वरूपादिमत्त्वादिरनादिः, आदिमान् घटपटादिलक्षणः, धर्माधर्मयोः लोकाकाशव्यापित्वादिरनादिः, आदिमान् गतिस्थितिपरिणतद्रव्यजनितः, लोकाकाशस्यामूर्त्तत्वासंख्येयप्रदेशत्वादिरनादिः, आदिमानवगाहकद्रव्यापेक्षः, एभिर्युक्ताः प्रादुर्भावादयो जगत्स्वभावाः, अनाद्यादिमत्परिणामग्रहणेन प्रादुर्भावादयो विशेष्यन्ते, उत्पादविगमध्रौव्याणीत्यर्थः, अनादिना परिणामेन विशिष्टो यः प्रादुर्भावः–आत्मलाभो वस्तुनः, तथा सन्निवेशः–आदिमत्परिणामविशिष्ट प्रादुर्भावः–पर्यायान्तरोत्पादः, तिरोभावस्तु सन्तानरूपेणावस्थितो वैश्रसिको विनाश एव, अनादिलक्षणा स्थितिर्ध्रौव्यमनादिपरिणामः,अन्यत्वेति सर्वद्रव्याणां परस्परं भेदपरिणामोऽनादिः,आदिमदनादिरनुग्रहः–परस्परोपकारादिलक्षणो जीवानां,विनाश-

स्तु प्रायोगिकः आदिमान् परिणामः, एवमेव जगत्स्वभावः पुनःपुनरालोच्यमानः संवेगाय सम्पद्यते, 'कायस्वभाव' इत्यादि (१५४-३) कायस्य स्वभावो जन्मप्रभृत्यनित्यतां–विनश्वरत्वं बालकुमारयौवनमध्यमस्थविरावस्थारूपं प्रतिलभते, अतः परिणामानित्यतां शरीरस्य भावयेद् यावदायुषः परिसमाप्तिः, ततः क्रोधेनाग्निना वातातपशोषणेन परमाणुपर्यवसानेन विभक्तोऽनित्य इति व्यपदिश्यते, अपरं कायस्वभावो दुःखहेतुत्वं बाधालक्षणं दुःखं सा च बाधा यावच्छरीरं तावदपि दुःखोपभोगः, तया निःसारता कायस्वभावः त्वग्मांसादिपटलभेदेनोद्वेष्ट्यमानेऽपि न किंचित् सारमुपलभ्यते, एवं भावयतः शरीरेऽभिष्वङ्गो न भवति, तथाऽशुचित्वं कायस्वभावः, यतः मूलकारणं असृक् शुक्रं च, उत्तरकारणं आहारः, तस्य च विपाको अशोभनः अशुचिरेव काय इत्येवं भावयेद्, एवं च भावयतः संवेगो वैराग्यं च भवतीति, 'तत्र संवेगो नामे'त्यादि (१५४-५) तत्रेति चानयोः संवेगवैराग्ययोः संवेगस्तावदित्थंलक्षणः, नामशब्दो वाक्यालङ्कारार्थः, भीरुः–भीतिशीलः संसारो–नारकतिर्यङ्मनुष्यामरभवप्रपञ्चः सकलदुःखमूलः संसाराद् भीरुः २ तद्भावः संसारभीरुत्वम्, उद्विजते हि प्रेक्षापूर्वकारी दुःखात्, न जातुचित्तत्प्रवणो भवति, आरम्भाः सूनास्थानानि प्राण्युपघातकराणि व्यापादनमङ्गलपरितापजननप्राणापहारलक्षणाः सर्व एवारम्भाश्चेतनाचेतनवस्तुस्पर्शिनो, मूर्च्छाविशेषः परिग्रहः तेष्वारम्भपरिग्रहेषु दोषदर्शनादरतिः ऐहिकामुष्मिकप्रत्यवाया दोषाः तद्दर्शनात्–तदुपलब्धेर्दुःखम् उद्वेगोऽप्रीतिररतिः, तद्वतश्च धर्मे बहुमानो धार्मिकेषु च, धर्मः–क्षमादिदशलक्षणकस्तदासेविनो धार्मिकास्तेषु बहुमानो धर्मे च, चकारः समुच्चयार्थः, बहुमानशब्दार्थनिरूपणायाह–'धर्मश्रवण'इत्यादि(१५४-६)प्राक्तावद् धर्मजिज्ञासा ततस्तदभिज्ञप्रच्छनं पश्चाच्छ्रवणम्–आदरेणाकर्णनं ततः स्मरणानुष्ठाने, एष खलु धर्मविषये बहुमान आदरः–चित्तप्रसादः धार्मिकदर्शनेति धार्मिकाः–सम्यक्त्वज्ञानक्रियानुष्ठायिनः साधवोऽगारिणश्च तद्दर्शने च

विधसूत्रार्थप्रतिपादनाय आत्मपरानुग्रहार्थमित्यादिभाष्येण विशुद्धबुद्धिमत्त्वं दातुराख्यायते, श्रद्धादिगुणयोगः उपायः प्रतिग्रहीता पात्रविशेषः देयं सम्पच्चेति, आत्मा च परश्चात्मपरौ तयोरनुग्रहः आत्मपरानुग्रहः सोऽर्थो यस्य तदात्मपरानुग्रहार्थम्, अनुग्रहः— उपकारः, स च विशुद्धया धिया ददतः कर्मनिर्जरणादिफलः समस्तीत्यनुग्रहग्रहणाद्विशुद्धबुद्धित्वं लभ्यते, अन्यथा अनुग्रहाभास एव स्यात्, तच्च निर्जरादिफलमुपायादृते न सम्पद्यत इत्युपायपरिग्रहः, देशकालपुरुषावस्थाः संप्रेक्ष्यागमानुसारिणा सता प्रमोदनिर्भरेण चेतसा रोमाञ्चकंचुकोपगूढवपुषा चाभ्युत्थानासनप्रदानवन्दनचरणप्रमार्जनसत्कारपूर्वकं समाधायैकाग्रमित्यादिरूपा याः, आत्मेति दाता, श्रद्धाशक्तिसत्त्वक्षमाविनयवितृष्णतागुणसम्पन्नो ददामीत्येवंपरिणतः, परपदोपादानात् प्रतिग्रहीता ज्ञानक्रियान्वितो विजितेन्द्रियकषायः स्वाध्यायतपोध्यानसमाधिभाग् मूलोत्तरगुणसंपदुपेतः पात्रमिष्यते, स्वस्य द्रव्यजातस्यान्नपानवस्त्रादेरित्यनेन देयनिर्देशः, स्वस्येत्यात्मीयस्य लोकविरुद्धचौर्यव्यवहाराद्यनुपात्तस्य द्रव्यजातस्येति द्रव्यविशेषस्य पुद्गलद्रव्यस्य जीवद्रव्यस्य च, पुद्गलद्रव्यस्यापि न सर्वस्य कुठारहलदात्रशस्त्रादेरनेकप्राणिदुःखहतोः, किं तर्हि ?, अन्नपानवस्त्रादेः पुद्गलद्रव्यस्य, आदिग्रहणादौघिकौपग्रहिकसकलोपकरणपरिग्रहः, सर्वश्चाहारो भैषजवस्त्रोपधिर्वा साधोः परत एव लभ्यो भवत्युद्गमोत्पादनैषणाशुद्धः, स च दातुः प्रतिग्रहीतुश्चोपकारको निर्जराफलत्वात्, जीवद्रव्यस्यापि न सर्वस्य, दासदासीबलीवर्दवाहनादेः स्वयमेव दुःखितत्वात् क्लिश्यमानत्वात्, यथाह—"जं णय दुहियं णय दुक्खकारणं होइ दिण्णमण्णेसिं। वट्टइ अणुग्गहे उं विहिज्ज दाणं असावज्जं ॥१॥" द्विपदमपि गृहिणा प्रव्रज्याभिमुखं प्रव्रज्यार्हं पुत्रदौहित्रभ्रातृपत्नीप्रभृति स्वामिना दत्तमनुज्ञातं प्रव्राज्यम्॥ एवमुक्तेन न्यायेन देशकालोपपन्नमचेतनं सचेतनं वा द्रव्यजातं पात्रे गुणवति देयम्, आधाकर्म्माद्यपि देशकालाद्यपेक्षं पात्रविनियुक्तं स्वर्गसुकुलप्रत्यायाति-

फलमेव [illegible] .पीति ॥ किंचेत्यनेन प्रस्तुतस्य दानधर्म्मस्य तरतमातिशयभेदप्रतिपत्त्या फलनिरूपणायाह—

विधिद्रव्यदातृपात्रविशेषात्तद्विशेषः ॥ ७–३४ ॥ सूत्रम् ॥

विध्यादयः कृतद्वन्द्वास्तेषां विशेषः-अतिशयः प्रकर्षाप्रकर्षयोगः तस्माद्विध्यादिविशेषात् धर्मविशेषः, धर्मश्च विध्यादिचतुष्टयापेक्षः, तथाहि—विध्यादिचतुष्टयप्रकर्षादेशकालोपपन्नकल्पनीयदानादेकान्तेनैव निर्जरा प्रकर्षवर्तिनी, मन्दविध्यादिदानान्मंदा, मध्यादिदानान्मध्या, एतदेव भाष्येण विविच्य दर्शयति—विधिविशेषादित्यादिना(१६४–१३) विधिविशेषादिति पंचम्याः प्रागुक्तं लक्षणं, विधानं विधिः—विशिष्टप्रकारः तदतिशयात् पुण्यनिर्जरातिशयः, तदतिशयात् स्वर्गफलविशेषः मुक्तिफलप्राप्तिर्वा, द्रव्यमन्नादि तद्विशेषात्, तथा दातृविशेषात् पात्रविशेषाच्च, तद्विशेष इति तच्छब्देन दानधर्मः परामृश्यते, दानं त्यागस्तद्वाच्यो धर्मो दानधर्मः तस्य विशेषो-भेदः प्रकर्षाप्रकर्षलक्षणः, दानधर्मभेदाच्च फलभेदः, कारणानुरूपं कार्यनिष्पत्तेः, एवं समासतः सूत्रार्थो व्याख्यातः, सम्प्रति विशेषेण विवृणोति—तत्रेत्यादि, तत्र तेषु विध्यादिचतुर्षु विधिविशेषस्तावदयं, नामशब्दो वाक्यालंकृतौ, देशकालसम्पदिति व्यपगतस्थावरजंगमजन्तुको देशो दातुः प्रतिगृहीतुश्चेति देशसंपत्, कालसम्पदपि न रात्रौ, दिवापि स्वार्थमुपक्लृप्तेऽशनादौ उचिते भोजनकाले परिवेषिकास्वितश्चेतश्च कडुच्छुकोखापटलकोदंकिकाद्युपकरणव्यग्रकरासु संचरतीषु पुरःपश्चात्कर्म्माभावात् कालसम्पत्, एवं वस्त्रपात्रादिदानमप्युचितकाल इति, श्रद्धा गुणवत्सु दानातिशयो दत्तमेभ्यो बहुफलं भवति, सत्कारोऽभ्युत्थानासनप्रदानादिः प्रहर्षपुरस्सरः, देयगतस्तावत् क्रमो यो यत्र जनपदे प्रसिद्धः पेयादिरन्यो वा, वस्त्रादिषु पुनः रत्नाधिकक्रमः प्रकृष्टमध्यमजघन्यपात्रक्रमो वा, कल्पनीयत्वमुद्गमादिविशुद्धत्वमागमविहितभक्ष्याभक्ष्यपेयापेयग्राह्याग्राह्यता च, आदिग्रहणात् स्वयमेव स्वहस्तेन

श्रद्धासंवेगानन्दप्रविकसितवदननयनोऽत्यर्थमहमनुगृहीत इत्येष विधिः। द्रव्यविशेष इत्यादि (१६४-१६) द्रव्यविशेषो द्रव्यस्यातिशयप्रकृष्टता, अन्नशब्देन चाशनं गृहीतम्, आदिशब्दात् पानखाद्यस्वाद्यवस्त्रपात्रदण्डकौघोपग्रहभेदोपधिपरिग्रहः, तदेषां मन्नादीनां सारजातिगुणोत्कर्षयोगः सारः-अन्नस्याच्युतरसगन्धादित्वं जातिः शालिव्रीहिगोधूमादिका गुणाः सुरभिलवणस्निग्धमधुरत्वादयो सुरभित्वादयो वा एषां सारादीनां उत्कर्षः—प्रकृष्टता तेन योगः-सम्बन्धः, एवं पानकादीनामपि, तथा वस्त्रपात्रदण्डकादीनां देशान्तरोत्पत्तिस्वरूपवर्णविशेषसंस्थानप्रमाणपरिमृजादिभेदेनोपयुज्यसारासारादयो वाच्याः, दातृविशेष इति, दातुर्विशेषः-अतिशयश्च परिणामजनितः, प्रतिग्रहीता गुणसम्पन्नो वक्ष्यमाणः, तत्रानसूया, क्षमावत्त्वं प्रसन्नचित्तता पुण्यवानहं यस्य मे गेहमनुविशंति तपस्विनः, न त्वक्षमा कार्या, प्रतिदिवसमेते मृगयन्ते निर्वेदिताः खल्वमीभिर्वयमिति, त्यागेऽविषाद इति, दत्तेऽन्नादाववि षादः, विषादो विषण्णताऽश्रद्धा, यतोऽतिबहु दत्तं मयेदं गृहेऽपि चिन्तनीयमेव प्रयोजनं, दत्त्वैनं चिन्तनीयमिदमेवैकं मम स्वं यद् व्रतिनामुपयुक्तमिति, तथा अपरिभाविता परिभाविता-अनादरः न परिभाविता अपरिभाविता आदर इति, देशकालप्राप्तस्य परिग्रहीतुर्वर्द्धमानश्रद्धाप्रापितेनादरेण दानं दित्सन इत्यादि, साधुदर्शने याचने वा दातुमिच्छतः परमया प्रीत्या प्रहृष्टतया योगः, एवं ददतो दत्तवतश्च कालत्रयेऽपि प्रहर्षयोगः, कुशलाभिसंधितेति भावकुशास्तु ज्ञानावरणादिकर्म्मांशास्तान् लुनातीति-छिनति अपनयतीति कुशलः, अभिसंधिः-अभिप्रायः कुशलोऽभिसंधिर्यस्य, कर्म्मनिर्जरापेक्षी, तद्भावः कुशलाभिसंधिता, दृष्टफलानपेक्षिता दृष्टफलं राज्यैश्वर्यसुखादि सर्वं च सांसारिकं, स्वर्गाद्यपि दृष्टमेव, बहुशोऽनुभूतत्वात्, तन्नापेक्षते-न प्रार्थयते यः स दृष्टफलानपेक्षी तद्भावो दृष्टफलानपेक्षिता, निरुपधत्वमित्युपधा-भावदोषो मायाकषायजनितो यथा कश्चित् पटलकाद्यु-

पकरणे देयस्यान्नादेरुपरि रचयति वर्णगन्धाढ्यमधस्तु निःसारमित्येनमादि तद्भावान्निरुपधत्वमिति, निदानमुक्तलक्षणं स्वर्गमानुपजन्मविषयं तत्प्राप्त्यभिसंध्यभावात् निर्जरार्थमेव केवलं निर्निदानत्वमिति। पाति–रक्षति संसाराद्दातारं दुर्गतिभयप्रपातादात्मानं चेति पात्रं तस्य विशेषः–अतिशयः प्रकर्षवृत्तिता, कीदृशी पुनः सेत्याह–सम्यग्दर्शनज्ञानचारित्रसम्पन्नतेति। तत्र सम्यक्त्वं नैसर्गिकाधिगमिकक्षायिकादिभेदात् प्रकर्षाप्रकर्षवृत्ति, ज्ञानमप्यात्मपरिणामो ज्ञानावरणीयादिक्षयोपशमादिजन्यः, चारित्रमपि सामायिकादिभेदाद् बहुप्रकार, एभिः सम्पन्नता–युक्तता सम्यक्त्वादिपरिणामभाक्त्वमित्येवं विध्यादिविशेषाद् विशिष्टं विशिष्टतरं विशिष्टतमं च मोक्षपर्यवसानं दानफलं भवति ॥

श्रीहरिभद्रसूरिप्रारब्धायां श्रीयशोभद्रसूरिनिर्वाहितायां भाष्यानुसारिण्यां

॥ तत्त्वार्थटीकायां सप्तमोऽध्यायः समाप्तः ॥



उक्ता आश्रवा (१६६-२) इत्यादिना सम्बन्धमष्टमाध्यायस्याचष्टे, 'उक्तो लक्षणविधानाभ्यामभिहितः 'कायवाङ्मनः-कर्म्म योगः, स आश्रव' इत्यारभ्य सामान्यतोऽपि विशेपतश्च, सम्प्रति प्रस्तावायातं बन्धं वक्ष्याम इति, एतदुक्तं भवति-जीवाजीवाश्रवबन्धसूत्रक्रमेणाश्रवो व्याख्यातस्तस्यानन्तरो बन्धः, स लक्षणविधानाभ्यां अधुना व्याख्यायते, तदेतदनेन प्रतिपादयति। तत्प्रसिद्ध्यर्थमिदमुच्यते, तस्य सम्बन्धस्य प्रसिद्धिः शब्दार्थनिरूपणं तत्प्रसिद्धये-तत्प्रसिद्ध्यर्थं तन्निरूपणार्थमुच्यते,' इदमिति वक्ष्यमाणमिथ्यादर्शनादिपंचकं, ननु च बंधः प्रस्तुतः तद्धेतुकथनमसम्बद्धमिव लक्ष्यते, नासंबद्धं, यतो नाकारणा कार्यनिष्पत्तिः, बीजादि प्रभवोऽङ्कुरस्य, प्रथमतरं च कारणमुपाददते कार्यार्थिनो, बन्धश्च कार्यं, कारणं तस्य मिथ्यादर्शनादि पंचकं प्रसिद्धमेवेति इयत्ता निर्द्धार्यते कारणानामनेन सूत्रेणेत्याह—

मिथ्यादर्शनाविरतिप्रमादकपाययोगा बन्धहेतवः ॥ ८-१ ॥ सूत्रम् ॥

मिथ्यादर्शनादयो योगान्ताः पंच कृतद्वन्द्वाः प्रथमाबहुवचनेन निर्दिष्टाः, मिथ्यादर्शनं तत्त्वार्थाश्रद्धानलक्षणं अविरतिः-अनिवृत्तिः पापस्थानेभ्यो विरतिपरिणामाभावः प्रमादास्त्विन्द्रियविकथाविकटनिद्रालक्षणाः कपायाः क्रोधमानमायालोभाः अनन्तानुबन्धिप्रभृतयः योगो-मनोवाक्कायव्यापारस्वभावः, बन्धः कर्म्मवर्गणायोग्यस्कन्धानामात्मप्रदेशानां चान्योऽन्यानुगतिलक्षणः क्षीरोदकादेरिव सम्पर्को बन्धः, हेतुर्निमित्तं कारणं, बन्धस्य हेतवो बन्धहेतवः पंच मिथ्यादर्शनादयः, सामान्यहेतवश्चैतेऽवगन्तव्याः सर्वकर्मबन्धस्य, विशेपहेतवस्तु ज्ञानावरणादेर्व्याख्याताः पष्ठे 'तत्प्रदोपनिह्नवा'दिना सूत्रकलापेनेति। भाष्यकारस्तु पदविच्छेदेन पंचापि सामान्यप्रत्ययान् दर्शयति-मिथ्यादर्शनमित्यादि(१६६-५) मिथ्या-अलीकमयथार्थं दर्शनं दृष्टिरुपलब्धिरिति मिथ्या-

दर्शनं,विरमणं विरतिः–संयमो न विरतिः अविरतिः–असंयमो हिंसाद्यनिवृत्तिरिति। प्रमाद्यत्यनेनेति प्रमादः–विकथादिकः,कर्म्मप्रकृतिग्रन्थेषु तु प्रमादप्रत्ययः पृथग् नोक्तः,असंयमप्रत्ययेनैव संगृहीतत्वात् चतुर्विध एव प्रत्ययस्तत्राधीतः मिथ्यादर्शनासंयमकषाययोगाख्यः,इह त्वाचार्येण मन्दबुद्धिप्रतिपत्तिहेतोः पृथगुपन्यस्तः प्रमादप्रत्ययः,कष्यते यत्रात्मा शारीरमानसैः दुःखैः स कषः-संसारः, 'पुंसि संज्ञायां घः' तस्याया–उपादानकारणानि कषायाः–क्रोधादयः, युज्यतेऽनेनेति योगो, नोकर्म्मणा योगद्रव्येणात्मेत्यर्थः, वीर्यान्तरायकर्म्मक्षयोपजनितेन वीर्यपर्यायेण युज्यत इतियावत्, इतिशब्दोऽवधारणार्थः, एत एव पंच बंधहेतवो भवन्ति सामान्यतः। तत्रेत्यादिना (१६६–७) मिथ्यादर्शनादीनां स्वरूपं निरूपयति, तत्र तेषु पंचसु प्रत्ययेषु मिथ्यादर्शनस्वरूपं तावदिदं–सम्यग्दर्शनाद्विपरीतं मिथ्यादर्शनमिति,तत्त्वार्थश्रद्धानलक्षणं सम्यग्दर्शनमुक्तं,तस्माद् सम्यग्दर्शनाद्विपरीतलक्षणं मिथ्यादर्शनं तत्त्वार्थाश्रद्धानं अयथार्थश्रद्धानमित्यर्थः, तद्विविधमित्यादि, तच्च मिथ्यादर्शनं द्विप्रकारम्–अभिगृहीतं अनभिगृहीतं च, अनभिगृहीतमिथ्यादर्शनभेदो वा संदिग्धमिति साक्षान्नोपात्तं, 'तत्रे'त्यादि, तयोरभिगृहीतानभिगृहीतयोः मिथ्यात्वयोरभिगृहीतप्रपंचोऽयं–अभ्युपेत्येति, मत्यज्ञानादिबलेन किमपि परिकल्प्यासम्यग्दर्शनपरिग्रहो मिथ्यादर्शनपरिग्रहः तदभ्युपगमः, एतदेवैकं सत्यमिति प्रतिपत्तिरभिगृहीतमिथ्यात्वं, तदनेकभेदमित्याह–अज्ञानिकादीनामिति, अज्ञानमेषामभ्युपगमोऽस्तीति अज्ञानिकाः, अथवा अज्ञानेन चरंति दीव्यन्ति वा अज्ञानिकाः अज्ञानमेव पुरुषार्थसाधनमभ्युपयन्ति, न खलु तत्त्वतः कश्चित् सकलस्य वस्तुनो वेदिताऽस्तीति, ते चाज्ञानपक्षावलम्बिनः सप्तषष्टिभेदाः केनचिद् विशेषेण भिद्यमानप्रक्रियाकाः सुगतशिष्यकाणामष्टादशनिकायभेदवन्नानात्वं प्रतिपद्यन्ते, एतद्दर्शनभ्रमितचेतसश्च शाकल्यबष्कुलकुंथुमिसात्यमुद्रिराणायनकठमध्यंदिनमौदपिप्पला-

द्वादरायणखिष्टकृदैतिकायनजैमिनिनसुप्रभृतयः सूरयोऽसन्मार्गं एनं प्रथयंति, आदिशब्दात् क्रियावादिनोऽक्रियावादिनो वैनयिकाश्च सूचिताः, तत्र क्रियावादिनोऽशीत्युत्तरशतभेदाः मरीचिकुमारकपिलोलूकगार्ग्यव्याघ्रभूतिवाद्वलिमाठरमौद्गल्यायनप्रभृत्याचार्याः प्रतायमानप्रक्रियाभेदाः, अक्रियावादिनोऽपि चतुरशीतिविकल्पाः कोकुलकाण्ठेविद्धिकौशिकहरिश्मश्रुमाथनिकरोमिकहारितमुंडाश्वलायनादिसूरिप्रपंचितप्रक्रियाकलापाः, वैनयिकास्तु द्वात्रिंशद्विकल्पाः वशिष्टपराशरजातुकर्णवाल्मीकिरोमहर्षणिसत्यदत्तव्यासेलापुत्रौपमन्यचन्द्रदत्तायस्थूलप्रभृतिभिराचार्यैः प्रकाशितविनयसाराः, एवमेतान् मिथ्यात्वभेदान् अभिधाय संकलयति भाष्यकृदेकराशितया त्रयाणामित्यादिना भाष्येण, त्रिशब्दः संख्यावचनः अन्यूनानधिकवृत्तिः, एवं शतशब्दोऽपि, कियतां शताना ?, त्रयाणामित्याह, कियता राशिनाऽधिकाना ?, त्रिषष्टीनामित्याह, अभ्यधिकाना त्रिषष्ट्या, कुत्सिता वादिनः कुवादिनः, एकान्तग्रहग्रस्तत्वाद्यत्किंचित् प्रलपतीत्यर्थः, शेषमनभिगृहीतमिति, अभिगृहीतमिथ्यादर्शनाद्यदन्यत्–तत्त्वार्थाश्रद्धानं तदनभिगृहीतमिथ्यादर्शनम्, अनभिनिवेशमिथ्यात्वमित्यर्थः, यथोक्ताया इत्यादिना, येन प्रकारेणाभिहिता सप्तमाध्यायादौ विरतिः हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो मनोवाक्कायकृतकारितानुमतिभिरुक्ता तस्या विरतेर्यथोक्ताया विपरीता अविरतिर्हिंसादिषु प्रवृत्तिरसंयम इतियावत्, मोक्षमार्गशैथिल्यमिन्द्रियदोषात् प्रमादः, प्रमाद इत्यनूद्य स्वरूपमाचष्टे–स्मरणं स्मृतिः पूर्वोपलब्धवस्तुविषया तस्याः अनवस्थान—भ्रंशः विकथादिव्यग्रचित्तत्वादिदं विधायेदं कर्त्तव्यमिति नाध्येति, कुशलेष्वनादर इति, स्मरतोऽपि कुशलानामागमविहितानां क्रियाऽनुष्ठानानामनादरोऽनुत्साहोऽप्रवृत्तिरित्यर्थः, योगदुष्प्रणिधानं चेति, योगाः कायादिव्यापारास्तान् दुष्टेन प्रणिधानेनार्त्तध्यानभाजा चेतसा समाचरत इति, चशब्दः समुच्चयार्थः, इत्येष प्रमाद इति, निगमनार्थं पुनः प्रमा-

दग्रहणं, एष त्रिप्रकारः प्रमादो भवति, कषाया मोहनीये वक्ष्यन्त इति (१६६-१२) उक्तनिर्वचनाः कषायाः मोहनीयकर्मणीहैवाध्याये उपरिष्टाद् वक्ष्यन्ते प्रपंचतः सप्रभेदाः, योगस्त्रिविधः पूर्वोक्त इति त्रिप्रकारः पूर्वमुक्तः षष्ठेऽध्याये, एवमेते पंच सामान्यप्रत्ययाः सर्वकर्म्मबन्धहेतव इत्यर्थः, एषां पंचानामपि सामान्यप्रत्ययानां सूत्रक्रमसन्निवेशिनां बन्धनिमित्तानां पूर्वस्मिन् सतीति वीप्सया नियतमुत्तरेषां भाव इति प्रतिपादयति, सति मिथ्यादर्शनप्रत्ययेऽवश्यं भाविनोऽविरत्यादयः चत्वारः, सत्यामविरतौ त्रयः प्रमादादयः, सति प्रमादे कषाययोगौ, सत्सु कषायेषु योगा इति, योगप्रत्यय एव सति नेतरे चत्वार इत्यादि विपरीतं भाव्यं यावत् न मिथ्यादर्शनप्रत्यय इत्येतदनेन प्रतिपादयति, उत्तरोत्तरभावे तु सर्वेषामनियम इति, अविरतिप्रमादकषाययोगेषु सत्सु न मिथ्यादर्शनप्रत्ययः, योगकषायप्रत्यययोः सतोः नावश्यमितरे त्रयः इत्यादि सुज्ञानमिति। एवमुपपादिते विस्तरेण बन्धहेतौ कर्मग्रहणमुच्यते—

सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलान् आदत्ते ॥ ८-२ ॥ सूत्रम् ॥

कषायाः क्रोधादयोऽनन्तानुबन्ध्यादिभेदाः सह कषायैः सकषायः तद्भावः सकषायत्वं तस्मात् सकषायत्वाद्धेतोः,हेतौ पंचमी, जीवः-द्रव्यात्मा कर्त्ता,स्थित्युत्पत्तिव्ययपरिणतिलक्षणः,सति च कर्तृत्वे कर्म्मबन्धफलानुभावौ,क्रियत इति कर्माष्टप्रकारं तस्य योग्यानौदारिकादिवर्गणास्वष्टासु ज्ञानावरणादिकर्मयोग्याननन्तानन्तप्रदेशस्कन्धांश्चतुःस्पर्शान्, एतदेव च पुद्गलग्रहणेन स्पष्टयति, पूरणगलनलक्षणाः पुद्गलाः स्कन्धीभूतास्तानादत्ते, न पुनः क्रियामात्रं, कर्म्म हि पौद्गलमिष्टं रूपादिमदिति, आदत्त इति करोति कर्म्म आत्मप्रदेशेषु लगयति कर्मेति। अमुमेवार्थं भाष्येण स्पष्टयति,सकषायत्वादित्यादिना(१६७ २)पदच्छेदोऽपि हि व्याख्यांगमन्यथा

वटवृक्ष तिष्ठतीत्यादिषु निश्चय एव न स्याद्, अतः सामान्यं न्यायमाश्रित्य भाष्ये पदच्छेदद्वारेणार्थमाचष्टे, मिथ्यादर्शनादयः कर्म-
बन्धस्याष्टप्रकारस्य सामान्यहेतवोऽभिहिता एव प्रथमसूत्रे, किमर्थं पुनः कषायग्रहणं भेदेनेति,उच्यते, कषायाणां प्रधानहेतुत्वप्रति-
पादनार्थं, तत्रामर्षोऽप्रीतिर्मन्युलक्षणः क्रोधः, स्वगुणकल्पनानिमित्तत्वे प्रगतिर्मानः, परातिसन्धाननिमित्तः छद्मप्रयोगो माया, तृष्णा-
पिपासाऽभिष्वंगास्वादलक्षणो लोभः, अत्रैकैकोऽनन्तानुबन्धी, संसारानुबन्धीत्यर्थः, एवमप्रत्याख्यानः प्रत्याख्यानावरणः संज्वल-
नश्चेति, त एते पापिष्ठा बन्धहेतवः संसारस्थितेर्मूलकारणमाजवंजवीभावलक्षणाया. कष्टतमाः प्राणिनामनपराधवैरिणो, यथोक्तमार्षे—
"कोहो अ माणो य अणिग्गहीआ, माया य लोभो अ पवड्ढमाणा। चत्तारि एए कसिणा कसाया, सिंचंति मूलाइं पुणब्भवस्स ॥१॥
तहा–जं अइदुक्खं लोए जं च सुहं उत्तम तिहुयणंमि। तं जाण कसायाणं वुड्ढिक्खयहेउअ सव्वं ॥२॥ एवं सकषायत्वं बन्धहेतुत्वेनोपात्तं,
हेतुश्च धर्मिणो भवति,स च धर्मी जीव इत्याह, कषायपरिणामो हि परिणंतुरात्मनो, न त्वपरिणामस्य सर्वगतस्याक्रियस्येति, यथाह—
जीवस्तु कर्मबन्धनबद्धो वीरस्य भगवतः कर्त्ता। सन्तत्याऽनाद्यं च तदिष्टं कर्मात्मनः कर्तुः ॥१॥ संसारानादित्वात् बन्धस्यानादिता
भवति सिद्धा। अत एव कर्म्म मूर्त्तं नामूर्त्तं बंधनमभीष्टम् ॥२॥" कर्मणो योग्यानिति,एतद् व्याचष्टे-अष्टविध इत्यादिना,अष्टप्रकारे
पुद्गलग्रहणे औदारिकवैक्रियाहारकतैजसभाषाप्राणापानमनःकर्मभेदेन पुद्गलपरमाणवो द्विप्रदेशादयश्चाणुस्कन्धाः यावदचित्तमहा-
स्कन्धाः एतेषु ये योग्याः पुद्गलास्तेषामष्टविधे ग्रहणे सति विशिनष्टि–कर्म्मशरीरयोग्यानित्यर्थः, कर्म्मैवाष्टविधं शरीरमुक्तमतः
स्वार्थे कार्मणमिति (अण्)प्रत्ययः,कर्मैव कार्मणं,कर्म्मसंघात इत्यर्थः,ते पुनरादीयमानाः पुद्गलाः कत्रात्मना किं नाम्नां कर्म्मणां प्रत्यया
भवंति कारकतां प्रतिपद्यते, क वा व्यवस्थिताः कुतो वा योगविशेषादित्याद्युपक्रम्येदमुक्तं नामप्रत्ययाः सर्वतो योगविशेषा-

दिति,वक्ष्यते खल्वयमर्थः,सर्वकर्म्मणामन्वर्थः संज्ञानाम संज्ञेत्यनर्थान्तरं, तद्यथा-ज्ञानावरणमित्यादि, ज्ञानमाव्रियते येन कर्म्मणा तज्ज्ञानावरणं,एवं सर्वत्र नामान्वर्थवाच्यं-तस्यान्वर्थनाम्नो ज्ञानावरणादेः प्रत्ययाः-कारणानि, नहि तान् पुद्गलानन्तरेण ज्ञानावरणादिसंज्ञाः सिद्ध्यन्तीति। तथा सर्वासु दिक्षु व्यवस्थिताः कायवाङ्मनोयोगानां च तीव्रादिपरिणामविशेषादित्यादि सर्वमिहैवाध्याये प्रदेशबन्धनिरूपणे व्याख्यास्यत उपरिष्टादिति। एवं बंधहेतुं निरूप्याधुना बन्धस्वरूपनिरूपणायाह—

स बन्धः ॥ ८-३ ॥ सूत्रम् ॥

बन्धनं बन्धः-परस्पराश्लेषः प्रदेशपुद्गलानां क्षीरोदकवत् प्रकृत्यादिभेदः,बध्यते वा येनात्मा अस्वतन्त्रतामापाद्यते ज्ञानावरणादिना स बन्धः पुद्गलपरिणामः, एनमेव चार्थं भाष्यकारः स्पष्टयति-स एष इत्यादिना (१६७-८) एष लोलीभूत आत्मप्रदेशकर्म्मपुद्गलपिण्डः स इत्यनेन परामृश्यते, एष इति नान्यः, तस्यैवानुसन्धानमाचष्टे, आत्मप्रदेशानां पुद्गलानां चान्योऽन्यानुगतिलक्षण एव बंधो भवति, कर्मशरीरमिति कार्मणशरीरमात्मैक्याद्योगकषायपरिणतियुक्तमपरकर्म्मयोग्यपुद्गलग्रहणे-आत्मसात्करणे एकत्वपरिणामापादने समर्थम्, एवं च कर्म्मशरीरेण पुद्गलानां यद्ग्रहणं गृहीतिस्तत्कृतो बन्ध इति भावनीयं, सः पुनश्चतुर्विधः इत्यनेनोत्तरसूत्रसम्बन्धं कथयति, लक्षणविधानाभ्यां जीवादिपदार्थसप्तकव्याख्या प्रस्तुता,तत्र लक्षणतः प्रतिपादितो बन्धः, सम्प्रति लक्षितस्य विधानं वाच्यं,अतः स एव उक्तलक्षणको बन्ध एकरूपोऽपि कार्यभेदात् प्रकृत्यादिविभागमासादयत्यवस्थाभेदाद्वा,यथा पृथग्जनाः क्रौर्यनीचैस्त्वलोभादिभेदान्नानात्वं प्रतिपद्यन्ते तद्वद्बन्धोऽपीति, पुनःशब्दो बन्धं विशिनष्टि, द्रव्यभावभेदे सति भावबन्ध इति, चतस्रो विधा यस्य स चतुर्विधः-चतुःप्रकारः॥ तत्प्रकारनिरूपणायेदमाह—

प्रकृतिस्थित्यनुभावप्रदेशास्तद्विधयः ॥ ८-४ ॥ सूत्रम् ॥

प्रकृत्यादयः कृतद्वन्द्वाः भवनविभक्त्या निर्दिष्टाः, तत्र प्रकृतिर्मौलं कारणं मृदिव घटादिभेदानामेकरूपपुद्गलग्रहणं,अतः प्रक्रियतेऽस्याः सकाशात् इति प्रकृतिः, क्रमनियमस्तु शेषविकल्पप्रसूतेरादौ प्रकृतिबन्धः, उपात्तस्यावस्थानकालपरिच्छेदात्ततः स्थितिबन्धः, सत्यां स्थितौ फलदानक्षमत्वादनुभावबन्धः, ततः कर्म्मपुद्गलपरिमाणलक्षणः प्रदेशबन्धः, स बन्ध इत्यत्र बन्धस्य प्रस्तुतत्वात् तच्छब्देन परामर्शः, विधिर्विधानं भेदस्तस्य विधयस्तद्विधयो-बन्धभेदा इत्येतद्भाष्यकृता विवृत्तमेव प्रत्येकमभिसंबध्नता बन्धशब्दं,तत्र यथोक्तप्रत्ययसद्भावे सति पुद्गलादानं प्रकृतिबन्धः-कर्मात्मनोरैक्यलक्षणः, ततश्चात्मनोऽध्यवसायविशेषादनाभोगपूर्वकादाहारपरिणामवत् कर्मपरिणतिः स्थित्यादिलक्षणा, तथा चोक्तमेव-"कर्म्मपुद्गलराशेः कर्त्रा परिगृहीतस्यात्मप्रदेशेष्ववस्थानं स्थितिः अध्यवसायनिर्वर्त्तितः कालविभागः,कालान्तरावस्थाने सति विपाकचिन्ताऽनुभावबन्धः, समासादितपरिपाकावस्थस्य बदरादेरिवोपभोग्यत्वात् सर्वदेशघात्येकद्वित्रिचतुःस्थानशुभाशुभतीव्रमन्दादिभेदेन वक्ष्यमाणः, ततस्तस्य कर्तुः स्वप्रदेशेषु कर्म्मपुद्गलद्रव्यपरिमाणनिरूपणं प्रदेशबन्धः, अत्र च पारमार्षप्रवचनविदः कणिकागुडघृतकटुभाण्डादिद्रव्यविकार मोदकमुदाहरंति प्रकृत्यादिबन्धनिरूपणाय, तथाहि-चित्रः पुद्गलपरिणामः कर्तुरध्यवसायानुगृहीत इति भाष्यते, मोदको हि वातपित्तहरो बुद्धिवर्धनः, स मोहकारणं मारक इत्यनेकेनाकारेण परिणमते जीवसंयोगात्,तथा कर्मवर्गणायोग्यपुद्गलराशिरप्यात्मसम्बन्धात् कश्चिद् ज्ञानमावृणोति,अपरो दर्शनं स्थगयति,अन्यः सुखदुःखानुभवहेतुरित्यादि योज्यं, भूयस्तस्यैवाविपन्नगन्धरसादेरविनाशित्वेनावस्थानं स्थितिः, आह च-"इति कर्म्मणः प्रकृतयो मौल्यश्च तथोत्तराश्च निर्दिष्टाः। तासां यः स्थितिकालनिबन्धः स्थितिबन्ध उक्तः स ॥१॥" तस्यैव च स्निग्धमधुराद्येकद्वि-

गुणादिभावोऽनुभावः, यथाऽऽह—"तासामेव विपाकनिर्बंधो यो नामनिर्वचनभिन्नः। स रसोऽनुभावसंज्ञस्तीव्रो मन्दोऽथ मध्यो वा ॥१॥" पुनस्तस्यैव कणिकादिपरिमाणान्वेषणं प्रदेशः, कर्मणोऽपि पुद्गलपरिणामनिरूपणं प्रदेशबन्ध इति, यथोक्तं—"तेषां पूर्वोक्तानां स्कन्धानां सर्वतोऽपि जीवेन। सर्वैर्देशैर्योगविशेषाद् ग्रहणं प्रदेशाख्यं ॥१॥ प्रत्येकमात्मदेशाः कर्म्मांशयवैरनन्तकैर्बद्धाः। कर्माणि बध्नतो मुंचतश्च मातत्ययोगेन ॥२॥" इति कर्मणो मौलबंधभेदयत्ताप्रदर्शनार्थः, ज्ञानावरणादिकर्मणामष्टानामपि प्रकृत्यादिभेद एव मौलमिति ॥ उत्तरसूत्रसम्बन्धार्थस्तत्रशब्दः, तत्र तेषु चतुर्षु प्रत्येकं प्रकृत्यादिलक्षणेषु भेदेषु प्रथमो भेद उच्यते, स च द्वेधामूलप्रकृतिबन्धः उत्तरप्रकृतिबन्धश्च ॥ मूलप्रकृतिबन्धप्रतिपत्त्यर्थमिदं वचनं—

आद्यो ज्ञानदर्शनावरणीयवेदनीयमोहनीयायुष्कनामगोत्रान्तरायाः ॥ ८-५ ॥ सूत्रम् ॥

आदौ भव आद्योऽनन्तरातीतसूत्रविन्यासंश्रयणात्, ज्ञानदर्शनयोरावरणशब्दः प्रत्येकमभिसम्बध्यते, ज्ञानावरणं दर्शनावरणमिति, ज्ञानमवबोधलक्षणो विशेषविषयः पर्याय आत्मनः, तथा दर्शनपर्यायः सामान्योपलंभलक्षणः, तयोरावरणं आवरणमाव्रियते वाऽनेनेति भावकरणयोर्व्युत्पत्तिः, सुखदुःखस्वरूपेणानुभवितव्यत्वाद्वेदनीयमिति कर्मसाधनं, मोहयति मोहनं वा मुह्यतेऽनेनेति वा मोहनीयं, एत्यनेन गत्यंतराणीत्यायुः, आयुरेव चायुष्कं, स्वार्थे कन्, नामयतीति नाम, प्रह्वयत्यात्मानं गत्याद्यभिमुखमिति, नम्यते वा—प्रह्वीक्रियतेऽनेनेति वा नाम, कर्त्तरि करणे वा व्युत्पाद्यते, गोत्रं उच्चनीचभेदलक्षणं तद्गच्छति—प्राप्नोत्यात्मेति गोत्रं, अन्तर्धीयतेऽनेनात्मनो वीर्यलाभादीति अन्तरायः अन्तर्धानं वाऽऽत्मनो वीर्यादिपरिणामस्येत्यन्तरायः 'कुत्यलुटो बहुल'मिति लक्षणसद्भावात् सर्वत्र साधिमा प्रतिपत्तव्यः, तुल्यार्थत्वात् संकीर्यंते संज्ञा इति चेत्तन्न, प्रसिद्धतरत्वाद्गोसर्पादिसंज्ञावत्, एवमेते ज्ञानावरणादयः

कृतद्वन्द्वाः प्रथमया निर्दिष्टाः, क्रमस्त्वेषामर्थापेक्षः, तथा च ज्ञानदर्शनावरणोदयजनिता सर्वसत्त्वानां भवव्यथा, तां च वेदयमा-
नोऽपि मोहाभिभूतत्वान्न विरज्यते, अविरक्तश्च देवमानुषतिर्यङ्नारकायुषि वर्त्तते, न चानामकं जन्म, जन्मवंतश्चानुस्मृताः सदैव
गोत्रेण, तत्र संसारिणां सुखलेशानुभवः सान्तरायः सर्व इत्यन्तरायनिर्देशः, आद्य इति सूत्रक्रमप्रामाण्यादित्यादि भाष्यं
(१६७–१३) आद्यः प्रथमो मूलप्रकृतिबन्धः, इतिकरणः शब्दपदार्थकः, सूचनात् सूत्रम्, अनेकभेदं कर्म्म यतः सूचयति, क्रमः
सन्निवेशस्तस्य प्रामाण्यम्, अन्यप्रमाणादिवत् समासः, तस्मात्, सूत्रक्रमप्रामाण्यादिति हेत्वर्था पंचमी, प्रकृतिबन्धमिति सामा-
न्याभिधानेऽपि मूलप्रकृतिबन्धमेव काक्वा प्रतिपादयति सूत्रकारः, यतः–पंचनवेत्यादिनोत्तरप्रकृतिबन्धं वक्ष्यति, स मूलप्रकृति-
बन्धोऽष्टप्रकारः, तद्यथा, ज्ञानावरणमित्यादि, गतार्थं भाष्यं, इतिकरणः शुभाशुभस्य कर्मण इयत्ताप्रतिपत्तये प्रायोजीति॥ किंचा-
न्यदित्यादिना सूत्रस्थं सम्बन्धमाचष्टे, न केवलं प्रकृतिबन्धो मूलविशेषणः, उत्तरोपपदविशेषणश्चेत्यनेन प्रतिपादयन्नाह—

पंचनवद्व्यष्टाविंशतिचतुर्द्विचत्वारिंशद्द्विपंचभेदा यथाक्रमम् ॥ ८–६ ॥ सूत्रम् ॥

पंचादीनां कृतद्वन्द्वानां भवनविभक्त्या निर्देशः, एते भेदाः पंचादयो यासां मूलप्रकृतीनां ताः पंचादिभेदाः, यथाक्रममि-
त्यनन्तरसूत्रक्रमं प्रत्यवमृशति, अनन्तरसूत्रक्रमप्रामाण्याद् ज्ञानावरणाद्यभिसम्बन्धः, ताश्च पंचकादिकान् भेदान् स्वभावतः प्रति
मूलप्रकृतिं वक्ष्यति, ता एव मूलप्रकृतीरभिसम्बन्धयन्नाह–स एष प्रकृतिबन्धोऽष्टविधोऽपीत्यादि (१६८–१) आत्मपुद्गल-
द्रव्यस्यान्वयित्वात् स इत्यनेन सामान्यमात्रपरामर्षः, एष इत्यन्वयिनः परिणामविशेषप्रतिपत्ति', प्रकृतिबन्ध इति मूलप्रकृति-
बन्धोऽष्टप्रकारोऽपि भूयः एकैको ज्ञानावरणादिः पंचादिभेदो मंतव्यः, क्रमेण भाष्यकृद्दर्शयति–पंचभेद इत्यादिना भाष्येण, उत्त-

रमदाना सख्याप्रदशनामांते। तत्र पंचभेदो ज्ञानावरणप्रकृतिबन्धः क्रमेण यावत् पंचभेदोऽन्तरायप्रकृतिबन्ध इत्येवमेतद्यथाक्रमं प्रत्येतव्यं, इतः प्रभृत्युत्तरकालं यदभिधास्याम इति। तद्यथेत्यनेन सूत्रं संबध्नाति, पंचादिभेदा ज्ञानावरणादयोऽभिहितास्तद् यथा ते व्यवस्थिता येन क्रमेण स्वरूपेण च पंचादिभेदास्तथाऽष्टावपि मूलप्रकृतयः प्रतिपदं प्रदर्श्यंत इत्याह—

मत्यादीनां ॥ ८–७ ॥ सूत्रम् ॥

मतिरादिर्येषां श्रुतावधिमनःपर्यायकेवलज्ञानानामिति, तद्गुणसंविज्ञानो बहुव्रीहिः, तानि मत्यादीनि तेषां मत्यादीनामावरणं, मत्यादीन्याव्रियन्तेऽनेनेति, अपरेऽऽपि प्रतिपदं पंचापि पठंति—मतिश्रुतावधिमनःकेवलानामिति, एवं चापार्थकमिवोपलक्ष्यते, यतोऽनन्तरसूत्रेण पंचापि भेदा ज्ञानावरणादय इत्यवधृतमेव, निर्ज्ञाताश्च स्वरूपतः प्रथमाध्याये व्याख्यातत्वादत आदिशब्द एव युक्तः, तेषां मत्यादीनां ज्ञानानां पंचैवावरणानि भवन्ति, तानि तु प्रतीतान्येव, तद्यथा—मतिज्ञानावरणं श्रुतज्ञानावरणं अवधिज्ञानावरणं मनःपर्यायज्ञानावरणं केवलज्ञानावरणमिति, तत्र आत्मनो ज्ञस्वभावस्य—प्रकाशस्वरूपस्य ज्ञानावरणक्षयोपशमक्षयसमुद्भवाः प्रकाशविशेषा मतिज्ञानादिव्यपदेशाः पर्याया बहुविकल्पाः, तत्र ज्ञानावरणस्य स्वस्थानाद्यावन्तो विकल्पाः संभवन्ति सर्वे ते ज्ञानावरणग्रहणेनैव ग्राह्या इति भाष्यार्थः, विकल्पा भेदाः, तद्यथा—इंद्रियानिन्द्रियनिमित्तत्वादवग्रहादयो मतिज्ञानस्य, अङ्गानङ्गादिविकल्पाः श्रुतज्ञानस्य, भवक्षयोपशमजप्रतिपात्यादिविकल्पाश्चावधिज्ञानस्य, ऋजुविपुलमतिविकल्पौ मनःपर्यायज्ञानस्य, सयोगायोगभवस्थादिविकल्पाः केवलज्ञानस्येति, तत्रेन्द्रियनिमित्तं श्रोत्रादिपंचकसमुद्भवं क्षयोपशमजं ज्ञानं योग्यदेशावस्थितस्वविषयग्राहि, अनिन्द्रियं तु मनोवृत्तिरोघज्ञानं च, तदेतन्मतिज्ञानमाव्रियते येन तन्मतिज्ञानावरणं, देशघाति लोचनपटलवच्चन्द्रप्र-

कायाग्रादिग्रहा, तथा श्रोत्रेन्द्रियोपलब्धिः श्रुतं, शेषेन्द्रियमनोविज्ञानं च श्रुतग्रन्थानुसारि स्वार्थाभिधानप्रत्यलं श्रुतज्ञानं, तद-नेकभेदमात्मपते प्रवचनाभिज्ञाः, यथाह—"जावंति अक्खराइं अक्खरसंजोग जत्तिआ लोए। एवइआ पयडीओ सुअनाणे हुंति नायव्वा ॥ १ ॥"तदावृतिः श्रुतज्ञानावरणम्, एतदपि देशघातीति, अधोगतबहुतरपुद्गलद्रव्यावधानादवधिः, पुद्गलद्रव्यमर्यादयैव वाऽऽत्मनः क्षयोपशमजः प्रकाशाविर्भावोऽवधिः—इन्द्रियनिरपेक्षः साक्षात् ज्ञेयग्राही लोकाकाशप्रदेशमानप्रकृतिभेदः, तदावरणमव-धिज्ञानावरणमिदमपि देशघात्येव, तथाऽऽत्मनो मनोद्रव्यपर्यायान्निमित्तीकृत्य यः प्रतिभासो मनुष्यक्षेत्राभ्यन्तरवर्ति पल्योपमासं-ख्येयभागावच्छिन्नभूतभविष्यत्पुद्गलद्रव्यविशेषग्राही मनःपर्यायज्ञानसंज्ञस्तदावरणं देशघाति मनःपर्यायज्ञानावरणं, समस्तावरण-क्षयाविर्भूतमात्मप्रकाशकं समस्तद्रव्यपर्यायग्राहि केवलज्ञानं, तदाच्छादनकृत् केवलज्ञानावरणमेतच्च सर्वघातीति ॥ सम्प्रति दर्शना-वरणोत्तरप्रकृतिप्रतिपादयिषया सूत्रमाह—

चक्षुरचक्षुरवधिकेवलानां निद्रानिद्रानिद्राप्रचलाप्रचलाप्रचलास्त्यानगृद्धिवेदनीयानि च ॥ ८-८ ॥ सूत्रम् ॥

चक्षुरादयः कृतद्वन्द्वाः षष्ठ्या निर्दिष्टाः, प्रस्तुतावरणसम्बन्धात् वेदनीयसम्बन्धलिङ्गकरणप्रतिषेधश्च, दर्शनावरणप्रकृतिसामर्थ्या-च्चक्षुरादयो दर्शनशब्देन सहाभिसम्बन्ध्याः, निद्रादयः पञ्च स्त्यानगृद्ध्यन्ताः कृतद्वन्द्वाः वेदनीयशब्देन निर्दिष्टाः समानाधि-करणनिर्देशेन वा, पश्यत्यनेनेति चक्षुः, सर्वेन्द्रियानात्मनः सामान्यविशेषावबोधस्वभावस्य करणद्वारं, तद्द्वारकं च सामा-न्यमात्रोपलम्भनं चक्षुर्दर्शनं, तदुपघाति चक्षुर्दर्शनावरणं, शेषेन्द्रियमनोविषयमविशिष्टमचक्षुर्दर्शनं तदुपघाति [illegible] सामान्यमात्रालम्बनमवधिदर्शनं, केवलदर्शनमपि सामान्योपयोगलक्षणं, एतयोराव-

रभेदानां संख्याप्रदर्शनमिति। तत्र पंचभेदो ज्ञानावरणप्रकृतिबन्धः क्रमेण यावत् पंचभेदोऽन्तरायप्रकृतिबन्ध इत्येवमेतद्यथाक्रमं प्रत्येतव्यं, इतः प्रभृत्युत्तरकालं यदभिधास्याम इति। तद्यथेत्यनेन सूत्रं संबध्नाति, पंचादिभेदा ज्ञानावरणादयोऽभिहितास्तद् यथा ते व्यवस्थिता येन क्रमेण स्वरूपेण च पंचादिभेदास्तथाऽष्टावपि मूलप्रकृतयः प्रतिपदं प्रदर्श्यंत इत्याह—

मत्यादीनां ॥ ८-७ ॥ सूत्रम् ॥

मतिरादिर्येषां श्रुतावधिमनःपर्यायकेवलज्ञानानामिति, तद्गुणसंविज्ञानो बहुव्रीहिः, तानि मत्यादीनि तेषां मत्यादीनामावरणं, मत्यादीन्याव्रियन्तेऽनेनेति, अपरेऽऽपि प्रतिपदं पंचापि पठंति—मतिश्रुतावधिमनःकेवलानामिति, एवं चापार्थकमिवोपलक्ष्यते, यतोऽनन्तरसूत्रेण पंचापि भेदा ज्ञानावरणादय इत्यवधृतमेव, निर्ज्ञाताश्च स्वरूपतः प्रथमाध्याये व्याख्यातत्वादत आदिशब्द एव युक्तः, तेषां मत्यादीनां ज्ञानानां पंचैवावरणानि भवन्ति, तानि तु प्रतीतान्येव, तद्यथा—मतिज्ञानावरणं श्रुतज्ञानावरणं अवधिज्ञानावरणं मनःपर्यायज्ञानावरणं केवलज्ञानावरणमिति, तत्र आत्मनो ज्ञस्वभावस्य—प्रकाशस्वरूपस्य ज्ञानावरणक्षयोपशमक्षयसमुद्भवाः प्रकाशविशेषा मतिज्ञानादिव्यपदेशाः पर्याया बहुविकल्पाः, तत्र ज्ञानावरणस्य स्वस्थानाद्यावन्तो विकल्पाः संभवन्ति सर्वे ते ज्ञानावरणग्रहणेनैव ग्राह्या इति भाष्यार्थः, विकल्पा भेदाः, तद्यथा—इंद्रियानिन्द्रियनिमित्तत्वादवग्रहादयो मतिज्ञानस्य, अङ्गानङ्गादिविकल्पाः श्रुतज्ञानस्य, भवक्षयोपशमजप्रतिपात्यादिविकल्पाश्चावधिज्ञानस्य, ऋजुविपुलमतिविकल्पौ मनःपर्यायज्ञानस्य, सयोगायोगभवस्थादिविकल्पाः केवलज्ञानस्येति, तत्रेन्द्रियनिमित्तं श्रोत्रादिपंचकसमुद्भवं क्षयोपशमजं ज्ञानं योग्यदेशावस्थितस्वविषयग्राहि, अनिन्द्रियं तु मनोवृत्तिरोघज्ञानं च, तदेतन्मतिज्ञानमाव्रियते येन तन्मतिज्ञानावरणं, देशघाति लोचनपटलवच्चन्द्रप्र-

काशाश्रादिनद्धा, तथा श्रोत्रेन्द्रियोपलब्धिः श्रुतं, शेषेन्द्रियमनोविज्ञानं च श्रुतग्रन्थानुसारि स्वार्थाभिधानप्रत्यलं श्रुतज्ञानं, तदनेकभेदमाचक्षते प्रवचनाभिज्ञाः, यथाह—"जाणंति अक्खराइं अक्खरसंजोग जत्तिआ लोए। एवइआ पयडीओ सुअनाणे होंति नायव्वा ॥ १ ॥" तस्यावृतिः श्रुतज्ञानावरणम्, एतदपि देशघातीति, अधोगतबहुतरपुद्गलद्रव्यावधानादवधिः, पुद्गलद्रव्यमर्यादया वाऽऽत्मनः क्षयोपशमजः प्रकाशाविर्भावोऽवधिः—इन्द्रियनिरपेक्षः साक्षात् ज्ञेयग्राही लोकाकाशप्रदेशमानप्रकृतिभेदः, तदावरणमवधिज्ञानावरणमिदमपि देशघात्येव, तथाऽऽत्मनो मनोद्रव्यपर्यायान्निमित्तीकृत्य यः प्रतिभासो मनुष्यक्षेत्राभ्यन्तरवर्त्ति पल्योपमासंख्येयभागावच्छिन्नपश्चात्पुरस्कृतपुद्गलद्रव्यविशेषग्राही मनःपर्यायज्ञानसंज्ञस्तस्यावरणं देशघाति मनःपर्यायज्ञानावरणं, समस्तावरणक्षयाविर्भूतमात्मप्रकाशतत्त्वमशेषद्रव्यपर्यायग्राहि केवलज्ञानं, तदाच्छादनकृत् केवलज्ञानावरणमेतच्च सर्वघातीति ॥ सम्प्रति दर्शनावरणोत्तरप्रकृतिप्रतिपिपादयिषया सूत्रमाह—

**चक्षुरचक्षुरवधिकेवलानां निद्रानिद्रानिद्राप्रचलाप्रचलाप्रचलास्त्यानगृद्धिवेदनीयानि च ॥ ८-८ ॥ सूत्रम् ॥**

चक्षुरादयः कृतद्वन्द्वाः षष्ठ्या निर्दिष्टाः, प्रस्तुतावरणसम्बन्धात् वेदनीयसम्बन्धनिराकरणप्रतिपत्तेश्च, दर्शनावरणप्रकृतिसामर्थ्याच्चक्षुरादयो दर्शनशब्देन सहाभिसम्बन्ध्याः, निद्रादयः पंच स्त्यानगृद्ध्यन्ताः कृतद्वन्द्वाः वेदनीयशब्दोत्तरनिर्दिष्टाः समानाधिकरणप्रतिपत्त्यर्थं, पश्यत्यनेनात्मेति चक्षुः, सर्वमेवेन्द्रियमात्मनः सामान्यविशेषावबोधस्वभावस्य करणद्वारं, तद्द्वारकं च सामान्यमात्रोपलंभनमात्मपरिणतिरूपं चक्षुर्दर्शनं, तल्लब्धिघाति चक्षुर्दर्शनावरणं, शेषेन्द्रियमनोविषयमविशिष्टमचक्षुर्दर्शनं तल्लब्धिघाति अचक्षुर्दर्शनावरणं, अवधावपि प्रथमसंपाते सामान्यमात्रोपलंभनमवधिदर्शनं, केवलदर्शनमपि सामान्योपयोगलक्षणं, एतयोराव-

रणमवधिदर्शनावरणं केवलदर्शनावरणं च । स्वापो-निद्रा सुखप्रतिबोधलक्षणा वेदनीयम्-अनुभवनीयं, निद्रा चासौ वेदनीयं चेति सर्वत्र समानाधिकरणं, दुःखप्रतिबोधलक्षणा निद्रानिद्रा, उपविष्टशयनलक्षणा प्रचला, संक्रमणमाचरतः शयनं प्रचलाप्रचला, स्त्यानगृद्धिः स्त्यायतीति स्त्यानं स्तिमितचित्तो नातीव विकस्वरचेतन आत्मा स्त्यानस्य स्वापविशेषे सति गृद्धिः—आकांक्षा मांसमोदकदन्ताद्युदाहरणप्रसिद्धा, स्त्यानर्द्धिरिति वा पाठः, तदुदयाद्धि महाबलोऽर्द्धचक्रवर्त्तितुल्यबलः प्रकर्षप्राप्तो भवति,अन्यथा जघन्यमध्यमावस्थाभाजोऽपि संहननापेक्षया महत्येवेति स्त्यानस्य ऋद्धिः स्त्यानर्द्धिरिति, चशब्दःसमुच्चयवृत्तिः, दर्शनावरणभेदाश्चक्षुर्दर्शनावरणादयो निद्रावेदनीयादयश्चेति वाक्यार्थः, उक्तार्थानुगाम्येव भाष्यं—चक्षुर्दर्शनावरणमित्यादि(१६८-१०)गतार्थं, दर्शनावरणं नवभेदं भवतीत्यंते निगमितं नवभेदमेवेति॥ सम्प्रति यत्तदागमे प्रसिद्धं वेदनीयत्वेन तृतीयमूलप्रकृतिरूपं तदुत्तरप्रकृतिविवक्षया सूत्रकार आह—

सदसद्वेद्ये ॥ ८-९ ॥ सूत्रम् ॥

उत्तरप्रकृतिभेदमात्रस्य विवक्षितत्वात् प्रथमैव, सद्वेद्यमसद्वेद्यं चेति वेदनीयमूलप्रकृतेरुत्तरप्रकृतिद्वयं भवति,तत्राभिमतमिष्टमात्मनः कर्तुरुपभोक्तुर्मनुजदेवादिजन्मसु शरीरमनोद्वारेण सुखपरिणतिरूपमागंतुकानेकमनोज्ञद्रव्यक्षेत्रकालभावसम्बन्धमासादितपरिपाकावस्थमतिबहुभेदं यदुदयाद्भवति तदाचक्षते सद्वेदनीयम्, अभिहितविपरीतमसद्वेदनीयं, एवंविधार्थानुसारि च भाष्यम्—सद्वेद्यमित्यादि, सच्छब्दः प्राशस्त्ये, प्रशंसा चात्मनोऽभिमतविषयत्वं, असच्छब्दस्तद्वैपरीत्ये, चशब्द उत्तरप्रकृतिसमुच्चितौ, वेदनीयं वेद्यं, द्विभेदं-द्विप्रकार, भवतीति॥ सम्प्रति चतुर्थमूलप्रकृतेर्मोहनीयनाम्न उत्तरप्रकृतिप्रपञ्चख्यापनायाह सूत्रं—

दर्शनचारित्रमोहनीयकषायनोकषायवेदनीयाख्यास्त्रिद्विषोडशनवभेदाः सम्यग्मिथ्यात्वतदुभयानि
कषायनोकषायौ अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनविकल्पाश्चैकशः क्रोध-
मानमायालोभा हास्यरत्यरतिभयशोकजुगुप्सास्त्रीपुंनपुंसकवेदाः ॥ ८–१० ॥ सूत्रम् ॥

मोहनीयमूलप्रकृतेरष्टाविंशतिरुत्तरप्रकृतयः संग्रहभेदरूपाः सूत्रेणैव निर्दिष्टाः, मोहनीयशब्दः प्रत्येकमभिसम्बध्यते, दर्शनमोहनीयं चारित्रमोहनीयमिति संग्रहेण निर्देशः, पुनश्चारित्रमोहनीयमुत्तरभेदापेक्षया संग्रहेणैव निर्दिष्टं, तद्भेदाख्यानं तु कषायवेदनीयं नोकषायवेदनीयमिति, दर्शनमोहनीय इत्यादिका आख्या यासामुत्तरप्रकृतीनां तास्तथा निर्दिष्टाः, तासां भेदप्रतिपादनार्थमाह—त्रिद्विषोडशनवभेदा इति निर्देशक्रमेणैव त्र्यादयो भेदा यासान्तास्तथोक्ताः, दर्शनमोहनीयोत्तरप्रकृतिस्त्रिभेदा, चारित्रमोहनीयोत्तरप्रकृतिर्द्विभेदा, तौ चामू विकल्पौ—कषायवेदनीयं षोडशभेदं, नोकषायवेदनीयं नवभेदमिति, एवमेता उत्तरप्रकृतयो अष्टाविंशतिः गणिता मोहनीयमूलप्रकृतेः। अधुना त्र्यादिभेदान् सूत्रेणैव प्रतिपादयति सम्यक्त्वमिथ्यात्वतदुभयानीति, सम्यक्त्वं मिथ्यात्वं तदुभयमिति द्वन्द्वनिर्देशः, तत्त्वार्थश्रद्धानलक्षणं सम्यक्त्वं, तद्विपरीतं मिथ्यात्वं, तदुभयमिति सम्यग्मिथ्यात्वं, तत्त्वार्थश्रद्धानाश्रद्धानलक्षणं, एवमेतत् त्रिविधं दर्शनमोहनीयं सूचितं, कषायाकषायावित्यनेन चारित्रमोहनीयभेदद्वयाख्यानं, अनन्तानुबन्धिप्रभृतिकषायास्त एव मोहनीयं, अकषाया हास्यादयः केवलाः कषायसम्पर्कशून्याः स्वकार्यासमर्था इत्यकषायाः, सदैव हि कषायसंसक्ताश्चारित्रमोहनीयव्यपदेश्याः, अल्पकषायकार्यत्वादकषाया इति, तत्र कषायमोहनीयभेदप्रदर्शनार्थमाह सूत्रशकलं—अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनविकल्पाश्चैकशः क्रोधमानमायालोभा इति, अनन्तः—संसा-

रस्तमनुबध्नन्तीति तच्छीलाश्चेत्यनन्तानुबन्धिनः क्रोधादयः, अविद्यमानं प्रत्याख्यानं येषामुदये ते त्वप्रत्याख्यानाः क्रोधादयः, अपरे पुनरावरणशब्दमत्रापि सम्बध्नन्ति, अप्रत्याख्यानावरणा इति, अल्पं प्रत्याख्यानमप्रत्याख्यानं—देशविरतिः तदप्यावृण्वंति, किमुत सर्वप्रत्याख्यानमिति, मूलगुणप्रत्याख्यानविघातवर्त्तिनः प्रत्याख्यानावरणाः क्रोधादयः, स्वल्पनिमित्तप्राप्तावपि युगपत् संज्वलनाः संज्वलनाः क्रोधादयः, एवं चानन्तानुबन्ध्यादीनामेकैकशः क्रोधमानमायालोभाख्या विकल्पा भवन्ति, अनन्तानुबन्धिनः क्रोधादयः, एवमप्रत्याख्यानाः प्रत्याख्यानावरणाः संज्वलनाश्चेति, एवमेते षोडशभेदाः कषायवेदनीयाः सूचिताः, हास्येत्यादिना सूत्रावयवेन नोकषायवेदनीयमाचष्टे नवभेदम्, एतदष्टाविंशतिविधमावेदितं मोहनीयं कर्म्म सूत्रेणेति, अधुना भाष्यमनुश्रियते—त्रिद्विषोडशनवभेदा यथाक्रममित्यादि भाष्यं (१६७-७), उक्तार्थं चैतद्भाष्यं, दर्शनचारित्रकषायनोकषायप्रकृतयः क्रमेण त्रिद्विषोडशनवभेदाः, अनेनाष्टाविंशतिविधता प्रतिपादिता मोहनीयस्य, मोहनीयबन्ध इत्यादि, यथोक्तकारकप्रसिद्धो मोहशब्दः द्विप्रकारो—दर्शनमोहनीयाख्यः चारित्रमोहनीयाख्यश्च, तत्त्वार्थश्रद्धानं दर्शनं, तन्मोहनात् दर्शनमोहनीयं, प्राणातिपातादिविरतिः चारित्रं तन्मोहनात् चारित्रमोहनीयं, तत्र दर्शनमोहनीयाख्यस्त्रिभेद इत्यादि, तत्र तयोर्दर्शनचारित्रमोहनीययोर्दर्शनमोहनीयाख्यस्त्रिभेदः प्रकृतबन्धस्तावदुच्यते, तद्यथेत्यादिना, तमेव प्रदर्शयति—मिथ्यात्ववेदनीयमित्यादि, तत्र दर्शनमोहनीयत्रैविध्ये सत्यपि बन्धो भवत्येकविध एव—तत्त्वार्थाश्रद्धानलक्षणमिथ्यात्ववेदनीयस्य, न सम्यग्मोहनीयस्य, नापि सम्यग्मिथ्यात्वमोहनीयस्येति, यतो मिथ्यात्वपुद्गला एवैकरूपबद्धाः सन्तः कर्त्रात्मनोऽध्यवसायविशेषात् सर्वथा शोधिता मिथ्याभावपरिणामं त्याजिता सम्यग्मिथ्यात्वपरिणतिं वा प्रापिताः सम्यक्त्वसम्यक्त्वमिथ्यात्वव्यपदेशभाजो भवन्तीति, नत्वेवंविधा एव बध्यन्ते, दरविशुद्धास्तु

मम्यगमिथ्यात्वव्यपदेशभाज इति, यथाऽऽह–"मिथ्यात्वस्य ह्युदये जीवो विपरीतदर्शनो भवति। न च तस्मै सद्धर्म्मः स्वदते पित्तोदये घृतवत् ॥१॥ यथोक्तक्रमेण च मिथ्यात्वशुद्धौ ग्रन्थिभेदसमनन्तरं सम्यक्त्वावाप्तिः, ततश्च "सम्यक्त्वगुणेन ततो विशोधयति कर्म्म तत् मिथ्यात्वम्। यद्वच्छकृत्प्रभृतिभिः शोध्यन्ते कोद्रवा मदनाः ॥१॥ यत् सर्वथापि तत्र विशुद्धं तद्भवति कर्म्म सम्यक्त्वम्। मिश्रं तु दरविशुद्धं भवत्यशुद्धं च मिथ्यात्वं ॥ २ ॥ मदनकोद्रवास्तु त्र्यवस्थाः अविशुद्धविशुद्धदरविशुद्धा इति दृष्टान्तीकृताः मिथ्यात्वसम्यक्त्वसम्यग्मिथ्यात्वेषु, मिथ्यात्वोदयाच्च तत्त्वार्थाश्रद्धा भवति, विपरीतदृष्टित्वात्, यथाह–"ननु कोद्रवान् मदनकान् भुक्त्वा नात्मवशतां नरो याति। शुद्धादी न च मुह्यति मिश्रगुणश्चापि मिश्रादी ॥१॥" गुणगुणिनोरैक्यात्तदुदयानुगुणपरिणामवत्त्वात् पीतमद्यहत्पूरभक्षणपित्तोदयाद्याकुलीकृतान्तःकरणपुरुषवद्यथावस्थितार्थरुचिप्रतिघातकारिणा मिथ्यात्वेनान्यथैतत् प्रतिपद्यते, यथाह–"मिच्छत्ततिमिरपच्छाइअदिट्ठी रागदोससंजुत्ता। धम्मं जिणपण्णत्तं भव्वावि नरा न रोयंति ॥१॥ मिच्छादिट्ठी जीवो उवइट्ठं पवयणं न सद्दहइ। सद्दहइ असब्भावं उवइट्ठं वा अणुवइट्ठं ॥२॥ पयमक्खरं च एक्कं जो न रोएइ सुत्तनिद्दिट्ठं। सेसं रोअंतोवि हि मिच्छद्दिट्ठी मुणेअव्वो ॥३॥" सूत्रं तु प्रतिविशिष्टपुरुषप्रणीतमेव श्रद्धागोचर इति, यथोक्तम्–"अर्हत्प्रोक्तं गणधरदृब्धं प्रत्येकबुद्धदृब्धं च। स्थविरग्रथितं च तथा प्रमाणभूतं त्रिधा सूत्रम् ॥१॥ श्रुतकेवली च तस्मादधिगतदशपूर्वकश्च तौ स्थविरौ। आज्ञाकारित्वाच्च सूत्रमितरत् स्थविरदृब्धं ॥२॥" अथवा–"तं मिच्छत्तं जमसद्दहणं तच्चाण जाण भावाणं। संसइअमभिग्गहिअं अणभिग्गहियं च तं तिविहं ॥१॥" सम्प्रति सम्यक्त्ववेदनीयशुद्धपुद्गलप्रत्ययस्तत्त्वार्थश्रद्धानपरिणाम आत्मनः, स चौपशमिकादिभेदेन पंचधा प्राग् व्याख्यातः, औपशमिकसास्वादनवेदकक्षायोपशमिकक्षायिकाख्यः, तत्रोपशान्ते दर्शनमोहसप्तके भवत्यौ-

पशमिकं मदन सम्यक्त्वमन्तर्मुहूर्त्तकालानच्छिन्नं, उपशमसम्यक्त्वं हि नित्यमेवोपहन्यतेऽनन्तानुबंधिभिः, यथाह–"संयोजनोद-
यभेत् स्वादागाद्येत नाम सम्यक्त्वम्। तस्य तु विशुद्धतस्तदभावात् सम्यक्त्वमनवद्यम् ॥१॥" क्षायोपशमिकसम्यक्त्वपुद्गलचरम-
ग्रासानुभवकाले वेदकसम्यक्त्वं, उदितमिथ्यात्वपुद्गलक्षये अनुदितमिथ्यात्वोपशमे च क्षायोपशमिकमुक्तं, क्षायिकं तु निरवशेषद-
र्शनमोहक्षये भवति सम्यक्त्वं, न च विशुद्धपुद्गलक्षये तत्त्वार्थश्रद्धानलक्षणस्य परीणामस्याभावः, यथाह–"प्रक्षीणे तर्हि सम्यक्त्वे,
सम्यग्दृष्टिः कथं मतः?। क्षयो द्रव्यस्य तत्रेष्टः, परिणामस्य न क्षयः ॥ १ ॥" सम्यक्त्वमिथ्यात्ववेदनीयमधुनोच्यते, प्रथमतः
सम्यक्त्वमुत्पादयन् करणत्रयं विधायोपशमसम्यक्त्वं प्रतिपद्यते, ततो मिथ्यात्वदलिकं त्रिपुंजीत्वेन परिणमयति शुद्धमिश्राशुद्ध-
त्वेन, यथाह–"सम्यक्त्वगुणेन ततो विशोधति कर्म्म तच्च मिथ्यात्वम्। यद्वत् शकृत्प्रभृतिभिः शोध्यन्ते कोद्रवा मदनाः ॥१॥"
सम्यग्मिथ्यात्वं च तद् वेदनीयं चेत्येवं पूर्वयोरपि द्रष्टव्यं, इतिशब्दो दर्शनमोहेयत्ताप्रतिपत्तये दर्शनमोहनीयप्रकृतिबन्धमा-
ख्याय सम्प्रति चारित्रमोहप्रकृतिबन्धाचिख्यासया जगाद–चारित्रमोहनीयाख्यो द्विविध इत्यादि, द्विविकल्पश्चारित्रमो-
हनीयप्रकृतिबंधः, कषायवेदनीयं नोकषायवेदनीयं चेति, एतावद्भेदं मूलतश्चारित्रमोहनीयं, यथाक्रमं तत्स्वरूपाख्या-
नायाह–तत्रेत्यादि, तयोश्चारित्रमोहभेदयोः कषायवेदनीयाख्यस्तावदयं षोडशभेदः,तद्यथेत्यनेन भेदानावेदयते, अनन्तानु-
बन्धी क्रोध इत्यादि, अनन्तः संसारो नारकतिर्यक्मनुजदेवजन्मजरामरणपरंपरालक्षणः तदनुबन्धादनन्तानुबंधिनः संयोजनाश्च
क्रोधामानमायालोभाः, तत्र क्रोधः–अप्रीतिलक्षणः, मानो गर्वः, माया–शाठ्यं, लोभो गार्द्ध्यं, तृष्णेत्यनर्थान्तरम्, आह च–"संयो-
जयंति यन्नरमनन्तसंख्यैर्भवैः कषायास्ते। संयोजनादनन्तानुबंधिता वाप्यतस्तेषां ॥१॥" अनन्तानुबंधिनां च तावत् पर्वतराजिशैल-

स्तम्भधनवंशमूलकृमिलाक्षारागोदाहरणानि, एवमप्रत्याख्यानावरणकषायश्चतुर्द्धा क्रोधादिभेदेनेत्यतिदिश्यते, प्रत्याख्यानं द्विविधं –सर्वविरतिलक्षणं देशविरतिलक्षणं च, तत्र देशविरतिलक्षणमल्पं तदावरणकषायः–प्रत्याख्यानावरणकषायः, सामर्थ्यादपिशब्दः ममुष्यार्थो लभ्यते, ये० स्वल्पमावृण्वंति प्रत्याख्यानं ते सर्वविरतिलक्षणमावृण्वंत्येवेति नास्ति चित्रं, कषाय इति जातिविवक्षाया-मेकवचननिर्देशः, आह च–"आवृण्वंति प्रत्याख्यानं स्वल्पमपि येन जीवस्य। तेनाप्रत्याख्यानावरणास्ते निर्विशेषोक्त्या ॥१॥ नञ् हि अत्र अल्पार्थः उपमानार्थो वा, तेन प्रत्याख्यानावरणवदप्रत्याख्यानावरणः, यथोक्तं–"प्रत्याख्यानावरणसदृशत्वाद्वा तत्तथा भवति सिद्धम्। यच्चब्राह्मणवचने तत्सदृशः पुरुष एवेष्टः ॥१॥" एषामुदये सम्यक्त्वलाभः, सर्वदेशविरतिलक्षणं तु प्रत्याख्यानं नास्ति। प्रत्याख्यानावरणकषाय इति तथैवातिदेशः, प्रत्याख्यानशब्देनात्र सर्वविरतिपरिग्रहः, तदावरणाः प्रत्याख्यानावरणाः, प्रतिशब्दः प्रतिषेधवचनः, प्रतिषेधस्याख्यानं–प्रकाशनमाचार्यादिसन्निधौ भावतः सर्वान् प्राणिनो न हन्मि यावज्जीवमित्यादि प्रत्याख्यानं, तदेवंप्रकारं स्थगयतीति प्रत्याख्यानावरणः, यथाह–"सर्वप्रत्याख्यानं येनावृण्वंति तदभिलपतोऽपि। तेन प्रत्याख्यानावरणास्ते निर्विशेषोक्त्या ॥१॥" प्रत्याख्यानपरीणामजन्मविघातकारित्वात् प्रत्याख्यानावरणाः,नतु सत एव प्रत्याख्यानस्येति वाक्यार्थः, तथा चाहुः पूज्याः–"नासंतस्सावरणं ण मतोऽभवादिविरमणपसंगा। पच्चक्खाणावरणा तम्हा तस्संभवावरणा ॥१॥ उदये विरतिपरिणई न होइ जेसिं खयाइओ होइ। पच्चक्खाणावरणा ते इह जह केवलावरणं ॥२॥" एतदुदयवर्त्तिनश्च द्वादशविधगृहधर्मावाप्तिः, यथाह–"श्रावकधर्मो द्वादशभेदः संजायते ततस्तस्य। पंचत्रिचतुःसंख्यो व्रतगुणशिक्षामयः शुद्धः ॥१॥" संज्वलनकषायस्वरूपाख्यानायाह–संज्वलनकषाय इति, समस्तपापस्थानविरतिभाजमपि यतिं दुःसहपरीषहसंपाते युगपत् संज्व-

लयंतीति संज्वलनाः,यथाह–"संज्वलयंति यतिं यत् संविग्नं सर्वपापविरतमिति । तस्मात् संज्वलना इत्यप्रशमकरा निरुच्यंते ॥१॥" इतिशब्दः कषायवेदनीयेयत्ताभाह, 'एकश' इति एकैकस्य अप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनकषायस्य क्रोधादयो भेदाश्चत्वारश्चत्वार इति, तत्र अप्रत्याख्यानक्रोधाद्युदाहरणानि भूराज्यस्थिमेषशृंगकर्दमरागाः प्रत्याख्यानावरणक्रोधादेः रेणुराजिकाष्ठगोमूत्रमार्गखञ्जनरागाः संज्वलनक्रोधादेः जलराशितिनिसलतावलेहहरिद्रारागाः, एवमेते षोडश भेदाः कषायवेदनीयस्येति । प्रस्तावप्राप्तं नोकषायवेदनीयमुच्यते, नोकषायवेदनीयं नवभेदमिति कषायैकदेशत्वात् कषायविशेषत्वाद्वा नोकषायाः–हास्यादयः, मिश्रार्थो वा नोशब्दः, कषायसहवृत्तय एते स्वकार्यनिर्वर्त्तनप्रत्यलाः, न ह्यमीषां पृथक् सामर्थ्यमस्ति, यद्दोषश्च यः कषायस्तत्सहचारिणः एतेऽपि तत्तद्दोषा एव भवंति, एतदुक्तं भवति–अनन्तानुबन्ध्यादिसहचरितास्तत्स्वभावका एव जायंते, तस्मादेतेऽपि चरणोपघातकारित्वात् तत्तुल्यतयैव ग्राह्याः, तथा अन्येनाप्यवाचि–"कषायसहवर्त्तित्वात्, कषायप्रेरणादपि । हास्यादिनवकस्योक्ता, नोकषायकषायता॥१॥"तच्चथेत्यनेन नवापि नोकषायान् स्वरूपेणाख्यातुमुपक्रमते,तत्र हास्यनोकषायमोहोदयात् सनिमित्तमनिमित्तं वा हसति–स्मयते रंगावतीर्णनटवत्, रतिमोहोदयाद् बाह्याभ्यंतरेषु रतिः–प्रीतिः आसक्तिः इष्टेषु वा शब्दादिविषयेषु, अरतिमोहोदयादेतेष्वेवाप्रीतिररतिः, शोकमोहोदयात् परिवेदते हंति च स्वमस्तकाद्यवयवान् निःश्वसिति रोदिति स्तनति लोटते भुवः पीठ इत्यादि, भयमोहोदयाद् त्रसत्युद्विजते वेपत इत्यादि, जुगुप्सामोहनीयोदयात् शुभाशुभद्रव्यविषयं व्यलीकमुपजायत इत्यादि, पुरुषवेदमोहोदयादनेकाकारासु स्त्रीष्वभिलाष आम्रफलाभिलाष इवोद्रिक्तश्लेष्मणः, तथा 'संकल्पजास्वपी'त्यादि,स्त्रीवेदमोहोदयात् नानाकारेषु पुरुषेष्वभिलाषः, संकल्पजेषु चेत्यादि, नपुंसकवेदमोहो बहुभेदः, तदुदयाद् कस्यचित् स्त्रीपुरुषद्वयविषयोऽप्यभिलाषः

किल प्रादुर्भवति,धातुद्वयोदये मार्जितादिद्रव्याभिलाषवत्,कस्यचित्तु पुरुषेष्वेवाभिलाषः संकल्पजनित एवानेकरूप इत्यादि,इतिकरणो नोकषायवेद्यताप्रदर्शनार्थः, उक्तमेवमेतन्नोकषायवेदनीयं नवप्रकारम्। एषां पुरुषादिवेदानां त्रयाणामपि तीव्रादिपरिणामसंसिद्ध्यर्थं दृष्टान्तानाविश्चिकीर्षुराह–तत्रेत्यादि,पुरुषवेदादीनामिति क्रमनियममाचष्टे,तृणादयः कृतद्वन्द्वाः,प्रत्येकमग्निशब्देन सहाभिसम्बध्यंते, निदर्शनानि दर्श्यन्त इति–दृष्टान्ता भवन्ति, एतानि च कृतसन्निवेशक्रमात्, तत्र पुरुषवेदमोहोऽग्नेर्भृशं ज्वलतः समासादितप्रतिक्रियस्य आशु प्रशमो जायते, समादीपिततृणपूलकस्येव नातीवस्थास्नुरनुबन्धः, स्त्रीवेदजातवेदसस्तु बहुतरकालावस्थायिनः संभापणस्पर्शनेन्धनाभिवर्द्धितस्य चिराय प्रशमो जायते, दृढतरखादिरादिकाष्ठप्रवृद्धज्वालाकलापज्वलनस्येव, नपुंसकवेदमहामोहसप्तार्चिषस्तु समासादितोदयस्य महानगरदाहदहनतुल्यस्य कारीषकृशानोरिवान्तर्दिशि जृम्भमाणदीप्ततरकणनिकरस्य बहुतरकालेनास्य प्रशमो भवति, सम्प्रत्युपसंहरति–एवमित्यादि, उक्तेन प्रकारेण द्वित्रिषोडशनवभेदलक्षणेनाष्टाविंशतिभेदमुक्तं मोहनीयं ॥ सम्प्रति अनन्तानुबंध्यादिकषायाणामुदयेऽयमात्मा सम्यक्त्वादिसामायिकानां क किं लभते किं वा न लभत इति प्रतिपिपादयिषुराह–अनन्तानुबन्धीत्यादि (१७०–२) अनन्तानुबन्धिकषायोदयः सम्यग्दर्शनमुपहन्ति, तद्विधपरिणामोत्पादमेव निरुणद्धीत्यर्थः, एतदेव स्पष्टयति–तस्योदयात् सम्यग्दर्शनं नोत्पद्यते, प्रागवाप्तमपि प्रतिपततीति, अप्रत्याख्यानेत्यादि,सर्वदेशलक्षणाया विरतेरभावः, प्रत्याख्यानेत्यादि,देशविरतिर्भवति, उत्तमचारित्रं–सर्वस्मात् प्राणातिपाताद् विरमामि इत्येवंरूपं तस्य लाभो न भवतीति, तुशब्दोऽवधारणार्थः, न जातुचिदेव भवतीति, संज्वलनेत्यादि, संज्वलनकषायोदये त्वकषायचारित्रलाभो नास्ति, पूर्वोद्दिष्टसामायिकेभ्योऽनन्तरमथाख्यातं–क्रियाविशेषः, अथाख्यातचारित्रं साक्षादनन्तरं कारणं मुक्तेरिति, यथाख्यातचारित्रं वा येन प्रकारेण

यथा भगवद्भिराख्यातमकषायं चारित्रं भवतीति, सर्वे वा कषायाः संसारे हिंडयंति जीवमिति काक्वा प्रतिपादयति, यतस्तेषामुदये प्रतिविशिष्टज्ञानक्रियावाप्तिरेव न समस्तीति, उपशान्तक्षीणकषायस्य हि यथाख्यातमिष्यते, तत्राप्युपशान्तकषायस्य कदाचित् पातोऽपि विशुद्धिस्थानात् कुश्चिन्निमित्तात् शक्यते, क्षीणकषायस्य तु नास्ति प्रतिघातः, शास्त्रे पर्यायशब्दैरपि क्रोधादिकषायाणां व्यवहारोऽस्तीत्यतस्तत्प्रदर्शनं-क्रोध इत्यादि, (१७०-८) क्रोधः-अप्रीतिः, कोपनं कोपः—पूर्वावस्थातोऽन्यथा परिणामः, रोषणं रोषः तत्परिणमनारूपितत्त्वादात्मनः, द्वेषनं द्वेषः तत्परिणामस्य वचनद्वारेण प्रदर्शनात्, कायद्वारेण निर्देशात् भण्डनं कलहः, भाम इति क्रोधविशेषः ईर्ष्यालक्षणः, एवमादयः शब्दाः क्रोधार्थप्रतिपादकत्वादेकार्थाभिधायित्वादनर्थान्तरमिति। अधुनाऽनन्तानुबन्ध्यादिभेदस्यैकैकस्य क्रोधादेस्तीव्रादिभावप्रदर्शनार्थं निदर्शनान्याह भाष्यकारः-तद्यथेत्यादिना (१७०-११) चतुर्णामपि क्रमेणानन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनानां क्रोधमानमायालोभानामेकैकस्य चतुर्विधत्वं दर्शयति, पर्वतराजीसदृशः पर्वतः पाषाणपुंजस्तदेकदेशोऽप्युपचाराच्छिलाविभागः पर्वतः तत्र राजी-भिदा पर्वतराजी तया सदृशः पर्वतराजीसदृशः, शिलायां राजी उत्पन्ना यावच्छिला तावदवतिष्ठते, न च तस्याः सन्धानमस्ति, एवमनन्तानुबंधी क्रोधः समुत्पन्नो भवापेक्षया यावत्तत्र जीवति तावदप्यनुवर्त्तते, न तस्यास्त्युपसंहरणोपायः, तदनु मरणाच्च भूयसा नरकगतिः, अप्रत्याख्यानस्तु भूमिराजीसदृशः संवत्सरमात्रकालानुबंधी, भूमौ हि राज्युत्पन्ना वर्षास्ववश्यंतया सा निधनमायातीति क्रोधोऽप्येवमुत्पन्नो वर्षाभ्यन्तरेऽवश्यमेव प्रशाम्यतीति। प्रत्याख्यानावरणस्तु वालुकाराजीसदृशः, वालिकायां हि राजी उत्पन्ना प्रकंपतः चतुर्मासाभ्यन्तरे भूयः संधत्ते, क्रोधोऽप्येवं प्रत्याख्यानावरणश्चतुर्मासाभ्यन्तरं नियमेनोपशाम्यतीति। संज्वलनक्रोधाग्निरुत्पन्नः पाक्षिकप्रतिक्रमणकाले

प्रशांतो विध्यापयतीति उदकराजीसदृश इति समाख्यायते, अस्य चोदकराजीसादृश्यात् पक्षमात्रकालसूचनं विज्ञेयं, तत्र पर्यन्त-
राजीसदृशो नामेत्यादिना ग्रन्थेनोदाहरणानि भावयति, प्रयोगः-पुरुषव्यापारः, विश्रसा-स्वभावः, विमिश्रकग्रहणादुभयप-
रिग्रहः, पुरुषव्यापारस्वभावाभ्यां इति, एषां त्रयाणामन्यतमेन हेतुनेति सम्बन्धः, सम्प्रति क्रोधोत्पत्तेः निमित्तमाख्याति-
'इष्टार्थवियोजनादनिष्टार्थसंयोजनादभिलषितालाभादि'त्यादीनां कारणानामन्यतमेन हेतुना यस्योत्पन्नः क्रोध इत्यादि, भवान्तर-
मप्यनुबध्नाति, निरनुनयः इत्यनुनयः-परचाटुकरणादिक्रिया तदभावान्निरनुनयः, अप्रत्यवमर्श इत्यविद्यमानपश्चात्तापपरिणामः,
शेषं गतार्थं, भूमिराजीसदृशो नामेत्यादि अप्रत्याख्यानकषायानाश्रित्योच्यते,आत्तस्नेहाया इति गृहीतापीतस्नेहायाः वायुना
चाभ्याहताया इत्यनेकं कारणं भूमिराजेरावेदयति, जघन्येनाष्टमासस्थितिरुत्कर्षेण वर्षस्थितिरिति, एवं यथोक्तनिमित्त इत्या-
दिना दृष्टान्तेन दार्ष्टान्तिकमर्थं समीकरोतीति सुज्ञानं,वालिकाराजीसदृशानामित्यादि सुज्ञानं,जघन्येनाहोरात्रमुत्कर्षेण संवत्स-
रपरिमाणोऽपीति शेषं गतार्थं, उदकराजीसदृशो नामेत्यादि, प्रायः सुज्ञानं, विदुष इति क्रोधपरिणामाभिज्ञस्य, पश्चात्तापः
प्रत्यवमर्शः दुष्टं कृतमित्यादिकः, शेषं सुज्ञानं, येषामित्यादि, अनन्तानुबन्ध्यादिचतुर्विधक्रोधक्षपणान् मुक्तिरवश्यंभाविनीति,
सम्प्रति मानचातुर्विध्यप्रदर्शनायाह—मान इत्यादि (१७१-१८) सर्वदाऽऽत्मपूजाकांक्षित्वान्मानः, स्तम्भनात् स्तम्भोऽवनते-
रभावात्, गर्वो जात्यादिः, उत्सेको ज्ञानादिभिराधिक्येऽभिमानः आत्मनः, अहंकारो अहमेव रूपसौभाग्यादिसम्पन्न इति, दर्पो
बलकृत इति, मद्यादिमदवदनालापदर्शनान्मदः, परोपहसनप्रायत्वात् स्मयः, सर्वे एते मानविशेषा इत्येतेऽनर्थान्तरमिति । क्रोध-
स्येवास्यापि तीव्रादिभावदर्शनायाह-तस्यास्येत्यादि, तस्येति पूर्वोद्दिष्टस्यास्येति पर्यायभेदेन निर्दिष्टस्य, आदिग्रहणान्मन्दो, मध्य-

मस्वभावः आत्मनः परिणतिविशेषः,अनन्तानुबन्ध्यादिषु क्रमेण शैलस्तम्भसदृश इत्याद्युदाहरणानि योज्यानि,एषामित्यादिना अतिदिशति, उपसंहार उपनयः, यथा शैलस्तम्भस्तथा अनन्तानुबन्धीत्यादिक्रमेण, तस्मात् कुतश्चिन्निमित्तादुत्पन्नो मान आमरणान्न व्ययं गच्छति, जात्यन्तरानुबन्धी निरनुनयोऽप्रत्यवमर्षश्च भवति शैलस्तम्भसदृशः, तादृशं मानमनुसृता नरकेषूपपत्तिं प्राप्नुवन्तीति निगमनग्रन्थः, चशब्दः समुच्चितौ, एवमस्थिस्तम्भसदृश इत्यादिष्वपि यथायोगमुपनयनिगमने वक्तव्ये, माया प्रणिधिरित्यादि (१७२–३) मीयतेऽनया जन्तोस्तिर्यग्योनादिजन्मेति माया, प्रणिधिर्व्रतपरिणताद्यासक्तिः, प्रणिधानं बाह्यचेष्टयोगधीयते छाद्यत इत्युपधिः–अन्यथापरिणामः चित्तस्य, निष्क्रियतेऽनया परः परिभूयत इति निकृतिः, आचर्यते–निगम्यते भक्ष्यते वा परस्तयोपायभूतयेत्याचरणं, तथा वृकमार्जारगृहकोकिलादयः प्रसिद्धाः, परे विप्रलभ्यंते यया सा वंचना, दंभनं दंभोवेषवचनाद्यनुमेयः, कुटचते–दह्यते अमुना परः परिणामांतरेणेति कूटं,सत्त्वग्रहणयंत्रं वा कूटं तद्वद् यः परिणामः, अतिसंधीयतेऽनेन पर इत्यतिसन्धानं, अतीवानुप्रविश्य सन्गनं–अन्तरंगताप्रदर्शनं, ततो विनाशः, ऋजोर्भाव आर्जवं तद्विपरीतमनार्जवं कायमनोवक्रता, इतिशब्द एवार्थे, एवमेतान्येकार्थाभिधायीनि नामानीति। तस्या इति गतार्थं, वंशकुडङ्गसदृशीत्यादि (१७२–५) वंशकुडंगो–वंशमूलं अतिकुटिलमृजुकर्त्तुमशक्यमुपायशतेनापि,शेषा गतार्था प्रायः,निर्लेखनं-वर्धनयवलेखनीधारोल्लिखितं तत्तु कुटिलं, अत्रापीत्यादि (१७२-६) गतार्थं, लोभो राग इत्यादि (१७२-८) लुभ्यत्यनेन जीव इति लोभः, आत्मरंजनाद्रागः, आप्तेषु वस्तुषु गार्द्ध्यमभिरक्षणादिकार्यं गृद्धिलक्षणं, इच्छा–अभिलापः त्रैलोक्यविषय', मूर्च्छा प्रकर्षप्राप्ता मोहवृद्धिः,स्निह्यतेऽनेनेति स्नेहः पुत्रपत्न्यादिषु प्रीतिविशेषः, भविष्यत्कालोपादानविषया कांक्षा,अभिष्वङ्गो बाह्याभ्यन्तरोपकरणविषयाभिमुखः, संगः सक्तिः, शेषं

एवम्, लाक्षारागसदृश इत्यादि, अनन्तानुबन्ध्यादयः क्रमेण योज्याः, शेषं गतार्थं, एषां क्रोधादीनामित्यादि,(१७२-१२) प्रकृतानुपयोगित्वादनन्वय इवायं लक्ष्यते ग्रन्थः, मोहनीयोत्तरप्रकृतिस्वरूपाख्यानमारब्धं, तत्र क्रोधादिप्रत्यनीकाः क्षमादयः इति कः प्रस्तावः ?, उच्यते, मोहनीयप्रधानानि कर्म्माणि सर्वदेशोपघातद्वारेण जन्तोर्नरकादिभवप्रपंचप्रापणे विजृम्भंते, मोहस्तत्र तावत्कषायजनितः, कषायवशाद्धि स्थितिबन्धस्थितिविशेषः सर्वदुःखावाप्तिश्च, यथोक्तम्—"जं अइदुक्खं लोए जं च सुहं उत्तमं तिहुअणम्मि। तं जाण कसायाणं वुड्ढिक्खयहेउअं सव्वं ॥१॥" अतस्तत्संवरणोपायभूताः क्षमादयो भाष्यकारेणोपन्यस्ताः, सततमेतेऽभ्यसनीयाः कर्म्मणां लाघवमिच्छता मुमुक्षुणा, भाष्यं गतार्थं प्रायः, प्रत्यनीकाः शत्रव उच्यन्ते पुरुषाः, भूतशब्दः उपमानार्थः, शत्रव इवोच्छेदनसाधर्म्यात्, एतदेव स्पष्टयति—प्रतिघातहेतवो भवन्तीति, अत्र च मिथ्यादर्शनमाद्यकषायाश्च द्वादश सर्वघातिन्यः प्रकृतयः, संज्वलना नोकषायाश्च देशघातिन्यः। ननु च सूचनात् सूत्रमिति लघु विधेयं सूत्रं, तच्चैवं भवति—दर्शनचारित्रमोहनीयकषायनोकषायवेदनीयाख्यास्त्रिद्विषोडशनवभेदाः, इत्येवं विवक्षितार्थसंग्रहः स्यात्, तत्रेदमुक्तं 'दुर्व्याख्यानो गरीयांश्च, मोहो भवति बन्धनः। न तत्र लाघवादीष्टं, सूत्रकारेण दुर्वचा॥१॥'मिति। सम्प्रति क्रमप्राप्तस्यायुष्ककर्मणश्चत्वार्युत्तरप्रकृतिस्वरूपाण्यभिधित्सुराह—

नारकतैर्यग्योनमानुषदैवानि ॥ ८-११ ॥ सूत्रम् ॥

नारकादीनि कृतद्वन्द्वानि प्रथमाबहुवचनेन निर्दिष्टानि, यस्योदयात् प्रायोग्यप्रकृतिविशेषानुसहायीभूत आत्मा नारकादिभावेन जीवति यस्य च क्षयात् मृत उच्यते तदायुः, आह च—"स्वानुरूपाश्रवोपात्तं, पौद्गलं द्रव्यमात्मना। जीवितं यत्तदायुष्कमुत्पादापस्य जीवति ॥१॥" आयुषश्चान्नादयः उपग्राहकाः प्रथमयद्वस्येति, तस्यैवंभूतस्य कर्मण उत्तरप्रकृतिचतुष्टयं वर्ण्यते, आयुष्कं

चतुर्भेदमित्यादि (१७२–१६) भाष्यं, आनीयंते शेषप्रकृतयस्तस्मिन्नुपभोगाय जीवेनेत्यायुः शाल्योदनादिव्यंजनविकल्पा इव कांस्यपात्र्याधाराः भोक्तुः परिकल्प्यंते, आनीयते वा तेन तद्भवान्तर्भावी प्रकृतिगण इत्यायुः रज्जुबद्धेक्षुयष्टिभारकवत्, आयतते वा शरीरधारणप्रतिबन्ध इत्यायुः निगडादिवत्, आयुरेवायुष्कं, चतुर्गतित्वात् संसारस्य चतुर्भेदं, तद्भेदप्रदर्शनार्थमाह—नारकमित्यादि। तत्र नरका–उत्पत्तियातनास्थानानि पृथिवीपरिणतिविशेषाः तत्सम्बन्धिनः सत्त्वा अपि तास्थ्यान्नरकाःतेषामिदमायुर्नारकं, तिर्यग्योनयः एकद्वित्रिचतुःपंचेन्द्रियास्तेषामिदं तैर्यग्योनं, मनुष्याः संमूर्छनगर्भजास्तेषामिदं मानुषं, देवानां भवनवास्यादीनामिदं दैवं, इतिशब्दः आयुःप्रकृतीयत्ताप्रतिपत्तये ॥ सम्प्रति नामकर्मोत्तरप्रकृतिभेदख्यापनायाह—

गतिजातिशरीरांगोपांगनिर्माणबन्धनसंघातसंस्थानसंहननस्पर्शरसगंधवर्णानुपुर्व्यगुरुलघूपघातपराघातातपोद्योतोच्छ्वासविहायोगतयः प्रत्येकशरीरसुभगशुभसूक्ष्मसुस्वरपर्याप्तस्थिरादेययशांसि सेतराणि तीर्थकृत्त्वं च ॥ ८–१२ ॥ सूत्रम् ॥

प्रागुद्दिष्टा द्विचत्वारिंशत् पिण्डभेदा नामकर्म्मणस्तत्प्रतिपादनार्थं सूत्रं, नमयति—परिणमयति प्रापयति नारकादिभवांतराणि जीवमिति नाम, अथवा जीवप्रदेशसम्बन्धिपुद्गलद्रव्यविपाकसामर्थ्याद्यक्षार्थसंज्ञं, प्रह्वयति नमयतीति नाम, यथा शुक्लादिगुणोपेतद्रव्येषु चित्रपटादिव्यपदेशप्रवृत्तिर्नियतसंज्ञाहेतुरिति, तत्र गतिनाम चतुर्विधं, जातिनाम पंचविधं, शरीरनाम पंचधा, अंगोपांगनाम त्रिविधं, निर्माणनामैकधा, संस्थाननाम षोढा, संहनननाम षोढा, स्पर्शरसगन्धवर्णनामैकैकविधं, आनुपूर्वीनाम चतुर्विधं, अगुरुलघुनामैकधा, उपघातपरिघातआतपउद्योतउच्छ्वासनामान्येकैकधानि, विहायोगतिनाम द्विविधं, प्रत्येकशरीर-

त्यादि, एकं प्रथममिन्द्रियं जातिः-सामान्यं तदेव नाम, एवं द्वीन्द्रियजातिनामादिचतुष्टयमपि वाच्यं, एकेन्द्रियजातिनामकर्मोदयात् एकेन्द्रिय इति व्यपदिश्यते, एकेन्द्रियसंज्ञाव्यपदेशनिमित्तं एकेन्द्रियजातिरिति सामान्यं, पृथिव्यादिभेदेष्वन्वयित्वात्, एकेन्द्रियजातिनामान्तरेणैकेन्द्रियसंज्ञाया अभाव एव स्यात्, एकेन्द्रियादिजातयोऽपि पिण्डप्रकृतय एव, पृथिवीकायिकादिभेदापेक्षया, तद्यथेत्यादिना निर्दिशति, पृथिवीकायिकजातिनाम, पृथिव्येव कायः २ स एषामस्ति ते पृथिवीकायिकाः तेषां जातिः तदेव नाम पृथिवीकायिकजातिनाम, पृथिवीकायिकजातिनामकर्मोदयात् पृथिवीकायिकव्यपदेशः, एवं शेषाणि, तत्र पृथिवीकायिकजातिनामानेकविधं अनेन पुनरपि पृथिवीकायिकजातिनाम्नः पिण्डप्रकृतित्वं दर्शयति, तद्यथेत्यादि निर्दिशति, शुद्धपृथवीत्यादिना निर्दिशति। उपक्लेदः-हरतनुकः भूमेर्निर्गत्य तृणाग्रादिस्थितः, शेषा गतार्था भेदाः। तेजस्कायिकादि गतार्थं सर्वं, एवं द्वित्रिचतुःपंचेन्द्रियनामानि शंखशुक्तिकाद्युपदिकापिपीलिकादिभ्रमरसरटादितिर्यङ्मनुष्यादिभेदेन वाच्यानां।

शरीरनामोत्तरप्रकृतयः पंच, तत्प्रतिपादनायाह-शरीरनामेत्यादि, (१७५-५) असारस्थूलवर्गणानिर्मापितमौदारिकशरीरं, तत्प्रायोग्यपुद्गलग्रहणकारणं यत् कर्म्म तदौदारिकशरीरनामोच्यते, विचित्रशक्तिकद्रव्यनिर्मापितं वैक्रियं तद्योग्यपुद्गलादानकारणं यत्तत् कर्म्म तद्वैक्रियशरीरनामाभिधीयते, कारणे कार्योपचारात्, प्रयोजनप्रसाधनायाऽऽह्रियत इत्याहारकं शरीरं, शेषं पूर्ववत्, तेजोगुणद्रव्यारब्धमुष्णगुणमाहारपरिपाचनक्षमं तैजःशरीरं,शेषं पूर्ववत्, कुण्डमिव बदरादीनामशेषकर्म्माधारभूतं समस्तकर्म्मप्रसवनसमर्थमंकुरादीनां बीजमिव कार्मणं शरीरं,इयं चोत्तरप्रकृतिः शरीरनामकर्मणः पृथगेव कर्माष्टकात् समुदयभूतादिति। अंगोपांगेत्यादि,अंगानि उपांगानि(अंगोपांगानि) च यस्य कर्मण उदयान्निर्वर्त्यन्ते तदंगोपांगनाम, त्रिविधमौदारिकवैक्रियाहारकभेदात्,तत्रां-

गान्यष्टावुरशिरः पृष्ठमुदरं करौ पादौ च, उपांगानि स्पर्शनमस्तिष्कादीनि, अष्टानामंगानामेकैकस्योपाङ्गमनेकप्रकारं, तत्र शिरोद्रव्यमधिकृत्य प्रत्यंगानि भाष्यकृत् पपाठ-मस्तिष्कं-मस्तुलुंगः शिरोंगस्यारंभकोऽवयवस्तथा कपालादयः स्पर्शनादयश्च,ननु च धातुमध्ये अधीतं मस्तिष्कं नांगं न प्रत्यङ्गमिति, कपालादिवत् आरम्भकत्वात् मस्तिष्कमपि उपांगं शिरसोऽवसेयं, एवमुरःप्रभृत्यंगानामप्येकैकस्य वाच्यान्युपांगानि, ज्वलनजलानिलवसुधावनस्पतिवर्जजीवेषु संभवंति, जातिलिंगाकृतिव्यवस्थानियामकं निर्माणनाम(१७५-१५)जातिरेकेन्द्रियादिलक्षणा पंचधोक्ता तस्यां जातौ लिंगव्यवस्थां आकृतिव्यवस्थां तां नियमयति यत् लिंगं स्त्रियाः पुंसो नपुंसकस्य च यदसाधारण आकारः आकृतिरवयवरचना तां च निर्मापयति निर्माणं एतदुच्यते, एतदुक्तं भवति-सर्वजीवानामात्मीयात्मीयावयवविन्यासनियमकारणं निर्माणं कलाकौशलोपेतवर्द्धकिवत्। सत्यां प्राप्तावित्यादि,शरीरनामकर्मोदयाद् गृहीतेषु गृह्यमाणेषु वा तद्योग्यपुद्गलेष्वात्मप्रदेशस्थितेषु शरीराकारेण परिणमितेष्वपि परस्परमवियोगलक्षणं यदि बंधननाम काष्ठजतुवत् न स्यात् तस्मात्ततो वालुकापुरुषवद्विघटेरन् शरीराणि, तदेतेन भाष्येण प्रतिपादितं, औदारिकादिभेदाच्च पंचधा, न चेदं प्रकृत्यन्तरं नामकर्म्मणः, संघातप्रकृतिस्वरूपनिरूपणायेदमाह बद्धानामपि चेत्यादि, बद्धानामपि च पुद्गलानां परस्परं जतुकाष्ठन्यायेन पुद्गलरचनाविशेषः संघातः,संयोगेनात्मना गृहीतानां पुद्गलानां यस्य कर्म्मण उदयादौदारिकादितनुविशेषरचना भवति तत् संघातनामकर्म्म, पुद्गलरचनाकारेण विपच्यत इति पुद्गलविपाकीत्युच्यते, तच्चौदारिकादिभेदात् पंचधा, परस्परविभिन्नलेप्यकरचनाविशेषवच्छरीरपरिणाम एवेत्युपलक्ष्यते, स चैवंविधः कर्म्मभेदो यदि न स्यात् ततः प्रत्यक्षप्रमाणविनिश्चेयः पुरुषयोषिद्गवादिलक्षणो नानाशरीरभेदो नैव संभाव्येत, संघातविशेषकर्म्माभावात्, कारणानुविधायि च कार्यं लोके प्रतीतं, संघातविशेषादेव हि

पुरुषस्त्र्यादि वा शरीरलक्षणो विभागेन व्यपदेशः, अपिशब्दः संभावनार्थः, सत्येव बन्धननाम्नि न स्याद्विशेषः, संघातविशेषजनकं प्रचयविशेषात् संघातनाम संघातविशेषस्य जनकमिति शेषलक्षणा षष्ठीति नास्ति समासप्रतिषेधः, स तु प्रतिपदविहितायाः षष्ठ्याः प्रतिषेधः, प्रचयविशेषादिति,प्रचयविशेषात् पुद्गलानां विन्यासः पुरुषस्त्रीशरीरादिकस्तत्सङ्घातनामकर्मनिमित्तकः, यन्निमित्तकश्च विन्यासः तत् संघातनाम,तत् प्रसिद्धोदाहरणेन भावयन्नाह–दारुमृत्पिंडायःपिंडसंघातवदिति, बन्धानुलोम्याद्यः–पिण्डग्रहणं कृतं, दारुमृदयःपिंडवदिति दुरुच्चरं स्यात्, अथोदारुमृत्पिंडवदिति किं न कृतं ?, अपूतिवचनाः खल्वाचार्याः सकृद्विधाय न निरर्त्तते,दारुपिंडवत्मृत्पिण्डवदयःपिण्डवच्चेति दृष्टान्तत्रयं,सुलभत्वात् प्रतिपत्तुश्चातिशायिकप्रबोधहेतुत्वात् ,दार्वयवसंघातो दारुपिण्डः, एवं मृदवयवसंघातो मृत्पिंडः, तथाऽयसोऽवयवानां संघातोऽयःपिण्डः, एवमौदारिकादिशरीरयोग्यपुद्गलाश्चेतनेनात्मसात्कृताः संघातनामकर्म्मोदयात् परस्परं संहताः सन्निष्ठन्ति इति ॥

संस्थाननामस्वरूपाख्यानायाह–संस्थाननाम षड्विधं इति (१७५–१२) संस्थितिः संस्थानमाकारविशेषः, तच्चेह बद्धसंहतेषु संस्थानविशेषो यस्य कर्म्मण उदयाद्भवति तत् संस्थाननाम, षट्प्रकारं, तद्यथेत्यनेन षडपि नामग्राहमाचष्टे,समचतुरश्रनामेत्यादि, समं च तच्चतुरस्रं चेति समचतुरस्रं, यतस्तत्र मानोन्मानप्रमाणमन्यूनाधिकमंगोपांगानि चाधिकृतावयवानि, अथ ऊर्ध्वं तिर्यक् च तुल्यं, स्वांगुलाष्टशतोच्छ्रायांगोपांगयुक्तं युक्तिनिर्मितलेप्यकवद्वा । न्यग्रोधपरिमण्डलनाम्नस्तु नाभेरुपरि सर्वावयवाः समचतुरश्रसंस्थानलक्षणाविसंवादिनः अधस्तात् पुनरुपरितनभागानुरूपास्तस्य नावयवा इति, अत एव न्यग्रोधपरिमण्डलं तदुच्यते, न्यग्रोधाकृतित्वात् ,न्यग्रोधपरिमण्डलमुपरि विशालाकारत्वादिति,सादिनामस्वरूपं तु नाभेरधः सर्वावयवाः समचतुरस्रलक्षणाविसंवादिन उप-

रितनभागाः पुनर्नाधोऽनुरूपा इति, सादीति शाल्मलीतरुमाचक्षते प्रवचनवेदिनः, तस्य हि स्कन्धो द्राघीयानुपरि तु न तदनुरूपा विशालतेति, कुब्जनामस्वरूपं तु पुनः कन्धरायाः उपरि हस्तपादं च समचतुरस्रलक्षणयुक्तं संक्षिप्तं विकृति मध्यकोष्ठं च कुब्जं, वामननाम तु लक्षणयुक्तकोष्ठं ग्रीवाद्युपरि हस्तपादयोश्च न्यूनलक्षणं वामनं, हुण्डसंस्थानं तु यत्र पादाद्यवयवा यथोक्तप्रमाणविसंवादिनः प्रायस्तद् हुण्डसंस्थानमिति, तथा चोक्तं—"तुल्लं वित्थडबहुलं उस्सेहबहुं च मडह कोट्ठं च। हेट्ठिल्ल काय मडहं सव्वत्थ असंठिअं हुंडं ॥१॥" संहनननाम षड्विधमित्यादि (९७६-२) अत्र पूर्ववद् व्याख्या, तद्यथेत्यादिना षण्णामपि स्वरूपमाविर्भावयति, वज्रर्षभनाराचमित्यादि, अस्थ्नां बन्धविशेषः संहननं, ऋषभः—पट्टः वज्रं—कीलिका मर्कटबन्धस्थानीया उभयपार्श्वयोरस्थिबन्धः किल नाराचः, वज्रर्षभनाराचा यत्र संहनने तद्वज्रर्षभनाराचसंहननं, अस्थ्ना बंधविशेष इति, अर्द्धवज्रर्षभनाराचनाम तु वज्रर्षभनाराचानामर्द्धं किल सर्वेषां च, वज्रस्यार्द्धमृषभस्यार्द्धं नाराचस्यार्द्धमिति भाष्यकारमतं, कर्म्मप्रकृतिग्रन्थेषु वज्रर्षभनाराचनामैव पट्टहीनं पठितं, किमत्र तत्त्वमिति सम्पूर्णानुयोगधारिणः संविद्रते, अर्द्धग्रहणाद् वा ऋषभहीनं व्याख्येयं, नाराचनाम्नि तु मर्कटबंध एव केवलो, न कीलिका, न पट्टः, अर्द्धनाराचनामनि तु एकपार्श्वे मर्कटबन्धः द्वितीयपार्श्वे तु कीलिकैवामर्कटबंधा, अत्रापि कर्मप्रकृतौ नास्थिकीलिका, पंचमं कीलिकानाम—विना मर्कटबन्धेनास्थ्नोर्मध्ये कीलिकामात्रं, सृपाटिकानाम कोटिद्वयसंगते यत्रास्थिनी चर्मस्नायुमांसावनद्धे तत्सृपाटिका नाम कीर्त्यते, सृपाटिका—फलकसंपुटं, यथा तत्र फलककानि परस्पर स्पर्शमात्रवृत्त्या वर्त्तन्ते एवमस्थीन्यत्र संहनने, तदेवमेतान्येवंविधास्थिसंघातलक्षणानि संहनननामान्यौदारिकशरीर एव संहन्यंते, लोहपट्टनाराचकीलिकाप्रतिबद्धकपाटवदिति ॥

स्पर्शनामाष्टविधमित्यादि, औदारिकादिशरीरेषु यस्य कर्म्मण उदयात् कठिनादिः स्पर्शविशेषः समुपजायते तत् स्पर्शनामाष्टविधं, भेदानामष्टतां प्रतिपादयन्नाह—कठिननामादीति, कर्कशमृदुगुरुलघुस्निग्धरूक्षशीतोष्णनामानि, स्वस्थाने त्वनेकभेदत्वमेषां प्रकर्षाप्रकर्षजनितं, रसनामानेकविधं तिक्तनामादि तिक्तकटुकषायाम्लमधुरलवणाख्यं, लवणो मधुरान्तर्गत इत्येके, अनेकविधग्रहणं तिक्ताद्यन्तर्भेदप्रतिपदनार्थं, एवमन्यत्राप्यंतर्भेदा वाच्याः, गन्धनामानेकविधं सुरभिगन्धनामादि शरीरविषयं सौरभं दुर्गन्धित्वं च यस्य कर्म्मणो विपाकान्निर्वर्त्तते तद्गन्धनाम, अपरे साधारणं गन्धमाहुस्तदसत्, सुरभिणा दुरभिगन्धिना वा भवितव्यं, न साधारणः कश्चिदस्तीति, वर्णनामानेकविधं कालनामादि यस्योदयाच्छरीरे कृष्णादिपंचविधवर्णनिष्पत्तिर्भवति तद्वर्णनाम, कृष्णनीललोहितपीतशुक्लभेदं, सर्वाणि चैतानि स्पर्शनामादीनि वर्णनामान्तानि शरीरवर्त्तिषु पुद्गलेषु विपच्यन्त इति। आनुपूर्वीनामस्वरूपनिरूपणायाह—गताद्युत्पत्तुकामस्येत्यादि, गम्यतेऽसाविति गतिः—नरकाद्युत्पत्तिस्थानं, तच्च गतिनामकर्मोदयादवाप्यते, तस्यां गताद्युत्पत्तिमिच्छतः कर्म्मसामर्थ्यादात्मनः अन्तर्गतौ वर्त्तमानस्येति, मनुष्यः तिर्यग्जातिर्वा पशुर्यावदुत्पत्तिस्थानं न प्राप्नोति तावदन्तरगतिषु वर्त्तमानस्य कस्यचिज्जन्मवत आनुपूर्वीनामकर्मोदयो भवति, आनुपूर्वी च क्षेत्रसन्निवेशक्रमः, 'अनुश्रेणि गतिर्जीवानां पुद्गलानां चे'ति वचनात्, तत्र यत्कर्म्मोदयादतिशयेन तद्गमनानुगुण्यं स्यात् तदप्यानुपूर्वीशब्दवाच्यं भवति, तत्तु आत्मनो गत्यन्तरं गच्छत उपग्रहे वर्त्तते, अनिमिषस्येव पयः, सा चान्तरगतिर्द्विधैव—ऋज्वी वक्रा च, तत्र यदा ऋज्व्या गत्या गच्छति समयप्रमाणया तदा पूर्वकमेवायुरनुभवन्ननुदितानुपूर्वीनामकर्म्मैवोत्पत्तिस्थानं प्राप्तः पुरस्कृतमायुरासादयति, वक्रगत्या पुनः प्रवृत्तः कूर्परलाङ्गलगोमूत्रिकालक्षणया द्वित्रिचतुःसमयमानया तदारंभकाले पुरस्कृतमायुरादत्ते,

तदैव चानुपूर्वीनामाप्युदेति, ननु च यथैव गतावृज्व्या विना नामकर्मणोत्पत्तिस्थानमियर्ति तद्वद्वक्रगत्यामपि कस्मात् नोत्पद्यते ?, तदभिऋज्व्या पूर्वकायुर्व्यापारेणैव गच्छति, यत्र तु पूर्वकमायुः क्षीण तत्र तस्योदय इत्यध्वयष्टिस्थानीयस्यानुपूर्वीनामकर्म्मणः, तदभिमुखमानुपूर्वीत्यादि, तदित्यनेन विवक्षितगतिरभिसम्बध्यते, यस्या मृत उत्पत्स्यते तस्यामभिमुखमनुकूलमानुपूर्व्या–प्रतिविशिष्टदेशक्रमेण तत्प्रापणसमर्थमिति वक्ष्यति, तदभिमुखमित्यनेनाभिमुख्यमात्रं प्रतिपादितं, भूयस्तत्प्रापणसमर्थमित्यनेनानुपूर्वीनामकर्म्मणः कार्यमादर्शयति, एतदुदितं–तद्गतिप्रापणे समर्थ–प्रत्यलं, आनुपूर्वीनामकर्म्माग्रेसर, नरकगत्यानुपूर्वीनामादि चतुर्विधं भवतीति, मतान्तरप्रदर्शनायाह निर्माणनिर्मितानामित्यादि, निर्माणनामकर्म्मणा निर्मितानां–घटिताना शरीरावयवानामंगानां बाहूरूदरादीना उपांगानां चाङ्गुलीकर्णनासिकाना विनिवेशक्रमनियामकं रचना विनिवेशः तस्य क्रमः–परिपाटी उभयपार्श्वतो बाहू कटेरधो जानुनोश्चोपर्युपरि, एवमन्यत्रापि वाच्यः क्रमः, तस्य नियामकं–नियमकारि, अनेनाङ्गोपाङ्गेन चात्रैव स्थाने विनिवेष्टव्यमित्येनमानुपूर्वीनामापरे प्रवचनवृद्धाः कथयंतीति।

अगुरुलघुप्रकृतिनिर्द्धारणायाह–अगुरुलघ्वित्यादि (१७६–१०) परिणामत्रयस्यात्र निषेधो विवक्षितो, गुरुत्वलघुत्वगुरुलघुत्वाख्यस्य, यस्य कर्म्मण उदयात् सर्वजीवानामिह कुन्थ्वादीना आत्मीयात्मीयशरीराणि न गुरूणि न लघूनि न गुरुलघूनि, किं तर्हि ?, अगुरुलघुपरिणाममेवावरुन्धंति तत् कर्म्मागुरुलघुशब्देनोच्यते, सर्वद्रव्याण्येव च परिणमन्ते स्थित्यादिनाऽनेकेन स्वभावेनेति जैनः सिद्धान्तः,तत्रागुरुलघ्वाख्यो यः परिणामस्तस्य नियामक, तदेतत् तत्रोद्भूततरशक्तिकं निधत्त इत्यगुरुलघुनाम, सर्वशरीराणि निश्चयनयवृत्त्या न गुरुत्वादिव्यपदेशभाजि, व्यवहारनयात्वन्यान्यापेक्षया त्रैविध्यमवरुध्यंते, यथोक्तम्–"णिच्छयओ सव्वगुरुं सव्व-

लगं वा न विज्जए दवं। ववहारओ उ जुज्जइ बायरखंधेसु णण्णेसु ॥१॥" उपघातनामस्वरूपाख्यानायाह–शरीरांगोपांगोपघातकमिति, शरीरांगानामुपांगानां च यथोक्तानां यस्य कर्म्मण उदयात् परैरनेकधोपघातः क्रियते तदुपघातनाम, मतान्तरं च वाशब्देन प्रतिपादयति, स्वपराक्रमविजयाद्युपघातजनकं वा केचिदेवमुपघातनाम व्याचक्षते सूरयः, पराक्रमः प्राणिवीर्यं स्वो निजः पराक्रमः स्वपराक्रमः तस्योपघातं जनयति, समर्थवपुषोऽपि निर्वीर्यतामापादयति, स्वविषयं चोपहन्ति, विजितेऽप्यन्यस्मिन् नैर विजित इत्यव्यपदेशहेतुतां प्रतिपद्यत इति, आदिग्रहणादन्यदपि यदद्भुतं कर्म्म तत्तस्योदयेनोपहन्यत इति। पराघातस्वरूपं निरूपयति–परत्रासेत्यादि, यस्य कर्म्मण उदयात् कश्चिद्दर्शनमात्रेणैवौजस्वी वाक्सौष्ठवेन चाऽन्यसभामप्यभिगतः सभ्यानामपि त्रासमापादयति, आकर्षणं परप्रतिघातं वा करोति तत् पराघातनाम, आदिग्रहणात् संक्षोभदृष्टिगतिस्तम्भनपरिग्रहः। आतपनामस्वरूपनिरूपणायाह—आतपसामर्थ्यजनकमिति, आतपतीत्यातपः, कर्त्तर्यच्, आतप्यतेऽनेनेति आतपः, पुंसि संज्ञायां घः, तस्यातपस्य सामर्थ्यं–शक्तिरतिशयो येन कर्म्मणोदितेन जन्यते तदातपनाम, आङो मर्यादावचनत्वात्, सहस्रांशुमण्डलपृथ्वीकायपरिणाम एव तद्विपच्यते। उद्योतनामस्वरूपप्ररूपणायाह–प्रकाशसामर्थ्यजनकमुद्योतनामेति, उद्योतजनकमुद्योतः–प्रकाशोऽनुष्णः खद्योतकादिप्रभावतः, मणिचन्द्रग्रहतारामण्डलासंभवी, यस्मादग्नेरुष्णः स्पर्शो लोहितं रूपम्, अतः प्रकाशस्य सामर्थ्यमतिशयं जनयति तदुद्योतनाम। उच्छ्वासनामस्वरूपं आचष्टे–प्राणापानेत्यादि, ऊर्ध्वगामी समीरणः प्राणः अधोगतिरपानः, तौ च मूर्त्तौ पुद्गलकावित्यत आह–पुद्गलग्रहणसामर्थ्यजनकमिति, प्राणापानावनंतप्रदेशस्कन्धपुद्गलपरिणामजन्यौ तद्योग्यपुद्गलानां ग्रहणम्–आदानं तस्य सामर्थ्यमतिशयं जनयति यत्तदुच्छ्वासनाम, यस्योदयादुच्छ्वासनिःश्वासौ भवत इति। विहा-

योगतिस्वरूपप्रतिपादनायाह–लब्धिशिक्षेत्यादि,(१७६-१४) विहायः–आकाशं तत्र गतिर्विहायोगतिः,सा द्विधा-शुभा च अशुभा च,तत्र प्रशस्ता हंसगजवृषादीनां,अप्रशस्ता तूष्ट्रखरशृगालादीनां,तत्र लब्धिर्देवादीनां देशोत्पत्त्यविनाभाविनी,शिक्षया ऋद्धिः शिक्षर्द्धिः तपस्विनां प्रवचनमधीयानानां विद्याधानर्त्तनप्रभावाद्वा आकाशगमनस्य, लब्धिशिक्षर्द्धिहेतोर्जनकं विहायोगतिनामेति ॥

प्रत्येकशरीरनामनिर्द्धारणार्थमाह–पृथक्शरीरनिर्वर्त्तकमित्यादि(१७६-१६) यस्य कर्म्मण उदयादेकैको जीवः प्रति प्रत्येकैकं शरीरं निर्वर्त्तयति तत् प्रत्येकनामैकद्वित्रिचतुःपंचेन्द्रियविषयं, यथा प्रत्येकवनस्पतिजीवो मूलस्कन्धशाखाप्रशाखात्वक्पत्रपुष्पफलादिषु पृथक् पृथक् शरीरं निर्वर्त्तयति तथा द्वीन्द्रियादयोऽपीति । साधारणशरीरनामाद्या बादरनामपर्यवसाना एकादश प्रकृतीः क्रमेण व्याचष्टे,अनेकजीवेत्यादि,अनेकशब्देनानन्तसंख्याग्रहणं, अनन्तानां जीवानामेकं शरीरं साधारणं किशलयनिगोदथोहरिवज्जिप्रभृति, यथैकजीवस्य परिभोगस्तथाऽनेकस्यापि तदभिन्नं यद्यस्य कर्म्मण उदयान्निर्वर्त्त्यते तत् साधारणशरीरनाम, तथा त्रसभावनिर्वर्त्तकं त्रसनाम, त्रस्यन्तीति त्रसाः–द्वित्रिचतुःपंचेन्द्रियलक्षणाः प्राणिनः, यस्मात्तस्य कर्म्मण उदयात्तेषु परिस्पन्दोऽञ्जसा लक्ष्यते स तादृशो गमनादिक्रियाविशेषो यस्य कर्म्मण उदयाद्भवति तत्त्रसत्वनिर्वर्त्तकं त्रसनाम, तदुदय एव गत्यादिक्रिया भवतीति नावधार्यते, गमनं तु तदुदयात् स्वभावाच्च,तदुदयाद्द्वीन्द्रियादीनां स्वभावात् परमाणुतेजोवाय्वादीनामिति,कमलिनीखण्डादेर्देशान्तरगमनश्रवणाद् व्यभिचार इति चेत् तन्न, अधिष्ठातृव्यन्तरानुग्रहादिति, स्थावरभावनिर्वर्त्तकं स्थावरनाम, स्थानशीलं स्थावरं तद्भावः स्थावरत्वं तत् निर्वर्त्तयति यत् पृथिव्यम्बुवनस्पत्यादिलक्षणं तत् स्थावरनामकर्म्म,स्थानशीलत्वं तु स्थावरनामकर्म्मोदयादेव पृथिव्यम्बुवनस्पतीनां,परमार्थतस्तु स्थावरनामकर्म्मोदयात् स्थावरत्वं,परिस्पन्दो भवतु मा वा भूद्, एवं च तेजोवाय्वोरपि स्थावरत्व-

सिद्धिः कर्म्मोदयादेवेति, सौभाग्यनिर्वर्त्तकं सुभगनाम, कमनीयः सुभगो—मनःप्रियः तद्भावः सौभाग्यं तस्य निर्वर्त्तकं—जनकं सुभगनाम, दौर्भाग्यनिर्वर्त्तकं दुर्भगनाम सौभाग्यविपरीतलक्षणं, दौर्भाग्यं नामानिष्टो मनसो योऽप्रियः दुर्भगस्तद्भावो दौर्भाग्यं यस्य कर्म्मण उदयादिति, सौस्वर्यनिर्वर्त्तकं सुस्वरनाम, येन स्वरितेनाकर्णितेन च भूयसां प्रीतिरुत्पद्यते तत् सुस्वरनाम, तद्विपरीतं दुःस्वरनाम, यत्तु श्रूयमाणं दुःखम्वभाव इति तद् दुःस्वरं नामेति, शुभभावशोभामंगल्यनिर्वर्त्तकं शुभनाम शुभो भावः पूजित उत्तमाङ्गादिस्तज्जनिता या शोभा पूजा पुरस्कारः शिरसा पादादिस्पर्शनं मंगल्यमिति पवित्रं तन्निर्वर्त्तकं शुभनामेति तद्विपरीतनिर्वर्त्तकमशुभनाम, शरीरावयवानामेव हि शुभाशुभता ग्राह्या, यथा पदेन स्पृष्टः क्रुध्यतीति, सूक्ष्मशरीरनिर्वर्त्तकं सूक्ष्मनाम सूक्ष्मं—श्लक्ष्णं अदृश्यं नियतमेव यस्य कर्मण उदयाद्भवति शरीरं पृथिव्यादीनां केषांचिदेव तत् सूक्ष्मशरीरनाम, बादरं—स्थूलं केषांचिज्जीवानां यस्य कर्म्मण उदयात् स्थूलशरीरता भवति तद् बादरनामेति, न तु चक्षुर्ग्राह्यतां प्रतीत्यापेक्ष्य वा सूक्ष्मबादरतेति ॥

पर्याप्तस्थिरादेययशसां सप्रतिपक्षाणां स्वरूपनिरूपणाय उपक्रम्यते—पर्याप्तिः पंचविधेत्यादि (१७७-४) पुद्गलरूपा आत्मनः कर्तुः करणविशेषः येन कर्मविशेषेणाहारादिग्रहणसामर्थ्यमात्मनो निष्पद्यते, तच्च करणं यैः पुद्गलैर्निर्वर्त्यते ते पुद्गला आत्मनाऽऽत्तास्तथाविधपरिणतिभाजः पर्याप्तिशब्देनोच्यन्ते, सामान्येनोद्दिष्टां पर्याप्तिं नामग्राहं विशेषेण निर्दिदिक्षुराह—तद्यथेत्यादि, आहारग्रहणसमर्थकरणनिष्पत्तिराहारपर्याप्तिः, शरीरकरणनिष्पत्तिः शरीरपर्याप्तिः, इन्द्रियकरणनिष्पत्तिरिन्द्रियपर्याप्तिः, प्राणापानौ-उच्छ्वासनिःश्वासौ तद्योग्यकरणनिष्पत्तिः प्राणापानपर्याप्तिः, भाषायोग्यपुद्गलग्रहणविसर्गसमर्थकरणनिष्पत्तिर्भाषापर्याप्तिः, यथोक्तम् —"आहारसरीरिंदिय ऊसासवओमणोऽभिनिवित्ती । होंति जओ दलिआओ करणं पइ सा उ पज्जत्ती ॥१॥" इतिशब्दः इयत्ता-

प्रतिपादनार्थः, ननु च षड् पर्याप्तयः पारमर्षप्रवचनप्रसिद्धाः, कथं पंचसङ्ख्याका इति, उच्यते, इन्द्रियपर्याप्तिग्रहणादिह मनःपर्याप्तेरपि ग्रहणमवसेयं, अतः पंचैवेति निश्चयः, ननु च शास्त्रकारेणानिन्द्रियमुक्तं मनः कथमिन्द्रियग्रहणाद् ग्रहीष्यते ?, उच्यते, यथा शब्दादिविषयग्राहीणि साक्षाच्चक्षुरादीनि न तथा मनः सुखादीनां पुन साक्षाद्ग्राहकमतो न सम्पूर्णमिन्द्रियमित्यनिन्द्रियमुक्तमिन्द्रिय(द्र)लिंगत्वात्तु भवत्येवेन्द्रियमिति, तथा केचिदाचार्याः पृथग्मनःपर्याप्तिग्रहणमधीयत इत्युपरिष्टादभिधास्यते, यच्चात्रधारणं पञ्चैवेति तद् बाह्यकरणापेक्षया, मनः पुनरन्तःकरणमतः पृथक् पठन्तीति न कश्चिद्दोषः, उभयथापि मनःपर्याप्तिसम्भव इति। पर्याप्तिः परिनिष्पत्तिर्नियथितक्रियापरिसमाप्तिरात्मनस्तैजसकार्मणशरीरभाज एवौदारिकादिशरीरप्रेप्सया प्रथमत एवोत्पत्तावेताश्चिन्त्यन्ते, जन्मान्तरग्रहणकाल इत्यर्थः, युगपच्चारब्धाः षडपि क्रमेण निष्पद्यन्ते, न समकम्, उत्तरोत्तरपर्याप्तीनां बहुतरकालत्वात्, क्रमश्चासौ–आहारशरीरेन्द्रियप्राणापानवचनमनोलक्षणः,तत्राहारपर्याप्तिस्वरूपनिरूपणायाह–तत्रेत्यादि, शरीरस्येन्द्रियाणां वाचो मनसः प्राणापानयोश्चागमप्रसिद्धवर्गणाक्रमेण यानि योग्यानि दलिकद्रव्याणि तेषां आहरणक्रिया ग्रहणम्–आदानं तस्याः परिसमाप्तिराहारपर्याप्तिः करणविशेषः, अत्र च मनोग्रहणात् परिस्फुटमिन्द्रियग्रहणेन मनसोऽप्युपादानमिति, सामान्येन गृहीतस्य योग्यपुद्गलसंघातस्य शरीराङ्गोपाङ्गतया संस्थापनक्रिया–विरचनक्रिया तस्याः परिसमाप्तिः शरीरपर्याप्तिः,संस्थापनशब्दार्थप्रकारान् पर्यायशब्दैरावेदयति–संस्थापनं रचना घटनमित्यर्थः, शरीरवर्गणायोग्यपुद्गलानां प्रतिनियताऽवयवरचनेत्यर्थः, त्वगादीन्द्रियनिर्वर्त्तनक्रियापरिसमाप्तिरिन्द्रियपर्याप्तिः त्वगिति स्पर्शनेन्द्रियं तदादीन्द्रियं स्पर्शरसनाघ्राणचक्षुःश्रोत्रमनो लक्षणं तत्स्वरूपनिर्वर्त्तनक्रियापरिसमाप्तिरिन्द्रियपर्याप्तिः, प्राणापानक्रियायोग्यद्रव्यग्रहणनिसर्गशक्तिनिर्वर्त्तनक्रिया-

परिसमाप्तिः प्राणापानपर्याप्तिः प्राणापानावुच्छ्वासनिश्वासक्रियालक्षणौ तयोर्वर्गणाक्रमेण योग्यद्रव्यग्रहणनिसर्गशक्तिः— सामर्थ्यं तन्निर्वर्त्तनक्रियापरिसमाप्तिः प्राणापानपर्याप्तिः, भाषायोग्यद्रव्यग्रहणनिसर्गशक्तिनिर्वर्त्तनक्रियापरिसमाप्ति-र्भाषापर्याप्तिः अत्रापि वर्गणाक्रमेणैव भाषायोग्यद्रव्याणां ग्रहनिसर्गौ तद्विषया शक्तिः—सामर्थ्यं तन्निर्वर्त्तनक्रियापरिसमाप्ति-र्भाषापर्याप्तिरिति, मनस्त्वयोग्यद्रव्यग्रहणनिसर्गशक्तिनिर्वर्त्तनक्रियापरिसमाप्तिर्मनःपर्याप्तिरित्येके मनस्त्वयोग्या-नीति मनोवर्गणायोग्यानि—मनःपरिणामप्रत्यलानि यानि द्रव्याणि तेषां ग्रहणनिसर्गसामर्थ्यस्य निर्वर्त्तनक्रियापरिसमाप्तिः मनःप-र्याप्तिरिति, एके त्वाचार्या भेदेन मनःपर्याप्तिमुपाददते, न इन्द्रियपर्याप्तिग्रहणेन गृह्णते, इन्द्रियपर्याप्तिव्यतिरेकेण पठन्तीत्यर्थः, न पुनः मनःपर्याप्तिं केचिदिच्छंति केचिन्नेति, आसामित्यादिना (१७७-१४) षडपि पर्याप्तयः समकमारब्धाः क्रमेण परि-समाप्तिमासादयन्तीति दर्शयति, किं पुनः कारणं वैषम्येण परिनिष्ठायामित्याह—उत्तरोत्तरसूक्ष्मतरत्वादिति, आहारपर्याप्तेः शरीरपर्याप्तिः सूक्ष्मतरा, बहुतरसूक्ष्मद्रव्यनिचयघटिता, ततोऽपीन्द्रियपर्याप्तिः सूक्ष्मतरा, तस्या अपि प्राणापानपर्याप्ति , ततो वाक्पर्याप्तिः, ततश्च मनःपर्याप्तिः सुसूक्ष्मेति, तच्चोत्तरोत्तरसूक्ष्मत्वं दृष्टान्तेन दर्शयति सूत्रदार्वादिकर्त्तनघटनवदिति, स्थूल-सूत्रकर्तिका सूक्ष्मसूत्रकर्तिका च, ते कर्त्तनं युगपदारभेते, तत्र स्थूलसूत्रकर्तिकातः सूक्ष्म सूत्रकर्तिका चिराय कुकुटकं पूरयति,इतरा त्वाशु परिसमापयति, दारुघटनेऽप्येष एव क्रमः, स्तम्भादीनां स्थूलरूपनिर्वर्त्तनं समचतुरस्रादि स्वल्पेन कालेन क्रियते, स एव स्तम्भः कुट्टिमपुत्रच्छेद्यपुत्रिकासंघाटकयुक्तिश्चिरेण निष्पद्यते, तुल्यकालेऽपि प्रारम्भे, आदिशब्दाच्चित्रपुस्तलेप्यकादिपरिग्रहः, यथासंख्यं च निदर्शनानीति, अनेन षण्णामपि पर्याप्तीनां क्रमेण षड्भिरेव दृष्टान्तैः स्वरूपमुपक्रम्यते, अतो दृष्टान्तस्वरूपप्रति-

पादनायाह–गृहदलिकग्रहणेत्यादि,तत्र गृहदलिकग्रहणेनाहारपर्याप्तिं साधयति, गृहं कर्त्तव्यमिति सामान्येन दलिकमादत्ते शाखादिकाष्ठं, ततः सामान्योपात्ते दलिके अत्र स्तम्भः स्थूणा वा भविष्यतीति निरूप्यते, एवमनेकपुद्गलग्रहणे सत्यत्रामी शरीरवर्गणायोग्याः पुद्गलाः शरीरपर्याप्तिनिष्पादनक्षमा इति शरीरपर्याप्तिः, भित्त्याद्युच्छ्रायरूपगृहालोचनायामपि सत्यां कतिद्वारमिदं प्राङ्मुखमुदङ्मुखं वा प्रवेशनिर्गमनार्थमालोच्यते, तथेन्द्रियपर्याप्तिरप्यात्मन उपभोगवृत्त्या प्रवेशनिर्गमद्वारस्थानीयेति, एवं प्राणापानभाषापर्याप्ती अपि एतेनैव निदर्शनेन साध्ये, दार्ष्टान्तिकभेदात्तु दृष्टान्तभेदः, तत सद्वारकेऽपि निष्पन्ने सद्मनि अत्रासनमत्र भुजिभूमिरिति स्थानशयनादिनिर्वर्त्तनमालोचयंति गेहिनः, तद्वन्मनःपर्याप्तिरपि हिताहितप्राप्तिपरिहारोपेक्षालक्षणेति। एवमेताः षट् पर्याप्तीर्निर्वर्त्तयति तत्कर्म्म पर्याप्तिनाम, आपाकप्रक्षिप्तनिर्वृत्तघटवत, अपर्याप्तिनाम तु अनिष्पन्नघटवदिति, एतदुक्तं भवति– यस्योदयेन पर्याप्तयो नामादयन्ति परिपूर्त्तितः अपर्याप्त एव म्रियते कदाचिद्विनापि भवति यथा मूर्च्छनजमनुष्यादिरिति ॥

स्थिरत्वनिर्वर्त्तकं स्थिरनाम (१७७–१९) यस्योदयात् शरीरावयवानां स्थिरता भवति शिरोऽस्थिदन्तानां तत् स्थिरनाम, अस्थिरनामापि शरीरावयवानामेव, यदुदयादस्थिरता चलता मृदुता भवति कर्णत्वगादीनां तदस्थिरनामेति, तदेतद्विपरीतमस्थिरनामेत्यनेन प्रतिपादितं,आदेयभावनिर्वर्त्तकमादेयनाम गृहीतवाक्यत्वादादरोपजननहेतुतां प्रतिपद्यते उदयावलिकाप्रविष्टं सत्, एतदुक्तं भवति–यस्यादेयनामकर्म्मोदयस्तेनोक्तं प्रमाणीक्रियते यत्किंचिदपि, दर्शनसमनन्तरमेव चाभ्युत्थानादि लोकः समाचरतीत्येवंविधविपाकमादेयनामेति, विपरीतमनादेयनाम युक्तियुक्तमपि वचनं यदुदयान्न प्रमाणयति लोकः,न चाभ्युत्थानाद्यर्हणमर्हस्यापि कुर्वन्ति तदनादेयनामेति, अथवा आदेयता श्रद्धेयता दर्शनादेव यस्य भवति, स च शरीरगुणो यस्य विपाकाद् भवति

तदादेयनाम, एतद्विपरीतमनादेयनामेति, यशोनिर्वर्त्तकं यशोनाम यशः प्रख्यातिः कीर्तिः लोके गुणोत्कीर्त्तना प्रशंसा यदुदयात् तद्यशोनाम, विपरीतमयशोनाम, दोषविषया प्रख्यातिरयशोनामेति ॥

तीर्थंकरत्वनिर्वर्त्तकं तीर्थकरनाम यस्य कर्म्मण उदयात्तीर्थं दर्शनज्ञानचरणलक्षणं प्रवर्त्तयति यतिगृहस्थधर्म्मं च कथयति आक्षेपविक्षेपसंवेगनिर्वेदद्वारेण भव्यजनसंसिद्धये सुरासुरमनुजपतिपूजितश्च भवति तत्तीर्थकरनामेति ॥ नामकर्म्मभेदानाख्याय नामशब्दनिर्वचनमाचष्टे शब्दार्थप्रतीतये–नांस्तान् भावान्नामयति नाम, तांस्तानिति गतिजात्यादीन् नमयति–अभिमुखीकरोति संसारिणः प्रापयतीति नामोच्यते, एवमित्यादिनोपसंहरति नामकर्म्मप्रकृतिवक्तव्यं, उक्तेन प्रकारेण सोत्तरभेदः गतिश्चतुर्द्धा जातिः पंचप्रकारेत्यादिः अन्तरप्रकृतिभेदः सह तेन नामकर्म्मभेदोऽनेकविधोऽवसेय इति ॥ सम्प्रति प्रकृतिबन्धं गोत्रस्याख्यातुमुपक्रमते—

उच्चैर्नीचैश्च ॥ ८–१३ ॥ सूत्रम् ॥

यदुदयाज्जीवो गच्छत्युच्चैर्नीचैश्च जातीरुच्चावचाः, तद् गोत्रं द्विविधमुच्चैर्नीचैश्चेति, उच्चैर्गोत्रं नीचैर्गोत्रं, चशब्दोऽवधारणार्थः द्विप्रकारमेवेति, तत्रोच्चैर्गोत्रमित्यादि (१७८–७) गोत्रकर्म्मणः कार्यमावेदयते, कार्यलिंगं हि कारणं, तयोर्द्वयोः प्रकृत्योर्यदुच्चैर्गोत्रं तस्येदं कार्यमिति दर्शयति, आर्यदेशे मगधांगवंगकलिंगादिके संभवः, जातिः पितुरन्वयो हरिवंशेक्ष्वाकुप्रभृतिः, कुलं मातुरन्वयः, सोऽप्येवंप्रकारः, अथवोग्रभोजादिलक्षणः, स्थानमिति प्रभोः समीपे प्रत्यासन्ननिवेशित्वं, मानः पूजा स्वहस्तेन ताम्बूलप्रदानादिः, सत्कारोऽभ्युत्थानासनांजलिप्रग्रहादिर्यस्य क्रियते तस्याप्युच्चैर्गोत्रोदयः ऐश्वर्यमिभाश्वरथपदातिप्रभृतेः प्रभूत्यमुत्कर्षापकर्षभाक् तदनेकविधं, एषां देशादिसंभवानां निर्वर्त्तकमुच्चैर्गोत्रं, विपरीतं नीचैर्गोत्रमिति, चण्डालाः प्रसिद्धा एव

मातंगाः, चण्डालग्रहणं च प्रदर्शनं बहूनां वरुंडरुमुरुक्कादीनां मौष्टिकाः–सौकरिकादयः व्याधा–मृगयवो लुब्धकाः–मत्स्यबन्धाः प्राणातिपातहेतुभिरन्यायादिभिर्जीवंति ये, दासभावो दास्यं तन्निर्वर्त्तकं नीचैर्गोत्रमिति, आदिशब्दादवस्करशोधकादिपरिग्रह इति। अष्टमप्रकृतेर्बन्धस्वरूपनिरूपणायाह—

दानादीनां ॥ ८–१४ ॥ सूत्रम् ॥

तत्र दानादीनामिति षष्ठी प्रकृतिविशिष्टसम्बन्धापेक्षा, प्रस्तुतश्चांतरायो मूलप्रकृतिबन्धे तेनाभिसम्बन्धनायाह–अन्तरायः पंचविध इति, तच्चेत्थं (१७८–११) त्यनेन पंचविधतां दर्शयति, दानस्येत्यादि, दानं–देयं, सत्यपि द्रव्ये न ददाति, तद्धि कर्मोदितं दीयमानस्य कर्मणो विघ्नम्–अन्तरायं अन्तर्द्धानं करोतीति दानान्तरायं, द्रव्ये प्रतिग्राहके च सन्निहितेऽप्यस्मै दत्तं महाफलमिति जानानोऽपि दातव्यं न ददाति, एवं लाभभोगपरिभोगवीर्यान्तरायेष्वपि योज्यं, तथा कश्चिद् वदान्यः सर्वदा दानार्द्रकरः समस्तार्थिभ्यो यथाप्रार्थनं स्वशक्त्या निर्विशेषं ऊर्जितचेता यस्मै याचितेऽपि नो विसृजति प्रदेयमल्पतरमपि तस्य लाभान्तरायकर्मोदयः, तथा सकृदुपभुज्य यत् त्यज्यते पुनरुपभोगाक्षमं माल्यचन्दनागुरुप्रभृति तत् सम्भवदपि यस्य कर्म्मण उदयाद्यो न भुंक्ते तस्यान्तरायकर्म्मोदयः, स्त्रीवस्त्रशयनासनभाजनादिक उपभोगः, पुनः पुनरुपभुज्यते हि सः, पौनःपुण्यं चोपशब्दार्थः, स सम्भवन्नपि यस्य कर्मण उदयान्न परिभुज्यते तत् कर्म्मोपभोगान्तरायाख्यं, वीर्यमुत्साहश्चेष्टा शक्तिरिति पर्यायाः, तत्र कस्यचित् कल्पस्याप्युपचितवपुषोऽपि यूनोऽप्यल्पप्राणता यस्य उदयात् स वीर्यान्तराय इति, उक्तलक्षणस्य वीर्यान्तरायस्य सामस्त्येनोदयः पृथिवीअप्तेजोवायुवनस्पतिषु, क्षयोपशमजनिततारतम्याद् द्वीन्द्रियादेस्तु वृद्धिर्वीर्यस्य यावद्विचरमसमयच्छद्मस्थ इति, प्रकर्षाप्रक-

पोपलब्धेः, उत्पन्नकेवले तु भगवति सर्ववीर्यान्तरायक्षयः, तत्र तु निरतिशयं वीर्यमिति ॥

तत्र चाष्टानामपि कर्म्मणामुत्तरप्रकृतीनां विंशत्युत्तरं प्रकृतिशतं भवति, बन्धं प्रतीत्य एतावत्यः प्रकृतयो बध्यन्ते, सम्यक्त्वसम्यग्मिथ्यात्वयोर्नास्ति बन्धः, मिथ्यादर्शनपुद्गलानामेव तथापरिणतेः, ताभ्यां सह द्वाविंशत्युत्तरं प्रकृतिशतं, ताश्चेमाः—पंचभेदं ज्ञानावरणमन्तरायं च, दर्शनावरणं नवधा, वेद्यं द्विधा गोत्रं च, मोहोऽष्टाविंशतिभेदः, आयुश्चतुर्द्धा, नामकर्म्मणि गतिश्चतुर्विधा४ आनुपूर्वी४ च, जातिनाम पंचविधं५ शरीरनाम च५, बन्धनसंघातनाम्नोः शरीरान्तर्गतत्वान्न प्रकृतिगणना, संस्थाननाम षोढा६ संहननं च६, अंगोपाङ्गं त्रिधा३, विहायोगतिर्द्विविधा२, वर्णगन्धरसस्पर्शअगुरुलघुउपघातपराघातउच्छ्वासआतपउद्योतत्रसस्थावरबादरसूक्ष्मपर्याप्तापर्याप्तप्रत्येकशरीरसाधारणशरीरस्थिरअस्थिरशुभाशुभसुभगदुर्भगसुस्वरदुःस्वरआदेयअनादेययशोनामअयशोनिर्माणनामतीर्थकरनामान्येकैकभेदानि ३२, पश्चात् सर्वाः १२२ ॥ इत्थं प्रकृतिनिरूपणामभिधाय स्थितिबन्धनमभिधेयतयोपक्रममाण आह—उक्तः प्रकृतिबन्धः, स्थितिबन्धं वक्ष्याम इति प्रकृतिबन्धो यथावदभिहितः, संप्रति स्थितिबन्धमभिधास्याम इति प्रतिजानीते भाष्यकारः, तदभिधित्सया चेदमाह—

आदितस्तिसृणामन्तरायस्य च त्रिंशत्सागरोपमकोटाकोट्यः परा स्थितिः ॥ ८–१५ ॥ सूत्रम् ॥

आदावादितः, तिसृणां चशब्देनान्तरायस्य समुच्चयः, सागरोपमकोटीनां कोट्यः कोटीकोट्यः, परेति प्रकृष्टा, मध्यमजघन्यस्थितिनिरासः, स्थितिवचनं प्रतिज्ञातोपसंहारार्थं, आदितस्तिसृणामित्यादिना (१७९–१) भाष्येणामुमर्थं प्रतिपादयति, ज्ञानदर्शनावरणवेद्यानां अन्तरायकर्म्मणश्चैषा स्थितिरिति, स्थितिरवस्थानं, बन्धकालात् प्रभृति यावदशेषं निर्जीर्णमित्येवं स्थितिकालः,

एवमेताभि रुक्तवृणा मूलप्रकृतीनामुत्कृष्टस्थितिबन्ध उक्तः, वर्षसहस्रत्रितयं अबाधाकालः, अबाधाकालस्तु यत्प्रभृति ज्ञानावरणादिकर्म्म उदयावलिकादिप्रविष्टं यावच्च निःशेषमुपक्षीणं तावच्च भवति, तच्चोदयावलिका प्रविशति बन्धकालादारभ्य त्रिषु वर्षसहस्रेष्वतीतेषु, स्वल्पबाधाकालो, यतस्तु तत् कर्म्म नानुभूयते तावन्तं कालमिति॥ अथ मोहनीयकर्म्मप्रकृतेः कियान् स्थितिबन्ध इति तदभिधानायाह—

सप्ततिर्मोहनीयस्येति ॥ ८–१६ ॥ सूत्रम् ॥

सागरोपमकोटीकोट्य इत्यनुवर्त्तते, ताः सप्ततिसङ्ख्ययाऽभिसम्बध्यते, मोहनीयेत्यादिना (१७२–४) एतदेव स्पष्टतरं विवृणोति, प्रतिपादितार्थं चैतद्भाष्यमिति, अस्याप्यबाधाकालः सप्त वर्षसहस्राणि, ततः परं बाधाकालो यावदशेषं क्षीणमिति॥ नामगोत्रमूलप्रकृत्योः स्थितिप्रतिपादनायाह—

नामगोत्रयोर्विंशतिः ॥ ८–१७ ॥ सूत्रम् ॥

नामकर्म्मणो गोत्रकर्मणश्च विंशतिः सागरोपमकोटीकोट्यः परा स्थितिरिति, नामगोत्रयोरित्यादिना भाष्येण स्पष्टीकृत एषोऽर्थः, अस्याप्यबाधाकालो वर्षसहस्रद्वयमिति॥ आयुष्कोत्कृष्टस्थितिप्रतिपादनायाह—

त्रयस्त्रिंशत् सागरोपमाण्यायुष्कस्य ॥ ८–१८ ॥ सूत्रम् ॥

त्रयस्त्रिंशत् सागरोपमाणि पूर्वकोटित्रिभागाभ्यधिकानि, त्रयस्त्रिंशत्० वचनात् कोटीकोट्य इति निवृत्तं, पूर्वकोटित्रिभागश्चाबाधाकालः, आयुष्कप्रकृतेरित्यादि (१७९–१०) भाष्यं सुज्ञानमेव। मूलप्रकृतीनामुक्तः सामान्येन स्थितिबन्धः, उत्कृष्टः सम्प्रति उत्तरप्रकृतीनां प्रत्येकमुत्कृष्टो जघन्यश्चोच्यते सूत्रक्रमाश्रयणेन, तत्र सद्वेद्यप्रकृतेस्त्रिंशत्सागरोपमकोटीकोट्यः स्थितिः परा, जघन्या

सागरोपमस्य सप्तभागास्त्रयः पल्योपमस्यासंख्येयभागेन न्यूनाः,सद्वेद्यस्य पंचदश सागरोपमकोटीकोट्यः उत्कृष्टा स्थितिः, पंचदशवर्षशतानि अबाधा, जघन्या द्वादशमुहूर्त्ता, अबाधाऽन्तर्मुहूर्त्त, अत्र एतत्सूत्रमाह—

अपरा द्वादशमुहूर्त्ता वेदनीयस्य ॥ ८–१९ ॥ सूत्रम् ॥

वेदनीयप्रकृतिरित्यादि भाष्यं (१७८-१२) अपरेत्युत्कृष्टापेक्षया जघन्योच्यते, अपरा जघन्येत्यर्थः, कथं मध्यमा नेति चेत् व्याख्याविशेषाददोषः,अधरेति वा सूत्रपाठः, अपरेऽतिस्पष्टमेव सूत्रमधीयते जघन्या द्वादशमुहूर्त्तेति ॥ नामगोत्रयोरुत्तरप्रकृतीनां स्थितिरुच्यते, तत्र नामप्रकृतीनां तावन्मनुष्यगतिमनुष्यगत्यानुपूर्व्योरुत्कृष्टः स्थितिबन्धः पंचदश सागरोपमकोटीकोट्यः, पंचदशवर्षशतान्यबाधा, नरकगतिस्तिर्यग्गतिरेकेन्द्रियजातिः पंचेन्द्रियजातिः औदारिकवैक्रियतैजसकार्मणशरीराणि हुंडसंस्थानं औदारिकांगोपाङ्गं च छेदवर्त्तिसंहननं वर्णगन्धरसस्पर्शनरकानुपूर्वीतिर्यगानुपूर्वीअगुरुलघुउपघातपराघातोच्छ्वासआतपउद्योतअप्रशस्तविहायोगतित्रसस्थावरबादरपर्याप्तप्रत्येकशरीरअस्थिरअशुभदुर्भगदुःस्वरअनादेयअयशःकीर्त्तिनिर्माणनाम्नामुत्कृष्टस्थितिबन्धो विंशतिः सागरोपमकोटिकोट्यः, वर्षसहस्रद्वयमबाधा, देवगतिः देवगत्यानुपूर्वी समचतुरस्रसंस्थानं वज्रर्षभनाराचसंहननं प्रशस्तविहायोगतिः स्थिरशुभसुभगसुस्वरआदेययशःकीर्त्तीनां दश सागरोपमकोटीकोट्यः उत्कृष्टा स्थितिः, दशवर्षशतान्यबाधा, न्यग्रोधसंस्थानवज्रनाराचसंहननयोः द्वादश सागरोपमकोटीकोट्यः परा स्थितिः, द्वादश वर्षशतान्यबाधा, सादिसंस्थाननाराचसंहननयोश्चतुर्दश सागरोपमकोटीकोट्यः उत्कृष्टा स्थितिः, चतुर्दश वर्षशतान्यबाधा, कुब्जसंस्थानार्द्धनाराचसंहननयोरुत्कृष्टा स्थितिः षोडश सागरोपमकोटीकोट्यः, षोडश वर्षशतान्यबाधा, वामनसंस्थानकीलिकासंहननद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातीनां सूक्ष्मापर्याप्तसाधारण-

नाम्नां चोत्कृष्टा स्थितिः अष्टादश सागरोपमकोटीकोट्यः, अष्टादश वर्षशतान्यबाधा, आहारकशरीरएतदंगोपाङ्गतीर्थकरनाम्नामुत्कृष्टा स्थितिः सागरोपमकोटीकोटेरन्तः, अबाधा त्वन्तर्मुहूर्त्तम्, एवमेता नामकर्म्मणः सप्तषष्टिरुत्तरप्रकृतयः, शेषकर्म्मणां त्रिपंचाशद्, एवं त्रिंशदुत्तरं प्रकृतिशतं भवति। सम्प्रति नामप्रकृतीनामेव जघन्या स्थितिरुच्यते—मनुष्यतिर्यग्गतिपंचेन्द्रियजातिऔदारिकतैजसकार्म्मणानि संस्थानषट्कं औदारिकांगोपागं संहननषट्कं वर्णगन्धरसस्पर्शाः तिर्यङ्मनुष्यानुपूर्व्यौ अगुरुलघूपघातोच्छ्वासातपोद्योतप्रशस्ताप्रशस्तविहायोगतित्रसस्थावरशुभाशुभसुभगदुर्भगसुस्वरदुःस्वरसूक्ष्मबादरपर्याप्तापर्याप्तप्रत्येकसाधारणशरीरस्थिरास्थिरादेयानादेयनिर्माणयशसां सागरोपमस्य द्वौ सप्तभागौ जघन्या स्थितिः पल्योपमासंख्येयभागेन न्यूना, अबाधा त्वन्तर्मुहूर्त्तकालः, देवनरकगती आद्यजातिचतुष्कं वैक्रियशरीरमेतदंगोपांगं नरकदेवानुपूर्व्यौ जघन्या स्थितिः सागरोपमसहस्रस्य द्वौ सप्तभागौ पल्योपमासंख्येयभागन्यूनौ, अबाधा त्वन्तर्मुहूर्त्तं, आहारकशरीरतदंगोपाङ्गतीर्थकरनाम्नां जघन्या स्थितिः सागरोपमकोटीकोट्यन्तः, अबाधा त्वन्तर्मुहूर्त्तकालः, यशःकीर्तेर्जघन्या स्थितिरष्टौ मुहूर्त्ताः, अबाधा त्वन्तर्मुहूर्त्तकाल इति, अत्र सूत्रोपनिबन्धः कृतो वाचकेनेति, इतरा तु मध्यमा बहुवक्तव्यत्वादुपेक्षिता ।

## नामगोत्रयोरष्टौ ॥ ८-२० ॥ सूत्रम् ॥

नामगोत्रप्रकृत्योरित्यादि(१७९ १४) भाष्यं गतार्थमेवेति ॥ एवमेतासां नामकर्म्मप्रकृतीनां सप्तषष्टेरुत्कृष्टजघन्यस्थितिरुक्तेति, सम्प्रति गोत्रकर्म्मण उत्तरप्रकृत्योर्जघन्या स्थितिरभिधीयते—नीचैर्गोत्रस्य जघन्या सागरोपमस्य द्वौ सप्तभागौ पल्योपमासंख्येयभागेन न्यूनौ, अबाधा त्वन्तर्मुहूर्त्तकालः, उच्चैर्गोत्रस्थितिर्जघन्येनाष्टौ मुहूर्त्ताः, अबाधाऽन्तर्मुहूर्त्तकालः, इत्यत्रापि सूत्रानुप्रवेशः। पंचानां ज्ञानाव-

रणप्रकृतीनां चक्षुरादिदर्शनावरणप्रकृतिचतुष्टय्याः पंचानां चान्तरायप्रकृतीनां जघन्या स्थितिरन्तर्मुहूर्त्तकालः, अबाधापि अन्तर्मुहूर्तकाल एव, दर्शनावरणे निद्रापंचकस्य जघन्या स्थितिः सागरोपमस्य त्रयः सप्तभागाः पल्योपमासंख्येयभागन्यूनाः, मोहनीयप्रकृतेर्मिथ्यात्वस्य सप्त सप्तभागाः सागरोपमस्य जघन्या स्थितिः पल्योपमासंख्येयभागन्यूना, अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणकषायाणां द्वादशाना जघन्या स्थितिः सागरोपमस्य चत्वारः सप्तभागाः पल्योपमासंख्येयभागन्यूनाः, संज्वलनक्रोधस्य जघन्या स्थितिर्मासद्वयमन्तर्मुहूर्त्तश्चाबाधाकालः, संज्वलनमानस्य जघन्या स्थितिर्मासोऽन्तर्मुहूर्त्तमबाधा, संज्वलनमायाप्रकृतेर्जघन्याऽर्द्धमासमन्तर्मुहूर्त्तमबाधाकालः, संज्वलनलोभस्यान्तर्मुहूर्त्तकाला स्थितिर्जघन्या, अबाधाऽप्यन्तर्मुहूर्त्तकाल एव, पुंवेदस्य जघन्या स्थितिरष्टौ वर्षाण्यबाधाऽन्तर्मुहूर्त्तकालः, हास्यरत्यरतिभयशोकजुगुप्सास्त्रीपुंनपुंसकवेदाना जघन्या स्थितिः सागरोपमसप्तभागौ द्वौ पल्योपमासंख्येयभागन्यूनौ अन्तर्मुहूर्त्तकालश्चाबाधा, देवनारकायुषो जघन्या स्थितिर्दश वर्षसहस्राण्यबाधाऽन्तर्मुहूर्त्तकालः, तिर्यङ्मनुष्यायुषां जघन्या स्थितिः क्षुल्लकभवग्रहणमबाधाऽन्तर्मुहूर्त्तकाल इति। एवमेषां ज्ञानदर्शनावरणमोहायुषां कर्मणां यत्रान्तर्मुहूर्त्तकाला स्थितिः तत्रेदं सूत्रमुपतिष्ठते—

शेषाणामन्तर्मुहूर्त्तमिति ॥ ८–२१ ॥ सूत्रम् ॥

वेदनीयेत्यादि (१८०–१) भाष्यं सुगममिति। सम्प्रत्यनुभावबन्धविवक्षया आह—उक्तः स्थितिबन्धः, अनुभावबन्धं वक्ष्याम इति। प्रतिज्ञातनिरूपणायाह—

विपाकोऽनुभाव इति ॥ ८–२२ ॥ सूत्रम् ॥

विपचनं विपाकः—उदयावलिकाप्रवेशः, कर्म्मणः विशिष्टो नानाप्रकारो वा पाको विपाकोऽप्रशस्तपरिणामानां तीव्रः शुभपरि-

णामानां मन्दः, यथोक्तकर्म्मविशेषानुभवनमनुभावः "कृत्यल्युटो बहुलमिति" वचनात्, अथवाऽऽत्मनाऽनुभूयते येन करणभूतेन बन्धेन सोऽनुभावबन्धः "करणाधिकरणयोश्चे"ति घञ्, अनुभावशब्दस्य समुदायार्थप्रदर्शनं, अनुगतो वा भावोऽनुभाव इति, प्रादिसमासः क्रियालोपी, सर्वासां हि प्रकृतीनां फलविपाकोदयानुभावबन्धाज्जीवस्यानुसमयं कर्म्मानुभवनमिच्छानिच्छापूर्वकं, तद्यथा-ज्ञानावरणस्य फलं ज्ञानाभावः दर्शनावरणस्यापि फलं दर्शनशक्त्युपरोध इति, एवं सर्वकर्म्मणां स्वकार्यप्रबन्धानुभूतिरिति। सर्वासां प्रकृतीनामित्यादि (१८०-५) भाष्यं, सर्वासामिति कार्त्स्न्यग्रहणं, कर्म्मबन्धस्य फलं विपाकः तस्योदयोऽनुभाव इति, पर्यायकथनेन व्याख्या भवतीति, विधते अवश्यं भावी विपाकः सर्वस्य कर्म्मणः, विशब्दार्थमाचष्टे-विविधो नानाप्रकारः पाको विपाकः स उच्यते, तद्द्वैविध्यं निरूपयति-तथा चान्यथा चेत्यर्थः, यथा येनाध्यवसायप्रकारेण यादृगनुभावबन्धकर्म्म तत्तथा तेनैव प्रकारेण विपच्यते, अन्यथा प्रकारान्तरेणापीत्यर्थः, अनुभावो विपाको रस इति पर्यायाः,स च तीव्रमन्दमध्यावस्थाभेदः, शुभोऽशुभश्चैकैकः,तत्र कदाचिच्छुभमप्यशुभरसतयाऽनुभूयतेऽशुभं च शुभरसतयेति द्वैविध्यार्थः,तथा चाह-"तासामेव विपाकनिबन्धो यो नामनिर्वचनभिन्नः। स रसोऽनुभावसंज्ञः तीव्रो मन्दोऽथ मध्यो वा॥१॥" तत्र चाष्टप्रकारे कर्म्मणि किंचित् कर्म्म पुद्गलेष्वेव विपच्यते, तत्पुद्गलान् परिणमयति नानाकारं, किंचिद्भवविपाकि प्राप्तजन्मन आत्मनः शरीरवतो विपच्यते, अपरं तु क्षेत्रविपाकि, क्षेत्रान्तरे विपच्यत इत्यर्थः, अन्यजीवविपाकी, जीव एव विपच्यते इत्येवं चतुर्द्धा विपच्यते, तथा चाह-"संहननं संस्थानं वर्णस्पर्शरसगन्धनामानि। अंगोपांगानि तथा शरीरनामानि सर्वाणि॥१॥अगुरुलघुपराघातोपघातमुद्योतमातप इमानि। प्रत्येकशरीरस्थिरशुभनामानीतरैः सार्द्धं॥२॥ प्रकृतय एताः पुद्गलपाकाः भवपाकयुक्तमायुष्कम्। क्षेत्रफलमानुपूर्वी जीवविपाकाः प्रकृतयोऽ-

न्याः ॥३॥" कथं पुनरन्यथा बन्धोऽन्यथा विपाकरूपो रस इति प्रतिपादनायाह-जीवः कर्म्मविपाकमनुभवन्नि(१८०-६)त्यादि, स्थित्युत्पत्तिव्ययपरिणाम्यात्मा कर्मणो ज्ञानावरणादिकस्य विपाकमुपभुंजानो रसमनुभवन्–वेदयमानः प्रकृतीनां संक्रमं करोति, स च संक्रमः कर्म्महेतुक एव,न निर्निमित्त', यस्मादुपभोगो हि ज्ञानावरणोदयः,अनाभोगवीर्यपूर्वकमिति कर्मसंक्रमोऽभिसंबध्यते, करोतिक्रियापेक्षः, आभुंजतः–अध्यवस्यतश्चेष्टाऽऽत्मनो या तदाभोगवीर्यम् ,अनाभुंजतः–अनध्यवस्यतः सामर्थ्यं–विशिष्टक्रियापरिणामः अनाभोगवीर्यं, तत्पूर्वकं–तद्द्वारकं कर्म्मसंक्रमं विधत्ते, स पुनः संक्रमः कासु प्रकृतिषु कासां वा प्रकृतीनामित्याह–उत्तरप्रकृतिष्वित्यादि(१८० ८), मूलप्रकृत्यपेक्षया उत्तरप्रकृत्यभिधानं, अष्टौ मूलप्रकृतयो ज्ञानावरणादिकाः, उत्तरप्रकृतिस्तु पंचभेदं ज्ञानावरणमित्यादिकाः, तत्रोत्तरप्रकृतीनामेवोत्तरप्रकृतिषु संक्रमः, सर्वासु इत्युत्सर्गः, कासांचिन्न भवतीत्यर्थः, अपवदिष्यते चोपरिष्टात् , पंचप्रकारं ज्ञानावरणं चक्षुर्दर्शनावरणादिप्रकृतिष्वप्यविशेषेण सर्वासु संक्रामतीति प्राप्तं अत आह—मूलप्रकृत्यभिन्नास्विति मूलप्रकृतिभ्यः अभिन्नासु–अपृथग्भूतासु मूलप्रकृतीरजहतीषु, यथा मूलप्रकृतिरेका ज्ञानावरणमिति, उत्तरप्रकृतयः पंच, तत्रैताः पंचाप्यन्योऽन्यमेव संक्रामंति, नान्यमूलप्रकृत्युत्तरप्रकृतिषु, एनमेवार्थं सानधारणकं दर्शयति नतु मूलप्रकृतिषु संक्रमो विद्यते इति, तुशब्दोऽवधारणार्थः, नैन मूलप्रकृतिषु संक्रमोऽस्ति, न हि ज्ञानावरणं दर्शनावरणे संक्रामति, नापि दर्शनावरणं ज्ञानावरणे इत्येवम् , एवमन्यत्रापि योज्यं,अमुमेनार्थं युक्त्या प्रतिपादयन्नाह–बन्धविपाकनिमित्तान्यजातीयानि भिन्नजातीयानीत्यर्थः,अन्यद् बन्धनिमित्तं ज्ञानावरणस्य 'तत्प्रदोपनिह्नवादि' अन्यद्वेदनीयादेः 'दुःखशोकादि' ज्ञानदर्शनावरणयोर्बन्धनिमित्तमभिन्नमपि मदाशयविशेषाद्भेदमुपाश्नुत एव, विपाकनिमित्तमपि भिन्नमेन, कार्यभेदो हि निमित्तभेदमेव कल्पयति, ज्ञाना-

वरणविपाको हि ज्ञानमावृणोति-स्थगयति विशेषग्राहि, दर्शनावरणं तु सामान्यमात्रग्राहि सामान्योपयोगमेवान्तर्धत्ते, एवं बन्धनिमित्तभेदाद्विपाकनिमित्तभेदाच्च भिन्नासु मूलप्रकृतिषु संक्रमो नास्ति,पूर्वं सर्वासु इत्युक्तं यत् तत् संप्रत्यपोद्यते उत्तरप्रकृतिष्वित्यादि, कासाञ्चिदुत्तरप्रकृतीनामपि कासुचित् तत्प्रकृतिषु संक्रमो नास्तीति दर्शयति, तत्र दर्शनमोहः-चत्वारोऽनन्तानुबंधिनः क्रोधादयः मिथ्यात्वं सम्यग्मिथ्यात्वं सम्यक्त्वमिति, शेषश्चारित्रमोहोऽप्रत्याख्यानादिः,तत्र दर्शनमोहो न संक्रामति चारित्रमोहे, नापि चारित्रमोहो दर्शनमोहे इति,सम्यग्मिथ्यात्वस्यासत्यपि बन्धे सम्यक्त्वेऽस्ति संक्रमः, सम्यक्त्वं तु सम्यग्मिथ्यात्वे न संक्रामति, तथा सम्यक्त्वसम्यग्मिथ्यात्वयोर्मिथ्यात्वं संक्रामति, आयुष्कस्य च नारकतिर्यङ्मनुष्यदेवभेदस्य परस्परं नास्ति संक्रम इति, उक्तं च-"मूलप्रकृत्यभिन्नाः संक्रमयति गुणत उत्तराः प्रकृतीः। नन्वात्माऽमूर्त्तत्वादध्यवसानप्रयोगेण ॥१॥ शिथिलयति दृढं बद्धं शिथिलं द्रढयति च कर्म्म ननु जीवः। उत्कृष्टाश्च जघन्याः स्थितीर्विपर्यासयति चापि ॥२॥" संक्रमस्थित्युदीरणात्रयस्य दृष्टान्तत्रयोपप्रदर्शनायाह-"तारीकरणं ताम्रस्य शोषणस्तेमने मृदः क्रमशः। आम्रपरिपाचनं वा काले तेषूपदृष्टान्ताः॥३॥" यथासंख्यमभिसम्बन्धः कार्यः। "अनुभावांश्च विपर्यासयति तथैव प्रयोगतो जीवः। तीव्रत्वान्मन्दत्वात्स्वासु प्रकृतिष्वभिन्नासु ॥४॥ यद् यद्वा मन्दं सन् धारीक्रियते हरिद्रया चूर्णम्। वातातपादिभिश्च क्षार मंदीक्रियेत यथा ॥५॥ तीव्रानुभावयोगो भवति हि मिथ्यात्ववेदनीयस्य। सम्यक्त्वे त्वतिमन्दो मिश्रे मिश्रोऽनुभावश्च ॥६॥" अत्र प्रतिज्ञातार्थे युक्तिमाह-जात्यन्तरानुबन्धविपाकनिमित्तान्यजातीयकत्वादेव संक्रमो न विद्यत इति (१८०-११) जात्यन्तरस्यानुबन्धनम्-अनुवर्त्तनं यः करोति विपाकस्तस्य निमित्तं तदन्यजातीयकं-भिन्नं तथा दर्शनमोहनीयादीनामाश्रवा भिन्ना एव पठिताः प्रवचन इति, अपवर्त्तनं त्वित्यादि,सर्वासामेव प्रकृतीनां

संभवत्यपवर्त्तनं, द्राघीयस्याः कर्म्मस्थितेरल्पीकरणमपवर्त्तनं, सर्वासामेव प्रकृतीनां तत् सम्भवति, अध्यवसायविशेषात्, तच्च प्राग्व्याख्यातमेवेति तत्प्रतिपादनायाह–तदायुष्केण व्याख्यातमिति, तद्–अपवर्त्तनमायुष्ककर्मणा द्वितीये व्याख्यातमिति ॥ विपाकोऽनुभाव इति स्वरूपमात्रमाख्यातं, सम्प्रति तु यथा विपच्यते कर्म्म तथा प्रतिपादयन्नाह—

स यथानाम ॥ ८–२२ ॥ सूत्रम् ॥

स विपाक उक्तलक्षणो **यथानाम** भवति, यथाशब्देन वीप्सावाचिनाऽव्ययीभावः, यद्यस्य नाम–संज्ञान्तरं कर्म्मणस्तत्तथानुरूपमेव विपच्यते, यस्माज्ज्ञानावरणादीनां सविकल्पानां प्रत्येकमन्वर्थनिर्देशः, ज्ञानमाव्रियते येन तज्ज्ञानावरणं, यद्विपच्यमानं ज्ञानाभावं विधत्त इति, इत्थं दर्शनावरणमपि सामान्योपयोगोपरोधि इतियावत्, सुखानुभावः सद्वेद्यं, दुःखानुभावोऽसद्वेद्यं, तथा तथा दर्शनमोहश्चारित्रमोहश्च,दर्शनं–तत्त्वार्थश्रद्धानलक्षणं चारित्रं–मूलोत्तरगुणभेदं तत् मोहयतीति,आयुः–जीवनं प्राणधारणं यदुदयाद्भवति तदायुः, तांस्तान् गत्यादीन् प्रशस्तान् भावान् अप्रशस्तांश्च नामयतीति नाम, यदुदयाद्वेदयति नामाद्यनुभवतीत्यर्थः, तथा प्रतिभेदमपि गतिं नामयतीति गतिनाम, एवं जातिनामाद्यपीति,गोत्रमिति 'कै गै रै शब्दे' गोत्रं संशब्दनं, गीयते–शब्द्यते यस्योदयादुच्चैरयं पूज्यः उग्रो भोज इक्ष्वाकुरिति तदुच्चैर्गोत्रं, तथा यदुदयाद्दरिद्रोऽप्रसिद्धः अप्रतिज्ञातो गर्हितश्चाण्डालादिस्तन्नीचैर्गोत्रं, दानादीनां विघ्नमुदयाद्यस्य सोऽन्तराय इति। एनमेवार्थं भाष्येण प्रतिपादयति–**सोऽनुभावो गतिनामादीनां**(१८०-१५) अनन्तरप्रस्तुतस्य विपाकस्य तच्छब्देन परामर्शः, अनुभावः कर्म्मणां सामर्थ्यं, **गतिनामादीनामिति** यद्ग्रहणं तदशेषकर्म्माधारताप्रदर्शनार्थं, ज्ञानावरणाद्युदयो भवति गतिजातिशरीरादिवृत्तेर्जीवस्य, अन्यथा त्वसंभव एवेति, सप्तम्यर्थे षष्ठी,गतिनामादीनां

गतिनामादिप्विति, गतिनामादीनां वा सर्वकर्म्मणां स विपाको भवति यथा नाम विपच्यते विपाकम्–उदयमासादयतीतियावत् ॥
यदि विपाकोऽनुभावः प्रतिज्ञायते ततस्तत् कर्म्मानुभूतं सत् किमावरणवदवतिष्ठते उत निःसारं सत् प्रच्यवते ?, उच्यते, पीडा-
नुग्रहावात्मनः प्रदायाभ्यवहृतोदनादिविकारवन्निवर्त्तते, अवस्थानहेत्वभावाद्, अस्यार्थस्य प्रतिपादनाय सूत्रम्–

ततश्च निर्जरा ॥ ८–२४ ॥ सूत्रम् ॥

ततश्चेति विगमार्था पंचमी, ततो–विपाकात् कर्म्मणो विरमणं–परिशटनं भवति, ततश्चानुभावादित्यादि (१८०–१६)
भाष्यं, तस्मादनुभावात् विपाकलक्षणात कर्म्मणः–ज्ञानावरणादेर्निर्जरा–परिपतनमात्मप्रदेशेभ्यो भवति, निर्जराशब्दार्थमाचष्टे–
निर्जरा क्षयो वेदनेति, निर्जरणं निर्जरा,हानिरित्यर्थः, क्षयो–विनाशः परिणतेर्विगमः, वेदना–रसानुभवः आकर्म्मपरिणामं फलो-
पभोगपरिसमाप्तेः, इतिकरणाच्छाटव्यपगमपातप्रच्युत्यादयो निर्जराशब्दार्थाः परिज्ञेयाः, सा च द्विविधा–विपाकजा अविपाकजा
च, विपाक उदयः, उदीरणा त्वविपाकः, अत्राद्या संसारोदधौ परिप्लवमानस्यात्मनः शुभाशुभस्य कर्म्मणो विपाककालप्राप्तस्य यथा-
यथमुदयावलिकाश्रोतसि पतितस्य फलोपभोगादुपजाते स्थितिक्षये या निवृत्तिः सा विपाकजा निर्जरा, यत् पुनः कर्माप्राप्तविपाक-
कालमौपक्रमिकक्रियाविशेषसामर्थ्यादनुदीर्णं बलादुदीर्योदयावलिकामनुप्रवेश्य वेद्यते,पनसतिन्दुकाम्रफलपाकवत्, सा त्वविपाकजा
निर्जरा, आह च–"तारीकरणं ताम्रस्य शोषणस्तेमने मृदः क्रमशः। आम्रपरिपाचनं वा काले तेषूपदृष्टान्ताः ॥१॥" यथासंख्यमेते
संक्रमस्थित्युदीरणासु योज्याः, अत्र सूत्रे चशब्दो हेत्वन्तरमपेक्षते, विपाकहेतुका निर्जरेत्येको हेतुः, अस्मादन्यो हेतुः हेत्वन्तरं तत्-
दर्शनायाह–तपसा निर्जरा चेति नवमेऽध्याये अभिधास्यते संवराधिकारे तपसा द्वादशप्रकारेण संवरश्च भवति निर्जरा चेति

तपो निर्जरहेतुरतो निमित्तान्तरसमुच्चयार्थश्चशब्दः, इह चाष्टमे कर्म्मविरमणार्थं निर्जराग्रहणं, नवमे संवरार्थमिति। उक्तोऽनुभावबन्धः। प्रदेशबन्धं वक्ष्याम इति (१८१-३) प्रतिजानीते, तत्प्रदर्शनायाह—

**नामप्रत्ययाः सर्वतो योगविशेषात् सूक्ष्मैकक्षेत्रावगाढस्थिताः सर्वात्मप्रदेशेष्वनन्तानन्तप्रदेशाः इति ॥ ८-२५ ॥ सूत्रम् ॥**

अत्राष्टौ प्रश्नाः—कस्य प्रत्ययाः-कारणभूताः किंप्रत्यया वा पुद्गला बध्यन्ते, एकः प्रश्नः१, जीवोऽपि तान् अनुबध्नानः पुद्गलान् किमेकेन दिक्प्रदेशेन बध्नात्युत सर्वदिक्प्रदेशैरिति ग्रहणमात्रं विवक्षितं२, सोऽपि बन्धः किं सर्वजीवानां तुल्यः आहोश्वित् कुतश्चिन्निमित्तादतुल्यः३, किंगुणाः केवलाः पुद्गलाः बन्धास्पदं भवंति४, यत्र वाऽऽकाशप्रदेशे व्यवस्थिताः पुद्गलास्तत्रैवावगाढा ये जीवप्रदेशाः किं तेषामेव पुद्गलानां तत्र बन्धः ? आहोश्विज्जीवप्रदेशानवगाढगगनप्रदेशवर्त्तिनोऽपि बध्यन्ते५, किं वा स्थितिपरिणता बध्यते अथच गतिपरिणताः६, ते च किमात्मनः सर्वप्रदेशेषु श्लिष्यन्ति७, स्कन्धा वा किं संख्येयासंख्येयानन्तप्रदेशा बध्यंते उतानन्तानन्तप्रदेशा इति ८, एषामष्टानां प्रश्नानां क्रमेणाष्टाभिः सूत्रावयवैर्निराकांक्षीकरणं-नामप्रत्ययाः सर्वतो योगविशेषात् सूक्ष्मा एकक्षेत्रावगाढाः स्थिताः सर्वात्मप्रदेशेष्वनन्तानन्तप्रदेशा इति सूत्रं, नामप्रत्यया इत्यादि (१८१-६) भाष्यं, संज्ञा नामान्वर्थं सर्वकर्म्म उक्तं ज्ञानावरणाद्यन्तरायपर्यवसानं तस्य प्रत्ययाः—कारणानीति षष्ठी समासो, न हि तामन्तरेण तदाख्योदयादिसंभवो, मुक्तस्य यथाऽऽत्मनः, संसारिणः, प्रथमप्रश्न', एवं द्वितीयविकल्पः—किंप्रत्यया वेति द्वितीयभेदाश्रयेण भाष्यं, नाम प्रत्ययो येषां त इमे नामप्रत्यया इति बहुव्रीहिः, अन्यपदार्थश्च गतिजात्यादिभेदं नामकर्म्म, औदारिकशरीरादयो योगाः कर्म्मणो निमित्ततां

प्रतिपद्यन्ते, पारम्पर्येण गत्यादयोऽपीति अतो नामकर्मकारणाः पुद्गला बध्यन्त इति। प्रत्ययशब्दस्य पर्यायशब्दाख्यापनायाह -नामनिमित्ता इत्यादि, नाम निमित्तं-हेतुः कारणमेषां ते इमे नामनिमित्तादयः, इतिशब्दः प्रकारवाची, अपरे नामप्रत्यया बन्धननाम व्याचक्षते, नामकर्मण उत्तरप्रकृतिः शरीरनामान्तर्गता बन्धननाम तत्प्रत्ययाः किल पुद्गला इति, तच्च गृहीतगृह्यमाणपुद्गलानामन्यशरीरपुद्गलैर्वा सम्बन्धो यस्य कर्मण उदयाद्भवति काष्ठद्वयभेदैकध्यकरणे जतुवदिति, अथवाऽयमर्थः-प्रत्याययतीति प्रत्ययः, नाम प्रत्ययः कर्मणामिति नामप्रत्ययाः, नाम्नैव प्रत्याय्यन्ते यादृशाः पुद्गलाः प्रदेशबन्धस्य कारणीभवन्ति। ज्ञानावरणं दर्शनावरणमित्यादि नाम तेन नाम्ना स्वरूपमाख्यायते तेषां, ज्ञानावरणसमर्थाः पुद्गला येन बध्यन्ते दर्शनावरणसमर्था एवमन्यत्रापि योज्य। ननु नैवाकाश एव पुद्गलाः समादीयन्ते, न तु ज्ञानावरणादिविशिष्टाः केचिद्बहिः सन्तीति?, उच्यते, सत्यमेतत्, एवं त्विदमभिदध्महे-ज्ञानावरणादिकाना सर्वासां मूलप्रकृतीनां कर्मभेदानां सामर्थ्येन योगानां कर्मवर्गणानां ग्रहणमाम्नायते, ततः सामान्यगृहीतानामध्यवसायविशेषात् पृथक् पृथग्ज्ञानावरणादिभेदत्वेन परिणमयत्यात्मेति ॥ सर्वतस्तिर्यगूर्ध्वमधश्च बध्यन्ते, योगविशेषात्कायवाङ्मनःकर्म्मविशेषाच्च बध्यन्ते। सर्वत इति—सर्वासु दिक्षु, आत्मावधिकासु व्यवस्थितान् पुद्गलानादत्ते, सप्तम्यन्तात् तसिः। एतत्प्रतिपादयन्नाह-तिर्यगूर्ध्वमधश्च बध्यन्त इति, तिर्यगष्टौ काष्ठाः ऊर्ध्वमधश्चैकैकेति, अतः सर्वासु दिक्ष्ववस्थितान् स्कन्धान् लाति, नैकदिक्प्रतिष्ठान्, सर्वजीवप्रदेशैः सर्वजीवप्रदेशस्थानितियावत्, अपरे व्याचक्षते-सर्वत इति सर्वात्मप्रदेशैः कर्मपुद्गलान् गृह्णाति, तृतीयान्तात् तसिः, एते चात्मप्रदेशाः शरीरिणो-जीवस्य केचिदूर्ध्वं केचिदधस्तादिति, न चास्ति पुनरुक्तता दोषः, सर्वात्मप्रदेशेष्वित्यत्रानन्तानन्तप्रदेशाभिसम्बन्धादिति, नापि सर्वेषां बन्धकानां सम-

न्धस्तुल्यः, कुतः?, योगविशेषादित्याह, आत्मना युज्यत इति योगः—कायादिचेष्टा, योगानां विशेषो भेदः तीव्रमन्दादिकः तस्माद् योगविशेषादतुल्यं बन्धनं, एतदेवाह—कायवाङ्मनःकर्मयोगाच्च बध्यन्त इति, कायस्य वाचो मनसश्च क्रिया—कर्म अनुष्ठानभाषणचिन्तनादिका तयाऽऽत्मनो योगः—सम्बन्धः, क्रियाक्रियावतोः कथञ्चिदनन्यत्वात्, तस्य क्रियायोगस्य विशेषस्तीव्रस्तीव्रतरस्तीव्रतम इत्येवं बन्धोऽपि प्रकृष्टादिभेदो मन्तव्यः। किंगुणाः के वेत्यत्राह—सूक्ष्मा बध्यन्ते, न बादरा इति, सूक्ष्मशब्दो ह्यापेक्षिकत्वाद्बहुभेदः, परमाणोरारभ्य यावदनन्तप्रदेशाः स्कन्धास्तावदप्यतिसूक्ष्मत्वान्न बन्ध्या भवन्ति, अनन्तानन्तप्रदेशवर्गणायामपि भूयोऽनन्तराशिप्रदेशात् केचिद्ग्रहणयोग्याः केचिन्नेत्यतः सूक्ष्मग्रहणं, एवं क्रमेणौदारिकवैक्रियाऽऽहारकतैजसभाषाप्राणापानमनोवर्गणाः समुल्लङ्घ्य कर्मवर्गणायोग्याः सूक्ष्मपरिणतिरूपा एव बध्यन्ते, न बादरपरिणतिभाज इति, एवं क्रमेण सूक्ष्मपरिणतिभाजः केचिदग्रहणयोग्याः केचिद्ग्रहणयोग्याः पुनरपि केचिदग्रहणयोग्या इति॥ पञ्चमप्रश्नप्रतिवचनार्थमाह—एकक्षेत्रावगाढा बध्यन्यते, न क्षेत्रान्तरावगाढाः। एकक्षेत्रावगाढा इत्यादि, एकस्मिन्—अभिन्ने क्षेत्रे जीवप्रदेशैः सह येऽवगाढा—आश्रितास्ते बध्यन्ते,यत्राकाशे जीवोऽवगाढस्तत्रैव ये कर्मयोग्याः पुद्गलास्त एव बध्यन्ते, न क्षेत्रान्तरावगाढाः, तत्र च वर्तमानास्ते रागादिस्नेहगुणयोगादात्मनि लगन्ति, न क्षेत्रान्तरावगाढाः, तद्भावपरिणामाभावादनाश्रितानामिति। षष्ठप्रश्नोत्तरमाह—स्थिताश्च बध्यन्ते, न गतिसमापन्नाः। स्थिता इत्यादिना,स्थिता एव बध्यन्ते,चशब्दस्यावधारणार्थत्वात्, सामर्थ्यलभ्यमर्थं दर्शयति—न गतिसमापन्ना, इति समासि सूचकः, नावेगितत्वादिति। सप्तमप्रश्नप्रतिभेदायाह—सर्वात्मप्रदेशेष्वित्यादि, सर्वे च ते आत्मप्रदेशास्तेषु, आश्रवाणामविशेषान् सर्वात्मनि श्लिष्यंति, वेगितत्वादिति सर्वात्मप्रदेशेषु बद्ध्यन्त इति, पुनरेकैकस्य कर्म्मणो

ज्ञानावरणादेर्योग्याः पुद्गलाः कियंत एकैकस्मिन्नात्मप्रदेशे बध्यन्त इति स्पष्टं विवृणोति। एकैको हीत्यादि, असंख्येयप्रदेशात्मनो जीवस्य एकैकप्रदेशोऽनन्तैर्ज्ञानावरणकर्मस्कन्धैर्बद्धः, एवं दर्शनावरणादिकर्मप्रदेशैरिति, प्रदेशशब्दः स्कन्धवचनः, प्रकृष्टा देशा यस्मिन् स्कन्धेऽपीति निर्वचनात्। अष्टमप्रश्नभेदायाह—अनन्तानन्तप्रदेशा इति, अनन्ते राशौ भूयोऽनन्तपुद्गलप्रक्षेपाद-नन्तानन्त इति व्यपदेशः, ते चात्मन एकैकस्मिन् प्रदेशे ज्ञानावरणादिपुद्गला अनन्तानन्तप्रदेशाः कर्म्मवर्गणायोग्या बध्यन्ते, ग्रहणमुपयान्तीत्यर्थः, अयोग्यास्तु न बध्यन्ते इति तत्प्रतिपादनायाह—नतु संख्येयासंख्येयानन्तप्रदेशा इति, नैव संख्येया-दिप्रदेशा बध्यन्त इति, कुत एतदित्याह—अग्रहणयोग्यत्वात् प्रदेशानामिति, प्रदेशानां—स्कन्धानामेवंविधानामग्रहणयो-ग्यत्वादिति। सम्प्रति उपसंहरति—एष प्रदेशबन्धो भवतीति, एतत् प्रदेशबन्धस्य स्वरूपमित्यर्थः॥ सर्वं चैतदित्यादिः (१८१-१६) सम्बन्धग्रन्थः, सर्वमिति मोत्तरप्रकृतिकमष्टप्रकारं ज्ञानावरणाद्यन्तरायपर्यवसानं पौद्गलं कर्म्म द्विधा विभज्यते—पुण्यं पापं च, शुभं कर्म्म पुण्यं, अशुभं पापमिति, तत्र द्विप्रकारे कर्म्मणि प्राशस्त्याच्छुभमेवाभिधीयते, तन्निरूपणेन यच्छेषं तत् पाप-मित्यर्थाद्गम्यते, अतः सूत्रम्—

सद्वेद्यसम्यक्त्वहास्यरतिपुरुषवेदशुभायुर्नामगोत्राणि पुण्यमिति॥ ८—२६॥ सूत्रम्॥

तत्र सद्वेद्यं सुखरूपेणानुभवनीयं, तदुपादानहेतवः प्रागुक्ताः, कारणानुरूपं कार्यं भवतीति स्मरयति 'भूतव्रत्यनुकम्पा दानं सराग-संयमादि योगः क्षान्तिः शौचमिति सद्वेद्यस्य', सम्यक्त्ववेदनीयं तत्त्वार्थश्रद्धानाकारेण अनुभवनीयं, तदपि केवलिश्रुतसंघधर्म्मदेवानां वर्णवादादिहेतुकं, वर्णः—कीर्त्तिः, यशः—सद्भूतगुणोद्भावनं, भक्तिः पूजा पर्युपासनं आदिग्रहणात्, ते हेतवो यस्य तत्तद्धेतुकं, हास्य-

वेदनीयं हास्याकारेणैवानुभवनीयं, एवं रतिवेदनीयं प्रीत्याकारेण, पुरुषवेदनीयं पुरुषाकारेणेति, शुभायुर्नामगोत्राणीति, शुभशब्दः प्रत्येकमभिसम्बध्यते, तत्र शुभमायुष्कं मानुषं दैवं च, भाष्यकाराभिप्रायः, कर्म्मप्रकृतिग्रन्थानुसारिणस्तु तिर्यगायुरपि शुभमाचक्षते, यदि च तत्तथा ततश्चशब्देनानुकृष्यते, शुभनाम गतिनामादीनां मध्यादुद्धर्त्तव्यं सप्तत्रिंशत्प्रकारं, शुभं गोत्रमाचष्टे–उच्चैर्गोत्रमित्यर्थः, एवमेतदुच्चैर्गोत्रान्तं सद्वेद्यादिकमष्टविधं पुण्यसंज्ञितं, अर्थाल्लभ्यं व्युदसनीयं दर्शयति–अतोऽन्यत् पापमिति (१८२-६)॥ कर्म्मप्रकृतिग्रन्थानुसारिणस्तु द्विचत्वारिंशत्प्रकृतीः पुण्याः कथयंति, तद्यथा–सद्वेद्यं तिर्यङ्मनुष्यदेवायूंषि मनुष्यदेवगती पंचेन्द्रियजातिः शरीराणि पंच समचतुरस्रं संस्थानं वज्रर्षभनाराचसंहननं अंगोपांगत्रयं प्रशस्तवर्णगन्धरसस्पर्शा मनुष्यदेवानुपूर्व्यौ अगुरुलघुः पराघात उच्छ्वासः आतप उद्योतः प्रशस्तविहायोगतिः त्रसबादरपर्याप्तप्रत्येकस्थिरशुभसुभगसुस्वरआदेययशःकीर्तिपर्यन्तमानाः शुभाः निर्माणं तीर्थकर उच्चैर्गोत्रैः सहेति, आसां च मध्ये सम्यक्त्वहास्यरतिपुरुषवेदा न सन्त्येवेति कोऽभिप्रायो भाष्यकृतः? को वा कर्म्मप्रकृतिग्रन्थप्रणिधीनामिति सम्प्रदायविच्छेदान्मया तावन्न व्यज्ञायीति, चतुर्दशपूर्वधरास्तु संविद्रते यथावदिति निर्दोषं व्याख्यानं, द्व्यधिकाशीतिरपुण्यप्रकृतीनां, तद्यथा–पंच ज्ञानावरणानि नव दर्शनावरणानि असद्वेद्यं मिथ्यात्वं षोडश कषायाः नव नोकषायाः नरकायुः नरकतिर्यग्गती एकद्वित्रिचतुरिन्द्रियजातयः आद्यवर्जानि संस्थानानि पंच संहननानि पंचैव अप्रशस्तवर्णगन्धरसस्पर्शाः नारकतिर्यग्गत्यानुपूर्व्युपघातनामअप्रशस्तविहायोगतिस्थावरसूक्ष्मापर्याप्तकसाधारणस्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्त्तय इति, तथा नीचैर्गोत्रं पंचविधमन्तरायमिति, सम्यक्त्वादिषूभयथा दर्शनात् संशेते मनः, सातं तिर्यगनृसुरायूंषि शरीराणि पंच मनुजगतिः। देवगतिः पंचेन्द्रियतांगोपांगानि सर्वाणि ॥ १ ॥ वज्रर्षभनाराचं समचतुरस्रं च तीर्थकरनाम। स्पर्श-

रसगन्धवर्णविहायोगतयः प्रशस्ताश्च ॥२॥ अगुरुलघुपराघातोच्छ्वासोद्योतातपश्च निर्माणं। उच्चैर्गोत्रं नरदेवगतिप्रायोग्यानुपूर्व्यौ च ॥३॥ प्रत्येकदेहबादरपर्याप्तादेयसुस्वरत्रसताः। स्थिरशुभसुभगयशांसि शुभसंज्ञाः प्रकृतयः प्रोक्ताः ॥४॥ सम्यक्त्वहास्यरतिनरवेदानां पुण्यतामुशंत्येके। न तथा पुनस्तदिष्टं मोहत्वात् देशघातित्वात् ॥५॥ केवलवर्ज्ञज्ञानावृद्विघ्नं नोकपायसंज्वलनाः। अवधिदृगनक्षिनेत्रावरणानि च देशघातीनि ॥६॥ दृग्ज्ञानावृन्मोहानां शेषं सर्वघातिकर्म्मोक्तं। घाति प्रतिघातमतः किंचिज्ज्ञा(दघा)तीत्यन्यदपि ॥७॥ आनष्टं, अपरस्त्वाहगति–सम्यक्त्वस्य हास्यादीनां, पुंवेदस्य च पुण्यतां। मोहनीयमिति भ्रान्त्या, केचिन्नेच्छन्ति तच्च न ॥१॥ सर्वमष्टविधं कर्म्म, पुण्यं पापं च निरूतं। किं कर्मव्यतिरिक्तं स्याद्यस्य पुण्यत्वमिष्यतां ॥२॥ शुभायुर्नामगोत्राणि, सद्वेद्यं चेति तत् मतं। सम्यक्त्वादि तथैवास्तु, प्रसादनमिहात्मनः॥३॥ पुण्यं प्रीतिकरं सा च, सम्यक्त्वादिषु पुद्गलाः। मोहत्वं तु भवाबन्ध्यकारणादुपदर्शितं ॥४॥ मोहो रागः स च स्नेहो, भक्तिरागः स चार्हति। रागस्यास्य प्रशस्तत्वान्मोहत्वेऽपि न मोहतेति ॥५॥ इति तत्त्वार्थवृत्तौ बन्धभेदनिरूपकोऽष्टमोऽध्यायः॥

॥ इति हरिभद्राचार्योद्धृतायां तत्रैवानात्र(०वान्य)कर्तृकायां तत्त्वार्थटीकायां अष्टमोऽध्यायः समाप्तः ॥



# श्रीतत्त्वार्थवृत्तौ नवमोऽध्यायः

नमोऽर्हते, नमः श्रुतदेवतायै भगवत्यै, नमः सर्वज्ञागमाय। उक्तो बन्धः, संवरं वक्ष्याम (१८३-१) इत्यनेनाध्यायसम्बन्धमाह भाष्यकारः। उक्तः प्रपंचेन प्रतिपादितोऽनादिमन्ततिरष्टविधः कर्म्मबन्धः, स च पौरुषेयः, पौरुषेयत्वादेव कदाचिदत्यन्तमुच्छिद्यतेऽपि, पुंसा समासादिततदुच्छेदसाधनेन आत्यन्तिकं क्षयमापाद्यत इति, तत्र पूर्वोपचितकर्म्मजालविच्छेदाय तपसा निर्जरा चेति कार्त्स्न्येनोच्छेदं वक्ष्यति, अपूर्वकर्म्मावयवप्रवेशनिवारणाय तु संवरमेव तावद् वक्ष्यामः

आश्रवनिरोधः संवरः ॥ ९–१ ॥ सूत्रम् ॥

आश्रूयते–समादीयते यैः कर्म्माष्टविधमाश्रवाः ते कर्मणां प्रवेशवीथयः कायादयस्त्रयः इन्द्रियकषायाव्रतक्रियाश्च पञ्चचतुःपंचपञ्चविंशतिसंख्यास्तेषां निरोधो–निवारणं स्थगनं संवरः, पर्यायकथनेन व्याख्या, यथोक्तस्येत्यादि (१८३-२) भाष्यं, षष्ठेऽध्याये कायादिराश्रवोऽभिहितोऽनेकप्रकारः,तस्य काययोगादेराश्रवस्य द्व्यधिकचत्वारिंशद्भेदस्य निरोधो यः स संवरः, आत्मनः कर्म्मादानहेतुभूतपरिणामाभावः संवर इत्यभिप्रायः, अतो यावत्किंचित् कर्म्मागमनिमित्तं तस्याभावः, स च सर्वदेशभेदाद्द्विधा, बादरसूक्ष्मयोगनिरोधकाले सर्वसंवरः, शेषकाले चरणप्रतिपत्तेरारभ्य देशसंवरपरिणतिभागात्मा भवतीति,अत्राह–यदि सकलाश्रवद्वारस्थगनलक्षणः संवरस्ततः सर्वकर्म्मनिमित्ताश्रवच्छिद्रसंवुवूर्षा कतिपयपुरुषसाध्यैव प्रसजति,अशेषस्य परिस्पन्दस्य निराचिकीर्षितत्वात्, अतः समचतुरस्रसंस्थानवज्रर्षभनाराचसंहननादिभाजामाहितपराक्रमाणां कर्म्माणि निर्जिजीर्षतां परिपूर्णशक्तिकानां परिस्पन्दस्वभावयोगत्रयनिग्रहः क्रमते प्रागुपचितकर्म्मनिवृत्तिश्च, न पुनरैदंयुगीनपुरुषाणां, यथोक्तसंवराभावादिति, उच्यते, संवरद्वैविध्ये सति

सर्वसंवरभावः साम्प्रतिकानामित्यनुमनुमहे, देशसंवरस्तु सामायिकादिचारित्रवतां, सत्यपि परिस्पन्दवत्त्वे विदिततत्त्वानां देशसंवरः समस्त्येवेति तत्प्रतिपादनायाह—

स गुप्तिसमितिधर्मानुप्रेक्षापरीषहजयचारित्रैः ॥ ९-२ ॥ सूत्रम् ॥

अथवा आश्रवनिरोधलक्षणः संवर उक्तः, स पुनः केनोपायेन कर्त्तव्य इत्युपायस्य दर्शनार्थमिदं सूत्रं—स गुप्तीत्यादि, स इत्येनेन सर्वनाम्ना प्रक्रान्तं संवरं परामृशति, गुप्यतेऽनयेति गुप्तिः, संरक्ष्यतेऽनयेत्यर्थः, संवृण्वतो हि गुप्त्यादयः करणीभवन्ति, सम्यग्गतिहेतुत्वात् समितयो, गतिरिति सकलक्रियोपलक्षणं, सर्वज्ञप्रणीतज्ञानानुसारिण्यश्चेष्टाः संवरमादधति, नरकादिकुगतिप्रपातधारणाद्धर्म्मः—क्षमादिदशलक्षणकः, अनुप्रेक्षणम्—अनुचिन्तनमनुप्रेक्षा, अनुप्रेक्ष्यन्ते—भाव्यन्त इति वाऽनुप्रेक्षाः, तादृशानुचिंतनेन तादृशीभिर्वा वासनाभिः संवरः सुलभो भवति, समन्तादापतिताः क्षुत्पिपासादयः सह्यन्त इति परिषहाः, परिसंहा इति कः शब्दसंस्कारः?, न तावत् पचाद्यच्, कर्त्तरि विहितत्वात्, न कर्म्मसाधनो, घञ्वृद्धिप्रसंगात्, पुंसि संज्ञायां घ इति चेन्न, तस्य करणाधिकरणयोर्विधानात्, उच्यते, "कृत्यलुटो बहुल"मिति वचनात् कर्म्मण्येव घञ् प्रत्ययः, उपसर्गस्य 'घञ्यमनुष्ये बहुल'मितिबहुलवचनाद् घजि चान्यत्र च दीर्घत्वं शिष्टप्रयोगानुसरणात्, परीषहाणां जयो—न्यक्करणमभिभवः परीषहजयः, चर्यते तदिति चारित्रं, पृषोदरादित्वाद्वा अष्टविधकर्म्मचयरिक्तीकरणाच्चारित्रं—सामायिकादिपंचभेदं, गुप्त्यादीनां चारित्रान्तानां द्वन्द्वः, एभिर्गुप्त्यादिभिः करणभूतैः संवरोऽवाप्यत इति॥ सम्प्रति भाष्यमनुश्रियते—स एष संवरः एभिर्गुप्त्यादिभिरभ्युपायैर्भवति (१८२-६) प्रस्तुतसंवरसम्बन्धनार्थस्तच्छब्दः, स संवरः आश्रवनिरोधलक्षणः, एष इत्यनेन मनसि व्यवस्थापितः, एभिर्गुप्त्या-

दिभिः करणभूतैरभ्युपायैर्भवति—जायते स्वरूपं प्रतिलभत इतियावत्, कथं पुनः करणरूपं गुप्त्यादयः प्रपद्यन्ते?, तत्र रागद्वेषपरिणतेरार्त्तरौद्राध्यवसायात् मनो निवर्त्य निराकृतैहिकामुष्मिकविषयाभिलाषस्य मनो गुप्तत्वादेव न रागादिप्रत्ययं कर्म्मास्रोष्यति, यच्च वाचिकमसंवृत्तस्यासत्प्रलापिनोऽप्यप्रियवचनादिहेतुकं कर्म्माभिधीयते न तद् वाग्व्यापारविरतस्य यथाविहितवाग्भाषिणो, वाचापि गुप्तत्वादेव, तथा कायिकमनिभृतस्य धावनवल्गनाप्रत्युपेक्षिताप्रमार्जितावनिप्रदेशचंक्रमणद्रव्यान्तरादाननिक्षेपणादिनिमित्तमात्मनि नाश्लिष्यति कायोत्सर्गभाजः परित्यक्तहिंसादिदोषविषयक्रियाकस्य वा समयविहितक्रियानुष्ठायिनः, कायगुप्तत्वात्, एवं सम्यग्योगत्रयनिगृहीतिलक्षणास्तिस्रो गुप्तयः संवरस्य करणीभवंति, समितयोऽपि गुप्तिरूपा एव प्रायश्चेष्टालक्षणत्वात्, चेष्टा च कायवाङ्मनोव्यापारः, तत्रेर्यादाननिक्षेपोच्चारादित्यागसमितयस्तिस्रः कायव्यापारान्तर्भूताः, मनोव्यापारानुयायिनी चैषणासमितिः, वाग्व्यापारलक्षणा भाषासमितिः, यत्तु पार्थक्येनोपादानं तन्मन्दधियां विवेकेन सुखप्रतिपत्त्यर्थं, प्रथमव्रतमृषावादादिप्रपंचवत्, तथा क्रोधमानमायालोभानां सभेदानां क्षमामार्दवार्जवशौचैर्निगृहीतत्वात् संवरावाप्तिः, सत्यत्यागाकिंचन्यब्रह्मचर्याणि चारित्रानुरोधीनि, संयमोऽपि सप्तदशप्रकारः, कश्चित् प्रथमव्रतान्तःपाती कश्चिदुत्तरगुणान्तर्भूतः, तपो द्वादशविधमुत्तरगुणान्तःपात्येव, अनित्याशरणादिचिन्तनमपि संवृण्वतो हेतुभूतमुत्तरगुणानुयायि च, परीषहा अपि यथास्वमापतिताः सम्यगधिसहनेन जीयमानाः संवरमाविष्कुर्वंति, तथा हिंसानृतवचनपरस्वहरणाब्रह्मचर्यपरिग्रहयामिनीभोजनानि संश्लेषविशेषाहितकलुषस्य कर्म्माश्रवनिमित्तानि, निरोधे सति विरमणभाजो न जातुचिदापतति तन्निमित्तकं कर्म्मेति, आधाकर्म्मादिपरिभोगनिमित्तं च कर्म्माश्रवणं तत्परित्यागे सति नैवास्ति, सर्वं चैतदारेकादिदोषजंबालविमुक्तसम्यग्दर्शनपीठप्रतिबन्धं गुप्त्यादि चारित्रांतमतः सति

तत्त्वार्थश्रद्धानलक्षणे सम्यक्त्वे न भवति मिथ्यादर्शनप्रत्ययः कर्म्माश्रव इत्येवमेते गुप्त्यादयः संवरहेतवः–अभ्युपायाः सम्पद्यन्त इति। अथ किमेभिरेव गुप्त्यादिभिरेव संवरो निष्पाद्यते? उतापरेणापि केनचिदित्याह–किं चान्यदिति (१८०–६) अनेन कारणान्तरमभिसम्बध्नाति, न गुप्त्यादय एव केवलाः संवरणसमर्थाः, किंचान्यदपि तपोलक्षणं संवृतेः कारणमस्तीति प्रदर्शयन्नाह–

तपसा निर्जरा च ॥ ९–३ ॥ सूत्रम् ॥

पृथग्योगकरणं उभयहेतुत्वात्, तपसोऽभिनवकर्म्मप्रवेशाभावः पूर्वोपचितकर्म्मपरिक्षयश्च, तप्यत इति तपः, सेव्यत इतियावत्, तपति वा कर्त्तारमिति तपः, तपसेति करणे तृतीया, निर्जरणं निर्जरा–विपक्वानां कर्म्मावयवानां परिशटनं, हानिरित्यर्थः, तपसाऽऽसेव्यमानेन कर्माण्यात्मप्रदेशेभ्यो विघटंत इतियावत्, कर्त्तुः सन्तापकत्वाद्वा शुष्करसं कर्म्मातिरूक्षत्वान्निःस्नेहबन्धनं परिशटतीत्यर्थः, चशब्दः प्रस्तुतसंवरानुकर्षी, तपसा संवरश्च क्रियते, अनशनप्रायश्चित्तध्यानादितपोयुक्तोऽवश्यंतयैव संवृताश्रवद्वारो भवतीति। तपो द्वादशविधं वक्ष्यत इत्यादि (१८०-६) भाष्यं, द्वादश विधाः–प्रकारा यस्य तद्द्वादशविधं तपः उपरिष्टादिहैवाध्यायेऽभिधास्यते, बाह्यमनशनादि षोढा अभ्यन्तरं च प्रायश्चित्तादि षोढा, तेन द्वादशभेदेन तपसा करणतामापन्नेनोक्तलक्षणः संवरो भवति, आगन्तुककर्म्माभावप्रतिपादनं, निर्जरा च भवतीति, चिरन्तनबद्धकर्म्माभावप्रतिपत्तिः, एवमिदमुभयस्य संवरनिर्जरालक्षणस्य हेतुभूतं तपो भवतीति ॥ आह–अस्मिन् भारते वर्षे साम्प्रतिकपुरुषाणामल्पवीर्यत्वात् सकलयोगनिरोधलक्षणसंवरात्यये गुप्त्यादिसामर्थ्यात् परिस्पन्दवतामपि संवरास्तित्वमाश्रीयते यदि ततस्त एव स्वरूपतोऽभिधेया इति क्रमेण गुप्त्यादिस्वरूपनिर्णयः कार्यः, तत्र तावत् गुप्तिस्वरूपमेवोच्यते—

सम्यग्योगनिग्रहो गुप्तिः ॥ ९-४ ॥ सूत्रम् ॥

भाष्यकारस्त्वन्यथा कियता विशेषेण सम्बन्धमाह-अत्राहोक्तमित्यादि (१८३-१०) गुप्त्यादिभिः संवरो भवतीत्यत्रावसरे कश्चित् प्रश्नयति, उक्तं भवता गुप्त्यादिभिरभ्युपायैः संवरो भवति, तत्र तेषु संवरकारणेषु के गुप्त्यादयः, किंस्वरूपा गुप्त्यादय इति ?, अत्रोच्यते-प्रतिपादयितुर्वचनम्, अत्र प्रश्ने निर्वचनमभिधीयते, सम्यग्योगनिग्रहणे गुप्तिरिति, सम्यक् प्रशस्तो मुमुक्षोर्योगनिग्रहो गुप्तिरात्मसंरक्षणं, योगा मनोवाक्कायलक्षणास्तेषां निग्रहो निगृहीतिः, प्रवचनविधिना मार्गव्यवस्थापनमुन्मार्गगमननिवारणं चेत्यतो योगनिग्रहविशेषणार्थं सम्यगिति, सम्यग्-आगमानुसारेणारक्तद्विष्टपरिणतिसहचरिष्णोर्मनोव्यापाराः वाक्कायव्यापाराश्च निर्व्यापारता वा वाक्काययोर्निग्रहो गुप्तिर्भवति, न पुनस्तस्करस्येव प्रत्ययाग्रशो गाढबंधनबद्धस्यातिपीडितहृदयप्रदेशस्य संपुटितनक्रविवरस्य पराधीनात्मनोऽनिवृत्तौ योगनिग्रह इष्यते ॥ सम्प्रति भाष्येण सूत्रार्थं स्पष्टयन्नाह-सम्यगित्यादि(१८३-१२) सम्यगिति शब्दस्यार्थमाचष्टे, विधानत इति, सभेदं विज्ञाय योगं, तत्र काययोगस्यौदारिकवैक्रियाहारकतैजसकार्मणभेदाः संभविनः, वाग्योगस्य सत्यामृषादयः, मनसः सावद्यसंकल्पादयः, ज्ञात्वा-आगमतो यथावदवबुध्य अभ्युपेत्य सम्यग्दर्शनपूर्वकमिति प्रतिपद्य च भावत एवमेते योगाः परिणताः कर्म्मबन्धाय एवं च कर्म्मनिर्जरायै, सम्यग्दर्शनपूर्वकमित्यभ्युपगमक्रियाविशेषणं, प्रशमसंवेगनिर्वेदास्तिक्यानुकंपाभिव्यक्तिलक्षणं सम्यग्दर्शनं तत् पूर्वं यस्याभ्युपगमस्येति, त्रिविधस्य योगस्येति, मूलभेदाख्यानमुत्तरभेदानां मूलानतिलंघित्वात् परिग्रहः, निग्रहः स्ववशे व्यवस्थापनं, स्वातन्त्र्यप्रतिषेधेन मुक्तिमार्गानुकूलपरिणामो गुप्तिः संरक्षणं भयानकात् कर्मबन्धशत्रोः, त्रैविध्यप्रतिपादनायाह—कायगुप्तिर्वाग्गुप्तिर्मनोगुप्तिरिति । कायस्य गुप्तिः-संरक्षणमुन्मार्गगति-

रागमतः, तथाऽयं संरक्षितः कायो नात्मानमुपहंति, एवं वाङ्मनोगुप्त्योरपि व्याख्या, इतिशब्दोऽवधारणार्थः, त्रिविध एव मूल-भेदतो योगः, तत्र तेषु योगेषु निग्रहीतव्येषु काययोगनिग्रह एव तावदुच्यते, शयनम्-(१८४-१) आगमोक्तो निद्रामोक्ष-कालः, स च रात्रावेव, न दिवा अन्यत्र ग्लानादेः, तत्रापि क्षणदायाः प्रथमे यामे अतिक्रान्ते गुरुमापृच्छ्य प्रमाणयुक्तायां वसता-वेकस्य साधोर्हस्तत्रयप्रमिते भूप्रदेशे सभाजनस्य च यत्रावस्थानं सकलावकाशपूरणं च सा प्रमाणयुक्ता, तत्र प्रमृज्य स्वावकाशं प्रत्यवेक्ष्य संहृत्यास्तीर्य संस्तरणपट्टकद्वयमूर्ध्वमधश्च कायं प्रमृज्य सपादं मुखवस्त्रिकारजोहृतिभ्यामनुज्ञापितसंस्तारकावस्थानः कृतसामायिकनमस्कृतिः वामबाहूपधान आकुंचितजानुकः कुक्कुटवद्वियति प्रसारितजंघो वा प्रमार्जितक्षोणीतलन्यस्तचरणो वा भूयः संकोचसमये प्रमार्जितसंदंशकमुद्वर्त्तनकाले च मुखवस्त्रिकाप्रमृष्टकायो नात्यन्ततीव्रनिद्रः शयीत, आसनं—निवेशनं यत्र भूप्रदेशे विवक्षितं तं प्रत्यवेक्ष्य चक्षुषा प्रमृज्य च रजोहृत्या बहिर्निषद्यामास्तीर्य निविशेत, निविष्टोऽप्याकुंचनप्रसारणादि पूर्ववत् कुर्वीत, वर्षादिषु च बृसिकापीठकाद्यमुयैव सामाचार्या प्रत्युपेक्ष्य प्रमृज्य च सन्निवेशनं कुर्यात्, आदाननिक्षेपौ च दण्डको-पकरणनेष्टाभाजनादिविषयौ, तावपि प्रत्युपेक्षणप्रमार्जनपूर्वकौ निरवद्यौ भवतः, तथा स्थानम्-ऊर्ध्वस्थितिलक्षणमवष्टम्भादि वा सुप्रत्युपेक्षितप्रदेशविषयं पिण्डीकृतवस्त्राद्यन्तर्द्धानमवष्टम्भादि च निरवद्यं, चंक्रमणं—गमनं तदपि प्रयोजनवतः पुरस्ताद्युगमात्रदेश-सन्निवेशितदृष्टेरप्रमत्तस्य स्थावराणि जंगमानि च भूतानि परिवर्जयतोऽत्वरया पदन्यासमाचरतः प्रशस्तं, एवमेतेषु गमनादिवि-षयेषु कायकृतचेष्टायाः—कायव्यापारस्य नियमो व्यवस्थानिग्रहः, एवं कर्त्तव्यमेवं न कर्त्तव्यमिति, उक्तं च—"कायक्रियानिवृत्तिः कायोत्सर्गः शरीरगुप्तिः स्यात्। दोषेभ्यो वा हिंसादिभ्यो विरतिर्मनोगुप्तिः ॥१॥" अत्र च यद्यपि मनोव्यापारसंसृष्टः कायव्या-

पारः तथापि कायचेष्टायाः साक्षात् कायेनैव निष्पादितत्वाद्बहिरुपलक्ष्यमाणत्वाच्च प्राधान्येन विवक्षा। वाग्गुप्तिविषयप्रदर्शनमाह–याचनेत्यादि (१८४-२) याचनं–प्रार्थनमन्यतो गृहस्थादेराहारोपधिशय्यानां, तच्च मुखवसनाच्छादितवक्त्रदेशस्य प्रवचनविहितवाक्यशुद्ध्यनुसारिणो भाषमाणस्य वाग्गुप्तिर्भवति, तथा पृच्छनमाचरतोऽवगमनवैद्यसन्देहविच्छेदादिविषयमागमविधिभाजो वाग्गुप्तिः, तथा धर्म्ममाचक्ष्वेति पृष्टः श्राद्धेन केनचित् प्रकल्पग्रन्थाभिहितनीत्या व्याकुर्यात् सम्यगुपयुक्तः, अन्यद्वा सावद्यमनवद्यं वा पृष्टः समाधाय लोकागमाविरोधेनाचक्षीत,एवंविधः पृच्छनादिविषयो वागूनियमो वाग्गुप्तिः, मौनम्–अभाषणमेव वा वाग्गुप्तिरिति, आह च–"अनृतादिनिवृत्तिर्वा मौनं वा भवति वाग्गुप्तिः।" मनोगुप्तिस्वरूपाख्यानायाह–सावद्येत्यादि (१८४-३) अवद्यं–गर्हितं पापं सहावद्येन सावद्यः संकल्पः–चिन्तनमालोचनमार्त्तरौद्रध्यायित्वं चलचित्ततया वा यदवद्यवच्चिंतयति तस्य निरोधः–अकरणमप्रवृत्तिर्मनोगुप्तिः, तथा च कुशलसंकल्पानुष्ठानं सरागसंयमादिलक्षणं येन धर्म्मोऽनुबध्यते यावान् वाऽध्यवसायः कर्मोच्छेदाय यतते सोऽपि सर्वः कुशलसंकल्पो मनोगुप्तिः,अथवा न कुशले–सरागसंयमादौ प्रवृत्तिः नाप्यकुशले–संसारहेतौ योगनिरोधावस्थायामभावादेव मनसो गुप्तिः मनोगुप्तिः, तत्काले च ध्यानसंभवात् सकलकर्मक्षयार्थ एवात्मनः परिणामो भवतीति। एवं कायादिनिरोधात्तन्निमित्तकर्म्माश्रवणेऽसति संवरप्रसिद्धिरुक्ता, संप्रति चेष्टावतोऽपि संवरसिद्ध्यर्थमिमाः पंच समितयोऽभिधीयंते, आह च–"तद्गुणपरिशुद्ध्यर्थं भिक्षोर्गुप्तीर्जगाद तिस्रोऽर्हन्। चेष्टितुकामस्य पुनः समितीः प्राजिज्ञपत् पंच ॥१॥"

ईर्याभाषैषणाऽऽदाननिक्षेपोत्सर्गाः समितयः ॥ ९-५ ॥ सूत्रम् ॥

अनन्तरसूत्रात् सम्यग्ग्रहणमनुवर्त्तते, तत् प्रत्येकमभिसम्बन्धनीयं, समितिग्रहणं च, ईरणमीर्या–गतिः परिणतिः सम्यग्–

आगमानुसारिणी गतिरीर्यासमितिः, समितिरिति तान्त्रिकी संज्ञा पंचसु चेष्टासु,अथवा नानुवर्त्तते सम्यग्ग्रहणं, समितिरिति समुपसर्गः प्रशंसार्थः, प्रशस्ता इतिः–चेष्टा, सर्ववित्प्रवचनानुसारेण प्राशस्त्यार्थः, एवं भाषणं भाषास्तद्विषया समितिः भाषासमितिः, एषणमेषो–गवेषणमेषणासमितिः, आदानं–ग्रहणं निक्षेपो–न्यासः स्थापनं तयोः समितिः प्रावचनेन विधिनाऽनुगता आदाननिक्षेपणासमितिः, उत्सर्जनमुत्सर्गः, उत्सर्जनमाहारोपधिशय्योच्चारादेर्भगवद्वचनापेक्षमुत्सर्गसमितिः, ईर्यादयः कृतद्वन्द्वाः समितिशब्दसमानाधिकरणा इति॥ अमुमर्थं भाष्येण स्पष्टयति–सम्यगीर्येत्यादिना (१८४–६) सम्यग्–आगमपूर्विका ईर्या–गमनमात्मपरबाधापरिहारेण, यथोक्तं–"पुरओ जुगमायाए, पेहमाणो महिं चरे। वज्जेंतो बीअहरिआइं, पाणे य दगमट्टिअं॥१॥ ओवायं विसमं खाणुं, विज्जलं परिवज्जए। संकमेण न गच्छिज्जा, विज्जमाणे परक्कमे ॥२॥" सम्यग्भाषाऽप्यागमानुवर्त्तिनी, "जा य सच्चा न वत्तवा, सच्चामोसा य जा मुसा। जा य बुद्धेहिऽणाइण्णा, ण तं भासेज्ज पण्णवं ॥ ३ ॥" सम्यगेषणा–गवेषणा आगमविधिना पिंडादीनां, सम्यगादाननिक्षेपौ प्रत्युपेक्षणप्रमार्जनपूर्वकौ, सम्यगुत्सर्गः स्थंडिले व्यपगतप्राणिके, इतिशब्दः स्वरूपप्रतिपादनार्थः, एवंस्वरूपाः पंचैव समितयः, तदेव स्वरूपं प्रपंचयति–तत्रेत्यादि, तत्र तासु समितिषु ईर्यासमितिरित्थंरूपा अवश्यकार्ये चेत्यवश्यं कार्यं–कर्त्तव्यं यदागमोदितं प्रयोजनं विहारादिभूगमनं, तदेव भूयः स्पष्टयति–संयमार्थमिति, संयमः सप्तदशभेदः, तदेव चावश्यकमवश्यंतया कर्त्तव्यं, सर्व इति सर्वत्र युगप्रमिते भूप्रदेशे, पादाग्रादारभ्य यावद्युगमात्रं तावन्निरीक्षणेत्यर्थः, युक्तः आयुक्तः, तस्यैवं चेष्टमानस्य शनैः शनैर्मन्दं गतिभेदमकुर्वतो न्यासं चरणयोराचरत ईर्यासमितिः। सम्प्रति भाषासमितिनिरूपणायाह–हितमित्यादि, आत्मने परस्मै च हितमायत्यां तदात्वे चोपकारकं मुखवसनाच्छादितास्येन, नातिबहु, प्रयोजनमात्रसाधक-

मिदं, असंदिग्धं स्फुटवर्णमर्थप्रतिपत्तौ या न सन्देहकारि, निरवद्यार्थमनुपघातकं षण्णां जीवनिकायानाम्, एवंविधं च नियतं सर्वदैव भाषणं भाषासमितिः। एषणासमितिस्वरूपावधारणायाह–अन्नपानेत्यादि(१८४–९) अन्नम्–अशनखाद्यस्वाद्यभेदं पानम्–आरनालतंदुलक्षालनाद्युद्गमादिदोषपरिशुद्धं तथा रजोहरणं समुखवसनं पात्रद्वयं चोलपट्टकादि चीवरम्, आदिग्रहणात् चतुर्दशविधोऽप्युपधिः स्थविरकल्पयोग्यः जिनकल्पयोग्यश्च सहौपग्रहिकेण कार्यः, धर्म्मसाधननिमित्तं, श्रुतचरणधर्म्मसाधकानामित्यर्थः, साक्षात् पारंपर्येण च, न हि पात्राद्यन्तरेण महाव्रतसंरक्षणं कर्तुं शक्यम्, एवमाहारोपकरणविषयामेषणां प्रतिपाद्य प्रतिश्रयैषणाभिधानायाह–आश्रयः–शय्या,साऽप्युद्गमादिदोषरहितैव परिभोग्या, चशब्दः समुच्चितौ, तत्र षोडश आधाकर्म्मादय उद्गमदोषाः, उत्पादनादोषाः षोडश चैव धात्र्यादयः, दशैषणादोषाः शंकितादयः, एतद्दोषपरिहारेणान्नपानादिग्रहणमेषणासमितिः, उक्तं च–"उत्पादनोद्गमैषणधूमांगारप्रमाणकारणतः। संयोजनाच्च पिण्डं शोधयतामेषणासमितिः ॥१॥" आदाननिक्षेपसमितिस्वरूपविवक्षया प्राह–रजोहरणेत्यादि (१८४-११) रजोहरणादिपात्रचीवरादीनामिति चतुर्दशविधोपधेर्ग्रहणं द्वादशविधोपधिग्रहणं च पंचविंशतिविधोपधिपरिग्रहश्च, पीढफलकादीनामिति चाशेषौपग्राहिकोपकरणं आवश्यकार्थमित्यवश्यंतया वर्षासु पीठफलकादिग्रहः, कदाचिद्धेमन्तग्रीष्मयोरपि क्वचिदनूपविषये जलकणिकाकुलायां भूमौ, एवं द्विविधमप्युपधिं स्थिरतरमभिसमीक्ष्य प्रमृज्य च रजोहृत्याऽऽदाननिक्षेपौ कर्त्तव्यावित्यादाननिक्षेपणासमितिः, आह च–"न्यासाधिकरणदोषात् परिहृत्य दयापरस्य निक्षिपतः। न्यासे समितिरथादाने च तथैवाददानस्य ॥१॥" उत्सर्गसमितिस्वरूपकथनायाह–स्थण्डिल इत्यादि (१८४-१३) स्थानदानात् स्थण्डिलं—उज्झितव्यवस्तुयोग्यो भूप्रदेशः, कीदृक् पुनस्तदवकाशं ददातीत्याह–स्थावरजंगमजन्तुवर्जितं, तत्र स्थावराः–सचित्ता

मिश्राश्च पृथिव्यादयः पंच, द्वीन्द्रियादयो जंगमाः, तद्वर्जितं निरीक्ष्यं चक्षुषा प्रमृज्य च रजोहृत्या वस्त्रपात्रखेलमलभक्तपानमूत्र-पुरीषादीनामुत्सर्गः-उज्झनं उत्सर्गसमितिः, इतिशब्दः परिसमाप्तिवचनः, आह च-"न्यासादानसमित्यां व्युत्सर्गे वापि वर्णिता समितिः। सूत्रोक्तेन (च) विधिना व्युत्सृजतोऽर्थं प्रतिष्ठाप्यम् ॥१॥ एवं साधोर्नित्यं यतमानस्याप्रमत्तयोगस्य। मिथ्यात्वाविरति-प्रत्ययं निरुद्धं भवति कर्म्म ॥२॥" अत्राह-उक्तं गुप्तिसमितीनां संवरहेतुत्वम्, अधुना को धर्म्मः संवरस्य करणमिति वक्तव्यं, सा-ध्वगारिधर्मिभेदादिति संदेहस्य प्रश्नः, उच्यते, सत्यपि अविशेषाभिधाने न पुण्यकर्म्म धर्म्मः, किं तर्हि?, संवरोपादानसामर्थ्य-निमित्तं यो धर्म्मः स उच्यते—

उत्तमः क्षमामार्दवार्जवशौचसत्यसंयमतपस्त्यागाकिंचन्यब्रह्मचर्याणि धर्मः ॥ ९-६ ॥ सूत्रम् ॥

उत्तमग्रहणमगारिधर्म्मव्यवच्छेदार्थं, उत्तमो धर्म्मः प्रकर्षयोगात्, क्षमादयो हि उत्तमविशेषणविशिष्टाः, तादृशाश्चागारिणो न संति, यतः सर्वावस्थमनगाराः क्षमंते सकलमदस्थाननिग्राहिणः शाठ्यरहिताः सन्तोषामृततृप्ताः सत्यवादिनः संयमिनस्तपस्विनो यथावद्दातारः कनकादिकिंचनरहिताः सर्वप्रकारं ब्रह्म बिभ्रतीति, नत्वेवं जातुचिद् गृहिणां क्षमादयः प्रकर्षभाजो भवंति, क्षमादयः कृतद्वन्द्वाः प्रथमाबहुवचनेन निर्दिष्टाः, समुदिता एवोत्तमो धर्म्मः,एप च क्षमादिसमुदायः संवरं धारयति-करोति यतस्ततो धर्म्मः, संवरार्थं चात्मना धार्यते इति धर्म्मः, एतावंति धर्माङ्गानि तन्निष्पादितश्च धर्म्म इति दर्शयति इत्येष दशविधोऽनगारधर्म्म उत्तमगुणप्रकर्पयुक्तो भवति (१८४-१८) एवमेप दशप्रकारो यतिधर्म्मः, उत्तमा गुणाः-मूलोत्तराख्यास्तेषां प्रकर्पः-परा काष्ठा तद्युक्तोऽनगाराणां धर्मो भवति, तत्र क्षमेत्यादिना विवृणोति, उत्तमत्वं क्षमेति क्षमणं-सहनपरिणाम आत्मनः शक्तिमतः

अशक्तस्य वा प्रतीकारानुष्ठाने, तां पर्यायशब्देनाचष्टे तितिक्षा क्षान्तिः सहिष्णुत्वं सहनशीलत्वं क्रोधनिग्रहः-क्रोधस्योदयनिरोधः उदितस्य वा विवेकबलेन निष्फलतापादनम्, एवमेतेऽनर्थान्तरवाचिनः शब्दाः क्षमामेवाभिदधति, तत् कथं क्षमितव्यमिति, भावे कृत्यः, क्षमापि भावः, भाष्यकारस्तु स्वयमेवाशंक्याह एवम्, अतः सामान्यमात्रमाश्रित्य तच्छब्दयोगः, वाक्यार्थस्तु सा क्षमा कथं केन प्रकारेण कर्त्तव्या?, एवं मन्यते-दुर्भेद्यः क्रोधवेगो मदकलस्येव करिणः, चेत्शब्द आशंकाप्युदासचिकीर्षायां, आह-उच्यत इति क्रोधनिमित्तस्यात्मनि भावाभावचिन्तनात् (१८०-१) भावः-सद्भावोऽस्तित्वमभावो-नास्तित्वं, चिन्तनात् उभयथापि क्रोधो न घटते इति, येन निमित्तेन परप्रयुक्तेन मम कोप उत्पद्यते तन्निमित्तं मयि किं सत्यमेवास्ति उताभ्याख्याति परः?, यदि सत्यमस्ति एतन्निमित्तं किं कोपेन?, कृतं खलु मयेदं, नार्णीयोऽपि परस्यात्रागः सद्भूतमर्थं प्रकाशयतः, स्वकृतं हि दुश्चरितं लपत्येवं चिंतयेत्, एतदेवाह-भावचिंतनात् तावद् विद्यंते मयि एते दोषाः, किमत्रासौ मिथ्या ब्रवीति इति क्षमितव्यं, तथा अभावचिंतनादपि क्षमितव्यमित्यादि, ये दोषाः परेणोपक्षिप्यन्ते मयि नैते विद्यन्ते-अभाव एव, परस्त्वज्ञानादेवमभिधत्ते, अज्ञात्वैव दोषानुपक्षिपतीत्यर्थः, एवं च निरपराधमात्मानं अपेत्य क्षन्तव्यमेव, किंचान्यदालम्बनं सहिष्णुत्वे इत्याह-क्रोधदोषचिन्तनाच्चेत्यादि, (१८४-६) क्रुद्धः-कषायपरिणतो विद्वेषी कर्म्म बध्नाति, परं वा निहंति व्यापादयति वा, ततः प्राणातिपातनिवृत्तिव्रतलोपः स्यात्, गुरून् आसादयेद्-अधिक्षिपेदतो ज्ञानादिनिर्वाणसाधनपरिहाणिरवश्यंभाविनी, क्रुद्धो वा भ्रष्टस्मृतिको मृषापि भाषेत, विस्मृतप्रव्रज्याप्रतिपत्तिः परेणादत्तमप्याददीत, द्वेषात् परपापंडिनीषु ब्रह्मव्रतभंगमप्यासेवते, तथा प्रद्विष्टः सहायबुद्ध्या गृहस्थेष्वविरतेषु मूर्च्छामपि कुर्यात्, आदिग्रहणादुत्तरगुणभंगमप्याचरेत्, करडकवत्, भक्तालाभे मासक्षपण-

रुत्न्। किं चान्यदालंबनं क्षांतौ इत्याह–बालस्वभावचिंतनाच्च (१८५–८) बालशब्दोऽविधेयवचनः, न वयोऽवस्थावाची, तयर चाह भाष्यकृत्–बालो मूढो निर्विवेक इत्यर्थः, तस्य चैष स्वभावो मूढत्वाद्यत्किंचनभाषित्वं तत्स्वभावालोचनमन्वेषणं अतस्त्वंचिंतनात् क्षमितव्यमेव, चशब्दः समुच्चयार्थः, उत्तरोत्तररक्षार्थमिति, परोक्षाक्रोशात् प्रत्यक्षाक्रोशनमुत्तरं, प्रत्यक्षाक्रो-शात्ताडनं, ताडनान्मारणं, मारणाद्धर्मभ्रंशनं, परोक्षाक्रोशानां क्षमया प्रत्यक्षाक्रोशनं रक्षितं भवति, एवमुत्तरत्रापि, अस्ति हि किय-दपि मन्दाभमाक्रोष्टुर्मयि यतः परोक्षमाक्रोशति न प्रत्यक्षं, दिष्ट्येति तृतीयैकवचनप्रतिरूपको निपातः प्रसादवचनः प्रशंसावचनो वा, अपमेव च प्रसादो मम, इदमेव वा साधु यन्मां परोक्षमाक्रोशति, न प्रत्यक्षमित्येष एव लाभः, लौकिकः खल्वयमाभाणकः–अपमेव मे लाभ इत्येवं सर्वत्र व्याख्या, किंचान्यदालम्बनमाश्रित्य क्षमा कार्या?, तदभिधीयते–स्वकृतकर्म्मफलाभ्यागमाच्च (१८६–४) जन्मान्तरेणोपात्तस्य कर्म्मणः स्वकृतस्यायं विपाको मम यदाक्रोशति ताडयति च परः, स तु निमित्तमात्रं कर्म्मोद-यस्य, यस्मात् द्रव्यक्षेत्रकालभावापेक्षः कर्म्मणामुदयो भगवद्भिराख्यातः, स्वकृतं च कर्म्मानुभवितव्यमवश्यंतया निकाचितं तपसा वा क्षपणीयमिति क्षमितव्यमेव, किंचान्यदालंबनं क्षंतुमनसा विधेयमिति, क्षमागुणांश्चेत्यादि, क्षमाया गुणाः–ज्ञानादिवृद्धि-हेतवो अनायासादयः तांश्चानुचिन्त्य क्षमामेव विदधीत, आयासो- दुःखहेतुश्चेष्टाविशेषः प्रहरणसहायान्वेषणासंरम्भावेशारुणविलो-चनस्वेदजलधाराकुलप्रहारवेदनादिकस्तद्विपरीतोऽनायासः–स्वस्थता, आदिग्रहणात्तत्प्रत्ययकर्म्मप्रायश्चित्ताभावः शुभध्यानाध्य-वसायता परमसमाधानोत्पादनं तन्निमित्तभवान्तरात्मरत्नमित्यादयः, इत्थमनुस्मरतो गुणः सम्पद्यते क्षममाणस्य, क्षमितव्यमे-वेति क्षमाधर्म्मः। मृदुः–अस्तब्धस्तद्भावस्तत्कर्म्म वा मार्दवं, तल्लक्षणप्रदर्शनायाह–नीचैर्वृत्त्यनुत्सेकाविति–(१८६–८)

नीचैर्वृत्तिः—अभ्युत्थानासनदानाञ्जलिप्रग्रहयथार्हविनयकरणरूपं नीचैर्वर्त्तनं उत्सेकश्चित्तपरिणामो गर्वरूपस्तद्विपर्ययोऽनुत्सेकः संसारस्वभावं भावयतोऽसमंजसं विशिष्टजातिकुलादिसंपदः कदाचिदेवासाद्यन्ते कदाचिद्धीनाः, ततश्च न गर्वपरिणाममास्कन्दती-त्येतदेवाह—मदनिग्रहो मानविघातश्चेत्यर्थः, मद्यतेऽनेनेति मदो—जात्यादिमदः तस्य निग्रहः—उदयनिरोधः कदाचिदुदितस्य वा वैफल्यापादनं, मानविघातश्चेति मानो—मूलप्रकृतिः यद्विजृंभणादेते प्रादुःष्यंति जात्यादिमदास्तस्य विघातो—मूलोत्कर्त्तनं इत्यर्थः, तद्घाते चावश्य भावी जात्यादिमदविनाशः, तन्निरूपणार्थमाह—तत्र मानस्येत्यादि, तत्रेति वाक्योपन्यासार्थः, स्थानानि—भेदाः इमानिति प्रत्यक्षीकरोति, परस्यानुभवमुत्पादयति, तद्यथेत्यादिनोदाहरति, जात्यादीनि वीर्यान्तान्यष्टौ स्थानानि, तत्र जातिः—पित्रन्वयः प्रख्याततमवंशता जातिः—जन्म आत्मलाभः पंचेन्द्रियादिलक्षणा वा तया गर्वमुद्वहति, विशिष्टजातिरहमिति, विदितकर्म्मपरिणामस्तु निरुणद्धि जातिमद, स्वकृतकर्म्मफलभुजो जीवा नानाजातीरुच्चावचाः प्रपद्यन्त इति न श्रेयो जातिमदः, मात्रन्वयः कुलमुग्रभोजादि वा, तेनापि मदो न युक्त एव, जात्यादिभावनावदिति, रूपं शरीरावयवानां सन्निवेशविशेषो लाव-ण्ययुक्तिस्तेनापि कश्चिन् माद्यति, तत्प्रतिषेधस्त्वाद्युत्तरकारणालोचनाद्भवति, तत्राद्यं कारणं मातुरोजः पितुः शुक्रं, उत्तरकारणं जननीग्रस्तग्रस्तान्नस्तनपानरसाभ्यवहारो रसहरण्येत्येवमामृपतो न प्रतिभाति रूपमदः, त्वङ्मांसास्थिपुरीषपूयाद्यशुभभावनात्, ऐश्वर्यमदो धनधान्यसम्पत्प्रभवः धनं रजतचामीकरमरकतादि गोमहिष्यजाविकादि च व्रीहितिलमुद्गमाषगोधूमयवकंग्वादि धान्यं तेनापि कर्म्मानुभावादप्राप्तेन प्राप्तेन वा संरक्ष्यमाणेन क्लेशकारिणा अकाण्डभंगुरेणायत्यामायासबहुलेन को मद इत्येवं प्रत्याच-क्षीत, वाचकेन त्वेतदेव बलसंज्ञया प्रशमरतावुपात्तं, तच्च त्रिधा—शरीरस्वजनद्रव्यबलं, इहैश्वर्यग्रहणात् स्वजनद्रव्यबलपरिग्रहः

शरीरबलं तु वीर्यग्रहणात् पृथग्गृहीतं,वीर्यबलस्य प्राधान्यप्रकाशनार्थं, विज्ञानं—बुद्धिश्चतुर्विधा औत्पत्तिकी वैनयिकी कर्मजा पारिणा-
मिकी चेति, तत्रौत्पत्तिकी अदृष्टाश्रुतपूर्वे वस्तून्युपनते तत्क्षण एव समासादितोपयतनाऽव्याहतफला भरतरोहकादेरिव भवति,
गुर्वादिविनयानुष्ठानाभ्यामविशेषप्रभवा वैनयिकी ऐहिकामुष्मिकफलसम्पादिनी प्रस्तुतकार्यनिस्तरणसमर्था धर्म्मादित्रिवर्गशास्त्रा-
र्थग्राहिणी न पुरागमनकारणहस्तिनीपरिज्ञायिनैमित्तिकस्येव, कर्म्मजा पुनः धीः साधुकारफला, अनाचार्यजं कर्म्म, तत्र पुनः पुनरु-
पयोगात् प्रतिक्षणमभ्यस्यतस्तादृशी बुद्धिरुत्पद्यते येन प्रथमादिकर्म्मातिशायी पाश्चात्यं कर्म्मोपजायते, सौवर्णिककृषीवलतंतुवा-
यादेरिव, पारिणामिकी तु वयोविपाकलब्धजन्मा परमहितनिःश्रेयसफला पंचावयवादिसाधनानुसारिणी भवत्यभयकुमारादेरिव,
यथासंभवमित्थं लब्धया बुद्ध्या अहमेव बुद्धिमानिति मन्यमानः परान् परिभवति शेषं जगद्, मदसमुद्भूतस्य परपरिभवपरिवा-
दात् घोरतरं चाशुभं कर्म्म नीचैर्गोत्रादि बन्धमेति यदनेकभवपरम्परासु परिनिष्ठास्यतीति सद्योऽवमत्य बुद्धिगर्वमित्थं चिंतयेत्—
वृद्धयो हि विनयाधानहेतवः सर्वदा, न जातुचिदहंकारस्य कारणीभवंति, मानपरस्य च विनयखण्डनमवश्यंभावि, विनयहीनस्य
च धर्म्मतपसी निष्फले स्यातामिति विज्ञानमदो यत्नेन महता विवर्जनीयः। श्रुतं—आप्तप्रणीत आगमः तत्परिज्ञानात् माद्यति—अह-
मेव जाने नापर इति, श्रुतमदान्धश्च बालिशमेव परं मन्यते, श्रुतमदं च निजिघृक्षुरित्थं आलोचयेत्—प्रकर्षाप्रकर्षवृत्तित्वात् क्षयो-
पशमस्य सन्ति मत्तोऽन्येऽपि बहुश्रुताः,कदाचिदहमन्येभ्योऽल्पश्रुतोऽतिगहनार्थत्वादागमानां, अवगतश्रुतोऽपि वा दुरधिगतदर्थः
स्यामिति श्रुतमदत्यागः श्रेयान्, अपिच—चतुर्दशपूर्वधरेष्वपि षट्स्थानकमवघुष्यते यदि तत्र का कथा शेषश्रुतधरेषु ?, श्रुतज्ञाना-
वरणक्षयोपशमवैचित्र्यादधिगतसकलश्रुतेनापि परिहार्यः श्रुतमद इति। लंभनं लाभः—प्राप्तिः विशिष्टफलस्य, सत्कारसन्मानादयः

नृपतिसन्मित्रभृत्यस्वजनेभ्यो विज्ञानतपोऽभिजनशौर्य्याद्याधिक्यादहं लभेयं, अपरः प्रयत्नवानपि न लभत इति स्वलाभेन माद्यति, तथा सकलजनवल्लभतां च प्राप्तोऽहं, अयमपरो न कस्मैचिद् रोचते, वचनमप्यस्य नादरयन्तीति, सर्वोऽप्ययं लाभमदः, स त्वेवं निग्रहीतव्यो–लाभान्तरायकर्म्मोदयादलाभो लाभान्तरायकर्म्मक्षयोपशमाच्च सत्कारादिलाभः संसारे परिभ्रमतो जीवस्य कादाचित्को, नतु शाश्वतः, कर्म्मायत्तत्वात्, संसारानुबन्ध्येवेति लाभमदत्यागः श्रेयस्करः, वाल्लभ्यकप्राप्तिरपि कर्मोदयजनितैव संसारिणां च सुलभेति वाल्लभ्यकलाभमदः परिवर्जनीय इति। वीर्यं पराक्रमः शक्तिरुत्साहः सामर्थ्यमतिशयवती चेष्टेति पर्यायाः, वीर्यान्तरायक्षयोपशमात् प्रादुरस्ति वीर्यं बलविशेषः तेन वीर्येण माद्यतीति वीर्यमदः तस्य प्रतिक्षेपः संसारानुबंधित्वचिंतनात्, संसारानुबंधी वीर्यमदः कषायरूपत्वाद् वीर्यस्य चाशाश्वतत्वात्, तथाहि–बलिनोऽपि पुरुषाः क्षणेन विबलतामुपयान्तो दृश्यन्ते, निर्बलाश्च बलवन्तः संस्कारवशादाशु जायंते, तथा व्याधिजरामृत्युरिपूद्भूतबलेषु चक्रवर्तिहरिनरपतयोऽपि सीदंति ससुराः, किमुतान्ये पृथग्जना इति वीर्यमदादुपरमः श्रेयान्, इतिशब्दो मदस्थानानामियत्तामावेदयति, मौलान्येतावंति, सूक्ष्मप्रभेदास्त्वेषां भूयास इति ॥ सम्प्रति सामान्येन सर्वमदस्थानेषु दोषानाविर्भावयन्नुपसंहरति–एभिर्जात्यादिभिरित्यादि (१८६–११) उक्तलक्षणैर्जात्यादिभिर्मत्तः–अहंमानी परनिंदायामात्मप्रशंसायां च सक्तस्तीव्रेणातिशयवताऽहंकारेणोपहतबुद्धिर्मलीमसितधिषण इह-परलोकानुभवनीयं कर्म्मोपचिनोति बध्नाति अकुशलं पापं अशुभफलं, अकुशलमपि बद्धं कदाचित् कुशलफलतया परिणमत इत्यशुभफलग्रहणं, सम्यग्दर्शनं मुक्तिसाधनं श्रेयस्तच्चाऽऽख्यायमानमपि न प्रतिपद्यते न श्रद्धत्ते, यत एतदेवं तस्मादेषां मदस्थानानां मार्दवं निग्राहकं तन्निग्रहाच्च धर्म्म इति ॥ सम्प्रति मायाप्रतिपक्षं आर्जवं लक्षयति, भावविशुद्धिरविसंवादनं

मार्जवलक्षणं (१८६–१६) भावाः कायवाङ्मनसानि तेषां विशुद्धिः अवक्रता शाठ्यविरहितत्वं, मनसोऽपि परिणामः कायवाचोरनर्पते, तदनुवृत्तेः, मायावी तु सर्वातिसन्धानपरतया सर्वाभिशंकनीयः कपटपटप्रच्छादितकायादिक्रियः सुहृदेऽपि द्रुह्यति अविसंवादनमविनाशनमहिंसनमित्यनर्थान्तरं, विनाशनं परिणामान्तरापादनं विसंवादनमुच्यते, न विसंवादनमविसंवादनं परिणामान्तरानापादनमिति, तमेव योगानामविपर्यासं दर्शयति—ऋजुभाव इत्यादिना (१८६–१६) उपधिनिकृत्योर्विशेषः—उपधिश्छद्म च्छादनं स्वामिसंधेः, निकारो निकृतिः परिभवपरबुद्धिद्वारेण स्वाभिसंधेः साफल्यापादनं, तस्मादेवंविधमार्जवं धर्म्मः। अधुना लोभप्रतिपक्षं शौचलक्षणमाविर्भावयन्नाह–अलोभः शौचलक्षणं (१८७–१) लोभस्तु भावतः परमार्थतोऽभिष्वंगश्चेतनाचेतनमिश्रवस्तुविषयः, लोभदोषाच्च क्रोधमानमायाहिंसाऽनृतस्तेयाब्रह्मपरिग्रहार्जनमलजालेनोपचीयमान आत्मा भवत्यशुचिः, तस्मादलोभो लोभाभावो, न क्वचिन्ममत्वं, अलोभस्य हि लोभदोषनिर्मुक्तत्वान्निर्भयत्वं, ततः स्वपरहिताभिप्रवृत्तिरित्येतदेव शौचलक्षणं मुख्यमात्मनः, एतदेव स्पष्टयति–भावविशुद्धिर्ममत्वाभावो निस्संगता अपरद्रोहेणात्मार्थानुष्ठानं निष्कल्मषता निर्म्मलता धर्म्मसाधनमात्रा–रजोहरणमुखवस्त्रिकाचोलपट्टकपात्रादिलक्षणास्तास्वप्यनभिष्वंगो, विगतमूर्च्छ इत्यर्थः, यस्मादशुचिर्भावकल्मषसंयुक्तो, भावकल्मषं च लोभकषायः तस्मात्तत्यागः शौचं धर्म्म इति, शरीरमहाव्रणप्रक्षालनादि द्रव्यशौचं, तच्च प्रासुकैषणीयेन जलादिना निर्लेपनिर्गन्धतापादनमागमोक्तेन विधिना कार्यमिति। अवसरप्राप्तं पंचमं धर्मांगं निर्दिदिक्षुराह–सत्यर्थे भवं वचः सत्यं (१८७-६) सद्विद्यमानोऽर्थोऽनेकधर्मा, तस्मिन् सत्यर्थे भवं यथावस्थितार्थप्रतिपत्तिकारि सत्यं, नन्वेवं सति लुब्धकाय मृगाख्यानमपि सत्यं स्यात्, एवं तर्हि सच्छब्दः प्रशंसार्थः, प्रशस्तोऽर्थः सन्–न पापहेतुः तस्मिन् सति भवं सत्यं,

पक्षान्तरसमाश्रयणं वा–सद्भ्यो (वा) हितं सत्यमिति; सन्तो जीवा एव गृह्यन्ते, हितशब्दोपादानात्, न ह्यजीवसंबंधि किंचित् हितमस्ति अतोऽप्रशस्तार्थव्यावृत्तिः, सामान्येन वा जीवाजीवेभ्यो हितं, अनेकपर्यायकलापभाजोऽर्थाः तेषां यथावस्थितविवक्षितपर्यायप्रतिपादनं सत्यं, एतदेव तेभ्यो हित यद्यथार्थप्रतिपादनमिति, तस्येदानीं सत्यवचनस्य विशेषगुणानाचष्टे–तदनन्ृतमिति, अनृतं–भूतनिह्नवः अभूतोद्भावनं विपरीतं कटुकसावद्यादिवचनं, नानृतमननृतं, ननु च सत्यपर्याय एवायं, सत्यमेतत्, तथापि वक्ष्यमाणोत्तरगुणव्याप्त्यर्थं पुनर्वचनं, पौरुषं–रूक्षं स्नेहरहितं निष्ठुरं–परपीडाकारि न परुषमपरुषं,तत्राविनेयेषु माध्यस्थ्यभावना विनेयेषु तु सौम्यवाग् अपरुषं,पिशुनं–प्रीतिविच्छेदकारि द्वयोर्बहूनां वा सत्यासत्यदोषाख्यानात्, न पिशुनमपिशुनं, सभार्हं सभ्यं न सभ्यमसभ्यं–सभासु विगर्हितं, विदग्धसभासु गुह्यप्रकटनमर्मोद्घट्टनवचनवत्, तस्य प्रतिषेधो नासभ्यमेव सभ्यं, चपलः–अनालोचितभाषी तद्वचनमपि चपलं तच्च दोषोत्क्षेपि भवति, आविलं–कलुषं कषायवशवर्त्तिनो वचनं नाविलमनाविलं प्रसन्नवचनमितियावत् विरलं विश्रम्यभाषणं सविच्छेदत्वाच्च श्रोतुरनादरवाक्यव्याहरणाच्छ्रवणवैरस्यं करोति न विरलमविरलमनुसंततमिति, सम्भ्रांतमुच्छ्वासकरं न संभ्रान्तमसंभ्रान्तं, अतित्वरितं वा संभ्रान्तमनुच्छ्वसन् भाषयेत्, अव्यक्तवर्णपदालापत्वाद् अप्रत्यायकं वा श्रुतिविरसाक्षरमप्ररोचकमेव स्यात्, मधुरमिति प्रसन्नपदघट्टितं श्रुतिसुखं सुखावबोधार्थं च, अभिजातमविनयरहितं सप्रश्रयं सविनयं संदिग्धमाकांक्षानिवर्त्तने अक्षमं तद्विपरीतमसंदिग्धम्–आकांक्षाविच्छेदकारि निराकांक्षमिति, अस्फुटमनिश्चितार्थत्वादाल्नविशीर्णप्रायं विनिश्चितार्थं स्फुटं, अनौदार्यं अत्यौद्धत्यदीपकं तद्विपरीतमौदार्यं,अप्रधानार्थं अनौदार्यं उदारार्थप्रतिघद्धत्वादुदारं तद्भाव औदार्यं तद्युक्तमौदार्ययुक्तं, विद्वज्जनमनोरंजने असमर्थं ग्राम्यं न ग्राम्यमग्राम्यं पदार्थांश्च विवक्षितानभि-

व्याहरतीति पदार्थाभिव्याहारं अग्राम्यत्वात् पदार्थानभिव्याहरतीति विद्वज्जनाभिमतान् इत्यग्राम्यपदार्थाभिव्याहारं, शीभरं वि-
त्थकं विमर्दकरं न शीभरमशीभरं आश्वेव प्रस्तुतार्थपरिसमाप्तकारि, अरागद्वेषयुक्तमिति मायालोभाभ्यां कोपमानाभ्यां
चायुक्तं, सूचनात् सूत्रं गणधरप्रत्येकबुद्धस्थविरग्रन्थितं तस्य यो मार्गः उत्सर्गापवादलक्षणः तदनुसारेण प्रवृत्तार्थं प्रस्तुतार्था-
दनपेतमर्थ्यं शुश्रूषुर्जनोऽर्थी तस्य भावः-चित्तं तद्ग्रहणसमर्थं तदावर्जनसमर्थं, तदेवंविधं आत्मपरानुग्रहसमर्थं भवति,
निरुधं-मायारहितं देशे यद् यत्र यस्यार्थस्य प्रसिद्धं तद्देशोपपन्नमविरुद्धं कालोपपन्नं यद्यत्र काले भण्यमानं न परस्योद्वेगकारि
भवति, प्रस्तावापेक्षमित्यर्थः, अनवद्यमगर्हितं अर्हच्छासनं द्वादशाङ्गं प्रवचनं तत्र तेन वा प्रशस्तमनुज्ञातं यतं तत्कार्यप्रयत्न-
महितं मुखवमनाच्छादितवदनविवरः पाणितलस्थगितमुखो वा, मितमिति यावता विवक्षितकार्यप्रतिपत्तिः तावदेव, न त्वपरिमितं,
याचनमभीक्ष्णमवग्रहादिविषयं प्रच्छनमुत्पन्नसंदेहस्य मार्गादिसूत्रार्थविषयं प्रश्नव्याकरणमन्येन पृष्टः प्रवचनाविरुद्धं व्याक-
रोतीति, तदेवमनृतपरुषाद्यपोह्य तद्विपर्ययेण सत्यमन्वेष्टव्यमिति, याचनाप्रच्छनप्रश्नव्याकरणेषु चतुर्ष्वेव प्राधान्येन साधोर्वाग्
व्यापारो, नान्यत्र, निष्प्रयोजनत्वात्, स्वाध्यायवाचनाद्यपि न कर्त्तव्यमिति चेत्, तन्न, आत्मसंस्कारार्थो वाचनादिर्यत्नः, संस्कृ-
तात्मा न त्रिष्वेव याचनादिषु व्याप्रियत इति, अथवा मुमुक्षोर्मुक्त्यर्थे यत्ने यदुपकारकं वचनं न तस्यास्ति निषेध इति। सम्प्रति
संयमोऽभिधीयते योगनिग्रहः (१८७-१३) संयमः योगा मनोवाक्कायलक्षणास्तेषां निग्रहः प्रवचनोक्तविधिना नियमः,
एवमेव गन्तव्यं एवं स्थातव्यं एवं चिंतयितव्यमिति, एष संयमोऽभिधीयते, स सप्तदशविधः संयमेत्यादि, स इत्थंरूपः
संयमः सप्तदशप्रकारो भवति, तद्यथेत्यनेन तान् प्रकारानभिमुखीकरोति, पृथिवीकायिकसंयमः पृथिवी कायः-शरीरं येषां

ते पृथिवीकायिकाः, एवं चेन्मत्वर्थीयाभावः, उच्यते, पृथिवीकायशब्दस्य जातिशब्दत्वाद्भवत्येव मत्वर्थीयः, कृष्णसर्पवान् वल्मीक इति यथा, अथवा ज्ञापकाद्भवति 'इङ्धार्योः शत्रकृच्छ्रिणी'ति, पृथिवीकायिकजातौ जातेर्वा संयमः—सम्यग् यमः—उपरमो निर्वृत्तिरित्यर्थः, ये जीवाः पृथिवीशरीरास्तेषां संघट्टपरितापव्यापत्तीर्मनोवाक्कायैः कृतकारितानुमतिभिश्च परिहरतीत्यर्थः, एवं सर्वत्र; यावत् पंचेन्द्रियसंयमः, प्रेक्ष्यसंयम इत्यत्र क्रियापदाध्याहारः, प्रेक्ष्य क्रियामाचरन् संयमेन युज्यते, प्रेक्ष्येति चक्षुषा दृष्ट्वा स्थण्डिलं बीजजन्तुहरितादिरहितं पश्चादूर्ध्वं निषद्यत्वग्वर्त्तनस्थानानि विदधातीत्येवमाचरतः संयमो भवति, उपेक्ष्यसंयमः व्यापार्य्याव्यापार्य्य चेत्यर्थः, एवं च संयमो भवति, साधून् व्यापारयतः प्रवचनविहितासु क्रियासु संयम इति व्यापारणमेव, अव्यापारणं उपेक्षणं गृहस्थान् स्वक्रियासु अव्यापारयत उपेक्षमाणस्य—औदासीन्यं भजतः संयमो भवति, अपहृत्यसंयम इति प्रोज्झ्य—परिवर्ज्य संयमं लभते, वस्त्रपात्राद्यतिरिक्तमनुपकारकं चरणस्य वर्जयतः संयमलाभः, भक्तपानादि वा संसक्तं विधिना परित्यजत इति, प्रेक्षिते स्थण्डिले रजोहृत्या प्रमार्जनमनुविधाय स्थानादि कार्यं, पथि वा गच्छतः सचित्तमिश्रपृथिवीकायरजोऽनुरंजितचरणस्य स्थंडिलात् स्थण्डिलं क्रामतोऽस्थंडिलाद्वा स्थण्डिलं प्रमृज्य चरणौ संयमभाक्त्वमागार्यादिरहिते, अन्यथा त्वप्रमार्जयत एव संयम इति। कायसंयम इति धावनवल्गनोत्सवनादिनिवृत्तिः शुभक्रियासु च प्रवृत्तिः, वाक्संयमो हिंस्रपरुषादिनिवृत्तिः शुभभाषायां च प्रवृत्तिः, मनःसंयमः अभिद्रोहाभिमानेर्ष्यादिनिवृत्तिः धर्म्मध्यानादिषु च प्रवृत्तिः, उपकरणसंयम इत्यजीवकायसंयमः, अजीवकायश्च पुस्तकादिः, तत्र यदा ग्रहणधारणशक्तिसम्पद्भाजोऽभवन् पुरुषा दीर्घायुषश्च तदा नासीत्प्रयोजनं पुस्तकैः, दुष्षमानुभावात्तु परिहीणैर्ग्रहणधारणादिभिरस्ति निर्युक्त्यादिपुस्तकग्रहणानुज्ञेत्येवं यथा कालमपेक्ष्यासंयमः संयमो

वा भवतीति संयमो धर्म्मः ।

साम्प्रतं तपः प्रस्तावायातमुच्यते-तपो द्विविधमित्यादि (१८८-१) तपतीति तपः, कर्त्तर्यसुन्, संयमात्मनः शेषाशयविशोधनार्थं बाह्याभ्यन्तरतापनं तपः, शरीरेन्द्रियतापात् कर्म्मनिर्दहनाच्च तपः, अपर आह-विशेषेण कायमनस्तापविशेषात् तपः, द्विविधमिति बाह्यमभ्यन्तरं च, बाह्यमिति बाह्यद्रव्यापेक्षत्वात् तीर्थिकगृहस्थादिकार्यत्वाच्च, अभ्यन्तरं अन्यतीर्थिकानभ्यस्तत्वाद् अन्तःकरणव्यापारस्य प्राधान्याद् अनपेक्षत्वाच्च, अन्ये त्वाहुः-परप्रत्यक्षं बाह्यं, स्वप्रत्यक्षमभ्यन्तरं, अथवा आतापनादिः कायक्लेशस्तपो बहिर्लक्ष्यत इति बाह्यं, अनशनादिभ्योऽपि बहिस्तरां वर्त्तत इति तदुपलक्षितं बाह्यं, नैवं प्रायश्चित्तादिः, तत् परस्तादुपरिष्टाल्लक्ष्यते अनशनावमौदार्यादि प्रायश्चित्तविनयादि च यथाक्रमं, इह स्वशून्यार्थं पुरुषविशेषचरितं प्रकीर्णकं कवलाहारादिनियतमनेकविधं तद्यथेत्यादिना दर्शयति, यववज्रमध्ये चन्द्रप्रतिमे द्वे (१८८-२) मध्यशब्दः प्रत्येकमभिसम्बध्यते, यवमध्या वज्रमध्या च चन्द्रप्रतिमे इति चन्द्रतुल्ये, यथा चन्द्रस्य कलावृद्धिः प्रतिवासरं एवं भिक्षाकवलवृद्धिः यथा चन्द्रस्य हानिः प्रतिदिनं तथा भिक्षाकवलहानिरिति, तत्र यवमध्या चन्द्रप्रतिमा शुक्लप्रतिपदारंभादमावस्यांता, प्रतिपद आरभ्य यथा चन्द्रस्य कलावृद्धिस्तथा भिक्षावृद्धिः कवलवृद्धिर्वा यावत् पौर्णमास्यां पंचदश कवलाः ततः कृष्णप्रतिपद्यपि पंचदश कवलाः एवमेकैककवलहान्या यावदमावस्यायामेकः कवल इत्येषा यवमध्या, वज्रमध्या तु कृष्णप्रतिपदारंभा, कृष्णप्रतिपदि पंचदश कवलानभ्यवहरति, तत्राप्येकैककवलहानिर्यावदमावस्यायामेकः कवलः, शुक्लप्रतिपद्यप्येक एवेति, द्वितीयादिष्वेकैकवृद्धिर्यावत् पौर्णमास्यां पंचदशेत्येषा वज्रमध्या। कनकरत्नमुक्तावल्य(१८८-२)स्तिस्रः कनकावली रत्नावली मुक्तावली च, तत्र कनका-

वली तावद्व्याख्यायते–प्राक्तावत् चतुर्थभक्तं ततः षष्ठमष्टमं, ततोऽपि षष्ठान्यष्टौ, पुनश्चतुर्थषष्ठाष्टमदशमद्वादशचतुर्दशषोडशाष्टादशविंशतिद्वाविंशतिचतुर्विंशतिषड्विंशतिअष्टाविंशतित्रिंशद्द्वात्रिंशचतुस्त्रिंशद्भक्तानि, तत पुनश्चतुस्त्रिंशत्संख्यानि षष्ठानि, ततः परमेतदेवाद्यमर्द्धं चतुस्त्रिंशद्भक्तादारभ्य प्रतिलोचनीयं यावत् पर्यन्ते चतुर्थभक्तमिति। अस्यां च तपोदिवसानां त्रीणि शतानि चतुरशीत्यधिकानि अष्टाशीतिपारणादिवसप्रक्षेपात् पिण्डः वर्षमेकं मासत्रयं द्वाविंशतिर्दिवसाः, अत्र च प्रथमकनकावल्यां सर्वकामगुणितेन पारणाविधि', द्वितीयकनकावल्यां पारणके सर्वनिर्विकृतिकं पारणीयं, तृतीयस्यां पारणविधिरलेपकृताहारेण, चतुर्थ्यां पारणविधिराचाम्लेन परिमितभिक्षेणेति, एवमासां चतसृणामपि कालः पंच वर्षाणि मासद्वयमष्टाविंशतिर्दिवसा इति। सम्प्रति रत्नावल्याः स्थापना, चतुर्थषष्ठाष्टमानि, ततोऽष्टमान्यष्टौ, पुनश्चतुर्थषष्ठाष्टमदशमद्वादशचतुर्दशषोडशाष्टादशविंशतिद्वाविंशतिचतुर्विंशतिषड्विंशत्यष्टाविंशतित्रिंशद्द्वात्रिंशचतुस्त्रिंशद्भक्तानि, ततश्चतुस्त्रिंशत्संख्यान्यष्टमभक्तानि, ततः परमाद्यमर्द्धं चतुस्त्रिंशद्भक्तादारभ्य प्रतिलोमं न्यसनीयं यावत् पर्यंते चतुर्थभक्तमिति, अस्याश्चाष्टाशीतिः पारणादिवसास्तैः सह तपोदिवसा एकत्थीकृताः एष पिंडितः कालो वर्षं पंच मासा द्वादश दिवसाः, चतस्रो रत्नावल्य इत्येष राशिः संवत्सरादिश्चतुर्गुणो, जातो वर्षाणि पंच नव मासा अष्टादश दिवसाः, पारणाविधिः पूर्ववत्। साम्प्रतं मुक्तावली–तत्रादौ चतुर्थषष्ठौ–ततश्चतुर्थाष्टमे ततश्चतुर्थद्वादशे चतुर्थचतुर्दशे चतुर्थषोडशे चतुर्थाष्टादशे चतुर्थविंशतितमे चतुर्थद्वाविंशे चतुर्थचतुर्विंशे चतुर्थषड्विंशे चतुर्थाष्टाविंशे चतुर्थत्रिंशद्भक्ते चतुर्थद्वात्रिंशद्भक्ते चतुर्थचतुस्त्रिंशद्भक्ते, अतः परमन्यदर्धं चतुस्त्रिंशद्भक्तादि प्रतिलोमं न्यसनीयं यावत् पर्यन्ते चतुर्थभक्तमिति, अत्र त्रीणि दिनशतानि षष्ट्यधिकानि वर्षमेकं, एतच्चतुर्गुणं जातं वर्ष चतुष्टयं, पारणादिनान्यपि क्षेप्याणि, विधिश्च पूर्ववत्।

तथा अपरस्तपोविशेषः, सिंहविक्रीडिते द्वे-क्षुल्लकसिंहविक्रीडितं महासिंहविक्रीडितं च, तत्र क्षुल्लकसिंहविक्रीडितस्य रचना-चतुर्थषष्ठे चतुर्थाष्टमे षष्ठदशमे अष्टमद्वादशे दशमचतुर्दशे द्वादशषोडशे चतुर्दशाष्टादशे षोडशविंशे, ततोऽष्टादशं, पुनराद्यार्द्धमेव प्रतिलोमं रचनीयं विंशषोडशादिकं यावत् पर्यन्ते चतुर्थभक्तमिति, षड्भिर्मासैः सप्तभिश्च दिवसैः परिसमाप्तिः, एतच्चतुर्गुणं तां वर्षद्वयं दिनान्यष्टाविंशतिः त्रयस्त्रिंशत् पारणादिवसा इति। महतः सिंहविक्रीडितस्य रचना—चतुर्थषष्ठे चतुर्थाष्टमे षष्ठदशमे अष्टमद्वादशे दशमचतुर्दशे द्वादशषोडशे चतुर्दशाष्टादशे षोडशविंशे अष्टादशद्वाविंशे विंशतिचतुर्विंशे द्वाविंशतिषड्विंशे चतुर्विंशत्यष्टाविंशे षड्विंशतित्रिंशद्भक्ते अष्टाविंशतिद्वात्रिंशद्भक्ते त्रिंशच्चतुस्त्रिंशद्भक्ते, ततो द्वात्रिंशद्भक्तं, ततः परमाद्यार्द्धमेव चतुस्त्रिंशद्भक्तादिकं प्रतिलोमं विरचनीयं यावत् पर्यंते चतुर्थभक्तमिति, अस्य च कालो वर्षमेकं षण्मासा दिनान्यष्टादश, एष कालश्चतुर्गुणो वर्षाणि षण् मासद्वयं दिनानि द्वादश, शेषं पूर्ववत्। तथा परं तपः सप्तसप्तमिकाद्याः प्रतिमाश्चतस्रः सप्तसप्तमिका अष्टाष्टमिका नवमनवमिका दशमदशमिका चेति, तत्र सप्त सप्तकाः प्रथमायामहोरात्राणाम्, एकोनपंचाशद्दिवसा इत्यर्थः, अष्टाष्टकाः अष्टाष्टमिकायामहोरात्राणां, चतुःषष्टिर्दिनानीति, नवमनवमिकाया एकाशीतिरहोरात्राणि, दशदशमिकायां दिवसशतं, सर्वत्र प्रथमासु अहोरात्रसंख्यासु एकैकभिक्षाशित्वं, सर्वत्रेति चतसृष्वपि प्रतिमासु, प्रथमे सप्तके प्रथमेऽष्टके प्रथमे नवके प्रथमे च दशके प्रतिदिनमेकैकभिक्षाशित्वं, द्वितीये सप्तकेऽष्टके नवके दशके च द्विभिक्षाशित्वं, एवं शेषेष्वपि सप्तकादिषु एकैकभिक्षावृद्धिः सर्वा यावत् सप्तमे सप्तके सप्त भिक्षा अष्टमेऽष्टौ नवमे नव दशमे दशभिक्षाशित्वमिति, तथाऽन्यत्तपः सर्वतोभद्रमिति, द्विविधं तत्-क्षुल्लकसर्वतोभद्रं महासर्वतोभद्रं चेति, तत्र प्रथमस्य प्रस्तारविधिर्भण्यते, पंच गृहकाणि कृत्वा तिर्यगूर्ध्वं च ततो

रचना तपसः कार्या—चतुर्थषष्ठाष्टमदशमद्वादशानि प्रथमपंक्तौ, द्वितीयस्यां दशमद्वादशचतुर्थषष्ठाष्टमानि, तृतीयायां षष्ठाष्टमदशमचतुर्थानि, द्वादशचतुर्थषष्ठाष्टमदशमानि चतुर्थ्यां, पंचम्यामष्टमदशमद्वादशमचतुर्थषष्ठानि, पारणादिवसाः पंचविंशतिः, कालो मासत्रयं दिनानि दश, एष एव चतुर्गुणः वर्षमेकं मासो दश दिनानीति सर्वतोभद्रमुच्यते, तिर्यगूर्ध्वं कर्णयोश्च सर्वत्र दिनराशिः तुल्यः, पंचदशपरिमाण इति, अथवा क्षुल्लकस्य सर्वतोभद्रस्य द्वितीयो विकल्पः—चतुर्थषष्ठाष्टमदशमद्वादशानि अष्टमदशमद्वादशचतुर्थषष्ठानि द्वादशचतुर्थषष्ठाष्टमदशमानि षष्ठाष्टमदशमद्वादशचतुर्थानि दशमद्वादशचतुर्थषष्ठाष्टमानीति । **सम्प्रति महत्सर्वतोभद्रं** भण्यते—सप्त गृहाणि कृत्वा तिर्यगूर्ध्वं च चतुर्थषष्ठाष्टमदशमद्वादशचतुर्दशषोडशभक्तानि चतुर्दशषोडशचतुर्थषष्ठाष्टमदशमद्वादशभक्तानि दशमद्वादशचतुर्दशषोडशचतुर्थषष्ठाष्टमानि षष्ठाष्टमदशमद्वादशचतुर्दशषोडशचतुर्थानि षोडशचतुर्थषष्ठाष्टमदशमद्वादशचतुर्दशानि द्वादशचतुर्दशषोडशचतुर्थषष्ठाष्टमदशमानि अष्टमदशमद्वादशचतुर्दशषोडशचतुर्थषष्ठानि । भद्रोत्तररचना—द्वादशचतुर्दशषोडशाष्टादशविंशतिभक्तानि अष्टादशविंशतिद्वादशचतुर्दशषोडशभक्तानि चतुर्दशषोडशअष्टादशविंशतिद्वादशभक्तानि विंशतिद्वादशचतुर्दशषोडशाष्टादशभक्तानि षोडशाष्टादशविंशतिद्वादशचतुर्दशभक्तानीति, दिनानि पंचत्रिंशद्भद्रोत्तरं, तथाऽपरं तपः आचाम्लवर्द्धमानं, अलवणारनालौदनलक्षणमाचाम्लं तद्वर्द्धमानं यत्र तपसि तदाचाम्लवर्द्धमानं तस्य प्ररूपणा—प्राक्तावदाचाम्लं ततः चतुर्थं भक्तं द्वे आचाम्ले पुनश्चतुर्थभक्तं त्रीण्येवाचाम्लानि पुनश्चतुर्थभक्तं चत्वार्याचाम्लानि पुनश्चतुर्थभक्तं पंचाचाम्लानि पुनश्चतुर्थभक्तम्—एवमेकैकमाचाम्लं वर्द्धयता चतुर्थभक्तं च विदधता तावद्वर्धयितव्यं यावदाचाम्लशतं पूर्णं पर्यंते चतुर्थभक्तं, कालपरिमाणमस्य चतुर्दश वर्षाणि मासद्वयं विंशतिर्दिवसाश्चेति । **सर्वतोभद्रमित्येवमादीत्यादिग्रहणा-**

दनेकप्रकार तपोऽस्ति प्रकीर्णकमिति ज्ञापयतीति पारमर्ष्यैव प्रसिद्धं प्रवचने, अथवा आदिशब्दसंगृहीता द्वादश भिक्षुप्रतिमाः,
तत्प्रदर्शनार्थमाह–तथा द्वादश भिक्षुप्रतिमा मासिक्याद्या इति मासिकी आदिर्यासां ता मासिक्याद्याः, तथेति प्रदर्श-
नार्थः, द्वादशेति इयत्तानिरूपणाय सङ्ख्या, भिक्षुः–उद्गमोत्पादनैषणादिशुद्धभिक्षाशी, प्रतिमाः प्रतिज्ञाः, मासः प्रयोजन-
मस्या इति मासिकी, मासेन परिसमाप्तिमायातीत्यर्थः, आ सप्तमासिक्याः सप्तेति विभागं दर्शयति, द्वित्रिचतुःपंचषण्मा-
साख्याः, एवमेताः सप्त, तथाऽपरास्तिस्रः, प्रथमा सप्तरात्रिकी द्वितीया सप्तरात्रिकी तृतीया सप्तरात्रिकी चेति, एवमेता दश,
अपरे द्वे–अहोरात्रिकी १ एकरात्रिकी २ चेत्येवं द्वादश, तत्र मासिकीप्रतिज्ञामारूढः साधुर्भोजनस्यैका दत्तिमादत्ते, तथा पानस्य,
दायिना च एलुकस्यान्तः पदमेकं विन्यस्यापरं बहिर्व्यवस्थाप्य तां दत्तिं यदि ददाति ततः कल्पते, आदिमध्यावसानगोचर-
प्रपहिंडी पेडा अर्द्धपेडा गोमूत्रिका पतंगवीथिः संबुकावृत्तिः गतप्रत्यागता चेति षड्विधगोचरभूमिचारी, एवंविधतपश्चारीति यत्र
ज्ञायते तत्रैकरात्रं कल्पते वासः, यत्र न ज्ञायते तत्रैकरात्रं वा अहोरात्रद्वयं वा वस्तुं कल्पते, न परतः, याचनाप्रच्छनानुज्ञाप-
नप्रश्नव्याकरणभाषी आगमनविकटनगृहकवृक्षमूलोपाश्रयत्रयपरिभोगकारी पृथिवीकाष्ठयथाऽऽस्तीर्णसंस्तारकत्रयशायी, कश्चित्त-
दध्यासिते प्रतिश्रये अग्निं लगयेत्ततो दाहभयान्न निष्क्रामेत, कंटकादिकं पादलग्नमक्षितो वा रेणुकादि नो निर्हरेत्, जलस्थला-
दिषु यत्रास्तमेति तपनः ततः स्थानादेकमपि पद न प्रयाति, विगतजीवेनापि पानकेन हस्तपादादिप्रक्षालनं न करोति, संमुख-
मापततो दुष्टाश्वहस्त्यादेः पदमेकं पश्चान्नापसर्पेत्, एवमादिभिर्नियमविशेषैर्विचित्रा एषा मासिकी प्रतिमेति, द्विमासप्रतिमामारू-
ढस्यान्धसो द्वे दत्ती पानस्य च, शेषचर्या पूर्ववत्, एवमुत्तरास्वपि यावन्तो मासास्तावत्य एव दत्तयोऽपि यावत् सप्तमासिक्यां

गम दत्तयः, शेषं प्रथमप्रतिमावद्विधानं, प्रथमसप्तरात्रिकीं प्रतिमामारूढस्य चतुर्थभक्तमपानकं ग्रामादेर्बहिरुत्तानपार्श्वशायिनो निषण्णस्य वा कल्पते स्थातुं, दिव्यमानुषतैर्यग्योनानुपसर्गान् सहमानस्येति,अन्यत् पूर्ववत्, द्वितीयां सप्तरात्रिकीप्रतिमामारूढस्य तदेव चतुर्थभक्तमपानकं च, स्थानं तस्य दंडायतं[मीत्या]लगंडशायिता उत्कुटकासनं वा, तृतीयामपि सप्तरात्रिकीं प्रतिज्ञामारूढस्य चतुर्थभक्तमपानकं च, स्थानं पुनरस्य गोदोहिका वीरासनं आम्रकुब्जता चेति, अहोरात्रिकीं प्रतिपन्नस्य प्रतिमां षष्ठभक्तमपानकं च, बहिर्ग्रामादेश्चतुरांगुलांतरौ चरणौ विधाय लंबितबाहोः कायोत्सर्गः स्थानमेकं, शेषं पूर्ववत्, एकरात्रिकीं प्रतिमां कुर्वतोऽष्टमभक्तमपानकं, ग्रामादेर्बहिरीषत्प्राग्भारगतेन कायेनैकपुद्गलनिरुद्धदृष्टिरनिमिषनयनो यथाप्रणिहितगात्रः सुगुप्तेन्द्रियग्रामः कायोत्सर्गावस्थायी दिव्यमानुषतैरश्चानुपसर्गान् सम्यक्तितिक्षते यस्तस्य भवतीति।× सप्तचतुर्दशैकविंशतिरात्रिक्यस्तिस्र इति, नेदं पारमर्षप्रवचनानुसारि भाष्यं, किं तर्हि ?, गीतप्रमत्तमेतत्, वाचको हि पूर्ववित् कथमेवंविधमार्षविसंवादि निबध्नीयात्, सूत्रानवबोधादुपजातभ्रान्तिना केनापि रचितमेतद्वचनकं 'दोच्चा सत्तराइंदिया तइया सत्तराइंदिया' इति द्वितीया सप्तरात्रिकी तृतीया सप्तरात्रिकीति सूत्रनिर्भेदः, द्वे सप्तरात्रे त्रीणि सप्तरात्राणीति सूत्रनिर्भेदं कृत्वा पठितमज्ञेन सप्तचतुर्दशैकविंशतिरात्रिक्यस्तिस्र इति× ॥

एवं तपः प्रकीर्णकमभिधाय त्यागाभिधित्सया आह–**बाह्याभ्यन्तरोपधिशरीरान्नपानाद्याश्रयो भावदोषपरित्यागस्त्यागः** (९८८-७) बाह्याभ्यन्तरोपधिशरीरान्नपानादिराश्रयो यस्य तस्यैवंविधस्य भावदोषस्य परित्यागस्त्यागोऽभिधीयते, न हि निरालम्बनो भावदोषः समस्ति, यथा ह्यशुभं तपसा नादत्ते प्राक्तनं च त्यजति एवं बाह्योपकरणादित्यागोऽपि संवृणोत्याश्रवद्वाराणि,

तत्रोपकरणं बाह्यं रजोहरणपात्रादि स्थविरजिनकल्पयोग्योपधिः दुष्टवाङ्मनसोऽभ्यन्तरं क्रोधादिश्चातिदुस्त्यज उपधिः, शरीरं बाऽ-
भ्यन्तरोपधिरन्नपानं च बाह्यमादिग्रहणादौपग्रहिकं च बहिर्निषद्यादण्डकादिः आश्रयभूतं भावदोषस्य भवति,भावदोषो मूर्च्छा स्नेहः
गार्द्ध्यादि, संयमसाधनं रजोहरणादीत्येवं धारयति, न पुनः रागादियुक्तः शोभाद्यर्थं, एवंविधस्य भावदोषस्य परित्यागः सर्वप्रकारः
त्याग उच्यते। सम्प्रत्याकिंचन्यस्वरूपनिरूपणायाह–शरीरधर्मोपकरणादिषु निर्ममत्वमाकिंचन्यम् (१८८-९) उक्तेन न्यायेन
भावदोषत्यागं कृत्वा बाह्योपकरणं रजोहरणपात्राद्युपभुंजानोऽपि अकिंचन एव भवति, शरीरमाश्रयमात्रमात्मनो यदा च तत् त्यागा-
र्हमशुचि त्वग्मांसास्थिपंजरं केवलं धर्म्मसाधनचेष्टायाः संयमभरक्षमायाः सहायके वर्त्तते तदिदं शकटादावक्षोपांजनवदाहारादिनो-
पग्राह्यं, नत्ववयवसन्निवेशशोभार्थमिति, निर्ममत्वमाकिंचन्यं, धर्मोपकरणं रजोहृत्यादि प्रमार्जनादिकार्यप्रसाधनाय व्याप्रियत इति
संयमोपकरणमत्रापि निर्ममत्वमाकिंचन्यमिति। ब्रह्मचर्यस्वरूपनिर्दिधारयिषया प्राह–व्रतपरिपालनायेत्यादि (१८८-१०) आकिं-
चन्यव्यवस्थितो ब्रह्मचर्यं परिपालयेत्, तच्च ब्रह्मचर्यं गुरुकुलवासलक्षणं, गुरुकुलवासो ब्रह्मचर्यमिति,बृहत्त्वादात्मा ब्रह्म ब्रह्मणि चरण-
मात्मारामत्वमरक्तद्विष्टात्मनि व्यवस्थानं,अब्रह्मणश्च विनिवृत्तिर्व्रतं, मैथुनवर्जनं प्राधान्येन,तत्परिपालनाय गुरुकुले वसितव्यं,यद्यपि
मनोज्ञामनोज्ञविषयरागविरागविमुक्तिर्ब्रह्मचर्यं तथापि प्रधानत्वेन विवक्षा मैथुननिवृत्तेरेव, तत्परिपालनार्थं च भगवद्भिर्नव गुप्तय
उपदिष्टाः, वसतिकथानिषद्येन्द्रियकुड्यान्तरपूर्वक्रीडितप्रणीताहारातिमात्रभोजनविभूषणाख्याः, ज्ञानसंवर्द्धनार्थं च गुरुकुलवासो,
यथोक्तमार्षे–"णाणस्स होइ भागी थिरयरओ दंसणे चरित्ते अ। धण्णा आवकहाए गुरुकुलवासं न मुंचंति ॥१॥" कषायाः क्रो-
धादयः तेषां परिपाकः परिणतिरुपशमः क्षयो वा तदर्थं च गुरुकुलवासोऽभ्युपेयः, गुरुरहितस्य हि परिणामवैचित्र्याद्विकथादिदोषा-

दमजनसपर्कादमत्क्रियासंगादनुश्रोतोगामित्वदोषात् मद्य एव मोक्षमार्गाद् भ्रंशः स्यात्, तस्माद् आप्राणिताद् गुरुकुलवास आश्रेयः, गुरुकुलवासेन चास्वतंत्रीकृतस्य ज्ञानदर्शनचरणव्रतभावनागुप्त्यादिपरिशुद्धिः, अत एव साधोर्द्विसंगृहीतत्वमाचार्योपाध्यायाभ्यां, निर्ग्रन्थ्याः-साध्व्यास्तु प्रवर्तिनीसंगृहीतत्वं च, तदेव च पर्यायशब्दैराख्यातमाराधनार्थमस्वातंत्र्यं गुर्वधीनत्वं गुरुनिर्देशावस्थायित्वमिति। आचार्यग्रहणाच्च पंचाचार्याः प्रोक्ताः, प्रव्राजकः व्रतादेरारोपयिता, दिगाचार्यः सचित्ताचित्तमिश्रवस्त्वनुज्ञायी, श्रुतोद्देष्टा श्रुतमागममुद्दिशति यः प्रथमतः,एवं उद्देशगुर्वपाये तदेव श्रुतं समुद्दिशत्यनुजानीते वा यः स्थिरपरिचितकारयितृत्वेन सम्यग्धारणानुप्रवचनेन च स श्रुतसमुद्देष्टा, समुद्देशानुज्ञयोरेककालत्वात् समुद्देशसंगृहीतमनुज्ञानं, आम्नायः-आगमस्तस्योत्सर्गापवादलक्षणो यस्तं वक्तीत्याम्नायार्थवाचकः, पारमार्षप्रवचनार्थकथनेनानुग्राहकोऽक्षनिषद्यानुज्ञायी पंचम आचार्यः, तस्य ब्रह्मचर्यस्येत्यादि(१८८-१६) पुनरपि तद्रक्षणदृढीकरणार्थं ब्रह्मचर्यस्य विशेषगुणाः ख्याप्यन्ते, इमे इति प्रत्यक्षीक्रियंते, विशेषेण-अतिशयेनोपकारित्वाद्विशेषगुणा अब्रह्मविरतिव्रतस्य यथोक्ता भावनाः प्राक् पंच, स्त्र्यङ्गालोचनापूर्वरतिस्मृतिवृष्यरसकामकथनेभ्यः संसक्तादावसथाच्च विरतयो भावनाः ब्रह्मणः, इष्टाश्च शुभा ये स्पर्शादयः शरीरविभूषणा च तत्रानभिनन्दित्वं-तत्प्राप्तावप्यपरितुष्टिर्मनसोऽप्रमादः अरक्तद्विष्टतेत्येवं ब्रह्मचर्यं जायत इति, तदेवं क्षमया क्रोधं निहन्यात्, निहतक्रोधो नीचैर्वृत्त्यनुत्सेकाभ्यां मार्दवं धारयेत्, त्यक्तमदस्थान आर्जवं भावयेद्, भावदोषवर्जनेन निगूढदोषां मायामार्जवेन प्रकटीकृत्य शौचमाचरेत् अलोभसंश्रयेण, लोभाशुचित्वमलोभशौचेन संशोध्य शुद्धात्मा सत्यं ब्रूयात्, सत्यभाषी सप्तदशविधं संयममनुतिष्ठेत्, संयतात्मा शेषाशयविशोधनार्थं तपश्चरेत्, ततो बाह्यान्यपि धर्मसाधनानि सृजेत्, विद्यमानेष्वपि कायवाङ्मानसेषु धर्मोपकरणेषु सुहृत्संबंधिषु

न निःस्पृहत्वान्निर्ममत्वाच्चमाकिंचन्यं भावयेत्, सत्याकिंचन्ये ब्रह्मचर्यं परिपूर्णं भवतीति ॥ एवं परमविशुद्धलक्षणे धर्मे व्यवस्थितः पुनरप्यात्मदोषजुगुप्सार्थं जगद् द्वादशभिः स्वतत्त्वैर्विभज्य अनुचिंतयेदित्याह—

अनित्याशरणसंसारैकत्वान्यत्वाश्रवसंवरनिर्जरालोकबोधिदुर्लभधर्म्मस्वाख्यात-
त्वानुचिंतनमनुप्रेक्षाः ॥ ९-७ ॥ सूत्रम् ॥

तत्रानित्यादयो धर्मस्वाख्याततान्ताः कृतद्वन्द्वाः विहितभावप्रत्यया अनुचिंतनशब्देन सह कृतषष्ठीतत्पुरुषसमासाः समानाधिकरणमनुप्रेक्षाशब्देन सह सम्प्रतिपद्यन्ते, अपरे पठन्ति अनुप्रेक्षा इति, अनुप्रेक्षितव्या इत्यर्थः, अपरेऽनुप्रेक्षाशब्दमेकवचनान्तरमधीयते, तत्रार्थानित्यादिचिन्तनमनुप्रेक्षोच्यते, बहुवचनान्तरेणानित्यादिचिंतनाऽनुप्रेक्षा इति, एता द्वादशानुप्रेक्षा इत्यादि (१८९-२) भाष्यं, एता इत्यनित्यादिकाः परामृश्यन्ते, द्वादशेति द्वादशैव, नाधिका न्यूना वा, अनुप्रेक्षणमनुप्रेक्षा, अनुप्रेक्ष्यन्ते अनुचिंत्यन्ते इति वाऽनुप्रेक्षाः, तत्र तास्वनित्या भावना तावद्भण्यते—अभ्यंतरं शरीरद्रव्यं, जीवप्रदेशैर्व्याप्तत्वात्, बाह्यानि शय्यासनवस्त्रादीनि, आदिग्रहणादौधिकौपग्रहिकोपधेःसमस्तस्य ग्रहणं, तत्र शरीरं तावज्जन्मनः प्रभृति पूर्वमवस्थानं जहदुत्तरामवस्थामास्कन्दत् प्रतिक्षणमन्यथा अन्यथा च भवज्जराजर्जरितमवलासयवं पुद्गलजालविरचनामात्रं पर्यन्ते परित्यक्तसन्निवेशविशेषं जीर्यत इत्यनित्यमेव, परिणामानित्यत्वात्, एवमनागत एवानुप्रेक्ष्यमाणस्य तत्राभिष्वंगः—स्नेहप्रतिबन्धो न भवति, तत्र स्नेहाभ्यंजनोद्वर्त्तनमर्दनस्नानविभूषादिषु निःस्पृहस्य धर्मध्यानादिषु व्यासंगो भवति, आगमेऽप्यभिहितं—“जंपि इमं सरीरं इट्ठं कंतं पियं मणुण्णं” इत्यादि, शय्या—प्रतिश्रयः संस्तारपट्टकादिः—संस्तारफलकादिर्वा आसनं गोमयपीठकादि वस्त्रं कल्पचोलपट्टकादि प्रतिदिवसं रजसा विपरिणम्यमानं सर्व-

प्रकारं मां नाश्रित्वेनायष्यां विहाय विशरारुतां प्रतिपद्यत इति भावनाभ्यासान्न तेषु ममत्वं भवति, केवलं धर्मसाधनमिति ग्रहणं, मर्वसंयोगाश्चानित्या (१८९-५) इति, यावन्तः संयोगा ममसंबंधाः केचिद्बाह्याभ्यन्तरैर्द्रव्यैः तेऽनित्याः, यतः संयोगेन वियोगान्तेन भवितव्यं, स्वभावः खल्वयं बाह्याभ्यन्तराणां द्रव्याणामित्येवं चिंतयेत्, यस्माच्चैवं चिन्तयतः तेष्वभिष्वंगो न भवति, स्नेहप्रतिबंधः, एतदेवाह-मा भूत् एतद्वियोगजं दुःखमित्यनित्यानुप्रेक्षा। (१८९-६) तैर्वियोगो बाह्याभ्यन्तरैर्द्रव्यैस्तद्वियोगे जातं दुःखं शारीरं मानसं वा तन् मा भूदित्यनागतमेवेत्यनित्यानुप्रेक्षा १॥

अशरणानुप्रेक्षाप्रतिपादनायाह-यथा निराश्रय इत्यादि (१८९-८) यथेति दृष्टान्तप्रदर्शनं निराश्रय इति गुप्तिस्थानशून्येन विरहिते इति निवारकाभावप्रदर्शनं, यत्र जनस्तत्र कदाचित् कश्चित् कारुणिको निवारयत्यपि, वनस्थलीपृष्ठ इति, वनशब्देन वृक्षा एव गृह्यन्ते, न पुनर्जालिकादि गुप्तिस्थानं, बलवतेति दुर्बलेनाभिभूतः कदाचित् प्रणश्यत्यपि, बलवानपि यदि धाणो भवति तदा मन्दादग्त्वान्नानुगच्छेदित्याह-क्षुत्परिगतेनापि आमिषैषिणेति सिंहेन मृगराजेनाभ्याहतस्याभिभूतस्य मृगशिशोरिति जीर्णमृगः कदाचिदनुभूतहृदयतयाणुगतिःशरणः प्रगल्भात् प्रणश्येदपि, न पुनः शावः, शरणं भयापहारि स्थानं तस्याभावः, एवमित्यादिना दार्ष्टान्तिकमर्थं समीकरोति, जन्म योनेर्निःसरणं गर्भाधानं वा उभयं दुःखहेतुस्तत्राकुलः पिंडकवद् योनिमुखेन पीड्यमानः कृच्छ्रेण निस्सरति, उदरस्थोऽपि पिंडितावयवत्वात् पुरीतन्मूत्रपुरीषाकुलितः कतिचिन्मासान् दुःखेन गमयति, निर्लुठितश्च योनेर्जरया ग्रस्यत एव, प्रतिक्षणमवस्थान्तरापत्तेः, मरणमप्यावीचिकमवश्यं भाव्येव जन्मवतः, व्याधयो ज्वरातिसारकासश्वासकुष्ठप्रभृतयः प्रियः-जुष्टोरणमल्पायुष्कत्वात् जनस्तेन सह विप्रयोगस्तद्विपरीतोऽप्रियस्तेन च संप्रयोगः, ईप्सितमाप्तुमिष्टं

सकलायुषः परिक्षयाद्वाऽवश्यंतया प्राणिनां संसारे
गम्यालाभो, दौर्मनस्यं मानसमेव दुःखं मरणमल्पायुषत्वादुपक्रमसन्निधानाद्वा एवंजन्मनाऽऽदितः समुद्भूतेन दुःखेनालीढस्य जन्मवतः शरणं
भवति, आदिग्रहणाद् वधबंधपरिक्लेशशीतोष्णदंशमशकद्वन्द्वाभिभवः। सांसारिकेषु भावेषु मनुजसुरसुखेषु हस्त्यश्वादिषु सुवर्णादिषु च
नास्तीत्यालोचयति, सर्वदाऽहमशरण इति नित्यमेव भीतस्य ज्ञानचरणादिलक्षणे घटते प्रवर्त्तत इति जन्मजरामरणभय-
नाभिष्वंगो न प्रीतिर्भवतीति परमर्षिप्रणीतशासनाभिहित एव विधौ
परिष्वक्तस्य च यस्मात्तदेव परं प्रकृष्टं शरणमित्यशरणानुप्रेक्षा २॥
संसारानुप्रेक्षानिरूपणाय प्रक्रम्यते—अनादौ संसार(१८९-१६) इत्यादि, अविद्यमान आदिर्यस्यासावनादिः न अभूत उत्पन्नो
नाप्युत्पादितः केनचिदिति, संसरणम्-इतश्चेतश्च गमनं संसारस्तस्य चातुर्विध्यं नरकादिभेदेन, भवशब्दो जन्मवचनः, नरकादिजन्मनां
ग्रहणान्युपादानानि तेषु चक्रवत्तत्र परिभ्रमतो जन्मवतः सर्व एव प्राणिनः क्षितिजलदहनपवनवनस्पतिशरीराः द्वित्रिचतुःपंचे-
न्द्रियलक्षणाः स्वजनकाः संतो यौनेन सम्बन्धेन स्वाम्यादिसम्बन्धेन वा सम्बद्धतामन्वभूवन्ननुभवंत्यनुभविष्यंति वा, तदा स्वजनकाः
स्वाम्यादयो वा यदा नासम्बन्धास्तदा परजनाः। एतदेव दर्शयति—न हि स्वजनपरजनयोर्वा व्यवस्था विद्यत इति, न नित्यमेव
कश्चित् स्वजनः परजनो वाऽस्ति, स्वजनो भूत्वा कर्म्मानुभावात् परजनो भवति, परजनश्च भूत्वा स्वजनो भवतीयमव्यवस्थैव संसारे,
न व्यवस्थास्यतीति। माता हि भूत्वेत्यादिना, तामेवाव्यवस्थां प्रपंचयति, एवं चतुरशीतियोनिप्रमुखशतसहस्रेष्वित्यादि,
योनिर्यत्र सम्मूर्च्छति गर्भस्थानं वा तत्र विभागो भवति परस्परं केनचिद् वैलक्षण्येन दृश्येनादृश्येन वा सर्वज्ञवचनग्राह्येण, तत्र
पृथिवीजलज्वलनसमीरणेषु प्रत्येकं सप्त लक्षाः दश लक्षाः प्रत्येकवनस्पतिषु निगोदजीवेषु चतुर्दश लक्षाः द्वित्रिचतुरिंद्रियेषु प्रत्येकं

द्वे द्वे लक्षे तिर्यङ्नारकदेवेषु प्रत्येकं चतस्रश्चतस्रो लक्षाः, मनुजेषु चतुर्दश लक्षा, एवं चतुरशीतिर्लक्षयोनीनां चतुरशीतियोनिप्रमुखानि शतसहस्राणि, प्रमुखशब्दः प्रधानवचनः, चतुरशीतियोनिप्रधानानि शतसहस्राणि तेषु, नान्येष्वित्यर्थः, रागो मायालोभौ द्वेषः क्रोधमानौ मिथ्यात्वहास्यादिर्मोहः एभिरभिभूतैर्जन्मवद्भिः अनिवृत्ता विषयतृष्णा येषां ते तथा तैः अविच्छिन्नविषयतर्षैः अन्योऽन्यं परस्परं भक्षणं पृथुरोमादीनामिव तथा वधो—मारणं बन्धः—संयमनं अभियोगः—अभ्याख्यानं आक्रोशः—अप्रियवचनं एभिरन्योऽन्यभक्षणादिभिर्जनितानि तीव्राणि प्रकृष्टानि दुःखानि प्राप्यन्ते—अनुभूयन्ते, अहो इति विस्मये, न खल्वेवंविधं दुःखभाजनमन्यदस्ति यादृशः संसारः, द्वन्द्वा वधबंधदंशमशकशीतोष्णादयः एत एवारामो यत्र संसारे, आरामो हि नानाजातीयतरुसमूहः, आराम इवारामो, द्वन्द्वानां संघातः, कष्ट—कृच्छ्रं दुःखं—गहनं स्वरूपं—स्वभावः यस्य इत्येवं चिंतयेत्, ततः संसारभयादुद्विग्नस्य जातारतेः सांसारिकसुखजिहीर्षालक्षणो भवति निर्वेद इत्येषा संसारानुप्रेक्षा ३॥

एकत्वभावनास्वरूपाभिधानायाह—एक एवाहमित्यादि (११०–१७) एक एवाहं, न जातुचित् ससहायो जाये म्रिये वा—जननं मरणं वाऽनुभवामि इति, यमलकयोरपि क्रमेणैव निस्सरणं, यच्च जन्मनि दुःखं मरणे वा तदेक एवाहमनुभवामीत्यर्थः, न तस्य मदीयस्याशर्मणोऽनुभवे कश्चित् सहायोऽस्ति, ततश्च सहजन्मानः सहमरणाश्च निगोदजीवा अपि न व्यभिचारयन्त्यमुमर्थमेक एवाहं जाये एक एवाहं म्रिये इति, एतदेव भाष्येण दर्शयति—न मे कश्चित् स्वजनसंज्ञः परजनसंज्ञो वा व्याधिजरामरणादीनि दुःखानि अपहरति मत्तः सकलं दुःखमाक्षिप्यात्मनि निधत्त इति, एतन्न, प्रत्यंशो—विभागो धरउ न च संभूयः स्वजनाः परजना वा मयि दुःखमुत्पन्नं विभाजयंतीत्यर्थः, ततश्चैक एवाहं स्वकृतस्य कर्मणः फलमनुभवामीति चित-

चेत, स्नेहानुरागप्रतिबन्ध इति, जनन्यादिविषयः स्नेहः भार्यायां कामविषयोऽनुरागः प्रतिबन्ध आसक्तिर्न भवति, परसंज्ञेषु न द्वेषानुबन्धः, पर एवायं न कदाचिदात्मीयो भवति, किमनेनादृतेनेति ?, ततः स्वजनेषु परजनेषु च निःसंगतामुपगतो मोक्षाय यतत इत्येकत्वानुप्रेक्षा ४॥

अन्यत्वभावनाविर्भावनायाह–शरीरव्यतिरेकेणेत्यादि (१९१–४) शरीरं पंचप्रकारं औदारिकादि तस्मात् शरीरपंचकादन्योऽहं, कुत एतद् ?, यस्मादिन्द्रियग्राह्यं शरीरं, अनिन्द्रियोऽहं, न चक्षुरादिना करणेन ग्रहीतुं शक्यः, इन्द्रियग्राह्यं शरीरमित्यव्यापिनी अभेदप्रतिपत्तिरित्याह–अनित्यं शरीरमित्यादि, पुद्गलात्मकमौदारिकादि शरीरं, पुद्गलाश्च विशरारुत्वाच्छरीरसन्निवेशविशेषं विहाय स्कन्धान्तरेण परमाणुरूपेण वा वर्त्तन्ते, न जातुचिदात्मा असंख्येयप्रदेशसन्निवेशं परित्यज्य ज्ञानदर्शनरूपं वा क्वचो वर्तते वर्तिष्यते वा, ततश्च नित्यत्वमात्मनः, ननु च परिणामानित्यतयाऽऽत्मा अनित्योऽपीष्यत इत्यपरितुष्यन्नाह—अज्ञं शरीरं ज्ञोऽहमिति न कदाचित् पुद्गला ज्ञानाद्युपयोगरूपेण परिणामिनो भवंति, आत्मा तु परिणामी ज्ञानाद्युपयोगपरिणामेनातोऽन्यत्वं,आद्यंतवच्छरीरमनाद्यंतोऽहं आदिः–आरंभकालः अंतो–विनाशकालः तौ यस्य स्तः तदाद्यंतवत्, आदिः औदारिकवैक्रियआहारकाणां सुज्ञानः तैजसकार्मणयोः सत्यप्यनादिसम्बन्धे सन्तत्याऽनादित्वमिष्टं, पर्यायांगीकरणेन तु तैजसकार्मणपुद्गलाः परिशटंति लगंति च, यदा श्लेषमायान्ति तैजसकार्मणतया तदा आदिः, यदा परिशटंति तदाऽन्तः, नैवमात्मनः कदाचिदादिरंतो वा विद्यते, आरभ्यारंभकभावाभावात्, ज्ञानरूपेण दर्शनरूपेण च दर्शयति, अविच्छिन्नत्वात् स्वरूपत्वाच्च सर्वदैवानाद्यन्तोऽहं, इतश्चान्यत्वं, बहूनि च मे शरीरशतसहस्राणीत्यादि प्राक्तनजन्मशरीराणि इदानीन्तनजन्मशरीराणि भवंति,

संसारे परिभ्रमतः अनादौ च संसारे बहून्यतीतानि शरीरकाणि, न हि तेषां अधुनातनशरीरेऽन्वयोऽस्ति स्वल्पोऽपि, अहं पुनः स एव येनोपभुक्तान्यतीतानि शरीरशतसहस्राणीत्यतोऽहमन्यस्तेभ्य इत्यनुचिंतयेत्, अन्यत्वे च सति विच्छिन्नशरीरममत्वो निःश्रेयसायैव घटत इत्यन्यत्वानुप्रेक्षा ५॥

शुचि–मलरहितं न शुच्यशुचि शरीरकं–पाणिपादाद्यवयवसन्निवेशविशेषः तदशुचीत्येवमेवं विचिंतयेत्, ननु च निर्मलशरीराः स्निग्धत्वचः स्त्रियः पुमांसश्च दृश्यन्ते, तत् कथमस्य प्रतिज्ञामात्रेणाशुचित्वं प्रतिपद्येमहीत्याह–आद्युत्तरकारणाशुचित्वादित्यादि हेतुपंचकं, तत्राद्युत्तरकारणाशुचित्वादिति (१९१–१४) तत्र तेषु पंचसु हेतुषु, आद्युत्तरकारणाशुचित्वादित्यस्य व्याख्या, तावच्छब्दः क्रमावद्योतनार्थः, आद्यं कारणं–प्रथमं शुक्रं शोणितं च, करोतीति कारणं, निर्वर्त्तयत्युत्पादयतीत्यर्थः, योनावुत्पद्यमानो जीवस्तैजसकार्मणशरीरी प्रथममेव शुक्रशोणिते अभ्यवहरति, शरीरीकरोति–औदारिकशरीरतया परिणमयति, ततः कललार्बुद-पेसिघनपाणिपादाद्यंगोपांगशोणितमांसमस्तुलुंगास्थिमज्जाकेशश्मश्रुनखशिराधमनिरोमकूपादिना परिणमयति, उत्तरकारणं तु रस-हरण्या परस्परप्रतिबद्धया जनन्याहृतमाहाररसमभ्यवहरति, तदेव तदुभयमत्यन्ताशुचीति, शुक्रशोणितयोरशुचित्वं लोकस्य प्रतीत-मिति ख्यापयति–अत्यन्ताशुचीति, न जातुचिच्छुचित्वं शुक्रशोणितयोः समस्ति, तद्यथा कवलाहारो हीत्यादिना उत्तरका-रणस्याशुचित्वमाचष्टे, कवलाहारो हि जनन्या ग्रस्तमात्र एव श्लेष्माशयं–कफस्थानं प्राप्तः श्लेष्मणा द्रवतामापादितोऽत्यन्ता-शुचिस्ततोऽपि पित्तस्थानप्राप्तोऽम्लतामापन्नोऽशुचिरेव, ततो वाताशयं प्राप्तः समीरणेन विभज्यमानः पृथक्खलः पृथग्रस इति द्वयीपरिणतिमापाद्यते, ततो खलान्मूत्रपुरीषदूषिकास्वेदलालादयो मलाः प्रादुष्पंति, रसाच्छोणितमांसमेदोऽस्थिमज्जशुक्राणि जायंते,

गरं धान् कफादि युक्तान्नमशुच्येव, तस्मादाद्युत्तरकारणाशुचित्वादशुचिरेव, किंचान्यदित्यनेन अशुचित्वे हेत्वन्तरमाह। अशु- चिभाजनत्वादिति (१९२-६) अशुचीनि कर्णमलादीनि तेषामवस्करभूतम्, अवस्करो-वर्चस्थानं पादपायुक्षालनकं तदिव यत् तदवस्करभूतं यस्मादशुचीति, किंचान्यद् अशुच्युद्भवत्वादिति हेत्वन्तर (१९२ ९) एषामेव कर्णमलादीनामशुचीनामुद्भवः -आश्रयः शरीर यस्मात्त उत्पद्यंते एते कर्णमलादयः, अनन्तरेण हेतुना उत्पन्नानां कर्णमलादीनामाश्रयः शरीरमिति प्रतिपादितं, अनेन पुनर्हेतुना शरीरादेव कर्णमलादय उत्पद्यन्ते इति प्रतिपाद्यते, अथवा अयं विशेषः-अशुचौ च गर्भे सभवतीत्यशुचि शरीर, गर्भ-उदरमध्यं, चशब्दो वाशब्दार्थः अशुचौ वा गर्भे पुरीषादिप्राये सभवति-उत्पद्यते यस्माच्छरीर तस्मादशुचीति, किंचान्यदि- त्यपरो हेतुरशुचित्वे अशुभपरिणामिपाकानुबंधादिति (१९२-११)अशुचिः परिणामो यस्य पाकस्य तेनानुबंधत्वाद्-अनु- गत गात्, तमेवाशुभपरिणामं पाकं प्रकाशयति आर्त्तव इत्यादिना, आर्त्तवम्-ऋतौ शोणितं तस्मिन् आर्त्तवे सति, बिंदोरा- धानात् प्रभृतीति, बिन्दुः-शुक्रावयवः तदाधानात्-तत्प्रक्षेपात् प्रभृत्यौदारिकं कललादिभावेन परिणमते, अर्बुदं-घनव्यूहोऽवय- वविभागः, सर्वथायमशुभपरिणामः पाकः कललाद्यवयवरूपस्तेनानुबद्धं दुर्गंधम्-अशुभगंधं अत एव पूतिस्वभावं, दुरंतमिति पर्यव- सानेऽपि हम्यादिपुंजो वा गृध्रसारमेयवायसादिभक्तं वा भस्मान्तमस्थिशकलानि वा, एवमिदं दुष्टान्तं शरीर यतस्तस्मादशुचीति, किंचान्यदिति प्रकारान्तरेणैवाशुचित्वप्रतिपादनं, अशक्यप्रतीकारत्वादिति (१९२-१४) अशक्यः प्रतीकारो यस्याशुचित्वस्य, अनुत्पादनप्रकारश्च लोके जलक्षालनादिना प्रसिद्धः, उद्वर्त्तनं प्रतीतं, रूक्षणं रोध्रकषायादिभिः स्नानं जलेन अनुलेपनं चन्दनादिकं धूपो विशिष्टगंधद्रव्यसमवायी प्रव(घ)र्षो-गंधापणिकं वासयुक्तिः पटवासादिका माल्यं मालार्हं पुष्पं, आदिग्रहणात्

कर्पूरोशीरतुरुष्ककस्तूरिकाग्रहः, एभिरप्यस्य विशिष्टद्रव्यैरशुचित्वमपनोतुमपनेतुं न शक्यं, कुतः ?-अशुच्यात्मकत्वात् अशुचिरात्मा-स्वभावो यस्य तदशुच्यात्मकं,अशुचिस्वभावस्य पुरीषादेरिवाशक्यप्रतीकारमशुचित्वापनयनं, शुच्युपघातकत्वाचाशुचि शरीरं, शुचीनि द्रव्याणि-शाल्योदनदधिघृतक्षीरादीनि तान्यप्यात्मसंपर्कादुपसंहृत्याशुचीकरोति, यतः कर्पूरचन्दनकश्मीरजादीनि सुगंधिद्रव्याणि संश्लेपमात्रादेव पूतीकरोति अतोऽन्विष्यमाणं सर्वप्रकारं शरीरमेवाशुचि परमार्थतो, नापरं किंचित् स्वतोऽशुचि ममास्ति, शरीरं तत्संसृक्तं वा विहायेति, एवं ह्यस्य चिंतयत इत्यादिना अशुचित्वानुप्रेक्षायाः फलमाह, निर्वेदः-अप्रीतिः अरतिः-उद्वेगः, शरीरके निर्विण्णः शरीरसंस्कारार्थमायतते, जन्मप्रहाणायैव तु घटत इत्यशुचित्वानुप्रेक्षा ६॥

आश्रवानुप्रेक्षास्वभावप्रकाशनायाह-आश्रवानिहामुत्रापाययुक्तानित्यादि,(१९३-१) आश्रूयते-यैः कर्म्मादीयते आश्रवास्ते इन्द्रियादयः तानाश्रवानिह लोके अमुत्रेति परलोके अपायो-दोषः पीडा दुःखं तेनापायेन युक्तान्, महानदी गंगादिका तस्याः श्रोतः-प्रवाहस्तस्य वेगः-संसर्पणविशेषः तद्वत्तीक्ष्णान् यथा स नदीप्रवाहस्तृणकाष्ठादि पतितमपहरति एवमेते चक्षुरादयः स्वप्रवाहपतितमात्मानमपहरंति-सन्मार्गाद् भ्रंसयंति, अकुशलं पापं सामान्येन कर्म्मबन्धः तस्यागमः प्रवेशः तद्द्वारभूतान् कुशलस्य च पुण्यस्य दशविधधर्म्मस्य निरोधः प्रतिबन्धः तस्य हेतून् इन्द्रियमादिर्येषां ते इन्द्रियादयः तानवद्यत खंडयतो जीवस्यापकारिणश्चिंतयेत्, अथवा अवद्यं-गर्हितं, गर्हितान्-पापानित्येवं चिंतयेत्, तद्यथेत्यादिना सोदाहरणेन आश्रवान् दर्शयति, सिद्ध्यतीति सिद्धः-सिद्धविद्यः सोऽनेकविद्याबलेन युक्तोऽपि वियद्विचारी अङ्गस्वरलक्षणाद्यष्टांगं निमित्तं तस्य पारंगतो गार्ग्य इति गोत्राख्या, सत्यकिः स्त्रीष्वासक्तचित्तो निधनं-नाशमुपजगामेति, तथेत्यपरमुदाहरणं यवसश्चरणीयविशेषः तस्य

प्रमाथो मंजनमर्दनाभ्यवहारलक्षणः उदकेन स्वेच्छयाऽवगाहः अवगाहादिगुणसम्पन्नमिति आदिग्रहणात् सिंहादिव्यालरहितं एवं-विधवनविचारिणो मदेन दृप्ततरा हस्तियूथाधिपतयः करेणुकावेष्टिता इति विकारिणां संजनीषु अनेकप्रकारं वाजीकरणस्पर्शनादिभिः प्रौढयोषित इव मनुजान् प्रतारयंति हस्तिमूर्खान् बंधः-संयमनं वधः-ताडनं दमनं-शिक्षाग्रहणं पश्चाद्वाहनं अंकुशोऽभिघातः प्रतोदः प्रयोजनकृत्स्नेनाभिघातः आदिग्रहणादतिभारारोपणं युद्धकाले च शस्त्राभिघातः, तथेतिदृष्टान्तान्तरमाह-मैथुनसुखप्रसंगेनाहितः कृतो गर्भो यस्याः अश्वतरी-वेगसरी प्रसवकाले मरणमभ्युपैत्यवशा, 'एव'मित्यादिना दार्ष्टांतिकमर्थमुपसंहरति, एवमुक्तेन न्यायेन लोकद्वयेऽपि विनाशमृच्छन्ति प्राप्नुवंतीति। तथेत्याश्रयान्तरदोपदर्शनार्थं, सामयिकानि च वायसाद्युदाहरणानि, बडिशो -गलमत्र मांसं तथेत्यपराश्रवगतदोपदर्शनमुदाहरणद्वयेन, तथा पराश्रवदोपापादनं अर्जुनकश्चौरः श्यामायां विनिवेशितदृष्टिर्निधनं गत इति, सामयिकमेवाख्यानकं, तथेत्ययमप्याश्रवः सदोष इति कथयति, तित्तिरिः पंजरस्थतित्तिरीश्रवणशब्दादागतो यूपार्थी पाशेन बध्यते, एवं कपोलकपिंजलकावपि, गीतमेकमेव गौर्याखेटके गायनं संगीतकं तु वंशकांस्यादीत्यादियुक्तं, एवमेतान् आश्रवान् दोषबहुलानेव चिंतयेत्, एवं च परिचिंतयन्नाश्रवनिरोधायैव घटत इत्याश्रवानुप्रेक्षा ७॥

संवरानुप्रेक्षानिरूपणायाह-संवरांश्च महाव्रतानीत्यादि(१९४-६) आश्रवद्वाराणां पिधानम्-आश्रवदोपपरिवर्जनं संवरः, तांश्च संवरान् प्राणातिपातनिवृत्त्यादीन् गुप्त्यादिपरिपालनानिति गुप्त्यादयः परिपालना येषां महाव्रतादीनाम्, आदिग्रहणादुत्तरगुणपरिग्रहः, इतरत्रादिग्रहणात् समितिग्रहणमतस्तांश्चिंतयेत्, गुणा उपकारिणस्तान् गुणानित्येवं चिंतयेत्, सर्वे ह्येते इति गतार्थं ८॥

निर्जरानुप्रेक्षास्वरूपावधारणमधुना-निर्जरा वेदना इत्यादि(१९४-६) निर्जरणं निर्जरा आत्मप्रदेशेभ्योऽनुभूतरसकर्म-

पुद्गलपरिसटनं निर्जरा इति, तत्र वेदना अनुभवः तत्र आस्वादनं–विपाकः कर्म्मपुद्गलानामुदयावलिकाप्रवेशेन अनुभूतरसानामुत्तरकालं परिशाटः, विपच्यमाना विपाकाः परिशटंति, 'द्विविध' इति, विपाकाभिसम्बन्धः निर्जरया सहैकार्थत्वाद्, द्वैविध्यप्रदर्शनायाह–अबुद्धिपूर्वः कुशलमूलश्च, तत्र बुद्धिः पूर्वा यस्य, कर्म्म परिशटयामीत्येवंलक्षणा बुद्धिः प्रथमं यस्य विपाकस्य स बुद्धिपूर्वः न बुद्धिपूर्वः अबुद्धिपूर्वः, तत्र तयोर्विपाकयोरयं तावदबुद्धिपूर्वः नरकतिर्यङ्मनुष्यामरेषु कर्म्म ज्ञानावरणादि तस्य फलं–आच्छादकादिरूपं तद्विपाकः–तदुदयस्तस्मात् कर्म्मफलाद्विपच्यमानाद्यो निर्जरणलक्षणो विपाकः, सति तस्मिन् कर्म्मफले विपच्यमाने स भवत्यबुद्धिपूर्वकः, न हि तैस्तपः परीषहजयो वा नारकादिभिर्मनीषितः, तमेव विपाकमवबुद्ध्यतः पापं संसारानुबंधिनमेव चिंतयेत्, न हि तादृशा निर्जरया मोक्षः शक्योऽधिगंतुमित्येतदेवाह–कुशलानुबन्धीति(न्ध इ)ति, यस्मादुपभुज्य यत्तत् कर्म्मफलं पुनः समस्तानेव श्रमितव्यं, यः पुनः कुशलमूलो विपाकः तपसा द्वादशविधेन परीषहजयेन च कृतः सोऽवश्यंतयैव बुद्धिपूर्वकः, तमेवंविधं गुणत इति गुणमुपकारकमेव चिंतयेत्, यस्मात् स तादृशः किम्?–शुभमनुबध्नाति, अमरेषु तावद्देवेन्द्रसामानिकादिस्थानान्यवाप्नोति मनुष्येषु च चक्रवर्त्तिबलमहामाण्डलिकपदानि लब्ध्वा, ततः सुखपरम्परया मुक्तिमवाप्स्यतीति। शुभानुबन्धः निरनुबंधो वेति, वाशब्दः पूर्वविकल्पापेक्षः, तपःपरीषहजयकृतो विपाकः सकलकर्म्मक्षयलक्षणः साक्षान्मोक्षायैव कारणीभवतीति, ननु च यदि बुद्धिपूर्वको देवादिफलः शुभानुबन्धो विपाकस्तत आगमेन सह विरोधः " नो इहलोगट्ठयाए तवमहिट्ठिज्जा ", भण्यते, न मुमुक्षुणा देवादिफलमिष्टं, स हि मोक्षार्थमेव घटते, यदान्तरालिकं फलं देवादि तदानुषंगिकमिक्षुवणसेके तृणादिसेकवत्, मनीषितं तु तेन तपःपरीषहजयाभ्यां मोक्षः प्राप्यः, तत्र या प्रवृत्तिस्तपसि परीषहजये वा सा बुद्धिपूर्वका विपाकहेतुरिति, तस्मादेवमनु-

चिन्तयन् कर्म्मनिर्जरणायैव घटते, निर्जरानुप्रेक्षा ९॥

पंचास्तिकायात्मकमित्यादिना (१९४-१६) लोकानुप्रेक्षास्वरूपं निरूपयति, पंचास्तिकाया धर्म्माधर्म्माकाशपुद्गलजीवाख्या-
स्तं आत्मानः-स्वरूपमस्येति, लोकमित्युपरिष्टाद्वक्ष्यति, विविधो नानाप्रकारः परिणामो यस्येति, तमेव विविधपरिणामं दर्शयति
उत्पत्तिस्थित्यन्यतानुग्रहप्रलयपुक्तं उत्पत्तिर्द्विविधा-प्रतिक्षणवर्त्तिनी कालान्तरवर्त्तिनी च, प्रतिक्षणवर्त्तिनी अविभाव्याऽ-
न्त्यप्रलयानुमेया, प्रतिक्षणमन्यथाऽन्यथा चोत्पद्यन्ते परिमाणभावाः अस्तिकायाः, कालान्तरवर्त्तिनी मृद्द्रव्यं पिंडाद्याकारेण
मृद्भावं प्रकीर्णमपहाय पिंडादिरूपेण परिणमते, स्थितिरवस्थानं अस्तिकायरूपेण सर्वदा व्यवस्थानात्, धर्म्मास्तिकायादिव्यपदेशं
न जहते, ते सर्वदा व्यवतिष्ठंत्येव वचनार्थपर्यायैः, अन्यता तूत्पत्तिस्थितिभ्यामन्यत्वं विनाशः, सोऽपि द्विविधः-क्षणिकः काला-
न्तरवर्ती च, विवक्षितक्षणाद्द्वितीयक्षणादन्यत्वमवश्यं भावीत्यवस्थान्तरापत्तिरेव विनाशो, न निरन्वयः क्वचिदस्ति प्रलयः, स्थित्युत्पत्ती
अनुग्रहकारिण्यौ सत्त्वानां, घटो हि समुत्पन्नस्तिष्ठंश्च जलाहरणधारणादिरूपेणानुगृह्णाति, प्रलयोऽपि कालान्तरभावी भवत्यनुग्राहको
[illegible]ऽभिलषितः कुण्डलार्थिनः कटकविनाशवत्, अत एव एभिरुत्पत्त्यादिभिर्युक्तमुत्पत्त्यादिपरिणतिस्वभावमिति, विनाशो नाना-
[illegible] स्वभावः सरूपं यस्य सुखदुःखप्रकर्षापकर्षस्वरूपत्वात् वैचित्र्याच्च कर्म्मपरिणतेः, एवं ह्यस्य चिन्तयतस्तत्त्वज्ञानविशु-
[illegible]वतीति लोकानुप्रेक्षा, एवम्-उक्तेन प्रकारेण लोकस्वरूपमभिधाय ततस्तेषु जीवादिपदार्थेषु विशुद्धं-निर्मलं शंकादिदोषरहितं
[illegible] यथा भगवद्भिरुक्तं "सव्वाइं ठाणाइं असासयाइं" न कदाचिदस्मिन् व्यावर्णितलक्षणे लोके किंचित् स्थानमस्ति शाश्वतं
[illegible]परलोकनिरपेक्षस्य च मोक्षायैव चेतोवृत्तिरनुगुणा भवतीति लोकानुप्रेक्षा १०॥

अनादौ संसारे (१९३–४) इत्यादिना बोधिदुर्लभत्वानुप्रेक्षां निरूपयति, अनादाविति सर्वकालावस्थायिनि संसारे, किं स्वरूपेण ?, नरकादिष्वित्याह, तेषु२भवग्रहणेषु पुनः पुनः चक्र इव परिभ्रमतो, न तत्कृतः प्राणिनः शारीरमानसैर्नानाप्रकारैर्दुःखैरालीढस्य तत्त्वार्थश्रद्धानाविरतिप्रमादकषायादिभिरुपहृतमतेर्ज्ञानावरणाद्युदयाभिभूतस्य ज्ञानावरणादिकर्मचतुष्टयं घातिकर्म विशेषतो मोहनीयं सम्यग्दर्शनादिमार्गस्य विघातकमित्येतदेवाह–सम्यग्दर्शनादिनेत्यादि, सम्यग्दर्शनविरत्यप्रमादाकषायविशुद्धो बोधिर्दुर्लभो भवतीति विभक्तिपरिणामेनाभिसंबंधनीयं, जन्तुना दुर्लभ इति, बोधिशब्देनात्र चारित्रमेव विवक्षितं, अथवा पाठान्तरं सम्यग्दर्शनादिरेव बोधिः अपगतसकलशंकादिदोषः रहितो (दूषणेन) दुःखेन लभ्यत इति, एवं बोधेर्दुर्लभत्वमनुचिंतयतो बोधिं प्राप्य प्रमादो न भवतीति बोधिदुर्लभत्वानुप्रेक्षा ११॥

स्वाख्यातधर्मानुप्रेक्षां प्रतिपादयन्नाह–सम्यग्दर्शनप्रतिष्ठामन्तरेण न महाव्रतादिलाभः समस्ति, प्रागेव सम्यग्दर्शनं द्वारभूतं धर्मानुष्ठानस्येति प्रतिपादयति सम्यग्दर्शनद्वारेण (१९५–७) धर्मावगाह इति, पंच महाव्रतानि साधनं यस्येत्यनेन समस्तमूलोत्तरगुणपरिग्रहः, आचारादीनि दृष्टिवादपर्यन्तानि द्वादशांगानि, अर्हत्प्रणीत आगमः, तेनोपदिष्टं तत्त्वं यस्य धर्मस्य, चरणलक्षणस्येत्यर्थः, गुप्तिसमितिपरिपालनं विशुद्धं व्यवस्थानमस्येति गुप्तिभिः समितभिश्च परिपालनं–परिरक्षणं विशुद्धं निर्मलं व्यवस्थानं–स्वरूपावस्थानं यस्य स तथोक्तः, संसारो नरकादिचतुष्टयं तस्मान्निर्वाहको–निस्सारकः, न चासावभावीभवति मुक्तावस्थायामित्याह–निःश्रेयसप्रापक इति, निश्चितं श्रेयो निःश्रेयसं–स्वात्मन्येवावस्थानं समस्तकर्मापेतस्य निःश्रेयसमुच्यते तस्य प्रापकः, तस्य पर्यायान्तरस्योत्पादक इत्यर्थः, यशोविभवादियुक्तो भगवान् परमर्षिरिति समधिगतसकलज्ञानः तीर्थकर-

नामकर्म्मोदयात् तीर्थस्य प्रणायकः वन्दनपूजार्होऽर्हन् तेनामोघवचनेन स्वाख्यातः अहो इत्याश्चर्ये नापरेण केनचिदेवं कथितः सुष्ठु उत्सर्गापवादलक्षण आख्यातः धर्म्म इत्येवमस्य धर्म्मस्वाख्यातत्त्वमनुचिंतयतो मार्गाच्यवनेन तदनुष्ठानेन च व्यवस्थानं भवतीति मार्गो रत्नत्रयं मुक्तेः स्वरूपं वा तस्मादच्यवनं-अपतनं तदिदं मार्गस्य सम्बन्धः तस्यानुष्ठानं श्रद्धानस्याध्यायक्रियाचरणमिति, तदेव च परमार्थतोऽच्यवनं मार्गाद्यथोक्तक्रियानुष्ठानमित्येषा धर्म्मस्वाख्यातत्वानुचिन्तनानुप्रेक्षा१२॥

उक्ता अनुप्रेक्षाः सोदाहरणाः, सम्प्रति परीषहान् वक्ष्याम इति प्रतिजानीते—

मार्गाच्यवननिर्जरार्थं परिषोढव्याः परीषहाः ॥ ९-८ ॥ सूत्रम् ॥

अर्थशब्दः प्रत्येकमभिसंबध्यते, मार्गाच्यवनार्थं निर्जरार्थं, परीषहसहने मार्गाच्यवनं प्रयोजनं, कदाचित् क्लिष्टचित्तः क्लीवत्वात् तत्सहनाप्रवृत्तः सन्मार्गात् प्रच्यवेतापि अतस्तत्सहनादरः, मार्गस्थस्य तु सम्यगधिसहमानस्य गिरेरिव निष्प्रकम्पचेतसो निरातुलिकध्यानस्य जायते कर्म्मनिर्जरा, एतदेवाह–सम्यग्दर्शनादेरित्यादि (१९५-१६) तत्त्वार्थश्रद्धानादिलक्षणो मार्गो निवृत्तेर्गत्यन्तिस्याः तस्मान्मार्गान् मा प्रच्युतिर्भविष्यतीति सह्यन्ते परीषहाः, तथा ज्ञानावरणादिकर्म्मक्षपणार्थं परिषोढव्याः परीषहाः, सिद्धिप्राप्तिकारणसंवरविग्रहेतवः परिषोढव्या परीषहा इति निर्वचनं,समन्तादापततः क्षुत्पिपासादयो द्रव्यक्षेत्रकालभावापेक्षाः षोढव्याः सहितव्याः परीषहाः,भण्यन्ते परीषह्यंत इति परीषहाः, कियंतस्ते के च पुनः किंस्वरूपा वेत्याह–तद्यथेति संख्यादिनिरूपणोपक्रमणं।

क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्रीचर्याशय्यानिषद्याक्रोशयाचनाऽलाभरोगतृणस्पर्शमल-
सत्कारपुरस्कारप्रज्ञाज्ञानसम्यक्त्वानि ॥ ९-९ ॥ सूत्रम् ॥

क्षुत्पिपासादयः परीषहा द्वाविंशतिः, नामतोऽपि क्षुदादिनामानः स्वरूपमपि च शब्दार्थेनावेदितमेव, संख्यादीनां त्रयाणामपि प्रदर्शनं करोति भाष्यकारः-क्षुत्परीषहः१ पिपासा२ शीत३ मुष्णं४ दंशमशकं५ नाग्न्य६ मरतिः७ स्त्रीपरीषहः८ चर्यापरीषहः९ निषधा१० शय्या११ आक्रोशः१२ वधः१३ याचनं१४ अलाभः१५ रोगः१६ तृणस्पर्शः१७ मलः१८ सत्कारपुरस्कारौ१९ प्रज्ञा२०ऽ ज्ञाने२१ अदर्शन२२ परीषह इति, तत्र क्षुत्परीषहः क्षुद्वेदनादिनाऽऽगमाविहितेन चेतसा समयतोऽनेषणीयं परिहरतः क्षुत्परीषहजयो भवति, अनेषणीयग्रहणे तु न विजितः स्यात् क्षुत्परीषहः, एवं पिपासापरीषहोऽपि, एषणीयभावे तु प्राणिदयावता समस्तमनेषणीयं परिहरता शरीरस्थितिः कार्या, शीतपरीषहजयस्तु शीते पतति महत्यपि जीर्णवसनः परित्राणवर्जितो नाकल्प्यानि वासांसि गृह्णाति शीतत्राणाय, आगमविहितेन विधिना एषणीयमेव कल्पादि गवेषयेत् परिभुंजीत वा, नोऽपि शीतार्त्तोऽग्निं ज्वालयेत्, अन्यज्वालितं वा नासेवते, एवमनुतिष्ठता शीतपरीषहजयः कृतो भवति, एवमुष्णतप्तोऽपि जलावगाहस्नानव्यजनवातान् वर्जयेद्, अभिधारेत वा छायादि वा, अत उष्णमापतितं सम्यक् सहते, नैवातपशीतोष्णत्रयाद् बीभेति, दंशमशकादिभिर्दश्यमानोऽपि न ततः स्थानादपगच्छेत्, न च तदपनयनार्थं धूमादिना यतते, न च व्यजनादिना निवारयेदित्येवं दंशमशकपरीषहजयः कृतः स्यात्, नान्यथेति ॥

नाग्न्यपरीषहस्तु न निरुपकरणतैव दिगम्बरभोतादिवत्, किं तर्हि? प्रवचनोक्तेन विधानेन नाग्न्यं, प्रवचने तु द्विविधः कल्पः-जिनकल्पः स्थविरकल्पश्च, तत्र स्थविरकल्पे परिनिष्पन्नः जिनकल्पी भवति, तत्र क्रमेण धर्मश्रवणमनन्तरं प्रव्रज्याप्रतिपत्तिः, ततो द्वादश वर्षाणि सूत्रग्रहणं, पश्चाद्द्वादश वर्षाण्यर्थग्रहणं, ततो द्वादश देशदर्शनं, कुर्वन्नेव च देशदर्शनं निष्पादयति शिष्यान्, शिष्यनिष्पत्तेरनन्तरं प्रतिपद्यते

उम्युपनविहारं, स च त्रिविधो-जिनकल्पः शुद्धिपरिहारः यथालब्दश्च, तत्र जिनकल्पं...
प्रथममेव तपःसत्त्वादिभावनाभिरात्मानं भावयति, भावितात्मा च द्विविधे एव परिकर्म्मणि प्रवर्त्तते, यदि पाणिपात्रलब्धिरस्ति
ततस्तदनुरूपमेव परिकर्म चेष्टते,अथ पाणिपात्रलब्धिर्नास्ति ततः प्रतिग्रहधारित्वपरिकर्म्मणि प्रवर्त्तते, तत्र यः पाणिपात्रलब्धिसम्पन्न-
स्तस्योपधिरवश्यंतया रजोहरणं मुखवस्त्रिका च, कल्पग्रहणविधिश्चतुर्विधः पंचविधो वा, प्रतिग्रहधारिणस्तु नवप्रकारोऽवश्यंतया,
कल्पग्रहणात् दशविध एकादशविधो द्वादशविधो वा उपधिरागमेऽभिहितः, एवंविधं नाऽयमिएं, दशविधसमाचार्यो चेमाः पंच तेषां
सामाचार्यः-आपृच्छना मिथ्यादुष्कृतमावश्यकी निषीधिकी गृहस्थोपसंपच्च, उपरितनी वा त्रिप्रकारा सामाचारी, आवश्यक्यादिका,
श्रुतसंपदपि तेषामाचारवस्तु नवमस्य पूर्वस्य जघन्यतः, तत्र हि कालः परिज्ञेयो (गुणनादिना), उत्कृष्टेन दश पूर्वाणि भिन्नानि,
न सम्पूर्णानि, वज्रर्षभनाराचसंहननाश्च ते वज्रकुड्यकल्पधृतयः,स्थितिरपि तेषां क्षेत्रादिकाऽनेकभेदा, क्षेत्रतस्तावत् जन्मना सद्भावेन
च पंचस्वेव कर्म्मभूमिषु, संहरणतः कदाचित् कर्म्मभूमावकर्म्मभूमौ वा, अवसर्पिण्यां कालतः तृतीयचतुर्थ्योः समयोः जन्म,
त्रितुर्थपंचमीषु सद्भावः, चतुर्थ्यां लब्धजन्मा पंचम्यां प्रव्रजति, उत्सर्प्पिण्यां दुष्षमाद्यासु त्रिषु कालविभागेषु जन्म, द्वयोस्तु
सद्भावः, सामायिकच्छेदोपस्थाप्ययोर्जिनकल्पप्रतिपत्तिः चरणयोः, एवं तीर्थपर्यायागमवेदादिकाऽपि स्थितिरुपयुज्यागमानुसारेण
वाच्या,ननु च अचेलकादिर्दशविधः कल्पस्तत्राचेलक्यं स्फुटमेवोक्तं, तत्र मध्यमतीर्थंकरतीर्थवर्त्तिनां सामायिकसंयतानां चतुर्विधः
कल्पोऽवस्थितोऽवश्यंतया करणीयः, यथाह-"शय्यातरपिंडत्यागः कृतिकर्म्म च तथा व्रतादेशः । पुरुषज्येष्ठत्वं च हि चत्वा
रोऽवस्थिताः कल्पाः ॥ १॥" षड्विधश्चानवस्थितकल्पः, यथोक्तं-"आचेलक्यौद्देशिकनृपपिंडत्यागमासकल्पाश्च । वर्षाविधिः प्रति-

क्रमणविधानं चानवस्थिताः कल्पाः ॥ १ ॥" आद्यचरमतीर्थंकरतीर्थवर्त्तिनां तु दशविधोऽप्यवस्थितः कल्पः। "अस्य तु पुनर्भ-
गवतस्तीर्थंकरवर्द्धमानचन्द्रस्य। स्थित एवेष्टः कल्पः स्थानेषु दशस्वपि यथावत् ॥१॥" किं पुनः कारणमेतदेवं तीर्थकृतां विषम-
मुपदेशनं? "आर्जवजडा अनार्जवजडा[श्चेति] वृषभवीरतीर्थकालभवाः। मनुजा यस्मात्तस्मात् कल्पः स्थित एव स प्रोक्तः ॥१॥"
गत्यमुक्तं, आचेलक्यमुक्तं तत्तु यथोक्तं तथा कर्त्तव्यं, तीर्थकृत्कल्पस्तावदन्य एव, मतिश्रुतावधिज्ञानिनः प्रतिपन्नचारित्रास्तु चतु-
र्ज्ञानिन इति युक्तमेव तेषां पाणिपात्रभोजित्वम्, एकदेवदूष्यपरिग्रहाश्च, साधवस्तु तदुपदिष्टाचारानुष्ठायिनो जीर्णखंडितासर्वत-
नुप्रावरणाः श्रुतोपदेशेन विद्यमानैर्वंविधवाससोऽपि अचेलका एव, यथा आपगोत्तरणे शाटकपरिवेष्टितशिराः पुरुषो नग्न उच्यते
मवस्त्रकोऽपि तथाऽत्र गुह्यप्रदेशस्थगनाय गृहीतचोलपट्टकोऽपि नग्न एवेति, योषित् काचित् परिजीर्णशाटिकापरिधाना तंतुवा-
यमाह–'नग्नाऽहं देहि मे शाटिका' इति, एवं साधवोऽप्यमहाधनमूल्यानि खंडितानि जीर्णानि च बिभ्रतः श्रुतोपदेशाद्धर्म्मबुद्ध्या
नाग्न्यभाज एवेति, चारित्रसूत्रे शुद्धपरिहारिकान् वक्ष्यामः, अथालंदिकास्तु भण्यन्ते, लन्दमिति कालस्याख्या, तच्च पंचरात्रं,
तेषां हि पंचको गच्छः, सामाचारी तु तेषां जिनकल्पिकैरतुल्या सूत्रप्रमाणभिक्षाचर्याकल्पान् विहाय, तत्रापरिसमाप्तालपसूत्रार्थास्तु
गच्छप्रतिबद्धाः, तत्र केचिज्जिनकल्पिकाः यथालंदिनः, तत्र जिनकल्पिका निष्प्रतिकर्मशरीराः समुत्पन्नरोगाश्चिकित्सायां न प्रवर्त्तंते,
नेत्रमलयाद्यपि नापनयंति, स्थविरकल्पास्तूत्पन्नरोगं गच्छे प्रक्षिपति, गच्छोऽपि प्रासुकैषणीयेन कर्म्म करोति भेषजादिना, स्थवि-
रकल्पिकाश्चैकैकप्रतिग्रहधारिणः सप्रावरणाः, जिनकल्पिकानां तु वस्त्रपात्राणि भाज्यानि, एकत्र पंचरात्रचारिण एते, गणप्रमाणं
जघन्यतस्त्रयो गणाः शतश उत्कृष्टः, भिक्षाचर्या तु तेषां पंच पंचैव, एकवीथौ चरन्तः पंचभिः षड्कैर्मासकल्पं प्रतिसमापयंति,

स्थितास्थितकल्पयोः शुद्धयोरपि ते भवंति, एवमेते जिनकल्पिकादयो गच्छनिर्गताः, तत्र यद्येवंविधं नाभ्युपगम्यते ततो नागमोपरोधः, अथ परिधानरूपरित्यागमात्रं ततस्तदप्रमाणकं न मनांसि प्रीणयति जैनेन्द्रशासनानुसारिणामिति, स्थविरकल्पिकास्तु चतुर्दशविधोपधय उत्सर्गापवादव्यवहारिणः औपग्राहिकोपधिधारणादीनां गच्छवासिनां च पारमार्षप्रवचनानुसारिणां नाग्न्यपरीषहजयः संभवतीति नान्येषां ६।

अरतिरुत्पद्यते कदाचिद्विहरतस्तिष्ठतो वा सूत्रोपदेशात्, तत्रोत्पन्नारतिनापि सम्यग्धर्मारामरतिनैव भवितव्यं,एवमरतिपरीषहजयः७ स्यादिति, न स्त्रीणामंगप्रत्यंगसंस्थानहसितललितविभ्रमादिचेष्टाः चिंतयेत् न जातुचिच्चक्षुरपि तासु निवेशयेत् मोक्षमार्गार्गलासु कामबुद्ध्या,एवं स्त्रीपरीषहजयः८ कृतो भवति,वर्जिताऽलस्यः ग्रामनयन(गर)वसतिनिर्ममत्वः प्रतिमासं चर्यामाचरेदित्येवं चर्यापरीषहजयः९, निषीदंत्यस्यामिति निषद्या–स्थानं स्त्रीपशुपण्डकविवर्जितमिष्टानिष्टोपसर्गजयिता तत्रानुद्विग्नेन निषद्यापरीषहजयः कार्यः१०, शय्या–संस्तारकश्चम्पकादिपट्टो वा मृदुकठिनादिभेदेन वोच्चावचः प्रतिश्रयो वा पांशूत्करप्रचुरः शिशिरो बहुधर्म्मको वा तत्र नोद्विजेत कदाचनेति शय्यापरीषहजयः११, आक्रोशः अनिष्टवचनं तद् यदि सत्यं कः कोपः? शिक्षयति हि मामयमुपकारी न पुनरेवं करिष्यामीत्यत्र त्वया सुतरां कोपो न कर्त्तव्य इत्याक्रोशपरीषहजयः१२, वधः-ताडनं पाणिपार्ष्णिलताकशादिभिस्तदपि शरीरकमनश्यंतया विध्वंसत एवेति मत्वा सम्यक् सहितव्यम्, अन्यदेवेदमात्मनः पुद्गलसंहतिरूपं,आत्मा पुनर्न शक्यत एव ध्वंसयितुमतः स्वकृतकर्म्मफलमुपनतमिदं ममेति सम्यक् सहमानस्य वधपरीषहजयः१३, याचनं–मार्गणं भिक्षोर्वस्त्रपात्रान्नपानप्रतिश्रयादेः परतो लब्धव्यं सर्वमेव साधुना अतो याचनमवश्यमेव कार्यमित्येवं याच्ञापरीषहजयः१४, अलाभस्तु याचिते सति प्रत्याख्यानं

विद्यमानमविद्यमानं वा न ददाति यस्य स्वं तत्, कदाचिद्वा दत्ते, अल्पं वा कदाचित् परः, तत्रापरितोषो नायच्छति सति, यथोक्तं-"बहुं परघरे अत्थी'त्यादि, अलाभे च प्रसन्नात्मनैव भवितव्यं अलाभपरीषहजयः१५, रोगो-ज्वरातिमारकासश्वासादिस्तस्य प्रादुर्भावे सत्यपि न गच्छनिर्गताश्चिकित्सायां प्रवर्त्तन्ते, गच्छवासिनस्त्वल्पबहुत्वालोचनया सम्यक् सहंते, प्रवचनोक्तेन वा विधिना प्रतिकारमाचरतीति रोगपरीषहजयः१६, अशुषिरतृणस्य दर्भादेः परिभोगोऽनुज्ञातो गच्छनिर्गतानां, गच्छवासिनां च तेषां शयनमनुज्ञातं निशम्यन्ते, तान् दर्भान् भूमावास्तीर्य संस्तारकौ च दर्भाणामुपरि विधाय शेरते, चौरैरुपकरणापहृतौ वा प्रतनुकसंस्तारकादिपट्टको वा अत्यन्तजीर्णत्वात्तृणाद्यपि तत् परुषकुशदर्भादितृणसंस्पर्शं सम्यगधिसहते यस्तस्य तृणपरीषहजयः१७, रजः-परागमात्रं मलस्तु स्वेदवारिसम्पर्कात् कठिनीभूतो यद्यपि स्थिरतामितो ग्रीष्मसंपातजनितघर्म्मजलादार्द्रतां गतो दुर्गंधिर्महान्तमुद्वेगमापादयति, तदपनयनाय कदाचिदभिषेकाद्यभिलाषं न करोतीति मलपरीषहजयः१८, सत्कारो-भक्तपानवस्त्रपात्रादिना परतो योगः पुरस्कारः-सद्भूतगुणोत्कीर्त्तनं वन्दनाभ्युत्थानासनादिव्यवहारश्च, तत्रागत्कारितोऽपुरस्कारितो वा न द्वेषं यायात् न द्वेषयेच्च मनोविकारेणात्मानमिति सत्कारपुरस्कारपरीषहजयः १९, प्रज्ञायतेऽनयेति प्रज्ञा-बुद्ध्यतिशयः तस्मात्तत्प्राप्तौ न गर्वमुद्वहत इति प्रज्ञापरीषहजयः २०, प्रज्ञाप्रतिपक्षेणाप्यबुद्धिकत्वेन परिषहो भवति, नाहं किंचिज्जाने मूर्खोऽहं सर्वपरिभूत इत्येवं परितापमुपागतस्य परीषहस्तदकरणात् कर्म्मविपाकोऽयमिति परीषहजयः, ज्ञानं तु श्रुताख्यं चतुर्दश पूर्वाण्येकादशांगानि समस्तश्रुतधरोऽहमिति गर्वमुद्वहते, तत्रागर्वकरणात् ज्ञानपरीषहजयः, ज्ञानप्रतिपक्षेणाप्यज्ञानेनागमशून्यतया परीषहो भवति, ज्ञानावरणोदयात् क्षयोपशमोदयनिर्जृंभितमेतदिति, स्वकृतकर्म्मफलपरिभोगादपैति तपोऽनुष्ठानेन वेत्त्येवमालोचयतो ज्ञानपरीषहजयो भवति २१। अदर्शनपरीषहस्तु

सर्वपापस्थानेभ्यो विरतः प्रकृष्टतपोऽनुष्ठायी निःसंगश्चाहं तथापि धर्म्माधर्म्मात्मदेवनारकादिभावान्नेक्षे अतो मृषा समस्तमेतदिति
अदर्शनपरीषहः, तत्रैवमालोचयेद्–धर्म्माधर्म्मौ पुण्यपापफललक्षणौ यदि कर्म्मरूपौ पुद्गलात्मकौ ततस्तयोः कार्यदर्शनादनुमान-
समाधिगम्यत्वं, अथ क्षमाक्रोधादी धर्म्माधर्म्मौ ततः स्वानुभवत्वादात्मपरिणामरूपत्वात् प्रत्यक्षविरोधः, विज्ञानात्मकत्वादात्मनः
न प्रलंभो विद्यत एव, देवास्त्वन्त्यन्ततरतम (विषय) सुखासक्तत्वान्मनुष्यलोके च कार्याभावाद् दुष्पमानुभावाच्च न दर्शनगोचरं
प्रयांति, नारकास्तु तीव्रवेदनार्त्ताः पूर्वकृतकर्म्मोदयनिगडबन्धनवशीकृतत्वाद्स्वतंत्राः कथमायान्तीत्येवमालोचयतः अदर्शनपरी-
षहजयो भवति २२। इतिशब्द इयत्ताप्रदर्शनार्थः, एत इति (१९२-७) क्षुदादयोऽदर्शनान्ताः प्रत्यक्षीकृताः द्वाविंशतिरिति, न
न्यूनाः, नाधिकाः, क्षमादिदशलक्षणस्य धर्म्मस्य विघ्नहेतवः अंतरायकारणभूताः। यथोक्तं संवराख्यं प्रयोजनमभिसमी-
क्ष्याभिसंधाय संवरफलं चाभिसंधाय मोक्षं रागद्वेषौ निहत्येति, केचिद्रागादुदयमासादयंति केचिद्द्वेषादित्यतः सर्व एवैते दुष्यंति,
समापतिताः समन्तात् परीषोढव्या भवंतीति। 'पंचानामेव चे'त्यादिना सूत्रं, पंचानामेव, न चतसृणां, कर्म्मप्रकृतीनां उदयाद्विपा-
काद्वा द्वाविंशतिः परीषहाः समुपजायंते, काः पुनस्ताः पंच कर्म्मप्रकृतय इति नामग्राहमाचष्टे–ज्ञानावरणस्य वेद्यस्य मोहनीयस्य
तथा मोहनीयं द्विप्रकारं–दर्शनमोहनीयं चारित्रमोहनीयं च, तथाऽन्तरायस्येत्येवमेतासु पंचसु प्रकृतिषु ॥ गुणस्थानेषु के केत्याह–

सूक्ष्मसम्परायच्छद्मस्थवीतरागयोश्चतुर्दशेति ॥ ९-१० ॥ सूत्रम् ॥

स्वामिविशेषावधारणं चतुर्दशानां परीषहाणां, सम्परायः–कषायो लोभाख्यस्तस्य बादराणि खण्डानि परिशाटितानि नवमे
गुणस्थाने, दशमे सूक्ष्मलोभपरमाणवो विद्यंतेऽतः सूक्ष्मः सम्परायो यस्यासौ सूक्ष्मसंपरायः शमकः क्षपको वा संयतो मूलोत्तरगुण-

प्रतिपन्नस्तस्मिन् सूक्ष्मसम्परायसंयतेऽमी चतुर्दशपरीषहाः संभवंति उदयमासादयंतीतियावत् छद्म–आवरण तत्र स्थितः छद्मस्थः–सावरणज्ञान इति, वीतो–गतो रागः सकलमोहोपशमात् समस्तमोहक्षयाच्च, यत्प्रक्रमेणैकादशद्वादशगुणस्थानवर्तिनौ संयतौ परिगृह्येते, छद्मस्थवीतरागसामान्याच्चैकवचनं, सूक्ष्मसंपरायश्च छद्मस्थवीतरागश्चेति द्वन्द्वः, तयोश्चतुर्दशेति भाष्यं, परिपठिताः परीषहाः क्षुदादयो मलावसानाः॥ भवस्थस्य केवलिनः शेषकर्म्मकारणाभावाद्वेदनीयसंभवाच्च तदाश्रया एव परीषहा भवंतीत्याह—

एकादश जिने ॥ ९–११ ॥ सूत्रम् ॥

एकादशैव परीषहाः। पूर्वोक्तचतुर्दशमध्यादपनीय अमून् प्रज्ञादीन् अलाभाख्यांस्त्रीन् एकादश शेषा भवंति वेदनीयकर्म्माश्रयाः, जितेषु मोहपुरःसरेषु ज्ञानदर्शनावरणान्तरायेषु क्षयमात्यंतिकमुपगतेषु, घातिकर्म्मसूत्पन्नसकलज्ञेयग्राहिनिरावरणज्ञानो जिनः केवलीतियावत्, तत्रान्त्योपान्त्ययोर्गुणस्थानयोर्जिनत्वं तत्र संभवः॥ सर्वेषां परीषहकारणानामुदयसंभवमंगीकृत्याह—

बादरसम्पराये सर्वे ॥ ९–१२ ॥ सूत्रम् ॥

बादरः–स्थूलः सम्परायः–कषायस्तदुदयो यस्यासौ बादरसम्परायसंयतः, स च मोहनीयप्रकृतीः काश्चिदुपशमयतीति उपशमकः काश्चित् क्षपयतीति क्षपकः, तत्र सर्वेषां द्वाविंशतेरपि क्षुदादीनां परीषहाणामदर्शनान्तानां संभव इति॥ उक्ता गुणस्थानेषु यथासंभवं परीषहाः, सम्प्रति कर्म्मप्रकृतिष्वन्तर्भावकथनायाह—

ज्ञानावरणे प्रज्ञाऽज्ञाने ॥ ९–१३ ॥ सूत्रम् ॥

प्रज्ञापरीषहः अज्ञानपरीषहश्च ज्ञानावरणे भवतः, ज्ञानावरणक्षयोपशमात् प्रज्ञा ज्ञानं च, सत्येव हि ज्ञानावरणे तदुद्भवतः।

दर्शनमोहान्तराययोरदर्शनालाभौ ॥ ९–१४ ॥ सूत्रम् ॥

दर्शनमोहः–अनन्तानुबंधिनो मिथ्यात्वादि, तत्र च यथासख्यमिति तत् क्रमेण, दर्शनमोहे दर्शनपरीषहः लाभान्तराये चालाभपरीषहः, अदर्शन–अश्रद्धानं देवादिसद्भावनिषयं अतो मिथ्यात्वानुबंधात् दर्शनमोहतः स इति ।

चारित्रमोहे नाग्न्यारतिस्त्रीनिषद्याक्रोशयाचनासत्कारपुरस्काराः ॥ ९–१५ ॥ सूत्रम् ॥

दर्शनमोहवर्जं शेषं चारित्रमोहनीयं, चारित्रं–मूलोत्तरगुणसंपत्तिः मोहात्तत्पराङ्मुखत्वाच्चारित्रमोहनीयं,तदुदये सति नाग्न्यादयः सप्त परीषहा भवंति, नाग्न्यात् जुगुप्सोदयात् अरत्युदयादरतिः वेदोदयात् स्त्रीपरीषहः निषद्यास्थानासेवित्वं तु भयोदयात् क्रोधोदयादाक्रोशपरीषहः मानोदयाद् याच्ञापरीषहः लोभोदयात् सत्कारपरीषह इति,

वेदनीये शेषाः ॥ ९–१६ ॥ सूत्रम् ॥

वेदनीयकर्मोदये शेषाः एकादश परीषहाः संपतंति, कुतः शेषाः?, (१६७-१७) उपर्युक्तेभ्योऽन्ये शेषाः, के पुनरुक्ताः ?, प्रज्ञाज्ञानअदर्शननाग्न्यादयः, एभ्यः शेषाः केवलिनि ते संभवति, एकादश जिने प्रागुक्ताः क्षुत्पिपासाशीतोष्णदंशमशकचर्याशय्यावधरोगतृणस्पर्शमलपरीषहाख्या इति, एवमेते व्याख्यातनिमित्तलक्षणविकल्पाः बादरसंपरायात् सर्वे भवंति, परतस्तु नेयंतः, तत् किमेते कदाचित् सर्वेऽप्येके कस्य जन्तोर्योगपद्येन सभवंति न वा संभवंतीत्याह–

एकादयो भाज्या युगपदेकान्नविंशतेः ॥ ९–१७ ॥ सूत्रम् ॥

एषा द्वाविंशतिः परीषहाणामित्यादि (१९८-२) भाष्यं, एकादय इति तद्गुणसंविज्ञानो बहुव्रीहिः, अथवैकशेषः, एकश्चा-

सावादिश्चैकादि, एक आदिर्येषां ते एकादयः, एकादिश्च एकादयश्च एकादयः तदेते द्वाविंशतिपरीषहाः भाज्या–विकल्प्याः युगपदेकस्मिन् जंतौ, कस्यचिदेकः कस्यचिद्द्वौ कस्यचित्त्रयस्तावद्यावदेकोनविंशतिरविरोधाद् युगपदेकत्रोदयंते, विरोधात्तु न द्वाविंशतिरप्येकस्मिन् युगपदिति। कथं पुनरेकोनविंशतिर्युगपत् न पुनर्द्वाविंशतिरपीत्याह–अत्यन्तविरोधित्वादिति. शीतोष्णलक्षणयोरसहावस्थानलक्षणो विरोधः परस्परपरिहारेण स्थितिः, अत्यन्तग्रहणं पर्यायनयविवक्षाप्राधान्यख्यापनार्थं, शीतोष्णपर्यायावत्यन्तभिन्नौ विरुद्धौ, तयोश्चैकस्मिन् काले नैकत्वेनावस्थानं, द्रव्यार्थिकस्य तु तदेव द्रव्यमपास्तसमस्तपर्यायं शीतमुष्णं चेत्यवस्थितशीतपुरुषवदुष्णीभूतगर्भवद्वा नास्ति कश्चिद्विरोधः, तथा चर्याशय्यानिषद्यानामेकस्य संभवे द्वयोरभावः चर्यायां सत्यां निषद्याचर्ययोरभावः निषद्यायां तु शय्याचर्ययोरभावः शय्यायां पुनः निषद्याचर्ये न भवत इति तयोर्वर्जनं॥ इत्युक्तः परीषहजयः, सम्प्रतिः प्रस्तावप्राप्तं चारित्रमुच्यते—

**सामायिकच्छेदोपस्थाप्यपरिहारविशुद्धिसूक्ष्मसंपराययथाख्यातानि चारित्रम् ॥ ९–१८ ॥ सूत्रम् ॥**

सामायिकादयः कृतद्वन्द्वाः प्रथमाबहुवचनेन निर्दिष्टा, एकमेव चारित्रं संयमभेदं मन्यमानो भाष्यकृदाह–**सामायिकसंयम** (१९८–८) इत्यादि, सर्वसावद्ययोगविरतिलक्षणं सामायिकं, तद्विशेषा एव च च्छेदोपस्थाप्यादयो विशुद्धतराध्यवसायविशेषाः, सावद्ययोगविरतिरूपं सामायिकं द्विप्रकारं–इत्वरकालं यावज्जीविकं च, तत्राद्यं प्रथमान्त्यतीर्थंकरतीर्थयोः प्रव्रज्याप्रतिपत्तावारोपितं शस्त्रपरिज्ञाध्ययनादिविदः श्रद्दधतः छेदोपस्थाप्यसंयमारोपणं विशिष्टतरत्वाद्धितरतः सामायिकव्यपदेशं जहातीत्यत इत्वरकालं, मध्यमतीर्थकृतां विदेहक्षेत्रवर्तिनां च यावज्जीविकं प्रव्रज्याप्रतिपत्तिकालादारभ्य प्राणप्रयाणकालादवतिष्ठते, प्रथमान्त-

तीर्थंकरशिष्याणां सामान्यसामायिकपर्यायच्छेदो विशुद्धतरायां सर्वसावद्ययोगविरतावस्थानं विविक्ततरमहाव्रतारोपणं छेदोपस्थाप्यसंयमः, छेदोपस्थापनमेव छेदोपस्थाप्यं, पूर्वपर्यायच्छेदे सति उत्तरपर्याये उपस्थानं भावे यतो विधानात्, तदपि द्विधा–निरतिचारसातिचारभेदेन, तत्र शैक्षस्य निरतिचारमधीतविशिष्टाध्ययनविदः, मध्यमतीर्थंकरशिष्यो वा यदोपसम्पद्यते चरमतीर्थंकरशिष्याणामिति, सातिचारं तु मूलगुणस्थानस्य पुनर्व्रतारोपणाच्छेदोपस्थाप्यं, उभयं चैतत् सातिचारं निरतिचारं च स्थितकल्प एव आद्यान्ततीर्थंकरयोरेवेत्यर्थः २। परिहारः–तपोविशेषस्तेन विशुद्धिकं चेति, तदपि द्वेधा–निर्विश्यमानकं निर्विष्टकायिकं च, तत्र निर्विश्यमानकमासेव्यमानकं, परिभुज्यमानकमित्यर्थः, निर्विष्टकायिकमासेवितमुपभुक्तं, तत्सहयोगात् तदनुष्ठायिनोऽपि निर्विश्यमानकाः, निर्विष्टकायिकास्तु निर्विष्टः कायो येषामस्ति ते निर्विष्टकायिकाः तत्सहयोगात् तेनाकारेण तपोऽनुष्ठानद्वारेण परिभुक्तः कायो यैरिति, परिभुक्तताद्दग्विधतपसो निर्विष्टकायिका इत्यर्थः, परिहारविशुद्धिकं च तपः प्रतिपन्नानां नवको गच्छः, तत्र परिहारिणश्चत्वारः अनुपरिहारिणोऽपि चत्वारः, कल्पस्थित एकः, वाचनाचार्य इत्यर्थः, सर्वे च ते श्रुताद्यतिशयसम्पन्नाः तथापि रुच्या कल्पस्थित एकः कश्चिद्व्यवस्थाप्यते, तत्र ये कालभेदेन विहितं तपोऽनुतिष्ठं ते परिहारिणः, नियताचाम्लभक्तास्त्वनुपरिहारिणः, तेषामेवासि सरास्तपुद्गलानां (शिशिरादितपोवतां) परिहारिणां सहायके वर्त्तंते, कार्यस्थितोऽपि नियताचाम्लभक्त एव, तच्च तपः परिहारिणां ग्रीष्मे चतुर्थषष्ठाष्टमभक्तलक्षणं जघन्यमध्यमोत्कृष्टक्रमेणैव शिशिरकाले षष्ठाष्टमदशमानि जघन्यमध्योत्कृष्टानि वर्षास्वष्टमदशमद्वादशभक्तानि, जघन्यमध्यमोत्कृष्टानि, पारणकालेऽप्याचाम्लमेव पारयंति, उक्तविधानं तपः षण्मासं कृत्वा परिहारिणोऽनुपरिहारित्वं प्रतिपद्यंते, अनुपरिहारिणोऽपि परिहारिणो भवंति, तेऽपि षण्मासान् विदधते तपः, पश्चात् कल्पस्थित एकाक्येव

षण्मासावधिकं परिहारतपः प्रतिपद्यते, तस्य चैकोऽनुपरिहारीभवति, तन्मध्येऽपरश्चैकः कल्पस्थित इति, एवमेष परिहारविशुद्धः संयमोऽष्टादशभिर्मासैः परिसमाप्तिमुपयाति, परिसमाप्ते तु तस्मिन् पुनस्तदेव केचित् परिहारतपः प्रतिपद्यन्ते स्वशक्त्यपेक्षया केचिद्वा जिनकल्पमपरे तु गच्छमेव प्रविशंतीति, परिहारविशुद्धिकाश्च स्थितकल्प एव प्रथमचरमतीर्थयोरेव, न मध्यतीर्थेष्विति ३।

सूक्ष्मसंपरायसंयमस्तु श्रेणिमारोहतः प्रपततो वा भवति, श्रेणिरपि द्विप्रकारा—औपशमिकी क्षायिकी च, तत्रौपशमिकी अनन्तानुबंधिनो मिथ्यात्वादित्रयं नपुंसकस्त्रीवेदौ हास्यादिषट्कं पुंवेदः अप्रत्याख्यानप्रत्याख्यानावरणाः संज्वलनाश्चेति अस्याश्च प्रारंभकोऽप्रमत्तसंयतः, अपरे तु ब्रुवते—अविरतदेशप्रमत्ताप्रमत्तविरतानामन्यतमः प्रारभते, स चानन्तानुबंधिनश्चतुरोऽपि समकमे शमयति अन्तर्मुहूर्त्तेन, ततो दर्शनत्रिकं, तत उदीर्णपुमानारोहन् नपुंसकं वा वेदं, ततः स्त्रीवेदं, योषिदारोहंती प्राग् नपुंसकवेदं, ततः पुरुषवेदं, तृतीयप्रकृतिरपि आरोहन् प्राक् स्त्रीवेदं, ततः पुंवेदं, ततोऽपि हास्यादिषट्कं, ततो नपुंसकवेदं, ततोऽप्रत्याख्यानानां प्रत्याख्यानावरणानां च युगपदेव द्वौ क्रोधौ, पश्चात् संजलनक्रोधान्तरितौ शमयति पुनः द्वौ मानौ, पश्चात् संज्वलमानं, पुनर्द्वे माये, ततः संज्वलनमायां, पुनर्द्वौ लोभौ पश्चात् संज्वलनलोभं संख्येयानि खंडानि कृत्वा क्रमेण चोपशमय्य पश्चिमखंडमसंख्येयानि खंडानि करोति, ततः प्रतिसमयमसंख्येयभागमुपशमयन् समस्तमन्तर्मुहूर्त्तेन शमयति, तांश्चासंख्येयान् भागान् शमयन् सूक्ष्मसंपरायसंयमीभवति, अत्यन्तविशुद्धाध्यवसायो दशमगुणस्थानवर्ती श्रेण्यारोहे वर्त्तमानस्य शुद्धमन्तरतः संक्लिष्टं, सूक्ष्मः—श्लक्ष्णावयवः कषायः–संसारभ्रान्तिहेतुर्यत्र तत् सूक्ष्मसंपरायं, स चोपशान्तकषायोऽपि स्वल्पप्रत्यायलाभात् दग्धांजनद्रुमवदुद्करोचनादिप्रत्ययभाजोऽङ्कुरादिरूपेण भस्मच्छन्नाग्निवद्वा, तदिंधनादिप्रत्ययस्वरूपमुपदर्शयतिः, तद्वदसौ मुखवस्त्रिकादिषु ममत्वम-

मीरणेन संधुक्षमाणः कषायाग्निश्चरणेन्धनमाम्रलतो दहन् प्रच्यवते, प्रतिविशिष्टाध्यवसायादिति, क्षायिकी तु श्रेणिरनन्तानुबंधिनो मिथ्यात्वमिश्रसम्यक्त्वानि अप्रत्याख्यानप्रत्याख्यानावरणे नपुंसकस्त्रीवेदौ हास्यादिषट्कं पुंवेदं संज्वलनाश्च,अस्यास्त्वाहारोहकः अनन्तानुबन्धिनो युगपदेव क्षपयन्त्यन्तर्मुहूर्त्तेन,ततः क्रमेण दर्शनत्रिकं, ततः प्रत्याख्यानाप्रत्याख्यानावरणे युगपदेव क्षपयितुमारभते, मध्यभागे चैषामिमाः षोडश प्रकृतीः क्षपयति, नरकतिर्यग्गती एतदानुपूर्व्यौ एकद्वित्रिचतुरिन्द्रियजातयः आतपोद्योतत्रसस्थावरनादरसूक्ष्मनामानि ततो निद्रानिद्रा प्रचलाप्रचलां स्त्यानर्द्धिं, ततोऽष्टानां शेषं, ततोऽनुदीर्णं वेदं जघन्यं पूर्ववत, ततो हास्यादिषट्कं, ततोऽप्युदित वेद, ततो संज्वलनानामेकैकं क्रमेण क्षपयति, सावशेषे च पूर्वसंज्वलनकषाये उत्तरं क्षपयितुमारभते, सर्वं शेषं चोत्तरेणैव सह क्षपयति यावत् सज्वलनलोभसंख्येयभाग., तमपि सख्येयभागमसंख्येयानि खंडानि कृत्वा प्रतिसमयमेकैकं खंडं क्षपयति तदा सूक्ष्मसम्परायसयमीभवति, तदा सूक्ष्ममोहनीयोपशमे तु एकादशगुणस्थानप्राप्त. उपशान्तकषायो यथाख्यातसंयमो भवति, क्षपकस्तु सकलमोहार्णवमुत्तीर्णो निर्ग्रन्थाय यथाख्यातसयमीजायते, अथशब्दो यथाशब्दार्थो, यथा ख्यातः संयमो भगवता तथाऽभावेन, कथं च आख्यातः ?, अकषायः, स चैकादशद्वादशयोर्गुणस्थानयोः, उपशान्तत्वात् क्षीणत्वाच्च कषायाभाव इति, एवं पंचविध चारित्र अष्टविधकर्मचयरिक्तीकरणात्, तद्वा पुलाकादिषु विस्तरेण वक्ष्यामः (१९८-१०) पुलाकादिस्तत्र उपरिष्टात् पुलाकादिभेदेषु सामायिकादिः संयमः पंचप्रकारोऽपि पंचसु पुलाकादिनिर्ग्रन्थेषु विस्तरेण–प्रपंचेन भावयिष्याम इति॥ उक्त चारित्रं प्रकीर्णकं च तपः, सम्प्रत्यनशनादिकं तपो भण्यते—

अनशनावमौदर्यवृत्तिपरिसंख्यानरसपरित्यागविविक्तशय्याऽऽसनकायक्लेशा बाह्यं तपः ॥ ९–१९ ॥ सूत्रम् ॥

द्विविधं तपो–बाह्यमभ्यन्तरं च, तत्र बाह्याभ्यन्तरशब्दार्थः प्राग् निरूपितः, तदेकैकं षोढा तत्र बाह्यस्य तानङ्गान्यकारो भेदानाचष्टे षडपि सूत्रं विवृण्वत् अनशनं अवमौदर्यं वृत्तिपरिसंख्यानमित्यादि (९०८–१३) प्राक् प्रकृतः सम्यक्शब्दोऽनुवर्त्तते, स च विशेषणं, सम्यगनशनं सम्यगवमौदर्यमेवं सर्वत्र वृत्तिपरिसंख्यानादिष्वपि, किं पुनर्विशेषेण व्यावर्त्यते ?, नृपशत्रुतस्करकृताहारनिरोधादि, तथा पक्तिनिमित्तमाजीवादिहेतोरुपहतभावदोषस्य न हि संयमरक्षणं न च कर्म्मनिर्जरेत्यतः सम्यग्ग्रहणं, यस्तु प्रवचनोदितं श्रद्धतयास्वसामर्थ्यापेक्षो द्रव्यक्षेत्रकालभावाभिज्ञः क्रियाम्वाल्हादी उपपन्नाहोरात्राभ्यन्तरयायि करोत्यनशनादितपः स कर्म्मनिर्जराभाग्भवतीर्थः, एवमर्थं अनुवर्त्यं सम्यग्ग्रहणं, बालतपःप्रतिषेधार्थं च, संयमः सप्तदशभेदा उक्तः, चारित्रं वा पंचप्रकार संयमः, तत्परिपालनाय रसत्यागादिसम्यक्तपो भवति, कर्म्म–ज्ञानावरणादि तस्य निर्जरा आत्मप्रदेशेभ्यः परिशटनं यथोक्तं यद्विशेषणादुपचितो वेत्यादि, तपश्च प्रायः सर्वसमयेषु प्रतीतं शुभाशुभकर्म्मक्षयायेत्येवं कर्म्मनिर्जरणार्थं चेत्युक्तं, चशब्दः समुच्चयार्थः, चतुर्थषष्ठाष्टमादीत्यादिना, अशनं–आहारस्तत्परित्यागोऽनशनं, तद् द्विधा–इत्वर यावज्जीविकं च, तत्रेत्वरं नमस्कारसहितादि, चतुर्थषण्मासपर्यन्तमानमित्वरमनशनं भगवतो महावीरस्य तीर्थे, यावज्जीविकं च त्रिविधं पादपोपगमनं इंगिनी भक्तप्रत्याख्यानमिति, तत्र पादपोपगमनं द्विधा–सव्याघातमव्याघातं च, सतो ह्यायुषो यदुपक्रान्तिः क्रियते समुपजातव्याधिना उत्तानमहावेदनेन वा तत् सव्याघातं, निर्व्याघातं, तु प्रव्रज्याशिक्षापदादिक्रमेण जराजर्जरितशरीरः करोति, यदुपहितचतुर्विधाहारप्रत्याख्यानो निर्जन्तुकं स्थण्डिलमाश्रित्य पादप इवैकेन पार्श्वेन निपतत्यपरिस्पन्दस्तावदास्ते प्रशस्तध्यानव्यापृतान्तःकरणः यावदुत्क्रान्तप्राणस्तदेतत् पादोपगमनाख्यमनशनं, इंगिनी–श्रुतविहितः क्रिया-

विशेषस्तद्विशिष्टं मरणं, अयमपि प्रव्रज्यादिप्रतिपत्तिक्रमेणैवायुषः परिहाणिमवबुध्य त्यक्तनिःशेषोपकरणः स्थावरजंगमप्राणिविवर्जितस्थंडिलस्थाप्येकाकी कृतचतुर्विधाहारप्रत्याख्यानः छायाया उष्णे उष्णात् छायायां क्रामन् सचेष्टः सम्यग्ज्ञानपरायणः प्राणान् जहात्येतदिंगिनीमरणं परिकर्म्मपूर्वकं चेति२, भक्तप्रत्याख्यानं तु गच्छमध्यवर्त्तिनः, स कदाचित्त्रिविधाहारप्रत्याख्यायी कदाचिच्चतुर्विधाहारप्रत्याख्यानो वा, पर्यन्ते कृतसमस्तप्रत्याख्यानः समाश्रित्य मृदुसंस्तारकं समुत्सृष्टशरीराद्युपकरणममत्वः स्वयमेवोद्ग्राहितनमस्कारः समीपवर्त्तिसाधुदत्तनमस्कारो वा उद्वर्त्तनपरिवर्त्तनादि कुर्वाणः समाधिना करोति कालम्,एतद् भक्तप्रत्याख्यानं मरणमिति ३॥

उक्तमनशनमवमौदर्यमुच्यते-अवमौदर्यमित्यवमं न्यूनं नामेत्यादि,अवमं न्यूनमुदरं यस्यासाववमोदरः तद्भावोऽवमौदर्य-न्यूनोदरता, कवलप्रमाणनिरूपणार्थमाह-उत्कृष्टावकृष्टौ इत्यादि, उत्कृष्टो विकृत्य मुखविवरं यत्नतो महाप्रमाणः कृत्वा यः प्रक्षिप्यते अवकृष्टस्त्वयत्नलघुकस्तौ वर्जयित्वा मध्यमेन कवलेनाविकृतस्वमुखप्रमाणेनावमौदर्यं कार्यं, तच्च त्रिविधमवमौदर्यं, तद्यथेत्यादिना प्रत्यक्षीकरोति, अल्पाहारावमौदर्यमुपार्द्धावमौदर्यं प्रमाणप्राप्तात् किंचिदूनावमौदर्यमिति, तत्राहारः पुंसो द्वात्रिंशत्कवलप्रमाणः,कवलाष्टकाभ्यवहारोऽल्पाहारावमौदर्यं,उपार्द्धावमौदर्यं द्वादश कवलाः, अर्द्धसमीपमुपार्द्धं द्वादश कवलाः, यतः कवलचतुष्टयप्रक्षेपात् सम्पूर्णमर्द्धं भवति, प्रमाणप्राप्ताहारो द्वात्रिंशत् कवलाः, स चैकेन कवलेन न्यूनं किंचिदूनावमौदर्यं भवति, इतिशब्दः प्रकारार्थः, प्रमाणप्राप्तावमौदर्यं चतुर्विंशतिः कवलाः,त्रिविधावमौदर्ये एकैककवलहासेन बहूनि स्थानानि जायंते, सर्वाणि चावमौदर्यविशेषाः कवलपरिसंख्यानं चेति, पुरुषस्य द्वात्रिंशत् योषितोऽष्टाविंशतिः, अतो विभागः कार्यः ॥

वृत्तिपरिसंख्यानमनेकविधमित्यादि, वर्तते यया सा वृत्तिः–भैक्ष्यं तस्य परिसंख्यानं–परिगणनं आगमविहितोऽभिग्रहो वा, परिगणनं दत्तीनां भिक्षाणां वा, तत्र दत्तिर्यदेकमुखेन प्रक्षिपति पात्रकादौ पटलकेन वा देहनकादिना वा, भिक्षा तु गृहस्तेनोत्क्षिप्य यद्ददाति कडुच्छकेनोदंकिकया वा, तत् परिगणनमेकां दत्तिं ग्रहीष्याम द्वे तिस्रो वा इत्यादि, एवं भिक्षाणामपि गणनं गोचरप्रवेशकाले करोति, तद्यथेत्यादिना अभिग्रहानेकविधत्वं दर्शयति, उत्क्षिप्तान्तप्रान्तचर्यादीनामित्यादि उत्क्षिप्तं पटलोदंकिकाकडुच्छुकादिनोपकरणेन दानयोग्यतया दायकेनोद्यातं तादृशं यदि लप्स्येत ततो ग्रहीष्यामः नाविशिष्टमित्युत्क्षिप्तचर्या–उत्क्षिप्ताभ्यवहरणमिति, तथाऽपरो निक्षिप्तचरकः पूर्वोक्तविपरीतग्राही, आदिशब्दादन्ये चाभिग्रहका वाच्याः, अन्तचरको रूक्षकोद्रवौदनारनालादिग्राही, प्रान्तचरकः शीतलोदनादिग्राही, इत्थमुत्क्षिप्तचर्यादीनामन्यतममभिग्रहमभिगृह्य पर्यटति भिक्षायै, सक्तुकुल्माषौदनादीनां चोत्पन्नेन द्रव्यक्षेत्रकालभावविभक्तान् अभिग्रहान् सूचयति, तद्द्रव्यतःसक्तून् कुल्माषान् तक्रौदनमादिशब्दात्तक्रतेमनमाचाम्लमपर्णकं मण्डकान् वा ग्रहीष्ये, क्षेत्रतो देहलीं जंघयोरन्तःकृत्वा कालतो विनिवृत्तेषु सर्वभिक्षाचरेषु भावतो हसनरोदनादिव्यापृतो निगडादिबद्धो अक्ताक्षः कृतमालः अन्यो वा दायको ददाति चेत् तदेवमन्यतमं द्रव्याद्यभिगृह्य शेषप्रत्याख्यानं तप इति॥

रसपरित्यागो इत्यादि, रस्यन्ते–अद्यन्तेऽतिशयेन रसास्तान्, परित्यागो हि तत्परिहारः, सोऽनेकप्रकारः, तद्बहुत्वादेव तद्यथेत्यादिना रसान् प्रत्यक्षीकरोति, मद्यमांसमधुनवनीतादीनामित्यादि (१९९–९) तत्र मद्यं गुडपिष्टद्राक्षाखर्जूरादिद्रव्यसंभारोपजातं मदसामर्थ्यं विषगरादिवज्जीवमस्वतंत्रं करोति, अस्वतंत्रः स्वतन्त्रस्य तादृशः कार्याकार्यविवेकशून्यः, मांसं—सर्वशास्त्रप्रतीतं तस्य परित्यागः श्रेयानिति, मधु त्रिप्रकारं–माक्षिक कौन्तिकं भ्रामरं च, तदपि प्राण्युपघातनिष्पन्नमेवेति परिहार्यं,

द्रव्यादिचतुष्टयापेक्षे ते, गोमहिष्यजाविकानां नवनीतं चतुर्द्धा, स चापि रसो वृष्य इति परिहार्यः, आदिग्रहणाद् क्षीरदधिगुडघृततैलाख्याः पंचानरुध्यंते विकृतयः, तत्र क्षीरविकृतिः पंचप्रकारा गोमहिष्यजाविकोष्ट्रीणां, दधिविकृतिरपि करभीवर्जानां चतुष्प्रकारा, गुडविकृतिरिक्षुविकारः फाणितादिः प्रसिद्धः खण्डशर्करजा, दधिविकृतिरिव घृतविकृतिरपि चतुर्विधा वा, तिलातसीसिद्धार्थककुसुंभाख्यानि तैलानि, दधिघृताद्यवगाहनिष्पन्ना अवगाह्यकविकृतिरपूयाकासाद्याऽऽदिग्रहणादागृहीतैव, एवमेतासां रसविकृतीना प्रत्याख्यानं तपः, एता हि वृष्यत्वाद्वाजीकरणप्रसिद्धेश्चेति न सर्वदाऽभ्यवहार्याः, चित्तविकारहेतुभूतत्वाद्, एवं च विकृतयोऽन्नर्थसंज्ञां लभंते, अतो मुमुक्षुणा ललनागविलोकनवत् प्रत्याख्येयाः, इत्थं च रसपरित्यागलक्षणं विशिष्टविरसरूक्षाद्यभिग्रहिण्वित्यनेन विनापि विकृतिभिः शक्यं प्राणरक्षणं यतिनेति दर्शयति, निर्गतरसं वा स्वसाद्रसात् प्रच्युतं रूक्षं कोद्रवाम्लपर्णकादि, आदिग्रहणादन्तप्रान्तपरिग्रहः ।

विविक्तशय्यासनतानामेति (१९९-११) शय्याग्रहणेन प्रतिश्रयत्रिकग्रहणं, आसनग्रहणेन पीठवृषिकादि, विविक्तं गर्हितजनसंपातरहितं अशुचिरादि, विविक्तं च तत् शय्यासनं च विविक्तशय्यासनं तद्भावो विविक्तशय्यासनता, नामशब्दो वाक्यालंकारार्थः अभिधानवचनो वा, अस्यैव विवरणमेकान्तेऽनाबाधे इत्यादि, पर्यायकथनेन व्याख्यानं, विविक्तमेकान्तमनाबाधमससक्तं स्त्रीपशुपंडकविवर्जितमिति पर्यायाः, अनाबाध इति अबाधः-शरीरोपघातः स न विद्यते यत्र तदनाबाधं असंसक्त इति सूक्ष्मस्थूलजन्तुरहिते स्त्रीपशुपंडकविवर्जित इति स्त्रियो-मानुष्यः पशवो-गोमहिष्यजाविकाद्याः पण्डकानि-नपुंसकानि, वस्तुतश्चारित्रोपघात एषा वसतिः, तदेवैकान्तादिगुणयुक्त प्रतिश्रयादि निरूपयति-शून्यागार इत्यादिना, शून्यागार-शून्यगृह-

मदोषं देवकुलं—दुर्गाधातयनादि सभा—यत्र प्राङ् मनुष्याः समवायमक्रुपत सम्प्रति तु न तत्र समयंति पर्वतविवरं गिरिनगरादाविव लयनानि, आदिग्रहणादन्यदपि जीर्णोद्यानमध्यवर्त्ति मंडपकादि परिगृह्यते, एषां यथोक्तानामन्यतमस्थाने व्यवस्थानं, किमर्थमिति चेत् समाध्यर्थं समाधिर्ज्ञानदर्शनचारित्रतपोवीर्यात्मकः पंचधा, समाधानं समाधिः—स्वच्छता ज्ञानादीनामपरिहाणिर्विवृद्धिश्च, इत्थमियं संलीनता तपोविशेषः, इंद्रियाणि संयम्य सस्वान्तानि क्रोधादिकषायकदंबकं च विविक्तं शय्यासनमासेवमानस्य संलीनता भवतीति, प्राप्तेष्विन्द्रियविषयेषु भवितव्यमरक्तद्विष्टेन, कषायसंलीनता क्रोधस्य तावदुदयनिरोधः प्राप्तोदयस्य वा वैफल्यापादनं, एवं शेषाणामपि, तथा अकुशलमनोनिरोधः कुशलचित्तोदीरणं वा, एवं वागपि वाच्या, कायव्यापारे समुत्पन्नप्रयोजनस्य यत्नवतः संलीनताव्यपदेशमश्नुते, विना प्रयोजनेन निश्चलासनमेव श्रेयः, विविक्तचर्या तु भाष्यकृतैवोक्ता।

कायक्लेशोऽनेकविध इत्यादि (१९२-१४) कायः—शरीरं तस्य क्लेशो—बाधनं, कायात्मनोरभेदः, संसार्यवस्थायामन्योऽन्यानुगतत्वात् क्षीरोदकयोरिव, अतः कायबाधायात्मनोऽपि कायद्वारेण क्लेशोपपत्तिः, सम्यग्योगनिग्रहो गुप्तिरित्येतस्मात् सम्यग्ग्रहणमनुवर्त्तते, तच्च कायक्लेशविशेषमागमानुसारिणां सम्यक् क्लेशोत्पत्तिर्निर्जरायै भवतीति, स चागमोऽनेकप्रकारः, कायक्लेश उपन्यस्तः,तद्यथेत्यादिना तदनेकविधत्वं दर्शयति, स्थान वीरासनेत्यादि, स्थानग्रहणाद् ऊर्ध्वस्थानलक्षणकायोत्सर्गपरिग्रहः तस्य चाभिग्रहविशेषाः स्वशक्त्यपेक्षाः कालनियमश्चंद्रावतंसकनृपतेरिवानगन्तव्यः,वीरासनं जानुप्रमाणासनसन्निविष्टस्याधस्तात् समाकृष्यते तदासनं निश्चेष्टं च तदवस्थ एवास्ते कायक्लेशाख्यं तपो भवति, तत्राप्यभिग्रहविशेषादेव स्वसामर्थ्यापेक्षात् कालनियमः, उत्कटुकासनं तु प्रसिद्धमेव, विनाऽऽसनेन भूमावप्राप्तस्फिग्द्वयस्य भवति, एकपार्श्वशायित्वं त्वधोमुख उत्तानमुखस्तिर्यग्व्यव-

तपः ऋजुकशशरीरः प्रसारित-
स्थितो वा कालनियमभेदेन यदनतिष्ठते तत्तपः कायक्लेशाख्यं, तथा दंडायतशायित्वं नाम
जंघद्वयथलनरहितस्तिष्ठति यदा तदा तद्भवति, आतपनमप्यूर्ध्वस्थितस्य निविष्टस्य निपण्णस्य वा प्राग् चालितगभस्तिजालस्य
सवितुरभिमुखस्थितस्य भवति, अप्रावरणाभिग्रहः शिशिरसमये प्रावरणअग्रहणं, आदिग्रहणाद्धेमंतेऽपि रजनीप्वातापनं, संताप-
नमात्मनः शीताभिसहनमिन्यर्थः, तथा लगंडशायित्वमप्रतिकर्म्मशरीरत्वमस्नानकं केशोल्लुंचनमित्येनमेतानि स्थानवीरासनादीनि
सम्यक्प्रयुक्तान्यागमवचनादनुगतानि बाह्यं तपो यथाशक्ति विधिनाऽनुष्ठेयम्, अन्यथा त्वविधिप्रयोगादात्मानमितरांश्च धर्म्मा-
वश्यकविधीन् पीडयेत्, अविध्युपयुक्तविपनत्, किं पुनरितो बाह्यात्तपसः फलमवाप्यत इत्याह—अस्मात् पड्विधादपि बाह्यात्तपस
इत्यादि, संगत्यागं शरीरलाघवमिन्द्रियविजयं संयमरक्षणं कर्म्मनिर्जरा चेत्यनेकं फलमासाद्यते, तत्र निःसंगत्वं बाह्याभ्यन्तरोप-
धिप्वनभिप्वंगो—निर्ममत्वं, प्रतिदिनमतिमात्राहारोपयोगात् प्रणीताहारोपयोगाच्च शरीरस्य गौरवं, ततश्च मासकल्पविहारितादि-
अयोग्यता, तद्वर्जनात्तु शकटाक्षाभ्यंजनवदुपयोगाद्वा शरीरलाघवमुपजायते, ततश्चाप्रणीतशरीरस्योन्मादानुद्रेकाद् विजयः, भक्तपा-
नार्थमहिंडमानस्य वर्षाजनितजन्तूपरोधाभावात् संयमसंरक्षणं, निसंगादनशनादितपोऽनुतिष्ठतः शुभध्यानाध्यवसितस्य कर्म्मनिर्जर-
णमवश्यं भावीति तपस्तत्र बाह्यमुक्तं, अधुनाऽभ्यन्तरमुच्यते, तच्चातिशयेन कर्म्मनिर्दहनक्षमं ॥

**प्रायश्चित्तविनयवैयावृत्त्यस्वाध्यायव्युत्सर्गध्यानान्युत्तरं ॥ ९-२० ॥ सूत्रम् ॥**

अन्तरव्यापारभूयस्त्वादन्यतीर्थविशेषतः बाह्यद्रव्यानपेक्षत्वादन्तरं तप उच्यते, प्रायश्चित्तादीनां ध्यानान्तानां द्वन्द्वः, मूलोत्त-
रगुणेपु स्वल्पोऽप्यतीचारश्चित्तं मलिनयतीति तत्प्रकाशनाय शुद्ध्यैव प्रायश्चित्तं विहितं, पापोच्छेदकारित्वात् प्रायश्चित्तमिति,

प्रायो-बाहुल्येन चित्तविशुद्धिहेतुत्वात् यत् प्रायश्चित्तं, विनीयते-येनाष्टप्रकारं कर्म्मापनीयते स विनयः, श्रुतोपदेशेन व्यापृतो-व्यग्रस्तद्भावो वैयावृत्यं, सुष्ठु मर्यादया कालपरिहारेण पौरुष्यपेक्षया स्वाध्यायः, विविधस्यान्नपानवस्त्रपात्रादेः संसक्तस्यातिरिक्तस्य वा परित्याग उत्सर्गः, वाक्कायचित्तानामागमविधानेन निरोधो ध्यानमुत्तरमिति पूर्वसूत्रोपन्यस्तसूत्रानुपूर्वीप्रामाण्यादुत्तरमित्यभ्यन्तरमाह, एतदपि षट्प्रकारमभ्यन्तरं तप इति, तदेतदाभ्यंतरं तपः—

नवचतुर्दशपंचद्विभेदं यथाक्रमं प्राग् ध्यानात् ॥ ९-२१ ॥ सूत्रम् ॥

नव चत्वारश्च दश पंच द्वौ च भेदाश्च ते नवचतुर्दशपंचद्विभेदाः,एते भेदा यस्येत्येकस्य भेदशब्दस्य लोपः, यथाक्रममिति यथासंख्यं प्राग् ध्यानात् प्रायश्चित्तादारभ्य यावद् व्युत्सर्ग इति,इतोऽस्मात् सूत्रादुत्तरं यद्वक्ष्यामः प्रायश्चित्तादि तदित्थंभेदमास्थेयमिति॥ तद्यथेत्यनेन सूत्रं सम्बन्धाति, अभ्यन्तरतपोभेदस्य निर्दिष्टविकल्पसंख्यभेदस्य तद्भेदानामाख्याविशेषप्रज्ञप्त्यर्थमिदमुच्यते—

आलोचनप्रतिक्रमणतदुभयविवेकव्युत्सर्गतपश्छेदपरिहारोपस्थापनानि ॥ ९-२२ ॥ सूत्रम् ॥

आलोचनादयः उपस्थापनान्ताः कृतद्वन्द्वाः नपुंसकलिंगेन निर्दिष्टाः, प्रायश्चित्तं नवभेदमित्यादि विवरणं, उपसंख्यानिकः सुद, तद्यथेत्यादिना नवापि भेदा विवेकेन दर्शयति, तदुभयमित्येतद् व्याचष्टे, आलोचनप्रतिक्रमणे इति, एतदित्यनेनालोचनं प्रतिक्रमणं च अहीनमेव न तृतीयो भेदः, आलोचनादीन् भाष्यकार एव विवृणोति, अनया मर्यादया दोषरहितं कार्याकार्यमव्युत्पन्नबालजल्पितवत् सकलमतीचारमाचष्टे-प्रत्यक्षीकरोतीति दर्शयति, प्रकाशयत्यालोचनार्हाय गुरवे, तत्र कश्चिदतीचारो गमनागमनादिकः प्रमादक्रियाविशुद्ध्यर्थमालोचनामात्रादेव विशुद्ध्यति, तस्यालोचनस्यैकार्थाः पर्यायाः, आलोचनं मर्यादया

गुरोर्निवेदनं पिंडिताख्यानस्य विकटनं तु विवरणं द्रव्यादिभेदेन प्रकाशनं गुरोश्चेतसि सम्यगतीचारसमारोपणं आख्यानं प्रथमनृजुभावेन साधनं प्रादुष्करणं निन्दागर्हाद्वारेणेत्येवमनर्थान्तरमेवार्थतः परमार्थत इति, प्रतिक्रमणमित्यादि (२००-१४) म्यमेव विवृणोति भाष्यकारः मिथ्यादुष्कृतसंप्रयुक्तः प्रत्यवमर्शः प्रत्याख्यानं कायोत्सर्गकरणं च अतीचाराभिमुख्यपरिहारेण प्रति क्रमणं–अपसरणं प्रतिक्रमणं, एतदाह–मिथ्या–अलीकमुत्पन्नमुन्मार्गः दुष्टं कृतं दुष्कृतं चरणविधानमित्यर्थः तेन संप्रयुक्तः, प्रत्यवमर्षः–पश्चात्तापः, समस्तमिदं मया दुष्टं कृतमिति, स्वच्छन्दतो,न सूत्रानुसारेणेति,न पुनरेवं करिष्यामीति, प्रत्याख्यानं प्रतिक्रमणं कायोत्सर्गकरणं चेति कायस्य–शरीरस्योत्सर्गः–उत्सर्जनं भावतः कायोत्सर्गः, यस्मात्तु शुचिशुद्धभावस्यापि ममायं कायो बलान्निपततः कायेष्विति नाम भावदोष इति । तदेवंविधं प्रतिक्रमणं प्रायश्चित्तमहिंसकस्य विहितं,तदुभयप्रायश्चित्तनिरूपणायाह–एतदुभयमालोचनप्रतिक्रमणे इति (२००-१५) आलोचनं व्याख्यातं प्रतिक्रमणं च, एतदेवोभयप्रायश्चित्तं, प्रागालोचनं पश्चाद् गुरुसंदिष्टस्य प्रतिक्रमणं, एतच्चोभयप्रायश्चित्तं संभ्रमभयातुरागसहसानाभोगानात्मवशगस्य दुष्टचिंतितभाषणचेष्टानतश्च विहितं, सम्प्रति विवेकप्रायश्चित्तावसरः, विवेको विवेचनमित्यादि (२००-१५) विवेकः त्यागपरिणामः विवेचनं भावविशुद्धिः विशोधनं निरवयवता पुनः प्रत्युपेक्षणं प्रकटनमीक्षणमेव प्रयत्नेन, स्वल्पोऽप्यवयवो नास्तीति विशुद्धिरित्येते पर्यायशब्दा अभिन्नमर्थमभिदधति, विवेकप्रायश्चित्तस्य विषयं दर्शयति–स एष विवेकः संसक्तान्नपानोपकरणादिषु भवति, उपयुक्तेन गीतार्थेन गृहीतं प्राक् पश्चादवगतमशुद्धं विवेकार्हं, अन्नपानग्रहणात् पिंडपरिग्रहः, उपधिरोघिकौपग्रहिकलक्षणः, शय्या प्रतिश्रयः, आदिग्रहणाद्गलकभसमल्लकभेषजादिपरिग्रहः, इत्येवं विवेक एव प्रायश्चित्तमिति। सम्प्रत्युत्सर्गः व्युत्सर्ग इत्यादि (२०१–१)

विशिष्टोत्सर्गः-प्रणिधानपूर्वको निरोधः कायवाग्व्यापारस्य, पर्यायान्तरेण व्याचष्टे-प्रतिष्ठापनमित्यनर्थान्तरं प्रतिष्ठापनशब्दः परित्यागार्थः। कायोत्सर्गप्रायश्चित्तस्य विषयमादर्शयति-एषोऽपीत्यादिना व्याचष्टे, कायोत्सर्गः प्रायश्चित्तं भवति, क ?, अनेषणीयादिषु त्यक्तेषु, तत्रानेषणीयं उद्गमाद्यविशुद्धमन्नपानमुपकरणं वा प्रतिष्ठाप्य कायोत्सर्गः कार्यः, आदिग्रहणाद् गमनागमनविहारश्रुतसावद्यस्वप्नदर्शननौसंतारणोच्चारप्रश्रवणाचरणपरिग्रहः,अशंकनीयविवेकेषु चेति संसक्तदधितक्रादिषु न प्राणिनो विवेक्तुं शक्यन्ते इत्यशंकनीयविवेकेषु च, सक्तुप्रभृतिष्वपि तेषु कायोत्सर्ग एव प्रायश्चित्तं भवतीति। तपःप्रायश्चित्तविवक्षया आह—तपो बाह्यमनशनादि (२०१-३) प्रायश्चित्तमित्यभ्यन्तरं तपः, अनशनादि बाह्यं, बाह्याभ्यंतरता च केनचिदंशेनेत्यविरोधः, तत्रानशनग्रहणाच्चतुर्थभक्तपरिग्रहः, श्रुतानुसारात् पंचमव्यवहाराच्च, तच्च मध्यमग्रहणाच्चाद्यभेदपरिग्रहोऽपि, तत्राद्याः पंचकदशकविंशतिपंचविंशतिभेदा लघवो गुरवश्च, मासोऽपि च लघुगुरुः, चत्वारश्च मासा लघवो गुरवश्च, षट् च मासा लघुगुरुभेदाः, सर्वमेव तत्तपः प्रायश्चित्तं ज्ञानदर्शनचारित्रापराधानुरूपमागमेऽपि विशुद्ध्यर्थमुक्तं,सम्प्रति तु पंचमव्यवहारप्रमाणेन यतयो भूयसा विशुद्धिमाचरंति, तच्च निर्विकृत्याद्यष्टमभक्तांतं, तच्चानेकातिचारविषयं यथा उद्देशकाध्ययनश्रुतस्कन्धागमेषु प्रमादिनः कालाविनयातिक्रमादिषु क्रमेण निर्विकृत्याद्याचाम्लांतमनागाढेषु आगाढेषु पुरस्तादर्द्धादिचतुर्थभक्तान्तमेवमादि,प्रकीर्णकं चानेकविधं चन्द्रप्रतिमादीत्युक्तलक्षणं बाह्ये तपसि प्राक् प्रपंचेनेति। छेदप्रायश्चित्ताभिधित्सयैवाह—छेदोऽपवर्त्तनमपहार इत्यभिन्नार्थाः (२०१-४) पर्यायाः, स च छेदः पर्यायस्य यथा यस्य तावद् दश वर्षाणि आरोपितमहाव्रतस्यापराधानुरूपः कदाचित् पंचकच्छेदः कदाचिद् दशक इत्यादि यावत् मासपरिमाणच्छेदो लघुर्गुरुर्वा एवंविधेन छेदेन छिद्यमानपर्यायः प्रव्रज्यादिवसमप्यवहरतीति, अस्य च विषयस्तपसा

गर्वितस्तपसोऽसमर्थस्तपश्चाद्दधानस्तपसा च यो न दम्येत कश्चिदपरिणामकश्चेत्यादि। सम्प्रति मूलप्रायश्चित्तमभिधीयते—परिहारो मासिकादिरिति इदं मूलप्रायश्चित्तोपलक्षणं, परिह्रियते तस्मिन् सति वंदनालापान्नप्रदानादिक्रियया साधुभिरिति परिहारः, स च मासादिकः षण्मासान्तः, तस्य चान्ते क्वचिन्मूलं—पुनर्व्रतारोपणं, तद्विषयः संकल्पात् कृतः प्राणातिपातो दर्पाच्चतुर्थसेवनमुत्कृष्टं मृषावादादि वा सेवमानस्येत्यादिः। अनवस्थाप्यपारांचिकप्रतिपादनार्थमाह—'उपस्थापनं पुनर्दीक्षण'मित्यादि, अनवस्थाप्य-पारंचिकप्रायश्चित्ते लिंगक्षेत्रकालतपःसाधर्म्यादिकस्थीकृत्योक्तं, तत्र यथोक्तं तपो यावन्न कृतं तावन्न व्रतेषु लिंगे वा स्थाप्यत इत्य-नवस्थाप्यः, पारं तेनैव तपसाऽतिचारस्य समंचति—गच्छतीति पारांचिकः, पृषोदरादिपाठाच्च संस्कारः, तयोः पर्यन्ते व्रतेषूपस्थापनं, पुनर्दीक्षणं पुनः प्रव्रज्याप्रतिपत्तिः पुनश्चरणं चारित्रं पुनर्व्रतारोपणमित्यनर्थान्तरं तत्रानवस्थाप्यस्य विषयः साधर्मिकस्तेय-हस्तताडनादिः, दृढगूढान्योऽन्यकरणादिः पारांचिकमिति, तदेतत् नवविधं प्रायश्चित्तमित्यादि (२०१-७) तदेतदित्यादिना-ऽऽलोचनादिः परामर्शः, नवविधमिति स्वकृतसूत्रसन्निवशमाश्रित्योक्तं, आर्षे तु दशधा विंशतिधा वाऽभिहितं, प्रायश्चित्तं वक्ष्य-माणनिर्वचनं देशो निर्गुणः किल क्षेत्रे कालः स्निग्धरूक्षः साधारणश्च शक्ति प्रायश्चित्तकारणे वीर्यं सामर्थ्यं संहननं वज्रर्ष-भनाराचादि संयमः सप्तदशभेदः समस्तो वा मूलगुणोत्तरगुणकलापस्तस्य विराधना खण्डनमतिचरणं, चशब्दः समुच्चयार्थः, तां विशिनष्टि—कायेन्द्रियजातिगुणोत्कर्षकृतामिति,कायाः पृथिव्यादयः षट्संख्याः,तत्रावनिजलज्वलनपवनप्रत्येकवनस्पतिषु संघट्टनपरितापनावद्रावणविषयमन्यादृशं प्रायश्चित्तं अन्यादृक् साधारणवनस्पतौ अन्यादृक् च द्वित्रिचतुःपंचेन्द्रियकायेषु, इत्थमु-पयुज्य यथार्हंयं, एवं कालादयोऽपि पर्यालोचनीयाः, तदनुरूपं च देयमिति, तथा एकद्वित्रिचतुःपंचेन्द्रियजातिद्वारेण ये राग-

द्वेषमोहाः तेषामुत्कर्षापकर्षमध्यावस्थाः समीक्ष्य मृगराजगवादिव्यापादकवत् तत्कृतां च विराधनां प्राप्यातिचारविशोधनार्थं यथार्हमथानुरूपं दीयते चाचर्यते च प्रायश्चित्तमिति । सम्प्रति प्रायश्चित्तमिति व्युत्पादयति चिती संज्ञानविशुद्ध्योर्धातुरित्यादि, भीमसेनात् परतोऽन्यैर्वैयाकरणैरर्थद्वये पठितो धातुः संज्ञाने विशुद्धौ च, इह विशुद्ध्यर्थस्य सह संज्ञानेन ग्रहणं, अथवाऽनेकार्था धातव इति संज्ञाने पठितो विशुद्धावपि वर्त्तते, भाष्यकृता चोपयुज्यमानमेवार्थमभिसंधाय विशुद्धिरपि पठिता, तस्य चित्तमिति रूपं भवति, निष्ठान्तमौणादिकं च, चेततीति चित्तं, विशुद्ध्यतीत्यर्थः, तां च विशुद्धिमुपजायमानां चेतति-संजानीते प्रणिदधानमिति, अंजिघृक्षिभ्यः क्तः, क्तस्य च निष्ठासंज्ञा, औणादिकं चैतत् शब्दरूपं चित्तमिति, नान्यलक्षणमन्वेष्यं, उणादयो बहुलमिति चितेरपि क्तः कर्त्तरि, केन पुनः प्रकारेण विशुद्धिरित्याह-एवमेभिरित्यादि (२०१-११) उक्तलक्षणैरालोचनादिभिः पारांचिकावसानैः कृच्छ्रैः-दुष्करैस्तपोविशेषैर्जनिताप्रमादो-जाताप्रमादः अप्रमत्त इत्यर्थः, तं च मूलोत्तरविषयं व्यतिक्रमं-अतिचारमुपयुक्तः प्रायो बाहुल्येन चेतयति, प्रायोग्रहणमत्यन्तसूक्ष्मातिचारव्युदासार्थं, चेतयंश्च संजानानो न पुनराचरति आसेवते तादृशमपराधमित्यतः प्रायश्चित्तमुच्यते, प्रायःशब्देन वा अपराधोऽभिधीयते, नालोचनादि, सूत्रविहितेन सोऽपराधो विशुद्ध्यतीति, अतश्च अस्माच्च हेतोः प्रायश्चित्तं ॥ अधुना विनयोऽभिधीयये, तत्प्रतिपादनायाह—

ज्ञानदर्शनचारित्रोपचाराः ॥ ९-२३ ॥ सूत्रम् ॥

ज्ञानादयः कृतद्वन्द्वाः प्रथमाबहुवचनेन निर्दिष्टाः, एतद्विवरणायाह-विनयश्चतुर्भेद (२०१-१६) इति, विनयनिर्वचनमुपरि व्याख्यास्यते, तां च चतुर्भेदीं नामग्राहमाचष्टे-तद्यथाशब्दस्तदुपन्यासार्थः, ज्ञानविनय इत्यादि (२०१-१६) तत्र-तेषु चतुर्षु

भेदेषु ज्ञानविनयस्तावत् पंचविधः मतिज्ञानादिः, आदिग्रहणाच्छ्रुतावधिमनःपर्यायकेवलज्ञानपरिग्रहः, अस्मिन् सति ज्ञानादिपंचके भक्तिर्बहुमानो ज्ञानस्वरूपश्रद्धानं च, ज्ञानविषये शेषः "काले विणए बहुमाणे उवहाणे" इत्यादि, दर्शनविनयस्त्वेकविध एकप्रकार एव, तत्त्वार्थश्रद्धानं सम्यग्दर्शनमित्येकलक्षणत्वादेकविध एव सम्यग्दर्शनविनयः, तथा अर्हतामर्हत्प्रणीतस्य च धर्म्मस्याचार्योपाध्यायस्थविरकुलगणसंघसाधुसंभोगानां चानासातना, प्रशमसंवेगनिर्वेदानुकंपास्तिक्यानि च सम्यग्दर्शनविनय इति, चारित्रविनयः पंचविधः सामायिकादिः, सामायिकादयः प्रागुक्तलक्षणाः सामायिकादिस्वरूपश्रद्धानं श्रद्धानपूर्वकं चानुष्ठानं विधिना च प्ररूपणमित्येष चारित्रविनयः, औपचारिकविनयोऽनेकविधः (२०२-२) उपचरणमुपचारः, श्रद्धापूर्वकं क्रियाविशेषलक्षणो व्यवहारः स प्रयोजनमस्येत्यौपचारिकः, स चानेकप्रकारः, तस्य विषयनिर्देशार्थमाह—सम्यग्दर्शनेत्यादि, सम्यक्त्वज्ञानचरणानि गुणास्तैरभ्यधिका ये मुनयः आदिग्रहणाद्दशविधसामाचारीसंपत्परिग्रहः तेष्वभ्युत्थानासनप्रदानानुगमादिः अभिमुखमागच्छति गुणाधिके उत्थानम्—आसनादभ्युत्थानं अदृष्टपूर्वे च साधुवेषभाजि कार्यमभ्युत्थानं तदनन्तरमासनप्रदानं ततो वन्दनप्रतिपत्तिः गच्छतः कतिचित् पदान्यनुगमनं—व्रजनं, आदिग्रहणात् मुकुलितकरकमलद्वयस्य ललाटदेशे न्यासोऽञ्जलिप्रग्रहः वस्त्रादिपूजा सत्कारः सद्भूतगुणोत्कीर्त्तनं सन्मानं, विनयशब्दनिर्भेदप्रदर्शनायाह—विनीयते क्षिप्यतेऽनेनाष्टप्रकारं कर्म्मेति विनयः, पुंनाम्नि घे करणसाधनः, विनीयते वाऽस्मिन् सति ज्ञानावरणादिरजोराशिरिति विनयः, अधिकरणसाधनो वा। सम्प्रति वैयावृत्यं उच्यते—

आचार्योपाध्यायतपस्विशिक्षकग्लानकुलगणसंघसाधुसमनोज्ञानां ॥ ९–२४ ॥ सूत्रम् ॥

आचार्यादीनां समनोज्ञांतानां कृतद्वन्द्वानां षष्ठीबहुवचनेन निर्देशः, वैयावृत्त्यं दशविधमित्यादि, आचार्यादिभेदाद्दशधा,

तान् प्रकारान् नामग्राहमाख्याति-आचार्यवैयावृत्त्यमित्यादिना, वैयावृत्त्यशब्दव्युत्पादनायाह-व्यावृत्तभावो वैयावृत्त्यं व्यावृतकर्म्म चेति, व्यावृत्तो-व्यापारप्रवृत्तः प्रवचनचोदितक्रियाविशेषानुष्ठानपरः तस्य यो भावः यथा भवनं भावस्तथा परिणामस्तद् वैयावृत्यं व्यावृत्तकर्म्म चेति तत्तथाभूतस्य यत् कर्म्म-क्रिया तद्वैयावृत्त्यं, पूर्वत्र क्रियावतः प्राधान्यमुत्तरत्र क्रियाया इति। तथा वैयावृत्त्यं यथासंभवं क्षेत्रवमतिप्रत्यवेक्षणभक्तपानवस्त्रपात्रभेषजशरीरशुश्रूषणसदागमनविद्यामंत्रप्रयोजनसाध्यादिः, आचार्याद्युद्देशेनाचार्यादीनां यत् कर्त्तव्यं तत्र व्यग्रता व्यावृत्तता, आचार्यः पूर्वोक्तः पंचविध इत्यादि, आचरति आचारयति चेत्याचार्यः -"कृत्यल्युटो बहुल"मिति वचनात्, धर्मः पूर्वोक्तः क्षमामार्दवार्जवादिः, तत्र पंचप्रकारः 'प्रव्राजको दिगाचार्यः, श्रुतोद्देशी तथैव च। समुद्देष्टा श्रुतस्यान्यस्तथाऽऽम्नायस्य वाचकः ॥१॥ इति, आचारो ज्ञानादिभेदः पंचधा तस्य गोचरो-विषयो यथास्वं तद्विषयो विनयस्तमाचारगोचरविनयं, स्वाध्यायं च पंचप्रकारं वक्ष्यमाणं आचार्याल्लब्धानुज्ञाः साधवोऽनु-पश्चात्तस्मादुपाधीयत इत्युपाध्यायः, अपादानसाधनः, संग्रहोपग्रहानुग्रहार्थं चेति वस्त्रपात्रप्रदानात् संग्रहः अन्नपानभेषजप्रदानादुपग्रहः सूत्रप्रदानादनुग्रहः एतदर्थं चोपधीयते सेव्यत इत्युपाध्यायः, पृषोदरादित्वाचोपाध्येतीति, संग्रहोपग्रहानुग्रहाश्चास्य संबंधिनः, तत्समीपभवांस्तत्कृतानुपाधीतेति स्मरतीत्युपाध्यायः। द्विसंग्रहो निर्ग्रन्थ इति (१०२-१५) संगृह्यतेऽनेनेति संग्रहः द्वाभ्यां गृह्यते-बद्ध्यते, संगृहीत इत्यर्थः, एतदेव विवृणोति-आचार्योपाध्यायसंग्रह इति, त्रिसंग्रहा निर्ग्रन्थी आचार्यादित्रयसंगृहीतेत्यर्थः, का पुनरियं प्रवर्तिनी ?, दिगाचार्येण व्याख्याता तत्सदृशी द्रष्टव्या, श्रुतसकलनिशीथाध्ययना समुचितकल्पव्यवहारसूत्रग्राहिणी संविग्ना प्राप्तदिगनुज्ञा, सा च हिताय प्रवर्त्तते निःश्रेयसायैव घटते, अन्याश्च प्रवर्त्तयति, सारणधारणवारणादिप्रयोगेन प्रवर्त्तयतीति प्रवर्त्तिनी,

विकृष्टं दशमादि किंचिन्न्यूनषण्मासांतमुग्रं तपस्तद्युक्तस्तपस्वीति । अचिरप्रव्रजित (२०२-१) इत्यादि, आद्यपश्चिमतीर्थयोर्मध्यमतीर्थेषु च कतिचिदहानि प्रतिपन्नस्य सामायिकस्य गतानि यस्य सोऽचिरप्रव्रजितः, ग्रहणासेवनशिक्षामुभयीं शिक्षयितव्यः शैक्ष', शिक्षामर्हति वा शैक्षकः, शिक्षाशीलो वा शैक्षः, ज्वालाद्यादित्वाण्णप्रत्ययः,ग्लानो मन्दोऽपटुर्व्याध्यभिभूतः प्रतीतः, सुज्ञान एवेत्यर्थः, कुलानि स्थानीयादीनि कुलसमुदायो गणः स्थविरसंततिसंस्थितिः स्थविरग्रहणेन श्रुतस्थविरपरिग्रहः, न वयसा पर्यायेण वा, तेषां संततिः-परपरा तस्याः संस्थानं-वर्त्तनं अद्यापि भवनं संस्थितिः कुलमाचार्यसंततिसंस्थितिः, एकाचार्यप्रणेयः साधुसमूहो गच्छः, बहूनां गच्छानामेकजातीयानां समूहं कुलं, तत्र ये आचार्यगुणोपेतास्तत्संततिस्थितिः कुलं, तेषां प्राधान्यात्, संघश्चतुर्विधः साधुसाध्वीश्रावकश्राविकाः, तत्र येषु व्यवस्थिता ज्ञानदर्शनचरणगुणास्ते परमार्थतः संघः श्रमणादिरिति,पुरुषोत्तरधर्म्म इति ज्ञापनार्थमुक्तं साधवः संयता इति, ज्ञानादिलक्षणाभिः पौरुषेयीभिः शक्तिभिः मोक्षं साधयंतीति साधवः संयता इति मूलोत्तरगुणसंपन्नाः, द्वादशविधसंभोगभाजः समनोज्ञा ज्ञानदर्शनचारित्राणि मनोज्ञानि, सह मनोज्ञैः समनोज्ञाः, तानि च संभोगकारणानि संविग्नेष्वपि विद्यंते, एषामित्यादि (२०३-५) आचार्यादयः समनोज्ञांताः संबध्यंते एषामित्यनेन, अन्नपानादयः प्रसिद्धास्तैरुपग्रहः उपकारः शुश्रूषा विश्रामणादिका भेषजक्रिया मांद्ये सति तदनुरूपं भेषजसंप्रदानं कान्तारं अरण्यं श्वापदबहुलत्वाद्विषमं दुर्गं गर्ताकंटकादिप्रचितं उपसर्गो ज्वरातीसारकासश्वासमसरकादिः अभ्युपपत्तिरभ्युद्धरणं परिपालनं परिरक्षणमन्नपानादिना यत्तद् वैयावृत्त्यमिति ॥ सम्प्रति स्वाध्यायोऽभिधीयते—

वाचनाप्रच्छनाऽनुप्रेक्षाऽऽम्नायधर्मोपदेशाः ॥ ९-२५ ॥ सूत्रम् ॥

स्वाध्यायः पंचविध इत्यादि (२०३-९) तद्यथेत्यनेन भेदपंचकोपन्यासं सूचयति, तत्र वाचनेत्यादि, शिष्याणामध्यापनं वाचना-कालिकस्योत्कालिकस्य वा आलापकप्रदानं, ग्रन्थः सूत्रमर्थं सूत्राभिधेयं तद्विषयं प्रच्छनं सन्देहे सति, ग्रन्थार्थयोर्मनसाऽभ्यासोऽनुप्रेक्षा, न तु बहिर्वर्णोच्चारणमनुश्रयणीयं, आम्नायोऽपि परिवर्त्तनं उदात्तादिपरिशुद्धमनुश्रयणीयमभ्यासविशेषः गुणनं संख्यानं पदाक्षरद्वारेण रूपादानमेकं रूपं एका परिपाटी द्वे रूपे त्रीणि रूपाणि इत्यादि, धर्मोपदेशस्तु सूत्रार्थकथनं व्याख्यानमनुयोगवर्णनमनुयोगद्वारप्रक्रमेण श्रुतचरणधर्मोपदेश इत्यनर्थान्तरमिति। अधुना व्युत्सर्गो व्याख्यायते—

बाह्याभ्यन्तरोपध्योः ॥ ९–२६ ॥ सूत्रम् ॥

व्युत्सर्गो द्विविध (२०४-१) इत्यादि, विविधसोत्सर्गो व्युत्सर्गः, संसक्तासंसक्तपानादेर्विधिना प्रवचनविहितेनोत्सर्गो व्युत्सर्गः, स द्विप्रकारः बाह्याभ्यंतरभेदात्, तत्र बाह्यो बाह्यस्य तावद् द्वादशरूपकस्योपधेः पात्रतद्बन्धपात्रस्थापनादीनि द्वादश रूपाण्यस्येति द्वादशरूपकः उपग्राहकत्वादुपधिः आभ्यन्तरः शरीरस्य कपायाणां चेति शरीरस्य पर्यन्तकाले विज्ञाय किंचित् शरीरकं परित्यजति–उज्झति, यथोक्तं—"जंपि इमं सरीरं इट्ठं कंत"मित्यादि, क्रोधादयः कषायाः संसारपरिभ्रमणहेतवस्तेषां व्युत्सर्गः –परित्यागो मनोवाक्कायैः कृतकारितानुमतिभिश्चेति ॥ सम्यक्त्वादित्रयं मोक्षसाधनं, तत्रापि ध्यानं गरीयः, तन्निरूपणायाह—

उत्तमसंहननस्यैकाग्रचिंतानिरोधो ध्यानं ॥ ९–२७ ॥ सूत्रम् ॥

उत्तमं प्रकृष्टं संहननमस्थ्नां बन्धविशेषः उत्तमं संहननमस्येत्युत्तमसंहननः, तदुत्तमसंहननं चतुर्विधं इत्यादिना दर्शयति चातुर्विध्यं, वज्रर्षभनाराचं ऋषभनाराचं नाराचमर्द्धनाराचं चेत्यनेन चत्वारो भेदाः प्रतिपाद्याः, वृत्त्यर्थस्तु नाराचशब्दः प्रत्येकं सम्ब-

ध्यते, तत्र वज्रर्षभनाराचं पुनरर्द्धनाराचं तथा ऋषभनाराचं तथा नाराचं च, एते उत्तमसंहननवाच्याः, उत्तमसंहननग्रहणं निरोधे
कार्ये प्रतिविशिष्टसामर्थ्यप्रतिपादनार्थं, तस्योत्तमसंहननस्य एकाग्रचिंतानिरोधो ध्यानं अग्रं-आलंबनं एकं च तदग्रं चेत्येका-
ग्रमेकमालम्बनमित्यर्थः, एकस्मिन्नालंबने चिंतानिरोधः चलचित्तमयी चिन्ता तन्निरोधस्तस्यैकत्रावस्थापनं अन्यत्राप्रचारो निरोधः,
अतो निश्चलं स्थिरमध्यवसानमेकालंबने छद्मस्थविषयं ध्यानं, केवलिनां पुनर्वाकायनिरोध एव ध्यानं, अभावान् मनसः, न ह्यवा-
प्तकेवलस्य मनोव्यापारः समस्ति, सकलकरणग्रामनिरपेक्षत्वादिति, तद्युक्तस्येति तेन विशिष्टेन संहननत्रयेणाद्येन चतुर्विधेन वा
युक्तस्य सम्पन्नस्य एकाग्रचिंतानिरोधश्च चशब्दाद्वाकायनिरोधश्च, अत्र च ध्याता संसार्यात्मा, ध्यानस्वरूपमेकाग्रचिंतानिरोधो,
संहननानि ध्याननिमित्तं, भावसाधनः, उत्तमसंहननस्य इत्यन्यपदार्थः नभ्यो(गम्यः)ध्याताऽभिहितो, ध्यानस्वरूपे भावसाधनता च
विज्ञेया। सम्प्रति ध्यानकालप्रमाणनिरूपणायाह—

आमुहूर्त्तात् ॥ ९-२८ ॥ सूत्रम् ॥

घटिकाद्वयं मुहूर्त्तः, अभिविधावाङ्, अन्तर्मुहूर्त्तपरिमाणं, न परतो मुहूर्त्तादित्यर्थः, तद्ध्यानमित्यादि, तदेतत् सामान्यलक्ष-णोक्तं ध्यानं चतुर्विधमप्यामुहूर्त्ताद् भवति, परतो न भवत्यशक्तेरेव, किं पुनः कारणं परतो न ध्यानमस्तीति ?, आह-दुर्ध्यान-त्वादिति, दुःशब्दो वैकृते वर्त्तते, विकृतो वर्णो दुर्वर्ण इति यथा, एवं विकृतं ध्यानं-विकारान्तरमापन्नं दुर्ध्यानमिति, अनीप्सायां वा दुःशब्दः, अनीप्सितो अस्या भग इति दुर्भगा कन्या, एवमनीप्सितं ध्यानं दुर्ध्यानमिति, तद्भावो दुर्ध्यानत्वं तस्मात् दुर्ध्या-नत्वात्, परतो न ध्यानमस्ति॥ सामान्येन ध्यानलक्षणमभिधाय सम्प्रति भेदकथनायाह—

आर्त्तरौद्रधर्म्यशुक्लानि ॥ ९–२९ ॥ सूत्रम् ॥

कृतद्वन्द्वान्यार्त्तादीनि नपुंसकबहुवचनेन निर्दिष्टानि, तच्चतुर्विधं भवतीति, ध्यानं सामान्येन लक्षितं चतुर्विधं भवति, चतस्रो विधा यस्य तच्चतुर्विधं, विधानप्रदर्शनायाह–तद्यथेति आर्त्तं रौद्रं धर्म्यं शुक्लमिति, तत्रार्त्तस्य शब्दनिर्भेदाभिधानं ऋतशब्दो दुःखपर्यायवाच्यस्ति तत्र भवं आर्त्तं दुःखानुबंधि चेति, तथा रोदयति अपरानिति रुद्रः–दुःखस्य हेतुस्तेन कृतं तत्कर्म्म वा रौद्रं, प्राणिवधबंधपरिणत आत्मैव रुद्र इत्यर्थः, धर्म्मः क्षमादिदशलक्षणः तस्मादनपेतं धर्म्यं, शुक्लं शुचि निर्मलं सकलकर्म्मक्षयहेतुत्वादिति, शुक् चाष्टप्रकारं कर्म्म तां शुचं क्लमयति–ग्लापयति निरस्यतीति शुक्लमित्येतावदेव ध्यानं चतुर्विधमिति॥ तेषामित्यनेन सूत्रं सम्बध्नाति,

परे मोक्षहेतू ॥ ९–३० ॥ सूत्रम् ॥

तेषां चतुर्णामित्यादि, यानि प्रस्तुतानि ध्यानानि तेषामार्त्तरौद्रधर्म्यशुक्लानां चतुर्णां ध्यानानां सूत्रसन्निवेशमाश्रित्य परे धर्मशुक्ले मोक्षहेतू मुक्तेः कारणतां प्रतिपद्येते, तत्रापि साक्षात् मुक्तेः कारणीभावः पश्चात् शुक्लध्यानभेदे सूक्ष्मक्रियमप्रतिपाति व्युपरतक्रियं चानिवर्त्ति, न धर्म्मध्यानं पुनराद्याभ्यां सह शुक्लभेदाभ्यां,पारंपर्येण मोक्षस्य कारणं भवति, न साक्षादिति, ततश्चैतद् धर्म्मध्यानादि देवगतेर्मुक्तेश्च कारणं, न मुक्तेरेव, अर्थादिदमवगम्यमानमाह–पूर्वे त्वार्त्तरौद्रे संसारहेतू इत्यार्त्तरौद्रयोः संसारहेतुता, संसारश्च नरकादिभेदश्चतुर्गतिक इति,परमार्थतस्तु रागद्वेषमोहाः संसारहेतवस्तदनुगतं चार्त्तं, अथ रौद्रमपि प्रकृष्टतमरागद्वेषमोहभाजोऽतः संसारपरिभ्रमणहेतुता तयोरिति॥ सम्प्रति ध्येयप्रकाराः विषयविकल्पनिमित्तभेदेनोच्यंते–अत्राहेत्यादि सम्बन्धः।

आर्त्तममनोज्ञानां सम्प्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहारः ॥ ९–३१ सूत्रम् ॥

संप्रयोगे संबंधे इंद्रियेण सह सम्पर्के सति चतुर्णां शब्दस्प-
आर्त्तशब्दः पूर्ववद् व्याख्येयः, अमनोज्ञाः अनिष्टाः शब्दादयस्तेषां स्वविषयिणा ग्राह्यग्राहकलक्षणे सम्प्रयोगे सति तद्विप्रयोगायेति तदित्य-
र्शरसगंधानामेकस्य च योग्यदेशावस्थितस्य द्रव्यादेः तेषाममनोज्ञानां शब्दादीनां विप्रयोगोऽपगमस्त्यागस्तदर्थं विप्रयोगाय अनिष्टशब्दादिविषयपरिहाराय
मनोज्ञविषयाभिसम्बन्धः स्मृतिसमन्वाहारो नाम कथमहमस्मादमनोज्ञात् विषयसंप्रयोगात् विप्रमुच्येयेति, स्मर्यतेऽनेनेति स्मृतिः
स्मृतिसमन्वाहारस्तदार्त्तं,स्मृतेः प्रणिधानरूपायाः समन्वाहारः-अमनोज्ञविप्रयोगाय व्यव-
अभिधीयते, स्मृतिहेतुत्वाद्वा स्मृतिः अविच्युतिरूपं मनस्तस्याः मनोनिवेशनमार्त्तध्यानमित्यर्थः॥ किंचान्यदिति सम्ब-
स्थापनं मनसो निश्चलत्वमार्तध्यानं,केनोपायेन विप्रयोगः स्यादित्येकतानं
भाति, प्रकारान्तरमन्यदप्यार्त्तस्यास्तीत्याह—

वेदनायाश्च ॥ ९-३२ ॥ सूत्रम् ॥

वेदनं वेदना अनुभवः,अमनोज्ञ इति अनन्तरमनुवर्त्तते तदपि सम्बध्नन् भाष्यकृदाह-वेदनायाश्चामनोज्ञाया इत्यादि, सुखा दुःखा
चोभयी वेदना, तत्रामनोज्ञायाःसम्प्रयोगे वेदनायाः प्रकुपितपवनपित्तश्लेष्मसन्निपातनिमित्तैरुपजातायाः शूलशिरःकंपज्वराक्षि-
श्रवणवेदनादिकायास्तद्विप्रयोगाय स्मृतिसमन्वाहारे ध्यानमार्त्तं, एष द्वितीयोऽधिकृतः। किंचान्यदिति आर्त्तप्रकारान्तरं दर्शयति—

विपरीतं मनोज्ञानां ॥ ९-३३ ॥ सूत्रम्

मनोज्ञा-अभीष्टाः प्रीतिहेतवस्तेषां विपरीतं संयोजनं कार्यं, मनोज्ञानामित्यादि, मनोज्ञानां विषयाणां वेदनायाश्च मनो-
ज्ञायाः, विपरीतप्रधानार्थाभिसंबंधो विपरीतशब्देन क्रियत इत्याह-विप्रयोगे तत्सम्प्रयोगाय स्मृतिसमन्वाहारः तत्संप्र-

योगार्थं तत्संप्रयोजनः स्मृतेः समन्वाहारः, कथं नाम भूयोऽपि तैः सह मनोज्ञविषयैः संप्रयोगः स्यात् ममेत्येवं प्रणिधत्ते दृढं मनस्तदप्यार्त्तमिति । किंचान्यदिति (२०५–८) तुरीयमार्त्तप्रकारं दर्शयति—

निदानं च ॥ ९–३४ ॥ सूत्रम् ॥

निपूर्वाद्दातेर्लवनार्थस्य ल्युटि रूपं, दायते–लूयते येनात्महितमैकात्यंतिकानाबाधसुखलक्षणं तन्निदानमिति, चशब्दः समुच्चये, एष चार्त्तप्रकार इत्यर्थः, कामोपहतचित्तानामित्यादि कामः–इच्छाविशेषः शब्दाद्युपभोगविषयः अथवा मदनः कामः चिरमुग्रतपो निष्प्य कर्म्मक्षपणक्षममदीर्घदर्शितया स्वल्पस्य विनश्वरस्यावितृप्तिकारिणः सुरमनुजसुखैश्वर्यसौभाग्यादेः कृते तत्रैव कृतदृढप्रणिधानो वहविनश्वरं सततृप्तिकारि मुक्तिसुखमनुपममवमत्य प्रवर्त्तमानाः कामोपहतचेतसः पुनर्भवविषयसुखगृद्धानामिति यन्निदानं तदार्त्तध्यानं निदानरूपं, एष एवार्थो विभक्त्यन्तरेण प्रतिपादितः, कामोपहतचित्तानां पुनर्भवविषयसुखगृद्धानां निदानमार्त्तं भवतीति । तथैतस्यार्त्तध्यातुः चतुष्प्रकारस्यापि शोकादीनि लक्षणानि भवंति यैरार्त्तध्यायी लक्ष्यते, करतलपर्यस्तप्रम्लानवदनः शोचति क्रंदति विलपति हा अहो धिक् कष्टं तथा कलहमात्सर्यासूयारतिस्त्रीभोजनकथासुहृत्स्वजनानुरागश्च तस्य लक्षणानि भवंति परिस्फुटानीति, इदमार्त्तध्यानं सभेदकमभिधायाधुनाऽस्यैव ध्यातारः स्वामिनो निरूप्यन्त इति तदर्थमाह—

तदविरतदेशविरतप्रमत्तसंयतानां ॥ ९–३५ ॥ सूत्रम् ॥

तदित्यार्त्तमभिसंबध्यते, तदार्त्तध्यानमविरतसम्यग्दृष्टयादीनां त्रयाणां संभवति, अस्य त्रयः स्वामिनश्चतुर्थपंचमषष्ठगुणस्थानवर्त्तिनः क्रमेणाविरतदेशविरतप्रमत्तसंयताः, अविरतश्चासौ सम्यग्दृष्टिश्चेति अविरतसम्यग्दृष्टिः, नाणुव्रतधारी, औपशमिकक्षायि-

क्षायोपशमिकभेदात्त्रिविधं सम्यग्दर्शनं, तद्योगात् सम्यग्दृष्टिः, देशविरतः संयतासंयतः, हिंसादिभ्यो देशतो विरतत्वात् संयतः, अन्यतः सावद्ययोगादनिवृत्तिरिति स एवासंयतः, सोऽविरतसम्यग्दृष्टिस्थानादसंख्येयानि विशोधिस्थानानि गत्वा अप्रत्याख्यानावरणकषायेषु क्षयोपशमं नीतेषु प्रत्याख्यानावरणकषायोदयात् सर्वप्रत्याख्यानाभावाद्देशविरतिः श्रावकधर्मो द्वादशभेदः संजायते, इदानीमप्रमत्तसंयतः, तस्मादसंख्येयानि विशोधिस्थानानि आरोहतः तृतीयकषायेषु प्रकर्षाप्रकर्षात् क्षयोपशमं गतेषु सर्वसावद्ययोगप्रत्याख्यान विरतिर्भवति, उक्तं च–"देशविरतेरपि ततः स्थानाद्विशोधिमुत्तमां प्राप्य। स्थानान्तराणि पूर्वविधिनैव स यात्यनेकानि ॥१॥ क्षपयत्युपशमयति वा प्रत्याख्यानावृतः कषायास्तान्। स ततो येन भवेत्तस्य विरमणे सर्वतोऽपि मतिः ॥२॥ छेदोपस्थाप्यं वाऽऽवृत्तं सामायिकं चरित्रं वा। स ततो लभते प्रत्याख्यानावरणक्षयोपशमात् ॥३॥" तस्येदानीं महाव्रतगुप्तिसमितियुक्तस्य कषायनिग्रहादिन्द्रियदमाच्च निरुद्धाश्रवस्य सूत्रानुसाराद्यतमानस्यापि मोहनीयकर्म्मानुभावात् संक्लेशाद्वा आन्तर्मुहूर्त्तात् परावर्त्तते, ततः सञ्ज्वलनकषायोदयादिन्द्रियविकथाप्रमादाद्योगदुष्प्रणिधानात्तत्कुशलेष्वनादराच्च प्रमत्तसंयतो भवति, तस्मात् संक्लेशाद्यायां वर्त्तमानः प्रमत्तसंयतः, एते च त्रयोऽपि आर्त्तध्यानस्वामिन इत्यर्थः, एतदार्त्तध्यानमविरतादीनामेव भवति, नाप्रमत्तसंयतानामित्यर्थः, तदेतदार्त्तं नातिसंक्लिष्टं कापोतनीलकृष्णलेश्यानुयायि द्रष्टव्यमिति ॥ सम्प्रति रौद्रध्यानं सस्वामिकमभिधित्सुराह—

हिंसाऽनृतस्तेयविषयसंरक्षणेभ्यो रौद्रमविरतदेशविरतयोः ॥ ९–३६ सूत्रम् ॥

हिंसाऽनृतं स्तेयं विषयसंरक्षणं चेति द्वन्द्वः, ततो द्वन्द्वसमासाभिनिर्वृत्तात् प्रातिपदिकात्तादर्थ्ये चतुर्थीबहुवचनं, हिंसार्थं हिंसा-

१ सिद्धसेनीयाया किंचिदूनं सार्धं पृष्ठं व्यत्ययेन मुद्रितं, ततो रौद्रध्यानीयः पाठो धर्मध्याने, तत् विमृश्य वाच्यं सुधीभिः

प्रयोजनं भवति रौद्रं ध्यानं, एवमनृताय स्तेयाय विषयसंरक्षणाय चेति वाच्यं, रौद्रमित्युक्तनिर्वचनं, अविरतश्च देशविरतश्च कृतद्वन्द्वौ स्वामिनौ रौद्रध्यानस्य निर्दिष्टौ षष्ठीबहुवचनेन। एतदेव भाष्यकारो विवृणोति–'हिंसार्थ'मित्यादिना, स्पष्टम्, एतदर्थं दर्शयति–प्रमत्तयोगात् प्राणव्यपरोपणं हिंसा, तच्च सत्त्वव्यापादनाद् बन्धनपरितापनकरचरणश्रवणनासिकाऽधरव्रणशिश्नादिच्छेदनस्वभावं हिंसानन्दं, तत्र स्मृतिसमन्वाहारो रौद्रध्यानं, ये च व्यापादनोपायाः परस्य च दुःखोत्पादनोपायास्तेषु च स्मृतिसमन्वाहारो हिंसानन्दमिति प्रथमो विकल्पः। प्रबलरागद्वेषमोहस्यानृतानन्दं द्वितीयं, अनृतप्रयोजनं कन्यास्थितिनिक्षेपव्यपलापशिश्नाभ्यामामद्भूतभूतघातातिसंधानप्रवणमसदभिधानमनृतं, तत्परोपघातार्थमनुपरततीव्ररौद्राशयस्य स्मृतेः समन्वाहारस्तत्रैव दृढं प्रणिधानमनृतानन्दमिति। स्तेयार्थं–स्तेयप्रयोजनमधुनोच्यते, तीव्रसंक्लेशाध्यवसायस्य ध्यातुः प्रबलीभूतलोभप्रचाराहितसंस्कारस्यापास्तपरलोकापेक्षस्य परस्वादित्सोरकुशलस्मृतिसमन्वाहारः परद्रव्यग्रहणोपाय एव चेतसो निरोधः प्रणिधानमित्यर्थः। विषयसंरक्षणार्थं चतुर्थो विकल्पः, तत्साधनान्यचेतनचेतनमिश्रवस्तूनि विषयशब्दवाच्यानि, विषीदंति वा प्राणिनो येषु परिभुंजानास्ते विषयाः, यथोक्तं "यद्यपि निषेव्यमाना मनसः परितुष्टिकारका विषयाः। किंपाकफलादनवद्भवंति पश्चाददुरता ॥१॥" विषयाणां च संरक्षणमेवमुक्तं–'परिग्रहेष्वप्राप्तनष्टेषु कांक्षाशोकौ, प्राप्तेषु रक्षणमुपभोगे चावितृप्तिः' इत्थं च विषयसंरक्षाहितक्रौर्यस्य तत्रैव स्मृतिसमन्वाहारमाचरतो विषयसंरक्षानंदं रौद्रं भवति ध्यानं, तच्चैतदविरतदेशविरतस्वामिकं, तौ च पूर्वोक्तलक्षणौ, तयोरेव च, न भवत्येतत् प्रमत्तसंयतादीनामिति, रौद्रध्यायिनस्तीव्रसंक्लिष्टाः कापोतनीलकृष्णलेश्यास्तिस्रस्तदनुगमाच्च नरकगतिमूलमेतत्, लिंगान्यस्य हिंसानन्दादीनां चतुर्णां प्रकाराणामन्यतमभेदेनानवरतमविश्रान्त्या प्रवर्त्तमानस्य बहुकृत्येऽभिनिविष्टान्तःकरणस्य बहुदोषता अज्ञानदोषता

नेष्वेव हिंसादिप्रधर्मकार्यप्रभ्युदयस्य संज्ञाऽस्ति तस्यामरणांतदोषतेति, आर्त्तरौद्रे व्याख्याते, सम्प्रति धर्म्यध्यानावसरः, तच्च सभेदं सस्वामिकमाख्यापने,—

आज्ञाऽपायविपाकसंस्थानविचयाय धर्म्यमप्रमत्तसंयतस्य ॥ ९-३७ ॥ सूत्रम् ॥

आज्ञादीनां कृतद्वन्द्वानां विचयशब्देन सह षष्ठीसमासः, आज्ञादीनां विचयः-पर्यालोचनं, विचयशब्दः प्रत्येकमभिसंबध्यते, आज्ञापायविपाकसंस्थानविचयशब्दात्तादर्थ्ये चतुर्थी, धर्म्यशब्दो व्याख्यातः, अप्रमत्तसंयतस्येति स्वामिनिर्देशः, तत्राज्ञा-सर्वज्ञप्रणीत आगमः तामाज्ञामित्थं विचिनुयात्-पर्यालोचयेत्, पूर्वापरविशुद्धसमाननिपुणामशेषजीवनिकायहितामनवद्यां महानुभावां निपुणजनविज्ञेयां द्रव्यपर्यायप्रपंचवतीमनाद्यनिधनां "इच्चेइयं दुवालसंगं गणिपिडगं न कयाइ नासी"त्यादि वचनात्, तथा विचयेऽप्येवं जिना-क्षीणरागद्वेषमोहाः सर्वज्ञा नान्यथा भाषंते इत्याज्ञायाः स्मृतिसमन्वाहारः प्रथमं धर्म्यध्यानमुच्यते, अपाया-विपदः शारीरमानसानि दुःखानीति पर्यायाः तेषां विचयः-अन्वेषणं,इहामुत्र च रागद्वेषाकुलितचेतोवृत्तयः सत्त्वा मूलोत्तरप्रकृतिविभागाभिजन्मजरामरणार्णवभ्रमणपरिखेदितांतरात्मानः नरकादिगतिषु दीर्घरात्रमपायैर्युज्यन्ते, केचिदिहापि कृतवैरानुबंधाः परस्परमाक्रोशवधबन्धाद्यपायभाजो दृश्यन्ते, ते क्लिश्यन्त इत्यतः प्रत्यपायप्रायेऽस्मिन् संसारे अत्यन्तोद्वेगाय स्मृतिसमन्वाहारताऽपायविचयं धर्म्मध्यानमाविर्भवति, तृतीयं धर्म्मध्यानं विपाकविचयाख्यमुच्यते, विविधो विशिष्टो वा पाको विपाकः-अनुभावः, अनुभावो रसानुभावः कर्म्मणां नरकतिर्यङ्मनुष्यामरभवेषु तस्य विचयः-अनुचिंतनं मार्गणं तदर्पितस्तत्रैव स्मृतिं समाहृत्य वर्त्तमानो विपाकविचयध्यायी भवति, ज्ञानावरणादिकमष्टप्रकारं कर्म्म प्रकृतिस्थित्यनुभवप्रदेशभेदमिष्टानिष्टविपाकपरिणामं जघन्यमध्यमो-

त्कृष्टस्थितिकं विविधविपाकं, तद्यथा—ज्ञानावरणाद् दुर्मेधस्त्वं दर्शनावरणाच्चक्षुरादिवैकल्यं निद्राद्युद्भवश्च असद्वेद्याद् दुःखं सद्वेद्यात् सुखानुभवः, मोहनीयाद्विपरीतग्राहिता चरित्रनिवृत्तिश्च, आयुषोऽनेकभवप्रादुर्भावो, नाम्नोऽशुभप्रशस्तदेवादिनिर्वृत्तिर्गोत्रादुच्चनीचकुलोत्पत्तिः, अंतरायादलाभ इति, इत्थं निरुद्धचेतसः विपाकानुस्मरण एव स्मृतिसमन्वाहारतो धर्म्यं भवति ध्यानमिति। संस्थानविचयं नाम चतुर्थं धर्म्मध्यानमुच्यते,संस्थानं–आकारविशेषो लोकस्य तावत् ,तत्राधोमुखमल्लकसंस्थानं वर्णयन्त्यधोलोकम्। स्थालमिव तिर्यग्लोकमूर्ध्वमथ मल्लकमुद्गम् ॥ १ ॥ तत्रापि तिर्यग्लोको ज्योतिर्व्यन्तराकुलः, असंख्येयद्वीपसमुद्रा वलयाकृतयो, धर्माधर्माकाशपुद्गलजीवास्तिकायात्मकाः अनादिनिधनाः संनिवेशभाजो व्योमप्रतिष्ठाः क्षितिवलयद्वीपसागरनरकविमानभवनादिसंस्थानानि च, तथाऽऽत्मनामुपयोगलक्षणमनादिनिधनमर्थान्तरभूतं शरीरादिरूपं कर्त्तारमुपभोक्तारं च स्वकृतकर्म्मणः शरीराकारं, मुक्तौ त्रिभागहीनाकारमूर्ध्वलोको द्वादशविकल्पः असकलसकलनिशाकरमंडलाकृतयो नव ग्रैवेयकानि पंच महाविमानानि मुक्ताधिवासश्च, अधोलोकोऽपि भवनवासिदेवनारकाधिवसतिः, धर्माधर्मावपि लोकाकारौ गतिस्थितिहेतू, आकाशमवगाहलक्षणं, पुद्गलद्रव्यं शरीरादिकार्यमित्थं संस्थानस्वाभाव्यान्वेषणार्थं स्मृतिसमन्वाहारो धर्म्मध्यानमुच्यते, पदार्थस्वरूपपरिज्ञाने तत्त्वावबोधः, तत्त्वावबोधाच्च क्रिया,अनुष्ठानान्मोक्षप्राप्तिरिति, तदेतदप्रमत्तसंयतस्य भवति धर्मध्यानं, प्रमत्तसंयतस्थानाद्विशुद्ध्यमानाध्यवसायोऽप्रमत्तसंयतस्थानमाप्नोति, निर्ज्ञाता एव तथा विशोधयोऽसंख्यलोकमात्रास्ताः। तरतमयोगायुक्तास्ता अधितिष्ठत्यप्रमत्तः स्यात् ॥२॥ अतो विशोध्य वर्त्तमानोऽप्रमत्तसंयतस्तस्य च भगवतो धर्म्मध्यानादितपोयोगेन कर्म्माणि क्षपयतो विशोधिस्थानान्तराण्यारोहत ऋद्धिविशेषाः प्रादुर्भवंति अणिमादयः,उक्तं हि—"अवगाहते च स श्रुतजलधिं प्राप्नोति चावधिज्ञानम्। मानसपर्यायं वा ज्ञानं कोष्ठा

गुप्तीनां॥१॥ चारणवैक्रियसर्वौषधताद्या नाऽपि लब्धयस्तस्य। प्रादुर्भवंति गुणतो बलानि वा मानसादीनि॥२॥" अत्र च श्रेणिप्रा-
ष्ट्यभिमुखः प्रथमकषायान् दृष्टिमोहत्रयं वा, यतः सम्यग्दृष्टिदेशविरताप्रमत्तसंयतानामन्यतमः उपशमश्रेण्याभिमुख्यादुपशमयति,
क्षपकश्रेण्यभिमुखः क्षपयति, यथोक्तं—"क्षपयति तेन ध्यानेन ततोऽनन्तानुबंधिनश्चतुरः। मिथ्यात्वं सम्मिश्रं सम्यक्त्वं च क्रमेण
ततः ॥१॥ क्षीयते हि कषायाः प्रथमास्त्रिविधोऽपि दृष्टिमोहश्च"इत्यादि॥ किंचान्यदित्यनेन स्वाम्यन्तरं संबध्नाति,—

उपशान्तक्षीणकषाययोश्च ॥ ९–३८ ॥ सूत्रम् ॥

चशब्दः समुच्चये, कषायशब्दः प्रत्येकमभिसंबध्यते,उपशान्ताः कषाया यस्यासावुपशान्तकषायः, एकादशगुणस्थानवर्ती, क्षीणः
कषायो यस्य स क्षीणकषायः, भस्मच्छन्नाग्निवदुपशान्तः, निरवशेषतः परिशाटिताः क्षीणाः विध्यातहुताशनवद् , अनयोश्च उपशा-
न्तक्षीणकषाययोरप्रमत्तसंयतस्य च धर्म्मध्यानं भवति, तत्रोपशान्तक्षीणकषायस्वरूपविज्ञानाय अधस्तनं गुणस्थानत्रयमवश्यंतया
प्ररूपणीयं, अन्यथा तदज्ञातमेव स्यादिति, अप्रमत्तस्थानादसंख्येयानि विशोधिस्थानानि आरुह्यापूर्वकरणं प्रविशति, समये समये
स्थितिघातरसघातस्थितिबंधगुणश्रेणीगुणसंक्रमाणामेवापूर्वं करणं, अप्राप्तपूर्वत्वाद्वा संसारे तदपूर्वकरणं, न तत्र कस्याश्चिदपि कर्म्म-
प्रकृतेरुपशमनं क्षयो वा, उपशमनाभिमुखत्वात्तत्पुरस्कारादुपशमकः क्षपणार्हत्वाच्च क्षपक इति, उक्तं च—"स ततः क्षपकश्रेणी प्रतिपद्य
चारित्रघातिनिःशेषाः। क्षपयन् मोहप्रकृतीः प्रतिष्ठते शुद्धलेश्याकः॥१॥ प्रविशत्यपूर्वकरणं प्रस्थित एवं ततः परं स्थानम्। तदपूर्वकरणमिष्टं
स्थानादिप्राप्तपूर्वत्वात्॥२॥ ततोऽप्युत्तरोत्तरविशोधिस्थानप्राप्त्या अनिवृत्तयः,परस्परतुल्यवृत्तय इत्यर्थः,सम्परायाः—कषायास्तदुदयो
बादरो येषां ते बादरसंपरायाः,अनिवृत्तयश्च बादरसंपरायाश्चेत्यर्थः,ते उपशमकाः क्षपकाश्च,तेषां धर्मध्यानं भवति,उपशान्तक्षीणकषाय-

योऽथेत्युक्तमविशेषेण धर्मध्यानं,तच्चैकादशांगविदो द्रष्टव्यं,एवमनस्थितं धर्म्ममेव ध्यानं तयोः?,नेत्युच्यते,किंचान्यदिति संबध्नाति, न केवलमेतयोर्धर्म्यं, शुक्लं च ध्यानमुपशान्तक्षीणकषाययोर्भवति, किं चतुर्विधमपि पृथक्त्ववितर्कमविचारं एकत्ववितर्कमविचारं सूक्ष्मक्रियमनिवर्त्तिव्युपरत् क्रियमप्रतिपातीति, उच्यते, न खलु चतुष्प्रकारमपि तयोः शुक्लध्यानं भवति, किं तर्हि?—

शुक्ले चाद्ये ॥ ९-३९ ॥ सूत्रम् ॥

आद्ये च शुक्ले ध्याने उपशान्तक्षीणकषाययोर्भवतः, के पुनस्ते?, पृथक्त्वमेकत्ववितर्कं, स्वरूपतः कीदृशे?, उच्यते, पृथग्-युतकं भेदस्तद्भावः पृथक्त्वम्-अनेकत्वं तेन सह गतो वितर्कः पृथक्त्ववितर्कः पृथक्त्वमेव वा वितर्कः सहगतं वितर्कपुरोगं पृथक्त्ववितर्कं, एतच्च परमाणुजीवादावेकद्रव्ये, उत्पादव्ययध्रौव्यादिपर्यायानेकनयार्पितत्वं तत् पृथक्त्वं, पृथक्त्वे वा तस्य चिंतनं वितर्कसहचरितं सविचारं यत्तत् पृथक्त्ववितर्कमविचारं,पृथक्त्वमर्थव्यंजनयोगानां,वक्ष्यति तत् त्र्येककाययोगायोगानां, वितर्कः श्रुतं, विचारोऽर्थव्यं-जनयोगसंक्रान्तिः,पूर्वगतभंगिकश्रुतानुसारेणार्थव्यंजनयोगान्तरप्राप्तिर्गमनं विचारः,अर्थाद् व्यंजनसंक्रातिर्व्यंजनार्थसंक्रान्तिः मनो-योगात् काययोगसंक्रान्तिर्वाग्योगसंक्रान्तिर्वा, एवं काययोगात्मनोयोगं वाग्योगं वा संक्रामति,तथा वाग्योगात्मनोयोगं काययोगं चेति यत्र संक्रामति, तत्रैव निरोधो ध्यानमिति, एकस्वभावत्वं गतो वितर्कः एक एव योगस्त्रयाणामन्यतमः, तथाऽर्थो व्यंजनं चैकमेव,पर्यायान्तरानर्पितमेकपर्यायचिन्तनमुत्पादव्ययध्रौव्यादिपर्यायाणामेकस्मिन् पर्याये निवाततरसुप्रतिष्ठितप्रदीपवत्, निष्प्रकंपं पूर्वगतश्रुतानुसारि चेतो निर्विचारमर्थव्यंजनयोगान्तरेषु तदेकत्ववितर्कमविचारं, भाष्यकारस्तु पूर्वविद इति सूत्रावयवं पृथग्विवृ-णोति, संबंधयति-एवमेते आद्यशुक्लध्याने पूर्वविदो भवत', पूर्वविदौ यावुपशांतक्षीणकषायौ तयोर्भवतः, सूत्रान्तरमेव व्याचष्टे

नतु परमार्थतः पृथक् सूत्रं, पूर्वं प्रणयनात् पूर्वाणि चतुर्दश तद्विदः पूर्वविदस्ते भवतो, नैकादशांगविदः, एवमाद्यशुक्लध्यानद्वयस्य
स्वामिनियमनमभिहितं, पाश्चात्यशुक्लध्यानद्वयस्य कः स्वामीति तन्निर्दिदिक्षयोवाच—

परे केवलिनः ॥ ९-४१ ॥ सूत्रम् ॥

परे इति परं परं च परे,सूत्रसन्निवेशमाश्रित्य सूक्ष्मक्रियमप्रतिपाति व्युपरतक्रियमनिर्वृत्ति ग्रहीतव्यं,ते च केवलिन एव त्रयोदश-
चतुर्दशगुणस्थानक्रमेणैव भवतः,छद्मस्थस्य तु नैते जातुचिद्भवत इति,अत्र सूक्ष्मक्रियमप्रतिपातीति सूक्ष्मा क्रिया यत्र तत् सूक्ष्मक्रियं,
तच्च योगनिरोधकाले भवति,वेद्यनामगोत्रकर्म्मणां भवधारणानामायुष्कादधिकानां समुद्घातसामर्थ्याचिंत्यवीर्यशक्तित आयुष्कस-
मीकृतानां मनोवाक्काययोगपरिणतस्यौदारिकशरीरत्रिभागोनस्थस्य केवलिनः संज्ञिपंचेन्द्रियद्वीन्द्रियपर्याप्तबादरपनकासंख्येयगुणहीनं
सूक्ष्मयोगित्वमप्रतिपाति–अप्रच्युतस्वभावं आ व्युपरतक्रियानिर्वृत्तिध्यानावाप्तेः, उक्तं च–"अप्रतिपाति ध्यायन् कश्चित् सूक्ष्मक्रियं
निहत्यान्ते। आयुःसमीक्रियार्थं त्रयस्य गच्छेत् समुद्घातम् ॥१॥ आर्द्राम्बराशुशोषवदात्मविस्तरणविशुष्कससकर्मा। समयाष्टकेन देशे
स्थित्वा योगात् क्रमात् रुन्द्धे ॥२॥ आयुष्कस्यापि विरहिता न ह्रास्यते स्थितिः कस्माद्?॥ इति। नोद्यं चरमशरीरो निरुपक्रमायुः
संरुद्धवन्॥३॥ दंडकपाटकरेचकक्रियाजगत्पूरणं चतुःसमयं। क्रमशो निर्वृतिरपि च तथैव प्रोक्ता चतुःसमया॥४॥ विकसनसंकोचनध-
र्मत्वाज्जीवस्य तत्तथा सिद्धं। यद्वदनन्तं वीर्यं तस्य ज्ञानं च गततिमिरं॥५॥ शेषे सयोगितायाः समये२ संहरत्यसंख्येयान्। भावान् स्थिते-
रनन्तान् भागान् स शुभानुभावस्य ॥६॥ स ततो योगनिरोधं करोति लेश्यानिरोधमभिकांक्षन्। समयस्थितिं च बंधं योगनिमित्तं स
निरुरुत्सन्॥७॥ समये समये कर्म्मादाने सति संततेर्न मोक्षः स्यात्। यद्यपि हि विमुच्यंते स्थितिक्षयात् पूर्वकर्म्माणि॥८॥ नोकर्म्मणो हि

वीर्यं योगद्रव्येण भवति जीवस्य। तस्यावस्थानेन तु सिद्धः समयस्थितिर्बन्धः ॥९॥ वादरतन्वा पूर्वं वाङ्मनसी वादरे स निरुणद्धि[क्रमेणैव] सालंबनाय करणं हि तदिष्टं तत्र वीर्यवतां ॥१०॥ सत्यप्यनंतवीर्यत्वे या वादरतनुमपि निरुणद्धि ततः। सूक्ष्मेण काययोगेन निरुध्यते सूक्ष्मो योगः॥११॥ सति वादरे च योगे न हि धावन् वेपथुं निवारयति। (स्व)काययोगं स्थूलं सोऽपूर्वं फड्डकीकृत्य ॥१२॥ शेषस्य काययोगस्य तथा कृत्वा करोति–सूक्ष्मेण काययोगेन ततो निरुणद्धि सूक्ष्मवाङ्मनसे। भवति ततः स सूक्ष्मक्रियस्तदाकृतिगतयोगः ॥१३॥ तमपि स योगं सूक्ष्मं निरुरुत्सन् सर्वपर्ययानुगतं। ध्यानं सूक्ष्मक्रियमप्रतिपात्युपयाति वितमस्कं ॥१४॥ ध्याने दृढार्पिते परमात्मनि ननु निष्क्रियो भवति कायः। प्राणापाननिमेषोन्मेषवियुक्ते मृतस्येव ॥१५॥ ध्यानार्पितोपयोगस्यापि न वाङ्मानसक्रिये यस्माद्। अन्तर्वर्त्तित्वादुपरमतस्तेन ध्यानेन रोधनं नेष्टं ॥१६॥ स ततस्तेन ध्यानेन निरुंद्धे सूक्ष्मकाययोगेऽपि। निष्क्रियदेहो भवति स्थितोऽपि देहे विगतलेश्यः ॥१७॥ तुर्यध्याने–योगाभावात् समयस्थितिनोऽपि न कर्म्मणो भवति बंधः। ध्यानार्पणसंहारात् किंचिच्च स संहृतावयवः ॥१८॥ लेश्याक्रियानिरोधो योगनिरोधश्च गुणनिरोधेन। इत्युक्तो विज्ञेयो बन्धनिरोधश्च हि तथैव ॥१९॥ त्रसवादरपर्याप्तादेयसुभगकीर्त्तिमनुजनामानि। पंचेन्द्रियतामन्यतरवेद्यमुच्चं तथा गोत्रं ॥२०॥ मनुजायुष्कं च स एकादश वेदयति कर्म्मणां प्रकृतीः। वेदयति तु तीर्थंकरो द्वादश सह तीर्थकृत्त्वेन ॥२१॥ स ततो देहत्रयमोक्षार्थमनिवृत्ति सर्वकालगतं। उपयाति समुच्छिन्नक्रियमतमस्कं परं ध्यानं ॥२२॥ व्युपरतक्रियमनिवर्त्तीत्यर्थः, तद्धि तावदनुवर्त्तते यावन्न मुक्तः। अत्राहोक्तमित्यादि (२०७-१) सम्बन्धः, 'शुक्ले चाद्ये पूर्वविद' इत्युक्तं 'परे द्वे केवलिन' इति चाभिहितं, तत् कानि तानीत्यजानानेन प्रश्ने कृते अत्रोच्यत इत्याह—

पृथक्त्वैकत्ववितर्कसूक्ष्मक्रियाप्रतिपातिव्युपरतक्रियानिवर्त्तीनि ॥ ९-४२ ॥ सूत्रम् ॥

पृथक्त्ववितर्कमित्यादिना (२०७ ५) भाष्येण नामग्राहं पठति चतुरोऽपि भेदान्, एते चोक्तलक्षणा भेदाः, शुक्लध्यानमित्थं चतुर्विधमिति सस्वामिकमुक्तं, तस्याधुना पूर्वोक्तस्वामिन एव विशेषाः कथ्यंते,—

तत् त्र्येककाययोगायोगानां ॥ ९-४३ ॥ सूत्रम् ॥

तदेतच्चतुर्विधं शुक्लध्यानं प्रथमद्वितीयोत्तमसंहननवतो भवति, तत्राद्यं पृथक्त्ववितर्कं त्रियोगस्य भवति, मनोवाक्काययोगव्यापारवत इत्यर्थः, एकान्यतमयोगानामिति, अन्यतमैकयोगानामेकत्ववितर्कं, एकः अन्यतमः कायादीनां योगो यस्य ध्यायिनो व्याप्रियते कदाचिन्मनोयोगः कदाचिद्वाग्योगः कदाचित् काययोगः, काययोगानामिति काययोगभाजामेव सूक्ष्मक्रियमप्रतिपाति शुक्लध्यानं भवति, निरुद्धयोगद्वयावस्थानां कायव्यापारवतां सूक्ष्मक्रियं भवति, न च प्रतिपतति, अयोगानामिति शैलेश्यवस्थानां ह्रस्वाक्षरपंचकोच्चारणसमकालानां मनोवाक्काययोगत्रयरहितानां व्युपरतक्रियमनिवर्ति ध्यानं भवति, उक्तं च—"यदर्थव्यंजने कायवचसी च पृथक्कृतः। मनः संक्रमयत्यात्मा, स विचारोऽभिधीयते ॥१॥ संक्रान्तिरर्थादर्थं यद्, व्यंजनाद् व्यंजनं तथा। योगाच्च योगमित्येष, विचार इति वा मतः॥२॥ अर्थादिव पृथक्त्वेन, यद् वितर्क्यतीव हि। ध्यानमुक्तं समासेन, तत् पृथक्त्वविचारवत् ॥३॥ अविकम्पमनस्त्वेन, योगसंक्रांतिनिःस्पृहं। तदेकत्ववितर्काख्यं, श्रुतज्ञानोपयोगवत् ॥४॥ सूक्ष्मकायक्रियां रुंधन्, सूक्ष्मवाङ्मानसक्रियः। स ध्यायति तदप्युक्तं, सूक्ष्मसप्रतिपाति च ॥४॥ कायिकी च यदैषापि, सूक्ष्मोपरमति क्रिया। अनिवर्त्ति तदप्युक्तं, ध्यानं व्युपरतक्रियं ॥६॥

एकाश्रये सवितर्के पूर्वे ॥ ९-४४ ॥ सूत्रम् ॥

एकः आश्रयः-आलंबनं ययोस्ते एकाश्रये इति पूर्वविदारभ्ये, मतिगर्भश्रुतप्रधानव्यापाराच्चैकाश्रयता, परमाणुद्रव्यमेवैकमालम्ब्य आत्मादि द्रव्यं वा श्रुतानुसारेण निरुद्धचेतसः शुक्लध्याने इति, वितर्कः श्रुतमिति वक्ष्यति, सह एकद्रव्याश्रयेण वितर्केण सवितर्के, पूर्वगतश्रुतानुसारिणी इत्यर्थः, पूर्वं च पूर्वं च पूर्वे ध्याने, एतदेव निश्चिनोति-प्रथमद्वितीये इति, पृथक्त्ववितर्कमेकत्ववितर्कं च, तत्र तयोर्यत् प्रथममाद्यं पृथक्त्ववितर्कं तत् सविचारं सह विचारेण सविचारं सह संक्रान्त्येतियावत्, वक्ष्यति-विचारोऽर्थव्यंजनयोगसंक्रान्तिः, कथं पुनरनुपात्तं सूत्रे सविचारमिति गम्यते ?, अविचारं द्वितीयमितिवचनादर्थलभ्यं सविचारमिति ॥

अविचारं द्वितीयं ॥ ९-४५ ॥ सूत्रम् ॥

अविद्यमानविचारं, अर्थव्यंजनसंक्रांतियोगरहितमित्यर्थः, द्वितीयमिति सूत्रप्रामाण्यादेकत्ववितर्कमविचारं भवति ध्यानमिति। अत्राहेत्यादि (१०८-२) वितर्कविचारयोर्विशेषमजानानः स्वरूपमनवगच्छन् परः पृच्छति, प्रतिविशेष इति प्रतिशब्दस्तत्त्वाख्यायां वर्त्तते, यथा शोभनश्चैत्रः प्रति मातरं, एवं प्रतिविशेषः स्वरूपमितरेतरव्यावृत्तं तत्त्वं वितर्कसविचारयोः कीदृगिति तत्त्वमाख्यायतां, अत्रोच्यत इत्याह—

वितर्कः श्रुतं ॥ ९-४६ ॥ सूत्रम् ॥

वितर्को-मतिज्ञानविकल्पः वितर्क्यते-येनालोच्यते पदार्थः स वितर्कस्तदनुगतं श्रुतं वितर्कस्तदभेदात् विगततर्कं वा, संशयविपर्ययापेतं श्रुतज्ञानमित्यर्थः, इदमेव सत्यमित्यविचलितस्वभावं यथोक्तमिति पूर्वगतमेव, नेतरत्, श्रुतज्ञानमाप्तवचनं वितर्क-

उन्यत इति ॥ सम्प्रति विचारस्वरूपनिरूपणायाह—

विचारोऽर्थव्यंजनयोगसंक्रान्तिः ॥ ९-४७ ॥ सूत्रम् ॥

अर्थव्यंजनयोर्योगेषु संक्रमणं संक्रान्तिः,अर्थः-परमाण्वादिः व्यंजनं-तस्य वाचकः शब्दो योगः-मनोवाक्कायलक्षणस्तेषु संक्रांतिः
एकद्रव्ये अर्थस्वरूपाद् व्यंजनं व्यंजनस्वरूपादर्थं, वर्णादिकः पर्यायोऽर्थः व्यंजनं शब्दः, एतदुक्तं भवति-प्राक् शब्दस्ततश्चार्थ-
लेखनमिदमस्य स्वरूपमथमस्य पर्यायस्ततस्तदर्थचिंतनं साकल्येन, ततः शब्दार्थयोः स्वरूपविशेषचिताप्रतिबन्धः प्रणिधानमर्थ-
संक्रान्तिः काययोगोपयुक्तध्यानस्य वाग्योगसंचारः वाग्योगोपयुक्तध्यानस्य वा मनोयोगसंचार इत्येवमन्यत्रापि योज्यं, इत्थं-
लक्षणो विचार इत्यस्ति वितर्कविचाररूपो प्रतिविशेष इति ॥ एतदभ्यंतरं तप इत्यादि, संवरप्रस्तावे इदमुक्तं 'तपसा निर्जरा चे'ति
संवरो निर्जरा च भवति, उभयं करोति तपः,तच्च तपो बाह्यमभ्यंतरं च संवरकारणं, संवररूपत्वाच्च स्थगिताश्रवद्वारस्य अभिनवक-
र्मोपचयप्रतिषेधकारणेन नापूर्वकर्मपुद्गलप्रवेशः, निर्जरणफलत्वात् कर्म्म निर्जरयति, परिशाटयतीत्यर्थः, ततश्चाभिनवकर्मोपचय-
प्रतिषेधकारित्वात् पूर्वोपचितकर्म्मनिर्जरकत्वाच्च सकलकर्म्मपरिक्षयान्निर्वाणप्रापकमिति। 'अत्राह्नोक्तं भवते'त्यादि (२०८-१०)
सम्बन्धः, किमुक्तं तद्दर्शयति-परीषहजयात् क्षुत्पिपासादयः परीषहास्तज्जयात्-सम्यगधिसहनात् तपो द्वादशभेदमनशनप्रा-
यश्चित्तादि तदनुष्ठानात् अनुभावो विपाकस्तस्माच्च विपाकात् कर्म्मणः परिशाटो निर्जरा भवतीति, एवमनूद्य निर्जरां सन्देहस्था-
नमुपन्यस्यति-यस्मादेवं तस्मात् किं सम्यग्दृष्टयः सर्व एव समनिर्जराः तुल्यमेव कर्म्म निर्जरयंति आहोश्वित् अस्ति
कश्चित् प्रतिविशेष इति, प्रतिविशेषो विषमनिर्जरणं, न तुल्यनिर्जरणत्वमिति, आचार्योऽपि हृदि व्यवस्थाप्य विषमनिर्जरण-

माह-अत्रोच्यत इति, यत्तत्वं तदाख्यायत इत्यर्थः॥

**सम्यग्दृष्टिश्रावकविरतानंतवियोजकदर्शनमोहक्षपकोपशमकोपशान्तमोहक्षपकक्षीणमोहजिनाः क्रमशोऽसंख्येयगुणनिर्जराः ॥ ९-४८ ॥ सूत्रम् ॥**

सम्यग्दृष्टिरिति तत्त्वार्थश्रद्धानं सम्यग्दर्शनं तेन युक्तः सम्यग्दृष्टिः, सम्यग्दर्शनमात्रभागित्यर्थः, आचार्यप्रभृतीन् पर्युपासीनः प्रवचनसारं शृणोतीति श्रावकः, शृण्वंश्च सकलचरणकरणाक्षमो गृहस्थयोग्यमणुगुणशिक्षाव्रतलक्षणं धर्म्ममनुतिष्ठति यथाशक्ति वा द्वादशप्रकारस्य धर्म्मस्यैकदेशानुष्ठाय्यपि श्रावक इति, विरतस्तु साधुधर्म्मानुष्ठायी सर्वस्मात् प्राणातिपाताद्यावज्जीवं विरतः, एवं मृषावादादिभ्योऽपि, अनन्तः संसारस्तदनुबंधिनोऽनन्ताः क्रोधादयः तान् वियोजयति-क्षपयति उपशमयति वाऽनन्तवियोजकः, दर्शनमोहोऽनन्तानुबंधिनश्चत्वारः सम्यग्मिथ्यात्वतदुभयानि च, अस्य सप्तविधस्य दर्शनमोहस्य क्षपकः, तथाऽस्यैवोपशमकः, मोहः अष्टाविंशतिभेदः षोडश कषायाः सम्यग्मिथ्यात्वसम्यग्मिथ्यात्वहास्यरत्यरतिभयशोकजुगुप्सास्त्रीपुंनपुंसकवेदाश्च, अस्योपशमनादुपशान्तमोहः, अस्यैव सकलस्य क्षपणात् मोहक्षपकः, क्षपणोपशमनक्रियाविशिष्टयोर्ग्रहणं, क्षपितनिरवशेषमोहः क्षीणमोहः, चतुर्विधघातिकर्म्मजयनाज्जिनः-केवली, एते सम्यग्दृष्ट्यादयो जिनावसाना दश क्रमेण क्रमशः प्रतिपाद्याः यथोपन्यस्तास्तथैवासंख्येयगुणनिर्जरा भवंति, नतु तुल्यनिर्जरा इत्यर्थः, तामेवासंख्येयगुणां निर्जरां स्पष्टयति भाष्यकारः सम्यग्दृष्टेः श्रावकोऽसंख्येयगुण(२०९-२) इत्यादिना, केवलसम्यग्दृष्टेः प्रतिपन्नाणुव्रतादिकलापः श्रावकोऽसंख्येयगुणनिर्जरो भवति, यावत् कर्म्म निर्जरयति सम्यग्दृष्टिः सम्यग्दर्शनप्रभावात् तत् कर्म्म परेणासंख्येयेन राशिना गुणितं मध्यावह्नयति तावद्देशविरतिः क्षपयति,

एवं पूर्वस्मादुत्तरोऽसंख्येयगुणनिर्जरो भवतीति दर्शयति, श्रावकाद्विरतो विरतादनन्तानुबंधिवियोजक इत्येवं शेषाः, यावज्जिनः सर्वेभ्य एवासंख्येयगुणनिर्जर इति॥ अथास्य वैचित्र्यभाजः सवरचारित्रस्य के स्वामिन इति निर्दिदिक्षया आह—

पुलाकबकुशकुशीलनिर्ग्रन्थस्नातका निर्ग्रन्थाः ॥ ९-४९ ॥ सूत्रम् ॥

पुलाकादयः पंचान्वर्थसंज्ञका निर्ग्रन्थाः स्वामिनः, तद्विवरणार्थमाह–पुलाको बकुशः कुशीलो निर्ग्रन्थः स्नातक इति एते पच निर्ग्रन्थविशेषा भेदा भवंति, निर्ग्रन्थानामिति ग्रन्था–कर्म्माष्टप्रकार मिथ्यात्वमविरतिर्दुष्प्रणिहितयोगश्च, तज्जयाय प्रवृत्ता निर्गच्छद्ग्रन्था निर्ग्रन्थाः, धर्मोपकरणादृते परित्यक्तबाह्याभ्यन्तरोपधयो निर्ग्रन्थाः,पुलाकादिस्वरूपनिरूपणायाह–तत्र सततमित्यादि(२०९ ६) तत्र तेषु पंचसु निर्ग्रन्थेषु पुलाकास्तावदेवंविधाः, पुलाको निःसार इति रूढं, लोके पलंजिस्तन्दुलकणशून्यः पुलाकः, एवं निर्ग्रन्थोऽपि, लब्धिमुत्पन्ना तपःश्रुताभ्यामुपजीवन् सकलसंयमगलनात् पलंजिरूपं निःसारमात्मानं करोति, ज्ञानदर्शनचरणानि च सारस्तदपगमान्निःसारः,जिनप्रणी तादागमाद्धेतुतः सर्वदैवाप्रतिपातिनः,आगमश्च सम्यग्दर्शनमूले ज्ञानचरणे निर्वाणहेतुरित्यस्मात् अपरिभ्रष्टा , श्रद्धानानुसारेण क्रियानुष्ठायिनो लब्धिमुपजीवंतो निर्ग्रन्थाः पुलाका भवंति,उपजीवंतश्च निःसारमात्मानं कुर्वन्तीति ग्राह्यं, सततमप्रमादिन इत्यपरे पठन्ति, जिनोक्तादागमाद्धेतुभूतात् मुक्तिसाधनेषु न प्रमाद्यन्ति जातुचिदिति । बकुशा इति शबलपर्यायाः,शबलो वर्णव्यतिकरः, क्वचित् कृष्णः क्वचिद्रक्त एक एव पटः,एवमयमपि निर्ग्रन्थः सातिचारत्वाच्चरणं शबलयति, विशुद्धाविशुद्धिव्यतिकीर्णस्वभावं करोति,स च द्विधा–शरीरोपकरणभेदेन,तदाह वृत्तिकारः–नैर्ग्रन्थ्यं प्रति प्रस्थिता (२०९ ७) इत्यादि, निर्ग्रन्थस्य भावो नैर्ग्रन्थ्यं–अष्टाविंशतिविधमोहनीयक्षयः तत् प्रति प्रस्थिताः–प्रवृत्तास्तदभिमुखाः तत्क्षयकांक्षिणः

शरीरं अंगोपांगसंघातः उपकारित्वादुपकरणं–वस्त्रादि तद्विषयां विभूषां- अलंकृतिमनुवर्त्तन्ते तच्छीलाश्चेति, शरीरे तावदनागुगुप्यव्यतिरेकेण करचरणवदनप्रक्षालनमक्षिकर्णनासिकावयवेभ्यो दूषिकामलाद्यपनयनं दंतवनभक्षणं केशसंस्कारं च विभूषार्थं चाचरन् शरीरबकुशो भवति, उपकरणबकुशस्तु अकाल एव प्रक्षालितचोलपट्टकान्तरकल्पादिश्लोक्षकवासःप्रियः पात्रदण्डकाद्यपि तैलमात्रयोज्ज्वलीकृत्य विभूषार्थमनुवर्त्तमानो विभर्त्ति, ऋद्धिः प्रभूतवस्त्रपात्रादिका तामिच्छंति–कामयंते यशः ख्यातिः गुणवंतो विशिष्टाः साधव इत्येवंविधः प्रवादस्तच्च यशः कामयंति इति ऋद्धियशःकामाः, सातगौरवमाश्रिता इति सुखशीलता सातागौरवं तदाश्रिताः,आदरवचनो गौरवशब्दः,सुखे य आदरस्तद्वास्तिव्यापारप्रवणता तदाश्रिताः,नातीवाहोरात्राभ्यन्तरानुष्ठेयासु क्रियास्वभ्युद्यताः, अविविक्ता इति नासंयमात् पृथग्भूताः घृष्टजंघाः तैलादिकृतशरीरमृजः कर्त्तरिकाकल्पितकेशाः, एवंविधः परिवारो येषां तेऽविविक्तपरिवाराः सर्वदेशच्छेदार्हातिचारजनितशबलेन वैचित्र्येण युक्ताः, एवंविधा निर्ग्रन्था बकुशसंज्ञाः [कुशीलाश्च] कुशीलस्वरूपनिर्द्धारणायाह–कुशीला द्विविधा इत्यादि(२०९-९)अष्टादशसहस्रभेदं शीलं तदुत्तरगुणभंगेन केनचित् कषायोदयेन कुत्सितं शीलं येषां ते कुशीलाः द्विप्रकाराः,तत्प्रकाराख्यानायाह–प्रतिसेवनाकुशीलाः कषायकुशीलाश्च आसेवनं भजनं प्रतिसेवना तया कुत्सितं शीलमेषामिति प्रतिसेवनाकुशीलाः,कषायाः–संज्वलनाख्याः तदुदयात् कुत्सितं शीलं एषामिति कषायकुशीलाः, तत्र तयोः प्रसेवनाकुशीला नैर्ग्रन्थ्यं प्रति प्रस्थिताः अनियतेन्द्रियाः इंद्रियनियमशून्या रूपादिविषयेक्षणकृतादराः कथंचित् केनचित् प्रकारेण व्याजमुपदिश्य किंचिदेवोत्तरगुणेषु पिंडविशुद्धिसमितिभावनातपःप्रतिमाभिग्रहादिषु विराधयंतः खंडयंतोऽतिचरंते प्रतिसेवनाकुशीलाः। येषामित्यादिना कषायकुशीलानाचष्टे, येषां संयतानां सतां मूलोत्तरगुणसंपदुपेतानामपि

सता कथंचित केनचित् प्रकारेण अल्पेनापि हेतुना कुल्याकाष्ठलोष्टविषमराश्यपीप्रस्खलनादिना संज्वलनकषायाः क्रोधादयः उदीर्यन्ते उदयमुपनीयंते किंचित्त कारणमासाद्योदयं गच्छंति ते कषायकुशीलाः। सम्प्रति निर्ग्रन्थनिरूपणार्थमाह—ये वीतरागच्छद्मस्था इत्यादि (२०९-१४) उपशमितक्षपितमोहजाला विगताशेषरागद्वेषमोहत्वात् एकादशद्वादशगुणस्थानवर्त्तिनः ते वीतरागच्छद्मस्थाः,छद्म-आवरणं तत्र स्थिताः सावरणज्ञानाः छद्मस्था ईर्यापथप्राप्ताः अकषायत्वादुपशान्तक्षीणकषायाश्च एकसमयस्थितीर्यापथकर्म्म बध्नंति, ईर्या व्यापारो योग इति पर्यायाः, तस्य व्यापारस्य विषयः पंथाः, स च संयमः सप्तदशप्रकारः, एतमेवार्थं स्पष्टतरमाचष्टे-योगसंयमप्राप्ता इत्यर्थः, योगेन—विशिष्टक्रियया विशिष्टमेव संयमं यथाख्याताख्यं प्राप्ता इत्यर्थः, प्रक्षापितो विकीर्णमोहग्रन्थय इत्यर्थः, सयोगाः त्रयोदशगुणस्थानवर्त्तिनो निरस्तघातिकर्म्मचतुष्टयाः केवलिनः स्नातकाः, प्रक्षालितसकलघातिमलपटलाः इत्यर्थः, शैलेशीप्रतिपन्नाश्चेत्यनेनायोगकेवलिन उपात्ताः, ते च केवलिनो विहृत्य कंचित् कालं ततोऽन्तर्मुहूर्त्तावशेषायुष्का निवृत्ताः क्रमेण योगान्निरुंधंति,स चोक्त एव क्रमः प्राक्, निरुद्धयोगाश्च व्युपरतक्रियाऽनिवर्त्तिना ध्यानेन शेषान् कर्म्मांशान् क्षपयति, यथोक्तं-"ध्यानं ह्यभिसंधानं ध्यानेन च कर्म्मणो भवति मोक्षः। ध्यानेन ततः क्षपयति कर्म्माणि स पंचमात्रेण ॥१॥ पंच मात्रा यत्र ध्यान इति, एवंविधानस्थाः शैलेशीप्रतिपन्ना उच्यन्ते, तदा चेमाः प्रकृतीः क्षपयति—स्पर्शरसवर्णगंधानादेयनिर्माणदेहनामानि। [पंच] संहननांगोपांगानि तथा संस्थाननामानि ॥१॥ नृसुरगतिप्रायोग्ये सुरगत्युपघातमगुरुलघुता च। उच्छ्वासपराघातं पर्याप्तशुभाशुभानि तथा ॥२॥ दुर्भगदुःस्वरसुस्वरनीचैर्गोत्रस्थिरास्थिराणि तथा। अन्यतरवेद्यखगतिप्रत्येकशरीरमयशश्च ॥३॥ प्रकृतय एता द्विचरमसमये तस्य क्षयं समुपयान्ति। क्षपयत्ययोगिवेद्याश्च ततः प्रकृतीः स चरमांते

॥४॥ तैजसशरीरबंधोऽपि तस्य नामक्षयात् क्षयं याति। औदारिकबंधोऽपि क्षीयतयायुःक्षयात्तस्य॥५॥ एवमशेषकर्मक्षयान्मोक्षो भवति। एवमेते पुलाकादयोऽभिहिताः पंच निर्ग्रन्थाः स्वरूपतः, अथैषां कः कस्य संयमविकल्पः श्रुतादिविकल्पो वेत्याह—

संयमश्रुतप्रतिसेवनातीर्थलिंगलेश्योपपातस्थानविकल्पतः साध्याः ॥ ९–५० ॥ सूत्रम् ॥

संयमादयोऽष्टौ स्थानान्ताः कृतद्वन्द्वाः विकल्पशब्देन सह समस्यन्ते, संयमादीनां विकल्पाः एते इत्यादि (२१०–३) भाष्यं, एते इत्युक्तलक्षणाः पुलाकादयः पंच निर्ग्रन्थाः एभिरष्टाभिरनुगमविकल्पैः अनुगमनमनुसरणमनुयोगद्वाराण्यर्थार्पणमुखानि तद्विकल्पाः—तद्भेदैः साध्या भवंति, तद्यथेत्यादिना तान् संयमादिविकल्पानुपन्यस्यति, संयम इति प्रथमोऽनुगमविकल्पः, पुलाकादीनां पंचानां निर्ग्रन्थानां कः कस्मिन् संयमे सामायिकादौ भवति, वर्त्तत इति अज्ञप्रश्नः?, उच्यते, यो यस्मिन् संयमादौ भवति स तथा भण्यते, पुलाकबकुशप्रतिसेवनाकुशीलास्त्रयो निर्ग्रन्थाः संयमद्वये वर्त्तन्ते, सामायिकसंयमे छेदोपस्थाप्यसंयमे च, तत्र पुलाकः पंचभेदः ज्ञानदर्शनचरणलिंगसूक्ष्माख्यः, स्खलितादिभिर्ज्ञानपुलाकः कुदृष्टिसंस्तवादिभिर्दर्शनपुलाकः मूलोत्तरगुणप्रतिसेवनातश्चरणपुलाकः यथोक्तलिंगाधिकग्रहणाल्लिंगपुलाकः किंचित्प्रमादात् सूक्ष्मपुलाकः, एष पंचप्रकारोऽपि संयमद्वये वर्त्तते, बकुशोऽपि आभोगानाभोगसंवृत्तासंवृत्तसूक्ष्मबकुशभेदात् पंचप्रकारः, तत्र संचिन्त्यकारी आभोगबकुशः, सहसाकारी अनभोगबकुशः, प्रच्छन्नः संवृत्तबकुशः, प्रकटकारी असंवृत्तबकुशः, किंचित्प्रमादी सूक्ष्मबकुशः, प्रतिसेवनाकुशीलोऽपि ज्ञानदर्शनचरणलिंगसूक्ष्मभेदेन पंचप्रकारः, ज्ञानाद्यतिचारप्रतिसेवनादिति, प्रतिसेचना, प्रतिगता सेवना, प्रतिगता सेवना क्रियायोगात्यये सत्युपसर्गसंज्ञाऽभावात् पत्वाभावोऽतिसिक्तवत्, अन्ये तु प्रतिषेवणामेवेच्छंति, कषायकुशीलाः परिहारविशुद्धिसंयमे सूक्ष्मसंयमे च

द्वयोरेव दर्शिता भाष्यकारेण, अपरे ब्रुवते-कषायकुशीलाः सामायिकादिषु चतुर्षु संयमेषु यथाख्यातसंयमरहितेषु वर्त्तंते,यथाह- आद्यचारित्रयोराद्याख्य एकश्चतुर्ष्वपि। निर्ग्रन्थस्नातकौ नित्यं, यथाख्यातचारित्रिणौ ॥१॥ प्रतिसेवनाकुशीलवत् कषायकुशीलोऽपि पंचभेद एव, निर्ग्रन्थः स्नातकश्च एकस्मिन्नेव यथाख्यातसंयमे वर्त्तते,उपशान्तक्षीणमोहा निर्ग्रन्थाः, स्नातकः सयोगायोगकेवलीति। निर्ग्रन्थोऽपि पंचभेद एव, प्रथमसमयाप्रथमसमयचरमसमयाचरमसमयसूक्ष्मभेदतः, स्नातकोऽपि पंचप्रकारः अच्छविरशबलोऽकर्म्मांशोऽपरिश्रावी संशुद्धज्ञानदर्शनधरश्चेति,छविः-शरीरं तदभावात् काययोगनिरोधे भवत्यच्छविर्भवति,निरतिचारत्वादशबलः, क्षपितकर्म्मत्वादकर्मांशः, निष्क्रियत्वात् सकलयोगनिरोधे त्वपरिश्रावी,ज्ञानान्तरेणासम्पृक्तत्वात् संशुद्धज्ञानदर्शनधर इति १। श्रुतं कियत् कस्येत्याह-पुलाकबकुशप्रतिसेवनाकुशीला अभिन्नाक्षराणि दश पूर्वाणि धारयंति, अभिन्नं-अन्यूनमेकेनाप्यक्षरेण, अन्यूनानि दश पूर्वाणीत्यर्थः, उत्कर्षेण कषायकुशीलो निर्ग्रन्थश्चतुर्दशपूर्वधर उत्कर्षतः, जघन्येन पुलाकस्य नवमपूर्वान्तःपाति तृतीयमाचारवस्तु यावत् श्रुतं, बकुशकुशीलनिर्ग्रंथानामष्टौ प्रवचनमातरः, श्रुतरहितः केवलीति, आगमस्त्वन्यथा व्यवस्थितः "पुलाए णं भंते! केवइयं सुयं अहिज्जेज्जा?, गोयमा! जहण्णेणं नवमस्स पुव्वस्स तइयमायारवत्थुं, उक्कोसेणं नव पुव्वाइं संपुन्नाइं,बकुसपडिसेवणाकुसीला जहण्णेणं अट्ठ पवयणमायाओ, उक्कोसेणं दस पुव्वाइं अहिज्जेज्जा,कसायकुसीलनियंठा जहण्णेणं अट्ठ पवयणमायाओ,उक्कोसेणं चउदस पुव्वाइं अहिज्जेज्जा२।" सम्प्रति प्रतिसेवनामाश्रित्योच्यते-प्रतिसेवना पंचानामित्यादि (२१०-१३) मूलगुणाः प्राणातिपातनिवृत्त्यादयः पंच क्षपाभोजनविरतिश्च. तान् परेणाभियुज्यमानः सेवते, पराभियोगादित्यस्यैव व्याख्या बलात्कारेणेति, परेणाभियुक्तः-प्रेरितो यदा भवति तदा प्रवर्त्तते,न स्वरसत एव, अपरस्तु राजादिभिर्बलात्कारेण प्रवर्त्यते, तदेवमन्यतमं मूलगुणं

प्रतिसेवमानः पुलाको भवति, मैथुनमित्येके, अपरे व्याचक्षते—मैथुनमेवेत्थं पराभियोगात् बलात्कारेण वा सेवां कार्यते स पुलाकः, न प्राणातिपातादि सेवमानः, अत्राप्यन्यथैवागमः—"पुलाए णं भंते ! किं पडिसेवए होज्जा अपडिसेवए होज्जा ?, गोयमा ! पडिसेवए, णो पडिसेवए, जइ पडिसेवए किं मूलगुणपडिसेवए उत्तरगुणपडिसेवए ?, मूलगुणपडिसेवए य उत्तरगुणपडिसेवए अ, मूलगुणे पडिसेवमाणे पंचण्हं महव्वयाणं अण्णतरं पडिसेवेज्जा, उत्तरगुणे पडिसेवमाणे दसविहस्स पच्चक्खाणस्स अण्णतरं पडिसेवेज्जा" बकुशो द्वेधा—उपकरणशरीरभेदात्, तत्र तयोरुपकरणबकुशः उपकरणे वस्त्रपात्रादौ अभिष्वक्तचित्तः प्रतिबद्धस्नेहः समुपजाततोषः विविधं देशभेदेन पौण्ड्रवर्धनकाशाकुलकादि पात्रमपि पूरिकगंधारकप्रतिग्रहकादि विचित्रं रक्तपीतसितबिंदुपट्टकादिरचितं महाधनं महामूल्यं एवमादिना उपकरणेन युक्तो, ममेदं अहमस्य स्वामीत्युपजातमूर्च्छः, पर्याप्तोकरणोऽपि भूयो बहुविशेषोपकारणाकांक्षायुक्तः बहुविशेषो यत्र मृदुदृढश्लक्ष्णघननिचितरुचिरवर्णादिस्तादृशोपकरणे लब्धव्ये जाताकांक्षो—जाताभिलापः, सर्वदा च तस्योपकरणस्य प्रतिसंस्कारं प्रक्षालनदशाबंधघटिकासंवेष्टनादिकं सेवमानस्तच्छील उपकरणबकुशः, शरीरबकुशः शरीरादिषु आसक्तचित्तः, विभूषार्थं तस्य शरीरस्याभ्यंजनोद्वर्त्तनस्नानादिकं प्रतिसंस्कारं सेवमानस्तच्छील एव भवति, एष चोत्तरगुणभ्रंशकारी, नतु मूलगुणान् विराधयति, यथोक्तमागमे—"बउसे पुच्छा?, गोयमा ! णो मूलगुणसेवी, उत्तरगुणपडिसेवए होज्जा, उत्तरगुणे पडिसेवमाणे दसविहस्स पच्चक्खाणस्स अण्णयरं पडिसेवेज्जा," प्रतिसेवनाकुशीलः मूलगुणान्—प्राणातिपातनिवृत्त्यादीन् अविराधयन्—अखंडयन् उत्तरगुणेषु दशसु कांचिद्विराधनां, न सर्वां, कदाचिदेव प्रतिसेवत इति, अत्राप्यागमोऽन्यथा अतिदेशकारि—"पडिसेवणाकुसीलो जहा पुलाओ" कषायकुशीलस्य निर्ग्रन्थस्नातकयोश्च नास्त्येव प्रतिसेवनेति ३। तरन्त्यनेनेति

तीर्थं-प्रवचनं प्रथमगणधरो वा तत्र किं कस्यचिदेव तीर्थकृतः तीर्थे पुलाकादयो भवन्त्युत सर्वेषां तीर्थकराणामित्याह— सर्वेषामित्यादि (२१५ ६) सर्वे पुलाकादयः सर्वेषां तीर्थकृतां तीर्थेषु भवन्ति, एके त्वाचार्या इत्यादि, पुलाको बकुशः प्रतिसेवनाकुशीलश्च नित्यं तीर्थे एव, शेषाः कषायकुशीलनिर्ग्रन्थस्नातकास्तीर्थे भवन्ति एते कदाचिद् अतीर्थेऽपि मरुदेवीप्रभृतयः श्रूयंते इति,इह चादेशान्तरमाश्रित्यागममुपलभामहे—"पुलाए णं भंते! किं तित्थे होज्जा अतित्थे होज्जा?,गोयमा! तित्थे होज्जा,णो अतित्थे। एवं बउसपडिसेवणाकुसीलावि, कसायकुसीले तित्थे वा होज्जा अतित्थे वा होज्जा?, एवं नियंठसिणायगावि" ४॥ लिंगं द्विविधमित्यादि (२११-९) लिंगं-चिह्नं मुमुक्षोः, तच्च द्विधा द्रव्यभावभेदात्, तत्र द्रव्यलिंग रजोहरणमुखवस्त्रिकादि लिंगं, भावलिंगं ज्ञानदर्शनचारित्राणि, भावलिंगं प्रतीत्य निसृत्य पंचापि पुलाकादयो भावलिंगे भवंति, एवं द्रव्यलिंगं प्रतीत्य भाज्याः, कदाचिद्रजोहरणादि भवति कदाचिन्नेति, मरुदेवीप्रभृतीनामिति ५॥ लेश्याः पूर्वोक्तनिर्वचना उत्तराः पारमर्षक्रमप्रामाण्यात् पुलाकस्य तेजसीपद्मशुक्लनामानस्तिस्रो भवंति, बकुशप्रतिसेवनाकुशीलयोः सर्वाः, कियंतः सर्वाः?, षडपीत्याह, परिहारविशुद्धिसंयमप्राप्तस्य कषायकुशीलस्य एता एव तिस्रः, सूक्ष्मसंपरायसंयमप्राप्तस्य कषायकुशीलस्य तथा निर्ग्रन्थस्य सयोगस्नातकस्य च त्रयाणामप्येका शुक्लैव केवला, अलेशीप्रतिपन्नस्त्वयोगकेवली नियमेनालेश्य एव भवति ६॥ उपपात इत्युपपत्तिर्जन्मान्तरप्राप्तिः, सर्वजन्मपरित्यागेन स्थानान्तरप्राप्तिरित्यर्थः, सहस्रारेऽष्टादशसागरोपमस्थितिरुत्कृष्टा, तत्र पुलाकस्योत्पत्तिः-जन्म मरणोत्तरकालं, बकुशप्रतिसेवनाकुशीलयोरच्युते द्वाविंशतिसागरोपमस्थितिकेषूत्पत्तिः, कषायकुशीलनिर्ग्रन्थयोः सर्वार्थसिद्धविमाने त्रयस्त्रिंशत्सागरोपमस्थितिषूत्पत्तिः, सर्वेषां पुलाकादीनां शमितकषायान्तानां प्रथमकल्पे जघन्येन, द्विप्रभृतिरा

नन्रभ्यः पृथक्त्वपरिभाषा, तत्स्थितिकेषु देवेषूत्पत्तिः, स्नातकस्य निर्वाणस्थानप्राप्तिरेवेति ७॥ स्थानद्वारमधुना चिन्त्यते—असंख्येयानीत्यादि (२१२–३) स्थानमित्यध्यवसानस्थानं संयमस्थानमिति पर्यायः, तत्र यावत् सकषायस्तावत् संक्लेशविशोधयोऽवश्यंभाविन्यः, क्षीणकषायस्य तु विशोधिरेव, न संक्लेशः, तत्र सकषायस्यासंख्येयानि संयमस्थानानि भवंति, तत्रैकस्य प्रथमसंयमस्थानस्य पर्यायपरिमाणमिदमागमोक्तं—"सव्वागासपदेसग्गं सव्वागासपदेसेहिं अणंतगुणियं पढमसंजमठाणं" भवति, का पुनर्भावना ?, उच्यते—"सव्वगयं सम्मत्तं सुए चरित्ते ण पज्जवा सव्वे । देसविरतिं पडुच्च दोण्हवि पडिसेहणं कुज्जा ॥१॥ सव्वदव्वाणि जमेग सव्वदव्वाण पज्जवा जे अ। सव्वाण अवागण्णा तिकालविसयंमि जे भणिया ॥ २ ॥ सव्वेवि अ सद्दहओ ससती उवदेसओ व सम्मत्तं। तव्विवरीअं मिच्छंति दरिसणं देसिअं समए ॥ ३ ॥ एएण कारणेणं सव्वागासपदेसग्गं सव्वागासपदेसेहिं अणंतगुणियं पढमं संजमठाणं पज्जवग्गेण भवति, तओ एवं चेव पढमं संजमठाणं अप्पमाणं परिणामविसोहिनिमित्तेण अधिकतरं भवति, तओ पढमसंजमठाणपरिणामविसुद्धितो बिइयसंजमठाणपरिणामो विसुद्धतरोत्तिकाउं पढमसंजमठाणाओ बिइयं संजमठाणं अणंतभागब्भहियं, एएणं चेव कमेण बितीआओ ततियं, कंडगे केवइयाइं संजमठाणाइ ?, असंखिज्जाइं, असंखिज्जाहिं ओसप्पिणीहिं कालओ अवहीरंति, खेत्तओ अंगुलस्स असंखेज्जतिभागेणं," सम्प्रति भाष्यभावना क्रियते—पुलाकादिस्थाननिरूपणनिदर्शनमात्रमिदं भाष्यभावनार्थमुपन्यस्तं, पुलाकस्य कषायकुशीलस्य च सर्वजघन्यानि स्थानान्यधः, ततस्तौ युगपदसंख्येयानि स्थानानि गच्छतस्तुल्याध्यवसानात्, ततः पुलाको व्युच्छिद्यते, हीनपरिणामत्वात्, ततः कषायकुशीलप्रतिसेवनाकुशीलबकुशा युगपदसंख्येयानि स्थानानि प्राप्नुवंति, ततश्च बकुशो व्युच्छिद्यते, ततोऽप्यसंख्येयानि संयमस्थानानि गत्वा प्रतिसेवनाकुशीलो व्युच्छिद्यते, ततोऽ-

ख्यसंख्येयानि संयमस्थानानि गत्वा कषायकुशीलो व्युच्छिद्यते, एवमेतानि सकषायस्थानानि द्रष्टव्यानि, अत ऊर्ध्वमिति कषायकुशीलव्युच्छेदस्थानादुपरि अकषायस्थानानि निर्ग्रन्थः प्रतिपद्यते, सोऽप्यसंख्यातानि स्थानानि गत्वा व्युच्छिद्यते, अत ऊर्ध्वं निर्ग्रन्थस्थानादुपरि गत्वा निर्ग्रन्थः क्षपितसकलकर्म्मांशः स्नातकोऽपि निर्वाणमवाप्नोतीति, एषां च पुलाकादीनां संयमलब्धिः संयमस्थानप्राप्तिरुत्तरोत्तरस्यानन्तगुणा भवतीति भावितमेवेति ॥

इति श्रीतत्त्वार्थटीकायां हरिभद्राचार्यप्रारब्धायां डुपडुपिकाभिधानायां तस्यामेवान्यकर्तृकायां

॥ नवमोऽध्यायः समाप्तः ॥



## ॥ श्रीतत्त्वार्थस्य हारिभद्रीयवृत्तौ दशमोऽध्यायः ॥

निर्दिष्टे संवरनिर्जरे, आश्रवनिरोधः संवरः, तपसा निर्जरा चेति, सम्प्रति तु फलं मोक्षं वक्ष्यामः, स च केवलज्ञानोत्पत्तिमन्तरेण न जातुचिदप्यभवद्भवति भविष्यति चेत्यतः केवलज्ञानोत्पत्तिमेव तावद्वक्ष्यामः—

**मोहक्षयात् ज्ञानदर्शनावरणांतरायक्षयाच्च केवलम् ॥ १०-१ ॥ सूत्रम् ॥**

क्रमं चानेन सूत्रेण दर्शयति, मोहनान्मोहः अष्टाविंशतिभेदः पूर्वोक्तस्तस्य क्षयो-निरवशेषतः परिशटनमात्मप्रदेशेभ्यः, क्षीणे च सकलभेदमोहनीये ज्ञानावरणदर्शनावरणांतरायेषु च पंचपंचभेदेषु युगपत् क्षीणेषु-निरवशेषीकृतेषु, केवलं ज्ञानं केवलं च दर्शनमाविर्भवति, समस्तद्रव्यपर्यायपरिच्छेदि घातिकर्मविगमादुत्पद्यते, यथोक्तं-"तस्य हि तस्मिन् समये केवलमुत्पद्यते गततमस्कम् । ज्ञानं च दर्शनं चावरणद्वयसंक्षयाच्छुद्धं ॥१॥ चित्रं चित्रपटनिभं त्रिकालसहितं ततः स लोकमिमं । पश्यति युगपत् सर्वं सालोकं सर्वभावज्ञः ॥२॥" आसामेतत्सूत्रनिर्दिष्टानां, कियतीनां ?, चतसृणां कर्म्मप्रकृतीनां कर्म्मस्वभावानां मोहनमाच्छादनं विघ्नकारित्वं चेति स्वभावाः क्षयो निःशेषशाटः केवलस्य ज्ञानस्य दर्शनस्य हेतुः कारणं निमित्तमिति पर्यायाः, फलस्य साधने योग्यः पदार्थो हेतुरिति परिभाषितं, अभावोऽपि हि निमित्तं भवति, यथा विपक्षे हेतुरभावद्वारेण गमकः, तत्क्षयात् उत्पद्यत इति घातिकर्म्मक्षयाज्जायत इत्यर्थः, ततस्तद्विगमलक्षणो गुणो हेतु', 'विभाषा गुणेऽस्त्रिया'मिति हेतौ पंचमीनिर्देशो, मोहक्षयादिति सापेक्षं, कर्म्मचतुष्टये व्यपेते निरावरणो जीवस्वभावो ज्ञानदर्शनलक्षणः सदा चकास्ति, तस्य च सापेक्ष-

कर्मविगमो निमित्तं, किरणमालिन इव अतिबहलाभ्रपटलप्रच्छादितमंडलस्य संकुचितकिरणकलापस्य तदपगमे निरावरणमम्लानगभस्तिनिवरणवद्विकसति ज्ञानं दर्शनं च, मोहक्षयादिपृथक्करणं प्रतिविशिष्टक्रमप्रसिद्ध्यर्थं, किमर्थं क्रमप्रसिद्धिः ?, यथा गम्येत प्राक् मोहनीयक्षय एव सर्वस्य मुमुक्षोः,ततश्च महामोहसागरमुत्तीर्यान्तर्मुहूर्त्तमात्रं विश्राम्यति, ततस्तस्य ज्ञानदर्शनावरणान्तरायक्षयो युगपदेव भवति, तत्समनंतरमेव केवलज्ञानं केवलदर्शनं चोपजननमासादयति,यथोक्तमागमे–"वीसमिऊण नियंठो" इत्यादि, 'चरमे णाणावरण'मित्यादि। अत्राह्–उक्तमित्यादिना (२१३-१०) उत्तरसूत्रं सम्बध्नाति, मोहक्षयात् केवलज्ञानोत्पत्तिः, अथैषां मोहादीनां क्षयः कथं केन भवतीति, अयमभिप्रायः प्रश्नयतो–यावदपि सकषाययोगस्तावदपि कर्म्म सततं बध्नाति कषाययोगप्रत्ययं, तच्च प्रतिक्षणं बध्नन् कथं क्षयं करोतीति, अत्रोच्यते इत्याह–

बन्धहेत्वभावनिर्जराभ्यां ॥ १०–२ ॥ सूत्रम् ॥

आत्मप्रदेशाना कर्म्मपुद्गलानां चान्योऽन्यानुगतिलक्षणः क्षीरोदकवद्बन्धः तस्य हेतुर्मिथ्यादर्शनादिः पंचविधः तस्य हेतोरभावाद् अपूर्वकर्म्मागमो नास्ति, प्रथमबद्धस्य च निर्जरणं निर्जरा–आत्मप्रदेशेभ्यः परिशटनं कर्मणः, बन्धहेत्वभावश्च निर्जरा च बंधहेत्वभावनिर्जरे ताभ्या बंधहेत्वभावनिर्जराभ्या कर्म्मपरिक्षयः, मिथ्यादर्शनादय इत्यादि (२१४–२) भाष्यं, प्रागभिहिता मिथ्यादर्शनादयस्तेषामपि मिथ्यादर्शनादीनां बंधहेतूनां तदावरणीयस्य कर्म्मणः क्षयादभावो भवति, मिथ्यादर्शनं–अज्ञानविशेषः, ज्ञानावरणीयेन कर्म्मणा ज्ञानमेवाच्छादितं मदज्ञानमुच्यते, अन्यथा व्यवस्थितान् जीवादिपदार्थानन्यथा वैपरीत्येन प्रतिपद्यते, अत आह- तदावरणीयस्य ज्ञानावरणीयस्य कर्म्मणः क्षयादात्यन्तिकात् तस्य–मिथ्याज्ञानस्य यदावरणं तदभावात्

मिथ्यादर्शनाभावः, नाप्यविरतप्रमादकषायप्रत्ययो दर्शनावरणमोहक्षयाद्, योगनिरोधकाले च योगनिमित्तोऽप्यपैति बंध इति, इत्थं बंधहेत्वभावे सति निर्जरणमुपचितस्य कर्मणः अन्त्यकाले समस्ति, सम्यग्दर्शनज्ञानचरणानां चोत्पत्तिः प्रागभिहिता, तामुपलक्षयति-'तत्त्वार्थश्रद्धानं सम्यग्दर्शनं' 'तन्निसर्गादधिगमाद्वे'त्युक्तैव, न पुनरपि व्याख्येयेति, अथवा सर्वमेतत् पूर्वमुक्तं, एवं संवरसंवृत-स्येत्यादि, एवमुक्तेन प्रकारेण बंधहेत्वसंभवः संवरस्तेन संवृतस्य स्थगितसकलाश्रवद्वारस्य महात्मनः परमातिशयसंपन्नस्य सम्यग्व्यायामस्य सम्यक्क्रियानुष्ठायिनः छद्मस्थस्य सयोगकेवलिनश्च निरुद्धसकलयोगस्य अभिनवस्यापूर्वस्य कर्म्मण उपचयो बंधो न भवति पूर्वोपचितस्य प्राग्बद्धस्य क्षयो यथोक्तैस्तपोऽनुष्ठानादिभिर्निर्जराहेतुभिरात्यंतिको घातिकर्म्मक्षयः, इतरस्तु भवधारणीयक्षयः, ततो घातिकर्म्मक्षयसमनन्तरमेव द्रव्यपर्यायविषयमित्यनेनैतावदेव ज्ञेयमिति सूचयति, परं प्रकृष्टमैश्वर्यं विभूतिः परं असाधारणं वा ईश्वरत्वमैश्वर्यमनन्तपर्यवसानत्वादनुच्छेदित्वात् केवलमसहायं मत्यादिरहितं ज्ञानदर्शनं चानन्तज्ञानमनन्तदर्शनं च प्राप्य लब्ध्वा शुद्धो धौतापनीतसकलकर्म्ममलः बुद्ध्यत इति बुद्धो ज्ञानस्वभाव इत्यर्थः, केवलज्ञानेन सर्वं जानीत इति सर्वज्ञः केवलदर्शनेन सर्वं पश्यतीति सर्वदर्शी रागद्वेषमोहजयाज्जिनः केवली केवलज्ञानदर्शनसंभवात् ततः उत्पन्नकेवलज्ञानः प्रतनूनि स्वकल्पानुभावानि शुभविपाकानि च प्रायश्चत्वारि कर्माण्यवशेषाणि यस्य वेद्यायुर्नामगोत्राणि, स चायुष्कस्य कर्म्मणः संस्कारवशात् प्रतिक्षणमनुवृत्तिः संस्कारस्तद्वशाद्विहरति भव्यजनकुमुदवनबोधनाय शीतरश्मिरिव कदाचिद् याति विहरति, तिष्ठन्नपि च विविधं रजो हरतीति, ततोऽस्य विहरत उक्तेन विधिना आयुष्कर्म्मपरिसमाप्तावितराण्यपि त्रीणि कर्माणि क्षपयंतीत्यतः—

कृत्स्नकर्म्मक्षयो मोक्षः ॥ १०-३ ॥ सूत्रम् ॥

कृत्स्नं-सपूर्णं निरवशेषं कर्म्म ज्ञानावरणाद्यन्तरायपर्यवसानमष्टविधं मूलप्रकृतिशब्दवाच्यं, उत्तरप्रकृतीना तु द्वाविंशत्युत्तर शतं, एतत् कृत्स्नं कर्म्म तस्य क्षयः शाटः आत्मप्रदेशेभ्योऽपगमः कर्म्मराशेर्मोक्षः, आत्मनः आत्मन्यवस्थानमिति । कृत्स्नकर्म्मक्षयलक्षणो मोक्षो भवतीत्यादि (२१४-१२) भाष्यं, कृत्स्नकर्म्मक्षयो लक्षणं यस्य मोक्षस्य, कृत्स्नकर्म्मविमुक्त्याऽऽत्मा मुक्त इति लक्ष्यते, स एव मोक्षः, सकलकर्म्मविमुक्तस्य ज्ञानदर्शनोपयोगलक्षणस्यात्मनः स्वात्मन्यवस्थानं मोक्षः, न पुनरात्माभाव एव, परिणामिनो निरन्वयनाशे न उपपत्तिदृष्टान्तौ, परिणामित्वादेव ज्ञानाद्यात्मा, न सोऽभावः, स च कर्म्मणामपगमः क्रमेणामुनेति दर्शयति पूर्वं क्षीणानि चत्वारि कर्म्माणीति केवलज्ञानोत्पत्तेः प्राक् पूर्वं मोहनीयज्ञानदर्शनावरणान्तरायाख्यानि चत्वारि घातिकर्म्माणि क्षीणानि, ततः केवलज्ञानोत्पत्तिः, पश्चाद्वेदनीयनामगोत्रायुष्कक्षयो भवतीति, केवलज्ञानोत्पादात् पश्चाद्वेदनीयादीनि चत्वारि कर्म्माणि क्षयं प्रतिपद्यन्ते भवधारणीयानि, एवं तत्क्षयसमकालमेव सकलकर्म्मक्षयतुल्यकालमेवौदारिकशरीरवियुक्तस्यास्य मनुष्यजन्मनः प्रहाणमिति छेदः बंधहेत्वभावाच्चोत्तरस्य जन्मनोऽप्रादुर्भावः एषाऽवस्थेति पूर्वजन्मोच्छेद उत्तरजन्माप्रादुर्भावः केवली आत्मा ज्ञानाद्युपयोगलक्षणः शुद्ध इत्येषाऽवस्था कृत्स्नकर्म्मक्षयलक्षणा मोक्ष इत्याख्यायते, अवस्थाग्रहणमात्माऽनुच्छेदप्रतिपादनार्थमिति । किंचान्यदित्यनेन (२१४-१६) तस्यामवस्थाया प्रष्टव्यशेषमाशंकते, "औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ चे"त्युक्तं जीवस्वतत्त्वं, तत् किं तस्यामवस्थाया सकलमेव परिशटति उत नेव, आहोश्वित् किंचित् परिशटति किंचिन्नेति सन्देहापनयनार्थमाह सूत्रकारः—

औपशमिकादिभव्यत्वाभावाच्चान्यत्र केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्यः ॥ १०-४ ॥ सूत्रम् ॥

उपशमे भवं औपशमिकं उपशमेन वा निर्वृत्तः,स आदिर्येषां ते इमे औपशमिकादयः, आदिग्रहणेन क्षायिकक्षायोपशमिकौदयिकपारिणामिकाः गृहीताः, सेत्स्यल्लक्षणं भव्यत्वं, औपशमिकादयश्च भव्यत्वं च औपशमिकादिभव्यत्वानि एषामभावः औपशमिकादिभव्यत्वाभावः, चशब्दः समुच्चये, औपशमिकाद्यभावाद्भव्यत्वाभावाच्च मुक्तात्मा भवति, किं सर्वेषामौपशमिकादीनामभावो?, नेत्युच्यते, अन्यत्र केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्यः शेषा न संति, औपशमिकक्षायोपशमिकौदयिकाः सर्वथा न संत्येव, क्षायिके तु भावे केवलसम्यक्त्वं, क्षायिकसम्यक्त्वमित्यर्थः, केवलज्ञानं केवलदर्शनं सिद्धत्वं च संभवति मुक्तात्मनि, पारिणामिके तु भावे भव्यत्वमेकमेव केवलं सिद्धत्वे न संभवति,नन्वौपशमिकादिग्रहणात् भव्यत्वं संगृहीतमेव, किमर्थं पुनर्भव्यत्वग्रहणं?, उच्यते, पारिणामिकभावे भव्यत्वमेव केवलं सिद्धे न समस्ति, शेषाः प्रायेण संतीति ज्ञापनार्थं, अस्तित्वगुणवत्त्वासर्वगतत्वानादित्वासंख्येयप्रदेशवत्त्वनित्यत्वादयः सन्त्येव, एतदनुसारि भाष्यं—औपशमिकेत्यादि (२१५-९) औपशमिकादयः कृतद्वन्द्वाः षष्ठीबहुवचनेन निर्दिष्टाः, एषामभावाद्भव्यत्वाभावाच्च मोक्षः, अन्यत्र एभ्यः इत्युपपदलक्षणा पंचमी, दर्शनसप्तकक्षयात् क्षायिकं केवलसम्यक्त्वं, समस्तज्ञानावरणक्षयात् क्षायिकं केवलज्ञानं, अशेषदर्शनावरणक्षयात् क्षायिकं केवलदर्शनं, समस्तकर्मक्षयात् सिद्धत्वमित्येते क्षायिका भावा यस्मान्नित्याः तस्मान्मुक्तस्यापि भवंतीति । स पुनर्मुक्तात्मा यत्र मुक्तः समस्तकर्मभिः किं तत्रैवावतिष्ठते उतान्यत्रेति पृष्टो जगाद—

तदनन्तरमूर्ध्वं गच्छत्यालोकान्तात् ॥ १० ५ ॥ सूत्रम् ॥

तच्छब्देन कृत्स्नकर्मक्षयः परामृश्यते, औपशमिकादिभव्यत्वाभावो वा, तदनन्तरमिति कृत्स्नकर्मक्षयानन्तरं अनु-सततमेव मुक्तः सन्नूर्ध्वं गच्छत्यूर्ध्वमेव गच्छति, कीयतीं भूमिमित्याह-आलोकान्तात् पंचास्तिकायसमुदायो लोकस्तस्यान्तो—मस्तकः तत्रेषत्प्राग्भारा नाम क्षोणी तुहिनशकलधवला उत्तानकच्छत्राकृतिस्तस्याश्चोपरि योजनमेकं लोकः तस्याधस्तनको-शत्रयं हित्वा तुरीयक्रोशस्य उपरितनके षड्भागे त्रयस्त्रिंशदुत्तरधनुस्त्रिशतीमिते धनुस्त्रिभागाधिके लोकान्तशब्दो वर्त्तते, आङो मर्यादायां प्रयोगः, आ उदकातादिति यथा, एवमालोकान्तात्, न गच्छति ततः परमिति, तस्य च मुक्तात्मनो देहवियोगः सर्वात्मना तैजसकार्मणयोः क्षयः, सिद्ध्यमानगतिरिति ताच्छील्ये चानः, सेधनशील एवासौ,नान्यशीलः, अवश्यमेव सिद्ध्यति, तस्य गतिरितो गमनं मुक्तस्य यतः लोकान्तप्राप्तिर्लोकान्तावस्थानं एतत्त्रितयमप्येकेन समयेन परमनिरुद्धेन कालविशेषेण युगपद्भवति, गतिश्च समयान्तर प्रदेशान्तर चास्पृशंती भवति, तस्याचिन्त्यसामर्थ्यात् चैतत् सर्वं युगपद्भवति देहवियोगादि, केचिदाहुः-कर्मक्षयकालश्च देहवियोगादिसमकाल एव कथं भवतीति?, तत्रयथेत्यादिना (२१५-९) दृष्टान्तयति प्रसिद्धेन दृष्टा-न्तवस्तुना सिद्धस्य उत्पादादीनामेककालता साध्यते, प्रयोगो वीर्यान्तरायक्षयोपशमात् क्षयाद्वा चेष्टारूपपरिणामः आदिग्रहणात् स्वाभाविको वा परमाण्वादीनां गतिपरिणामस्तत्समुत्थस्य तस्माज्जातस्य गतिकर्म्मणो गतिक्रियाविशेषस्य कार्यद्वारेणोत्पत्ति-कालः कार्यारंभश्च कारणविनाशश्च पर्यायान्तरेण व्यणुकादिकार्यारंभः पूर्वपर्यायविनाशः तद्वत् सिद्धस्यापि कर्म्मक्षयदेहवियो-गादयः समकालाः, एकसमयेन भवंतीत्यर्थः, उत्पादविगमस्थानवदिति सुज्ञानं। 'अत्राहे'त्यादिना (२१५-११) सूत्रं सम्बध्नाति, प्रक्षीणकर्मण इति, क्षपितनिरवशेषकर्म्मराशेर्निराश्रवस्य निरस्तकायवाङ्मनोयोगस्य कथं केन प्रकारेण गतिः लोकान्त

प्राप्तिर्भवति, अयं मन्यते-योगाभावात् स सदा निष्क्रियो, गतिस्तु क्रिया, अतो लोकान्तगमनमनुपपन्नमिति, अत्रोच्यते यथा गमनं समस्ति मुक्तात्मनस्तथोच्यते—

पूर्वप्रयोगादसंगत्वाद्बंधच्छेदात्तथागतिपरिणामाच्च तद्गतिः ॥ १०-६ ॥ सूत्रम् ॥

उपरतकर्तृव्यापारो यः कालस्तस्मात् पूर्वं-प्रथमं कर्तृव्यापारः कर्तृक्रिया तस्याः प्रयोगः प्रयुक्तिः पूर्वप्रयोगः तस्मात् पूर्वप्रयोगात् पूर्वव्यापारात् यथा कुलालचक्रं हस्तदण्डचक्रसंयुक्तसंयोगात् हस्तेन दण्डः संयुक्तः दण्डेन चक्रं संयुक्तमिति संयुक्तसंयोगस्तस्मात् पुरुषप्रयत्नतश्च पुरुषपरिस्पन्दाचाविद्धं वेगितं प्रेरितं उपरतेष्वपि पुरुषव्यापारादिषु पूर्वप्रयोगाद्धस्तादिव्यापारप्रेरणात् भ्रमत्येव आसंस्कारपरिक्षयात्, संस्कारोऽनवरतक्रियाप्रबन्धः, दृष्टान्तेन दार्ष्टान्तिकमर्थं समीकुर्वन्नाह-एवं यः पूर्वमस्येत्यादि (२१६-१)योगनिरोधाभिमुखस्य यत् कर्म्मणा यः प्रयोगो जनितः स क्षीणेऽपि कर्म्मणि अविच्छिन्नसंस्कारत्वाद्योगाभावेऽपि गतिहेतुर्भवति तेन हेतुना क्रियते गतिरित्यर्थः, किंचान्यदिति द्वितीयं हेत्वन्तरमुपन्यस्यति-असंगत्वादिति (२१६-४) संगत्वं स्खलितत्वमित्यर्थः, न संगत्वमसंगत्वमस्खलितत्वं तस्मात् असंगत्वात् सिद्धस्योर्ध्वं गतिः सिद्धा, न हि स्वाभाविक्या गत्या गच्छन्नूर्ध्वं क्वचित् स्खलनमासादयति, एतद्व्याख्यानायाह-पुद्गलानामित्यादि, पूरणाद् गलनाच्च पुद्गलाः-परमाणुप्रभृतयः जीवास्तु ज्ञानदर्शनोपयोगलक्षणाः, एषां पुद्गलजीवानां गतिमत्त्वमुक्तं, नान्येषां धर्माधर्म्माकाशद्रव्याणां, तत्र स्वभावत एवाधोऽधस्तात् गौरवं भारिकत्वं परिणामविशेषः गौरवं धर्मो येषां ते गौरवधर्म्माणः पुद्गलाः, ऊर्ध्वगौरवधर्माणो जीवा इति, जीवानामपि तादृशं गौरवं-परिणामविशेषो लाघवं येषामिति, एवंविधं तेषां गौरवं विशिष्टं येनोर्ध्वं गच्छंति, एष पुद्गलानां जीवानां च स्वभावः,

अतोऽन्येति स्वाभाविकीं गतिमपहाय संगादिजनिता गतिर्भवति,संगः कर्म्मकृतं स्खलनं, आदिग्रहणादभिघातप्रेरणादि गृह्यते,यथा भस्त्रापि निधमानेष्वपि प्रयोगादिषु गतिकारणेषु जातिनियमेन जातिः पृथिव्यनलानिलव्यक्तिभेदेन भिन्ना पृथिवीत्ववायु-त्वाग्नित्वाख्यतया नियमः क्रियते, तत्र पृथिवीत्वनियमेनाधोगतिर्लोष्ठः, यो हि बादरः पृथिवीपरिणामः स सर्वोऽधोगतिः, एवं तिर्यग्गतिर्वायुः,ऊर्ध्वगतिर्दहनः स्वजातिनियमेनैव,एवमेषामेता.स्वा भाविक्यो गतयो यथा तथा संगविनिर्मुक्तस्य कर्म्मकृतस्खलनरहितस्य ऊर्ध्वगौरवात् परिणामविशेषात् ऊर्ध्वमेव सिद्ध्यमानगतिर्भवति,संसारिणस्तु नरकादिगतिचतुष्टयवर्त्तिनः संसारेपरिभ्रमतः कर्म्मसंगात् कर्म्मजनितस्खलनाद् अधस्तिर्यगूर्ध्वं चानियमेन गतिर्भवति। किंचान्यदिति(२१६ १०) युक्त्यन्तरोपन्यासप्रवणं बंधच्छेदादिति बध्यते येन रज्ज्वादिना स बन्धः तस्य छेदः शस्त्रेण तोडनं,तद् व्याचष्टे-यथा रज्ज्वा गाढमापिष्टबद्धायाः पेडायाः रज्जुबंधच्छेदादुपरितनपुटस्य गमनमूर्ध्वं दृष्टं बीजकोशबंधनच्छेदाच्च बंधनकोशः फलं फली वा तस्यास्तु बंधनं-गाढसम्पुटता सवितृकरजालशोषितायाः परिणतिकाले सपुटोद्भेदः छेदः ततश्च एरण्डादिफलभेदे बीजानां गतिर्दृष्टा तानि तृतीय दूरं पतंति तथा कर्म्मबंधः फलकटाहस्थानीयः तच्छेदात् तद्विघटनादनंतरमेवोर्ध्वं सिद्ध्यमानगतिरिति। किंचान्यदिति (२१६-१७) विवक्षितार्थप्रबोधनाय हेत्वंतरमुपादत्ते, तथागतिपरिणामाच्चेति तथा तेन प्रकारेण सर्वकर्म्मविनिर्मुक्तस्यास्य गतिपरिणामो भवति विगतयोगस्यापि,चशब्दः समुच्चये,एभ्यः पूर्वोक्तहेतुभ्यः ऊर्ध्वगौरवात् पूर्वप्रयोगादिभ्यश्च गतिपरिणाम उत्पद्यते येन सिद्ध्यमानगतिर्भवति, भवति च गतिपरिणाम ऊर्ध्वमेव भवति, नाधस्तिर्यग् वा, पूर्वाभिहितहेतुनिरपेक्षः ऊर्ध्वगौरवप्रयोगपरिणामाद् विना असंगयोगं चान्तरेणेत्यत आह-गौरवपरिणामासंगयोगाभावादिति, तद्यथेत्यादिना दृष्टान्तमाह,

अलाबुनोऽवस्थाः पूर्विका विशेष्यंते, गुणवद्भूमिभागारोपितादिति बीजावस्थागुणवान् भूमिभागोऽनुपहतः क्षारमूत्रपुरीषादिभिस्तत्रारोपितं—निरोपितं सत् काले वर्षासु जातं, ततश्चोच्छूनावस्थाद्बीजोद्भेदादंकुरः प्रवालं—किशलयं पर्णं—जठरं ततः पुष्पं ततः फलं,एषां बीजारोपणोद्भेदादंकुरप्रवालपर्णपुष्पफलानां कालेषु स्वेषु स्वेषु विमानितः प्राप्तकालो न कृतः कृतस्ततोऽविमानितः सेको दौर्हृदश्च, आदिग्रहणादस्थिभूमभस्मामुण्डनादिपरिग्रहः, एवमादिना पोषणकर्म्मणा परिणतं जरठीभूतं पक्वं काले परिपाकोत्तरकाले छिन्नं शुष्कमलाबु अप्सु न निमज्जति न जलांतः प्रविशति,सर्वेषां विशेषणानामिदं तत्त्वं—निरुपहतं वातेनानाश्लिष्टं अशुषिरमिति, तदेव च पुनर्गुर्व्याः कृष्णमृत्तिकाया लेपैर्घनैः—निरन्तरैर्बहुभिरष्टाभिर्दर्भवेष्टनोत्तरकालमालिप्तं, तेन च घनमृत्तिकालेपेन वेष्टनेन च दर्भादिना जनितमागंतुकं गौरवं यस्य तदेवंविधमप्सु प्रक्षिप्तं तलप्रतिष्ठितं भवति,उत्तरकालं यदा त्वस्याद्भिः सम्बन्धतः क्लिन्नो मृत्तिकालेपो व्यपगतो भवति तदा तत्संगविनिर्मुक्तं दर्भादिबंधनमृत्तिकादिमोक्षणसमनंतरमेवोर्ध्वं गच्छत्यासलिलोर्ध्वतलादित्येष दृष्टान्तः,सम्प्रति दार्ष्टान्तिकं दर्शयति—'एवमूर्ध्वगौरवे'त्यादि,संसारोदधौ भवसलिले भव औदारिकादिकायनिर्वृत्तिः भव एव सलिलं तत्र मग्नो भवासक्तः शरीरी अनियमेनाधस्तिर्यगूर्ध्वं च गच्छति, ततः सम्यग्दर्शनज्ञानचरणसलिलार्द्रीकृतः प्रहीणाष्टविधकर्म्ममृत्तिकालेप ऊर्ध्वमेव गच्छत्यालोकान्तादिति। स्यादेतदित्यादिना (२१७ १३) इदमाशंकते—ऊर्ध्वं गच्छत्यालोकान्तादिति को नियमः?, स्वाभाविकया गत्या लोकान्तादपि परेण गच्छतु, गतेर्निवारकस्याभावादिति। अत्रोच्यते धर्मास्तिकायाभावादिति, अस्त्येव निवारकं धर्म्मद्रव्यं, तदृष्यपेक्षाकारणं, स्वयमेव गतिपरिणतस्य जीवपुद्गलद्रव्यस्य धर्मद्रव्यमुपग्राहकं भवति, मीनस्येव वारि द्रव्यं, नत्वगच्छंतं झषं बलाद्वारि नयति, एवं गतिपरिण-

तस्यात्मनः पुद्गलस्य वा मत एव गत्युपग्रहकारी धर्मास्तिकायः कारणीभवति, स च लोकान्तात् परतो नास्ति, तस्माद् गत्युपग्रहकारिणोऽभावात् परतो गतिर्नास्ति, अप्सु यथाऽलाबुनः, अलाबु हि मृल्लेपापगमनात् स्वयमेव गच्छति, जलमस्तकप्रतिष्ठं भवति, न परतो यात्युपग्राहकजलद्रव्याभावाद्, ऊर्ध्वमेव च प्रयाति, नाधो न तिर्यगित्युक्तमेव तत्रैवानुश्रेणि गतिर्लोकान्तेऽवतिष्ठत इति यत्र देशे स्थितो मुच्यते समस्तैः कर्मभिस्तत्र या शरीरस्योपरि ऋज्वी श्रेणिर्नभसस्तयैव गत्वा लोकान्तेऽवतिष्ठते मुक्तात्मा निश्चय इति, एवमेषां मुक्तात्मना पूर्वप्रयोगादिभिर्युक्तिभिस्तद्गतिरिति वचनात् तेषां गतिः सिद्धेति× सूरियशोभद्रस्य(हि) शिष्येण समुद्धृता स्वबोधार्थम्। तत्त्वार्थस्य हि टीका जडकायार्जना धृता यात्यां नृद्धृता (०यर्जुनोद्धृताऽन्त्यार्धा) ॥१॥ हरिभद्राचार्येणारब्धा विवृताऽर्धपडध्यायांश्च। पूज्यैः पुनरुद्धृतेयं तत्त्वार्थार्द्धस्य टीकान्त्ये॥२॥ति, एतदुक्तं भवति—हरिभद्राचार्येणार्द्धषण्णामध्यायानामाद्यानां टीका कृता, भगवता तु गन्धहस्तिना सिद्धसेनेन नव्या कृता तत्त्वार्थटीका, नव्यैर्वादस्थानैर्व्याकुला, तस्या एव शेषमुद्धृतश्चाचार्येण, (शेषं मया) स्वबोधार्थं, माऽत्यन्तगुर्वी च, डुपडुपिका निष्पन्नेत्यलं प्रसङ्गेन×, प्रस्तुतं प्रारभ्यते, त एते सिद्धाः क्षेत्रादिभिर्द्वादशभिरनुयोगद्वारैरनुगन्तव्याः 'प्रमाणनयैरधिगम' इति वचनादित्याह—

क्षेत्रकालगतिलिङ्गतीर्थचारित्रप्रत्येकबुद्धबुद्धबोधितज्ञानावगाहनान्तरसङ्ख्याऽल्पबहुत्वतः साध्याः॥१०-७॥ सूत्रं॥

क्षेत्रादीनामल्पबहुत्वांतानां द्वन्द्वः, क्षेत्रादीनि च द्वादशापि द्वाराणि प्रतिपदं दर्शयति भाष्येण, तत्र क्षेत्रमाकाशं जीवपुद्गलानां निरावरणगतिविशेषणात् लोकाकाशपरिग्रह, तस्यापि लोकाकाशस्यैकदेशग्रहणं, अर्द्धतृतीया द्वीपाः समुद्रद्वयमीषत्प्राग्भारोपलक्षितश्च गगनप्रदेश इति। कालोऽनादिरनन्तस्तस्याप्युत्सर्पिण्यवसर्पिणी अनुत्सर्पिण्यवसर्पिणी च ग्राह्या। गतिर्नारकादिभेदेन चतुर्विधा।

लिङ्गं पुंस्त्रीनपुंसकाख्यं, अथवा द्रव्यलिङ्गं भावलिंगमलिङ्गमिति। तीर्थमिति तीर्थकरत्वं प्राप्य सिद्ध इत्यादिविकल्पं। चारित्रं सामायिकादि मूलगुणोत्तरगुणभेदं। प्रत्येकबुद्धबोधितः स्वयंबुद्धसिद्धादिभेदं। ज्ञानं मतिश्रुतादिभेदं। अवगाहनमिति शरीरावगाहग्रहणं। अन्तरमेकसमयादिकं षण्मासान्तं। सङ्ख्येत्येकस्मिन् समये कियंतः सिध्यन्तीत्यादि। अल्पबहुत्वमिति क्षेत्रसिद्धाद्यन्तःपातिनां परस्परं चिन्त्यते, एतानि द्वादशानुयोगद्वाराणि सिद्धस्य सिद्धत्वलाभे कारणानि भवन्ति, एतदेव स्पष्टयति—'एभि'रित्यादि भाष्यं, तत्र—अस्मिन् सिद्धव्याख्याने कर्तव्ये द्वौ नयौ पूर्वभावप्रज्ञापनीयः प्रत्युत्पन्नभावप्रज्ञापनीयश्च पूर्वम्—अतीतं भावं प्रज्ञापयतीति,प्रत्युत्पन्नभावप्रज्ञापनीयः। नैगमादिप्रसिद्धनयेभ्यश्च नेमौ व्यतिरिक्तौ, एतेषामेव वाचोयुक्तिभेदेन ग्रहणम्। तत्र नैगम-सङ्ग्रह-व्यवहाराः सर्वकालार्थग्राहित्वात् पूर्वभावप्रज्ञापनीयशब्दवाच्याः। ऋजुसूत्र-शब्द-समभिरूढैवम्भूतास्तु वर्तमानकालार्थप्रतिग्राहित्वात् प्रत्युत्पन्नभावप्रज्ञापनीयशब्दवाच्या विज्ञेयाः। आभ्यां नयाभ्यां क्षेत्रादयो व्याख्येया.। तत्कृतः—ताभ्यां कृतोऽनुयोगविशेषो—व्याख्याप्रकारः॥ तद्यथेत्यादिना क्षेत्रं निरूपयति—कस्मिन् क्षेत्रे सिध्यति। तत्र प्रत्युत्पन्नभावप्रज्ञापनीयस्य सिद्धिक्षेत्रे सिद्ध्यतीति तत्र सिद्धः प्रतिष्ठितः, यथा चागमः—"इह बोंदिं चइत्ताणं तत्थ गंतूण सिज्झइ" अप्राप्तस्थानस्तु नैव सिद्धः,कृत्यशेषत्वात्। पूर्वभावप्रज्ञापनीयस्य जन्म यस्य जन्म प्रति यत्र जातः कर्म्मभूमिषु पंचसु भरतेषु पंचस्वैरवतेषु पंचसु विदेहेषु सिद्ध्यति,संहरणं प्रति मानुषक्षेत्रे सिध्यति संहरणं द्विधा—स्वकृतं परकृतं च,तत्र स्वकृतं चारणानां विद्याधराणां स्वेच्छातो विशिष्टस्थानाश्रयणं, परकृतं चारणविद्याधरदेवैः प्रत्यनीकतयाऽनुकम्पया वोत्क्षिप्यान्यत्र क्षेपणं संहरणं, तत्र न सर्वस्यैव साधोः संहरणं समस्तीत्येतद्विवेकेन दर्शयति, तत्र प्रमत्तसंयताः संयतासंयता देशविरताः संह्रियंते, केचिदाहुः—

अविरतसम्यग्दृष्टिरपीति, अमी पुनर्न जातुचित् संह्रियंते—श्रमणी संयतीत्यर्थः अपगतवेदः क्षपितवेदः परिहारविशुद्धिसंयतः उक्तलक्षणः तथा पुलाकसंयतः अप्रमत्तसंयतः चतुर्दशपूर्वधरः आहारकशरीरीति एते सप्तापि न संह्रियंते, आगमेऽपि "समणि अवगतवेदं परिहारपुलागमप्पमत्तं च। चोद्दसपुव्वि आहारगं च नवि कोऽवि संहरति ॥१॥" ऋजुसूत्रनयः शब्दादयश्च त्रयः शब्दसमभिरूढैवंभूताः प्रत्युत्पन्नभावप्रज्ञापनीयाः वर्त्तमानार्थग्राहिणः शेषा नैगमादयो नया उभयभावं प्रज्ञापयंत्यतीतं वर्त्तमानं चेति, कालत्रयाभ्युपगमादिति। काल इत्यत्रापि तदेव नयद्वयं, कस्मिन् काले सिध्यतीति?, तत्र प्रत्युत्पन्नभावप्रज्ञापनीयस्य अकाले अविद्यमानकाले ईषत्प्राग्भारोपलक्षितगमने सिध्यति, न च तत्र कालः समस्ति, ततश्च तत्र सिध्यति, इतरस्य तु जन्मतः संहरणतश्च, तत्र जन्मतोऽवसर्पिण्यादिषु त्रिष्वपि जातः सिध्यति, एवं तावदविशेषेण, सामान्येनेत्यर्थः, विशेषतस्तु अवसर्पिण्यां सुषमदुष्षमाया तृतीये कालविभागे संख्येयेषु वर्षेषु शेषेषु जातः सिद्ध्यति, दुष्षमसुषमायां सर्वस्यां चतुर्थे कालविभागे सर्वत्र सिद्ध्यति, दुष्षमसुषमायां जातो दुष्षमायां पंचमे कालविभागे सिद्ध्यति, नतु दुष्षमायां जातः कदाचित् सिद्ध्यतीति, अन्यत्रेत्यतिदुष्षमायामपि जातो नैव सिध्यति, संहरणं प्रति संहरणं विवक्ष्यते यदा तदा सर्वकालेषु अवसर्पिण्यादिषु त्रिष्वपि सिध्यतीति। गतिद्वारे प्रत्युत्पन्नभावप्रज्ञापनीयस्य सिद्धिगत्यां सिध्यति, नान्यस्यां गतौ, शेषास्त्रिकालविषया नया द्विप्रकाराः—अनन्तरपश्चात्कृतगतिका एकान्तरपश्चात्कृतगतिकाश्चेत्यनन्तरा पश्चात्कृता गतिर्येषां तेऽनन्तरपश्चात्कृतगतिकास्तेषां मनुष्यगत्या सिद्ध्यति, एकान्तराः पश्चात्कृता गतयो येन तस्यापि अविशेषेण सर्वगतिभ्यः सिद्ध्यति, एकया मनुष्यगत्या अन्तरिताः—पश्चात्कृताः नरकादिगतयो येनेत्यर्थः। लिंगं स्त्र्यादि (२२०-१) तत्र प्रत्युत्पन्न-

भावप्रज्ञापनीयस्य अवेदो विगतलिंगः सिद्ध्यति, लिंगं वेद इत्येकोऽर्थः, पूर्वभावप्रज्ञापनीयस्य तु अनन्तरपश्चात्कृतगतिकस्य, अनन्तरपश्चात्कृतलिंगस्येत्यर्थः, गतौ चतुर्विधायां नियमेन लिंगं, लिंगे चावश्यंभाविनी गतिरिति लिंगशब्दो नोच्चरितः, अविनाभावाद् यदेवानंतर पुल्लिंगं स्त्रीलिंगं नपुंसकलिंगं वा एकमेव, एकान्तरपश्चात्कृतगतिकस्य चेत्यत्रापि गतिशब्दो लिंगवाची, एकेनान्तरेण लिंगेन पश्चात्कृतानि शेषलिंगानि येन तस्य, त्रिभ्योऽपि लिंगेभ्यः सिध्यति। तीर्थमित्यत्र (२२०-४) संतीति विद्यन्ते तीर्थकरसिद्धाः तीर्थकरनामकर्म्मानुभवनपूर्वकाः सिद्धाः तीर्थकरसिद्धाः, ते च तीर्थकरतीर्थे तीर्थकरेण प्राक् प्रवर्तितं तीर्थं तस्मिन् सति पुनः स एव तीर्थस्य प्रवर्त्तयिता तीर्थकरः सिध्यति, नोतीर्थकरसिद्धाः प्रत्येकबुद्धाः, ते च तीर्थकरतीर्थे, अतीर्थकरसिद्धाः मारुधः तीर्थकरतीर्थे, एवमुक्तेन प्रकारेण तीर्थकरीतीर्थे सिद्धा अपि वाच्याः, तीर्थकरीतीर्थतस्तीर्थकरी सिद्ध्यतीत्यादि। लिंगे पुनरन्यो विकल्प उच्यते (२२० ६) ननु च पूर्वमेवोपन्यसनीयः स्यात्, सत्यमेव, क्षम्यतामिदमेकमाचार्यस्य, त्रिप्रकारं लिंगं द्रव्यलिंगं भावलिङ्गं अलिङ्गमिति, तत्र प्रत्युत्पन्नग्राहिणो नयस्य शुद्धस्यालिङ्ग एव सिद्ध्यति, यतो द्रव्यलिङ्गं न समवत्येव, द्रव्यलिङ्गं त्रिविधं—रजोहरणमुखवस्त्रिकाचोलपट्टकादि स्वलिङ्गं, अन्यलिङ्गं मौनपरिव्राजकादिवेषः, गृहिलिङ्गं दीर्घकेशकच्छबंधादि, तदेवविध द्रव्यलिङ्गं भाज्यं, कदाचित् सलिङ्गः कदाचिदलिङ्ग इति, भावलिङ्गं श्रुतज्ञानक्षायिकसम्यक्त्वचरणानि, तत्र किंचिदनुयायि किंचिन्निवर्त्तते, श्रुतं नास्ति सिद्धे, क्षायिकसम्यक्त्वं तु विद्यते, चरणमपि

१ नवमेऽध्याये पुलाकादिनिर्ग्रन्थेषु तीर्थादनन्तरं लिंगद्वारमिति तीर्थानन्तरं लिंगद्वारपरामर्शः, वेदरूपलिंगानां तीर्थात् प्रागभावेऽपि स्वलिंगस्य तीर्थे एवोत्पादात् नेपथ्यरूपलिंगस्य तीर्थद्वारानन्तरं चिन्त्यता स्यात्

सामायिकादि व्यावर्त्तत एव, पूर्वभावप्रज्ञापनीयस्य भावलिंगं श्रुतादिकं स्वलिंगं तत्रस्थः सिद्ध्यति, संक्षेपतस्तु सर्वो भावलिंगप्राप्तः सिद्ध्यतीति नियमः ॥ चारित्रमिति (२२०–१२) वर्त्तमानग्राहिणो नयस्य नोचारित्री सिद्ध्यति, नोशब्दः सर्वत्र प्रतिषेधे, नास्त्यस्य चारित्रं सामायिकादि, नोअचारित्री द्वौ नञौ प्रकृतमर्थं गमयत इत्यपि वक्तुं न शक्यते, तस्मान्न विरतो नाविरत इति, पूर्वभावप्रज्ञापनीयो द्विधा–अनन्तरस्य पश्चात्कृतिः–पश्चात्करणं यत्राभावनंतरपश्चात्कृतिको नयः, अस्य तु यथाख्यातचारित्री सिद्ध्यति, इतरस्य तु व्यंजिते व्यक्तिमापादिते स्पष्टीकृते विशेषिते अव्यंजिते–सामान्यमात्रेऽविशेषिते वक्तव्यं, तत्राव्यंजिते त्रिचतुःपंचचारित्रपश्चात्कृतिकः सिध्यति, अविशेषितमिदं, कानि त्रीणि चारित्राणि चत्वारि पंच वा?, अतो व्यंजिते सामायिकं सूक्ष्मसंपरायं यथाख्यातं च, अथवा छेदोपस्थाप्यं सूक्ष्मसंपरायं यथाख्यातमिति त्रिचारित्रस्य विकल्पद्वयं, चतुश्चारित्रस्यापि विकल्पद्वयमेव सुज्ञानं, पंचचारित्रस्यैक एव विकल्पः। प्रत्येकबुद्धसिद्ध (२२१–८) इति चतुर्द्धा व्याख्यायते–तीर्थकरः प्रत्येकबुद्धः परबोधकः स्वेष्टकारी चेति, तद्यथेत्यादिना दर्शयति, अस्ति स्वयंबुद्धसिद्धः स्वयमेव बुद्धो नान्येन बोधितः, स द्विविधः–तीर्थकरोऽर्हन् तीर्थकरनामकर्म्मोदयभाक्, तथा परः प्रत्येकबुद्धसिद्धः प्रत्येकमेकमात्मानं प्रति केनचिन्निमित्तेन संजातजातिस्मरणादिना वल्कलचीरिप्रभृतयः करकण्ड्वादयश्च प्रत्येकबुद्धाः, बुद्धबोधितोऽपि द्विविधः–बुद्धेन–ज्ञातसिद्धान्तेन विदितसंसारस्वभावेन बोधितो बुद्धबोधितः, परबोधकः परस्मायुपदेशं ददाति, अपरः पुनः स्वस्मै हितं इष्टं स्वेष्टं तत्करणशीलः स्वेष्टकारी, न परस्मायुपदिशति किंचिदिति चतुर्थो विकल्पः, एते चत्वारोऽपि विकल्पद्वयमनुप्रविशंति, तत्र स्वयंबुद्धसिद्धे तीर्थकरः

१ यद्यपि सामायिकमन्तरा न छेदोपस्थाप्यसंभवः तथापि मूलानवस्थाप्यादिना तद्विनाशे त्रिचतुश्चरित्रविकल्पयोरुत्तरविकल्पसंभवः

प्रत्येकबुद्धश्च, बुद्धबोधितसिद्धे परबोधकः स्वेष्टकारी चेति। ज्ञानमि (२२१-१२) त्यत्रापि तावेव द्वौ नयौ, तत्र वर्त्तमानकालग्राहिणः केवलज्ञानवान् सिद्ध्यति, इतरो द्विविधः, तत्रानन्तरं कदाचित् किंचित् ज्ञानं भवति, परम्परपश्चात्कृतिकस्याव्यंजिते व्यंजिते चेति चत्वारो विकल्पाः, तत्राव्यंजिते द्वे त्रीणि चत्वारि वा ज्ञानानि पश्चात्कृतानि, व्यंजिते मतिश्रुतवान मतिश्रुतावधिमान् मतिश्रुतमनःपर्यायवान् वा सिध्यतीति। अवगाहनेति (२२२-१) आत्मनः शरीरेऽवगाहः-अनुप्रवेशः संकोचविकाशधर्म्मत्वादात्मनः, तच्छरीरं किंप्रमाणमिति चिंत्यते, अवगाहना चरमशरीरे,साऽवगाहना द्विधा-उत्कृष्टा जघन्या च, तत्रोत्कृष्टा पंचधनुःशतानि धनुःपृथक्त्वेनाधिकानि, द्विप्रभृत्या नवभ्यः पृथक्त्वसंज्ञा, एतच्चोत्कृष्टं देहमानं मरुदेवीप्रभृतीनां संभवति, तीर्थंकराणां पंचैव धनुःशतानि उत्कृष्टा,जघन्या च सप्तहस्ता तीर्थंकराणामेव,(द्विहस्ता) अङ्गुलपृथक्त्वोना,सामान्येन तु जघन्या द्विहस्तानामेव कूर्म्मापुत्रादीनामिति, तत्र पूर्वभावप्रज्ञापनीयस्य एतास्वेवावगाहनासु सिध्यति, प्रत्युत्पन्नभावप्रज्ञापनीयस्य तु यथास्वं पंचधनुःशतादिकासु तृतीयभागहीनासु सिध्यतीति। अंतरमिति (२२१-७) सिध्यतां जीवानामन्तरमनन्तरं च, तत्रान्तरमेको वर्त्तमानसमये सिद्धस्ततोऽन्यः कियता कालेन सेत्स्यतीति सिद्धिगमनशून्यः कालोऽन्तरमन्तरालमित्यर्थः, अनन्तरमन्तरव्यवच्छेदोऽनुसंततमित्यर्थः, तत्र नैरंतर्येण जघन्यतः सिद्ध्यति द्वौ समयौ उत्कृष्टानष्टौ समयानिति, ततः परं व्यवच्छेदः, अंतरं तु जघन्येनैकः समयः उत्कृष्टेन षण्मासाः सिध्यतः, सिद्ध्यतां व्यवच्छेदः कदाचिदेकस्मिन् समये द्वयोस्त्रिषु चेत्यादि यावत् षण्मासा इति। संख्येति (२२२-१०) एकस्मिन् समये कति सिध्यंति ?,उत्कृष्टेनाष्टोत्तरशतमिति। अल्पबहुत्वमेषामित्यादि (२२२-१४) क्षेत्रादीनां संख्यांतानामेकादशानामल्पबहुत्वं चिन्त्यते, जन्मतः संहरणतश्चेति, जन्मतः पंचदशसु कर्म्मभूमिषु, अकर्म्मभूमय-

ं‍स्मिन् हैमवताद्याः, तत्र संहरणं कर्म्मभूमिष्वकर्म्मभूमिषु वा, तत्र सर्वस्तोकाः संहरणसिद्धाः, अत एवासंख्येयगुणा जन्मतः सिद्धाः, संहरणं द्विविधमित्यादि गतार्थं, समभूतलाद्भूभागान्नवयोजनशतान्यारुह्य तत उपर्यूर्ध्वलोकः, अधोलोकोऽपि नवयोजनशतान्यवगाह्य परतः,अष्टादशयोजनशतपरिमाणो मध्ये तिर्यग्लोकः, भाष्यशेषं पठितसिद्धं, एवं क्षेत्रगतमल्पबहुत्वमभिधाय कालकृतमल्पबहुत्वं भण्यते–काल इति त्रिविधो विभागो भवतीत्यादि (२२३-५) सुज्ञानमेव भाष्यं, गतावल्पबहुत्वं चिंत्यते –तिर्यग्योन्यनन्तरगतिसिद्धा (२२३–१५) इति, तिर्यग्योनेरुद्वृत्य मनुष्यगतौ सिद्धस्तथा मनुष्यगतेरेवोद्वृत्य मनुष्येषूत्पद्य सिद्धाः, एवं शेषेष्वपि वाच्यं, लिंगमिति स्त्र्यादिकं, नपुंसकसिद्धाः स्तोकाः, स्त्रीसिद्धाः संख्येयगुणाः, पुंसिद्धाः संख्येयगुणा इति। (२२३–१८) तीर्थमित्यत्र (२२४–१) अल्पबहुत्वचिंता, तीर्थकरतीर्थे नोतीर्थकरसिद्धा अतीर्थकराः सन्तः सिद्धास्तीर्थकरसिद्धेभ्यः संख्येयगुणाः, ते नपुंसकादयोऽपि सर्वे संख्येयगुणाः तीर्थकरसिद्धेभ्यः, एवं चारित्रमित्यत्रापि तावेव द्वौ नयौ, चतुश्चारित्रसिद्धेषु द्वौ विकल्पौ त्रिचारित्रसिद्धेष्वपि द्वावेव, सर्वत्र संख्येयगुणत्वं, प्रत्येकबुद्धबोधित (२२४–१८) इत्यत्र सर्वस्तोकाः प्रत्येकबुद्धसिद्धाः, सर्वत्र संख्येयगुणत्वं। अवगाहनेत्यत्र (२२५–८) उत्कृष्टावगाहनासिद्धाः असंख्येयगुणाः, द्वावसंख्येयगुणौ द्वौ विशेषाधिकाविति। अन्तरमित्यत्राष्टासु समयेषु नैरन्तर्येण सिद्धाः अष्टसमयसिद्धाश्च तेऽनन्तरसिद्धाश्चेति समासः, एवं सप्त, सर्वेऽपि संख्येयगुणाः, सान्तरेष्वपीत्यादि, एकसमयान्तरसिद्धाः संख्येयगुणाः, [ यवमध्यं प्रायस्तपोऽनुष्ठानं तस्मिन् ] यवमध्यान्तरे च संख्येयगुणाः, अधस्ताद्यवमध्यान्तरे च संख्येयगुणाः। संख्येत्यत्र (२२५–१९) अष्टोत्तरसिद्धाः सर्वस्तोकाः, विपरीतक्रमादिति अष्टोत्तरशतात् सप्तोत्तरशतसिद्धा अनन्तगुणाः, एवं विपरीतहान्या यावत् पंचाशदित्यनन्तगुणाः,

विपरीतहानिर्यथेत्यादिना दर्शयति, सर्वस्तोका अनन्तगुणहानिसिद्धाः, प्रायः कर्म्मक्षयमाश्रित्य, असंख्येयगुणहानिसिद्धा अनन्तगुणाः, संख्येयगुणहानिसिद्धाः संख्येयगुणा इति ॥

एवमित्यादिना (२२६–४) मन्दबुद्ध्यनुग्रहार्थं सकलमेव तत्त्वार्थशास्त्रार्थं समासतः कथयति–विशुद्धं सम्यग्दर्शनमवाप्येत्येतस्य विशेषणानि निसर्गाधिगमादीनि,ज्ञानं च विशुद्धमधिगम्य सम्यग्दर्शनोपलंभात्,मिथ्यादर्शनारोपितमज्ञानमेव नियमतो मिथ्यादृष्टेः, सम्यक्त्वलाभात्तु विशुद्धं ज्ञानं, निक्षेपो नामादिः, प्रमाणे प्रत्यक्षपरोक्षे, नया नैगमादयः, तथा निर्देशस्वामित्वादिभिः सत्संख्याक्षेत्रादिभिश्च जीवादीनां तत्त्वानां च पारिणामिकादयो ये भावास्तेषां स्वरूपं विदित्वा धर्म्माधर्म्मादीनामनाद्यनन्तानां च पारिणामिकादीनां घनशरीरादीनामुत्पत्तिस्थितिविनाशवतामनुग्रहः–उपकारस्तत्कृतः प्रलयः–उपघात इत्येवमवगम्य तत्त्वज्ञो विरक्तः सांसारिकेभ्यो भावेभ्यः विगततृष्णो गुप्त्याद्यनुष्ठानात् फलदर्शनादिति निर्वाणमेव फलं तत्प्राप्तौ यतनया प्रयत्नात् अभिवर्द्धितश्रद्धासंवेगः पंचानां व्रतानां भावना ईर्यासमित्यादयस्ताभिर्भावितात्मा अनित्याद्यनुप्रेक्षाभिः स्थिरीकृतात्माऽनभिष्वंगो न क्वचिदाबद्धस्नेहः संवृतत्वादिभिः व्यपगताभिनवकर्म्मोपचयः, कर्म्मणां चानुभावतः सम्यग्दृष्ट्यादिगुणस्थानानां केवलिपर्यन्तानामसंख्येयगुणोत्कर्षप्राप्त्या पूर्वोपचितकर्म्मनिर्जरणात् सामायिकाद्युपालंभात् पुलाकादिस्थानानामैर्व्यपेतार्त्तरौद्रध्यानो धर्म्मध्यानविजयाभ्यासादवाप्ताद्यशुक्लध्यानद्वयस्य नानाविधा लब्धय उत्पद्यंते, स्वहस्तपादाद्यवयवपरामर्षमात्रेणैव सर्वरोगापनयनमामर्शौषधित्वं (२२७–४) तदीयमूत्रपुरीषावयवसम्पर्काच्छरीरनैरुज्यं विप्रुडौषधित्वं, तथा सर्व एव तदीयावयवा दुःखार्त्तानामौषधीभवंतीति सर्वौषधित्वं, अभिव्याहारसिद्धिर्वाङ्मात्रेणैव

शापदानसामर्थ्यं अनुग्रहकरणसामर्थ्यं वा, ईशत्वं सर्वभूतेश्वरत्वं, वशित्वं सर्वभूतानि वशवर्तीनि, तथाऽवधिज्ञानमनेकरूपं वैक्रियशरीरकरणं तदेव च दर्शयत्यणिमादिविशिष्टं, जंघाचारणत्वमग्निशिखाधूमादपि निःसृत्य व्योमनि गच्छेत्, मर्कटकतंतुः, अपरं वियद्गतिचारणत्वं निर्भिन्न एव विश्रब्धं भूमाविव व्योमनि गच्छेत्, यथा च शकुनिर्वियति प्रडीनमुपरिष्टात् गमनं अवडीनं अधस्तात्गमनं करोत्येवममावपि कुर्यात्, गच्छन् पर्वतभित्त्यादिभिरपि न प्रतिहन्यत इति अप्रतिघातित्वं अन्तर्द्धानं-अदृश्यत्वं युगपदनेकरूपित्वं कामरूपित्वं, तेजोलेश्यामोक्षणसामर्थ्यमादिग्रहणाच्छीतलेश्यानिसर्गशक्तिः मतिज्ञानविशुद्धिप्रकर्षाद्विषयाणां रूपादीनां देशप्रमाणनियमोल्लंघनेनापि ग्रहणं कुर्यात्, युगपदनेकविषयग्रहणं संभिन्नज्ञानत्वं, आदिग्रहणादिन्द्रियव्यत्यासेनापि विषयग्रहणसामर्थ्यं, मानसं मनोव्यापारजातं कोष्ठबुद्धित्वं यत्किंचित् पदवाक्यादि गृहीतं तन्न कदाचिन्नश्यतीति कोष्ठप्रक्षिप्तधान्यवद्, बीजबुद्धित्वं अल्पमपि प्रदर्शितं वस्तु अनेकेन प्रकारेण गमयति, तद्यथा-पदेन प्रदर्शितेन प्रकरणेन उद्देशकादिना वा सर्वमर्थं ग्रन्थं चानुधावति, परचित्तं जानाति, अभिलषितमर्थं प्राप्नोत्येव अनिष्टं च नैवाप्नोति, एवमादयोऽतिशयाः शुभानुभावादपरिमितास्तस्यामवस्थायां प्रादुष्षंतीति। वाचिकमपि अतिशयवच्चं तस्य क्षीरास्रवित्वं शृण्वतस्तदीयवचनं क्षीरमिव स्वदते, एवं मध्वास्रवित्वं, विद्वत्संसन्मध्येऽपराजितत्वं वादित्वं, सर्वेषां म्लेच्छमृगपशुपक्षिप्रभृतीनां स्वार्थज्ञानं, सर्वान् सत्वान् अबुद्धिकानपि विबोधयतीति सर्वसत्त्वावबोधनं, आदिग्रहणादिक्षुरसास्रवित्वादिग्रहणं, तथा विद्याः सर्वाः एव तस्य तदा स्वयमेवोपतिष्ठंते, आशीविषत्वं कर्म्मजातिभेदादनेकप्रकारं, भिन्नाक्षराणि किंचिन्न्यूनाक्षराणि चतुर्दश पूर्वाणि सम्पूर्णानि वा अभिन्नाक्षराणि वा तद्धारणत्वं,ननोऽस्येत्यादि।(२२८-१०) तेष्वतिशयेष्वसक्तस्यानुपतगार्द्धस्य मोह-

क्षपकरूपपरिणामावस्थस्येति अविरतसम्यग्दृष्ट्यादिस्थानवर्त्तिनो मोहक्षपणाभिमुखस्य श्रेण्या निरवशेषमोहक्षये सति ज्ञानावरणादिप्रहाणे च संसारबीजबंधनं मोहज्ञानावरणादि तेन निर्मुक्तः केवली भवति, ततश्च फलबन्धनं वेदनीयादिचतुष्कं तन्मोक्षणापेक्षस्तेनापि वेदनीयादिनाऽशेषबंधनेन निर्मुक्तो ध्यानाग्निनिर्दग्धपूर्वोपात्तकर्म्मेन्धनो निरिंधन इवाग्निः पूर्वोपात्तो भवः औदारिकादिकायस्तद्वियोगादुत्तरस्य च कायस्य हेत्वभावात् संसारे पुनरप्रादुर्भावाच्छान्तः परमाह्लादमुपगतः कारणापेक्षं सगासुरगतीत्य आत्यंतिकं साद्यपर्यवसानं एकांतिकं एकान्तेनैव भवति, न कदाचिन्न भवतीत्यर्थः, निरुपममिति नास्तीह किंचिदस्योपमानं तत्सदृशमिति, निरतिशयमिति नास्यातिशयः प्रकर्षापकर्षलक्षणो विद्यते, सर्वमुक्तानां तुल्यत्वात्, नित्यमिति ध्रुवं कूटस्थमविकारी निर्वाणसुखमवाप्नोतीति ॥

सत्कारार्हः सततं निरुत्सुको निर्भयो विशुद्धिमदः(यः)। निष्प्रणयो निर्द्वेषो निर्द्वन्द्वो नीरजातितनुः ॥१॥ संसाराग्निं निर्वाप्य दहंतं परमसौम्यसलिलेन। निर्वाति स्वात्मस्थो गतजातिजरामरणरोगः ॥२॥ व्याबाधाभावाच्च स सर्वज्ञत्वाच्च भवति परमसुखी। व्याबाधाभावो नु स्वस्थस्य ज्ञस्य ननु प्रसुख ॥३॥ अनुपमममेयमव्ययमनघं शिवमजरमरुजमभयतृपम्। एकान्तिकमात्यंतिकमव्याबाधं सुख ह्येतत् ॥४॥ त्रिष्वपि कालेषु सुखानि यानि तिर्यङ्मनुष्यदेवानाम्। सर्वाणि तानि न समानि तस्य मात्रासुखेनापि ॥५॥ तानि हि रागोद्रेकाद्व्याबाधापूर्वकाणि च सुखानि। न ह्यासीद् रागमपविध्य तत्र किंचित् सुखमपृक्तं ॥६॥ एवं क्षायिकसम्यक्त्ववीर्यसिद्धत्वदर्शनज्ञानैः। आत्यन्तिकः स युक्तो निर्द्वन्द्वेनापि च सुखेन ॥७॥ सम्प्रत्येनमेव शास्त्रार्थं श्लोकैरुपसंहरति, द्विर्बद्धं सुबद्धं भवतीति।

एवमित्यादि ॥१॥ उक्तनीत्या यानि जीवादीनि तत्त्वानि तत्परिज्ञानाद् विरक्तस्य विषयसुखवितृष्णस्य भव्यात्मनः स्वर्गि-

नाश्रवद्वारत्वाद्भि क्रियायामभिनवकर्म्मसन्ततौ कर्म्मसताने ॥ पूर्वेत्यादि ॥२॥ प्राक्तनं कर्म्म क्षपयतः तपोऽनुष्ठानादिभिः क्षयहेतुभिः संसारतरोर्बीज समस्तमेव मोहनीयं प्रहीयते क्षपकश्रेण्या ॥ तत इत्यादिना ॥३॥ अतराये ज्ञानदर्शनावरणयोश्च क्षीणयोर्युगपत् अशेषतः ॥ गर्भसूच्यामित्यादि ॥४॥ मस्तकशून्या धत्ताया सर्वात्मना विनाशमुपैति सकलस्तालतरुः, एवं मोहनीये क्षीणे शेषं कर्म्म क्षयमपि मर्व ॥ तत इत्यादि ॥५॥ क्षपितसकलघातिकर्म्मा यथाख्यातसंयममनुप्राप्तः बीजबंधनेन मोहनीयादिना विमुक्तः, स्नातकोऽन्तर्मलापगमात् परमेश्वरः केवलर्द्धिप्राप्तः ॥ शेष इत्यादि ॥६॥ वेदनीयादिकर्म्मफलापेक्षः शुद्धो मोहादिमलापगमाद् बुद्धः केवलज्ञानावाप्तेः निरामयो निर्गताशेषरोगनिदानः केवली भवति ॥ कृत्स्नेत्यादि ॥६॥ सकलकर्म्मनिर्मुक्तः ऊर्ध्वमेव निर्वाणमभिगच्छति, निर्वृत्तस्य स्थानमप्युपचारान्निर्वाणं, अथवा निर्वाणं निर्वृत्तत्वं सिद्धत्वं प्रक्षिप्तप्रदग्धेन्धनो वह्निरिव निर्दग्धकाष्ठाद्युपादानसन्तानः ॥ दग्ध इत्यादि ८॥ बीजेऽत्यन्तं भस्मसात्कृते नाङ्कुरस्य प्रादुर्भावः, एवं कर्म्मबीजे दग्धे संसाराङ्कुरस्याप्रादुर्भावः ॥ तदनन्तरेत्यादि ॥८॥ सकलकर्म्मक्षयसमनन्तरमालोकान्तादूर्ध्वं स गच्छति, कथं मुक्तस्य गतिरित्याशंकायामिदमाह–पूर्वप्रयोगादसंगत्वात् बन्धच्छेदात् ऊर्ध्वगौरवाच्च गतिरस्य सिद्धा भवति ॥ पूर्वप्रयोगस्योदाहरणानि दर्शयति—कुलालेत्यादि ॥९॥ पूर्वप्रयोगात् कर्म क्रिया यथा कुलालचक्रादिषु तथा सिद्धिगतिः स्मृता मृल्लेपेत्यादि ॥१०॥ अलाबुनोऽप्सून्मज्जनं यथा मृल्लेपसंगनिर्मोक्षात्, एवं कर्म्माष्टकसंगत्यागात् सिद्धिगतिः सिद्धा ॥ 'एरण्डे'त्यादि ॥१२॥ व्याघ्रपादबीजबंधनच्छेदाद्यंत्रबंधनच्छेदात् पेडाबंधनच्छेदाच्च गतिर्दृष्टा मिजाकालपेटापुटाना एवं कर्म्मबंधनविच्छेदात् सिद्धस्य गतिः ॥ ऊर्ध्वमित्यादि ॥१३॥ ऊर्ध्वगमनपरिणतिः एव गौरवं धर्मः–स्वभावो जीवाना, पुद्गलास्त्वधोगमनधर्माण इति सर्वज्ञवचनं ॥ यथेत्यादि ॥१३॥ यथाक्रममधोगमनादि लोष्टादीनां

रीनयो-गतयः स्वभावादेन जायते, तथोर्ध्वगतिरात्मनां ॥ अतस्तित्यादि ॥१४॥ अस्मादुक्तात् प्रकारात् यथा गतिवैकृत्यं यद्भवति गतेर्विकाररूपं तत् कर्म्मणः-क्रियायाः प्रतिघाताद्गिरिभित्त्यादिषु प्रयोगाच्च पुरुषेच्छानुविधानात् तदिष्यते सर्वं ॥ अध इत्यादि ॥१५॥ गर्वतोगतिर्जीवानामधः तिर्यगूर्ध्वं च कर्मना गतिः, क्षीणकर्म्मणा ऊर्ध्वमेव गतिः तद्धर्मा सा स्वाभाविकी गतिर्धर्मो येषामिति ॥ द्रव्यस्येत्यादि, द्रव्यस्य परमाण्वादेः कर्म्मणः-क्रियाया यथा उत्पत्तिरारम्भो गतिश्च समं युगपत् तथा सिद्धस्य गतिमोक्षभव क्षया गतिमुक्तिः स्यात्मन्यत्स्थानं जन्मक्षयः संसारक्षयो वेति ॥ उत्पत्तिरित्यादि ॥१७॥ प्रकाशतमसोर्यथा युगपदुत्पत्तिविनाशौ यस्मिन् काले प्रकाश उत्पद्यते तस्मिन्नेव काले तमसो विनाश इति युगपद्, एवं निर्वाणं कर्म्मक्षयश्चेत्येक एव कालः। तथाऽन्यत्राप्युक्तं "सत्यं बंधनमोक्षादूर्ध्वं जीवः प्रवेगतो याति। नन्वेरण्डकबीज बन्धनमुक्तं व्रजत्यूर्ध्वं ॥१८॥ संगत्यागाद्वा लघुरात्मा भूत्वा स उत्पतत्यूर्ध्वं। ननु गतलेपाऽलाबूर्थ्याति जले निमग्नापि ॥२॥ ध्यानेन तथा चात्मा प्रयोजितो येन स व्रजत्यूर्ध्वं। तिष्ठासुरपि न शक्तः प्रवेगितो ननु न च स्थातुं ॥३॥ अपि चाग्नेरिव गमनं स्वाभाविकमूर्ध्वमात्मनस्तस्य। आत्माग्निशिखाया गतिरन्या कर्म्मानिलवशाद्धि ॥४॥ स्वनशम्यानभिसंधेश्च तस्य न च विग्रहा गतिर्भवति। भवति हि विग्रहगमनं कर्म्मवशस्यार्थिनश्चेह ॥४॥ अपि चान्यश्रेणिगतिर्जीवाना चैव पुद्गलाना च। स्वाभाविकीष्यते येन तेन साऽविग्रहा सिद्धा ॥५॥ सिद्धस्य गतिरयुक्ता स्ववशत्वान्निष्प्रयोजनत्वाच्च। नासिद्धता च युक्ता कर्म्मविमुक्तस्य निष्पततः ॥६॥ बन्धविमोक्षात् सगत्यागात् पूर्वप्रयोगतो नापि। ननु गच्छतोऽन्यवशता न च मुक्तोऽभीष्यते विवशः ॥८॥ इत्येव विप्रलापोऽस्पृष्टगतौ नान्तराऽस्ति यत् कालः। सत्यां हि मोत्तरावस्थाया स्यात् सिद्ध इतरो वा ॥९॥ सोऽस्पृष्टया हि गत्याऽनन्तरमेव समये जगच्छिखर। अवगाहतेतरां तेन नास्ति ननु भो व्रजत्कालः ॥१०॥ सिद्ध्यति गत्वा

त्वात्मा सिद्धिक्षेत्रे प्रहाय देहमिह। न ह्यन्तराऽस्ति सिद्धिर्नासिद्धिश्चास्ति मुक्तस्य ॥११॥ स्ववशस्यानभिसंधेः कृतकृत्यस्य च यथा स्वभावेन। तस्योपयोग इष्टः तथा गतिः सा स्वभावेन ॥१२॥—

अथ यस्याः पृथिव्या उपरि मुक्तानामवस्थानं सा किंस्वरूपेत्याह–तन्वीत्यादि, मध्ये योजनाष्टकबहला प्रदेशपरिहान्या चोपर्युपरिमक्षिकापत्रात् तनुता पर्यंतेऽतितन्वी मनोज्ञेति अत्यन्तरुचिरा सुरभिरिष्टगंधा पुण्यवद्भिः पृथिवीकायिकैर्निर्वर्त्तिता पुण्या भृशं भासनशीला प्राग्भारेति नाम तस्याः, सा च लोकमूर्ध्नि व्यवस्थिता ॥१९॥ नृलोकेत्यादि, नृलोकेऽर्धतृतीया द्वीपा मानुषोत्तरमहीधरपरिक्षिप्ताः तत्तुल्यविष्कम्भा, पंचचत्वारिंशद्योजनलक्षविस्तरेत्यर्थः,उत्तानीकृतसितच्छत्रकाकृतिः शुभरूपाद्यात्मिका शुभा तस्याः क्षितेरुपरि लोकान्तस्पृशां सिद्धानामवस्थानं ॥२०॥ 'तादात्म्ये'त्यादि, स आत्मा–स्वभावो येषां ते तदात्मानस्तद्भावस्तादात्म्यं तस्मात्–केवलज्ञानदर्शनस्वभावाद् आत्मनैवोपयुक्ताः क्षायिकसम्यक्त्वसिद्धत्वावस्थाः, हेत्वभावाच्च निष्क्रियाः, क्रियापरिणामं प्रति न किंचित्तेषामस्ति निमित्तमिति ॥२१॥ ततोऽप्यूर्ध्वमित्यादि, लोकान्तात् परतोऽपि गतिस्तेषां कस्मान्न भवतीति चेत् गतेर्हेतुर्धर्मास्तिकायः परं प्रधानमपेक्षाकारणं, तदभावान्न परतो गतिः ॥२२॥ संसारेत्यादि, संसारविषयमतीतं मुक्तानां सुखमव्ययत्वाद्विगतव्याबाधं च परमं–प्रकृष्टं परमर्षिभिस्तीर्थकरादिभिरभिहितं ॥२३॥ स्यादेतदित्यादि, नष्टाष्टकर्म्मणो विगतयोगत्रयस्य कथमकरणस्य सुखसंभव इत्यत्र मे शृणु ॥२४॥ लोक इत्यादि, प्रतीतिं दर्शयति, सुखो विषयः शब्दादिः तथा दुःखवेदनायाश्चाभावे कर्म्मविपाके च सद्वेदनीयादिके तथा सकलकर्म्मक्षयलक्षणे च मोक्षे ॥२५॥ सुखो वह्निरित्यादि,उदाहरणानि यथाक्रमं दर्शयति ॥२६॥ पुण्यकर्म्मेत्यादि, गतार्थावेव श्लोकौ ॥२७॥ सुस्वप्नेत्यादि, शोभनेन स्वापेन सुखनिद्रया

सुप्तादिच्छंति निर्वृतिं, तदेतदयुक्तं, योगवच्चात्तथ्यसुखानुशयाच्च, अनुशयप्रकर्षापकर्षत्वं ॥२८॥ श्रमेत्यादि, श्रमः खेदः क्लमो ग्लानिः मदो मद्यपानादिजनितः व्याधिः ज्वरादिः मदनः कामासेवनमेभ्यश्च सुस्वापसुप्तत्वस्य संभवात् रत्यरतिभयशोकादिर्मोहस्तस्मात् सुसुप्तत्वसंभवः दर्शनघ्नं दर्शनावरणं कर्म्म तस्य विपाकादुदयात् सुस्वप्नमिति,न चैतानि कारणानि मुक्तात्मनां संभवंति ॥२९॥ लोक इत्यादि, मोक्षसुखसदृशोऽर्थः सकलेऽपि लोके न क्वचिदस्ति ततोऽनुपमं तत् ॥३०॥ लिंगेत्यादि, नाप्युपमानं तत्र क्रमते, सादृश्याभावात्, सादृश्याख्यं लिंगं नास्ति मोक्षसुखस्य, नाप्यनुमानस्य मुक्तसुखं गोचरीभवति, यस्मात्तस्य प्रामाण्यं लिङ्गप्रसिद्धेः कारणात् ,पक्षधर्मान्वयव्यतिरेकवल्लिंगं,न चास्ति तादृग् मोक्षसुखप्रतिपत्तावित्यतो नाप्यनुमेयं॥३१॥ प्रत्यक्षमित्यादि, अर्हतां सर्वज्ञानामेव तत् प्रत्यक्षं, प्रत्यक्षीकृत्य च तैर्यथावद्भाषितं, व्यपेतरागद्वेषमोहैः श्रद्धेयवाक्यैः सर्वज्ञैरेवैतदाख्यातं, अतः सर्वज्ञप्रणीतागमप्रामाण्यात्तदस्तीति गृह्यते, प्रज्ञासामर्थ्यान्न छद्मस्थपरीक्षया आगमव्यतिरिक्तैः प्रमाणैः, छद्मस्थप्रत्यक्षादिभिः परीक्ष्यमाणं न जातुचिदुपलभ्यत इति॥३२॥एवमनुपममव्याबाधं शाश्वतं स्वाभाविकं मुक्तिसुखमनुभवति क्षपितसकलकर्म्मजालः॥

यः पुनरधुना दुःखबहुलं संसारमवेक्ष्य तन्निःसरणकृतप्रयत्नः सम्यग्दर्शनज्ञानचरणसंपन्नो भिक्षुर्मोक्षाय घटमानो मोक्षार्थं कृतोत्साहो दुष्षमाकालदोषात् परिपेलवकीलिकासेवार्त्तसंहननदोषादनेकापायाल्पायुर्दोषाच्चाल्पशक्तिरतीव स्तोकवीर्यः कर्म्मणां च मोहनीयादीनामतिगुरुत्वादिनि तीव्रानुभावात् अकृतार्थ एव अक्षपितकर्माष्टक एवोपसरते कालं करोति, स खलु उपचितशुभराशिः सौधर्मादीनां द्वादशानां कल्पानां विमानानां च सर्वार्थसिद्धान्तानामन्यतस्मिन् कल्पे विमाने देवत्वायोपपद्यते,तत्र सौधर्मादिषु कल्पेषु विमानेषु वा सुकृतं कर्म्म पुण्यं तस्य फलं विपाकमनुभूयायुषः स्थितिक्षयात् प्रच्युतो

मगधाद्यार्यदेशे क्षत्रियादिमनुष्यजाति।इक्ष्वाकुकुलादिषु शीलवत्सु सद्गेहेषु विद्या मुक्त्यनुगुणं ज्ञानं विनयोऽभ्युत्थानादिः विभवो धनधान्यद्रविणसंपत् विषयाः शब्दादयः सर्वेषामेवैषां विस्तरः प्राचुर्यं विस्तर एव विभूतिः तद्युक्तेषु मनुष्येषु प्रत्यायाति त्रिसप्तजन्म समधिगम्य पुनः सम्यग्दर्शनादिविशुद्धं बोधिमवाप्नोतीति,ज्ञानचरणे बोधिशब्दवाच्ये ते समवाप्नोतीत्यर्थः। अनेनोक्तलक्षणेन कुशलाभ्यासानुबंधक्रमेण सुखपरम्परायुक्तेन परं प्रकर्षतस्त्रिर्जनित्वा मनुष्यो देवः पुनर्मनुष्य इत्येवं त्रीणि जन्मानि समवाप्य सम्यक्त्वज्ञानलाभादाहितसंवरस्तपसा क्षपितसमस्तकर्म्मराशिः सिद्ध्यति सिद्धिक्षेत्रे इति ॥ उक्तं च–एवं संवरवर्मा पिनद्ध सम्यक्त्ववाहमधिरूढः। सज्ज्ञानमहाचापो ध्यानादिशरःसितपृषत्कैः ॥१॥ संयमरणाजिरस्थं क्लेशचमूं संविधूय भव्यात्मा। कर्मनृपं परिहत्यापवर्गराज्यश्रियं लभते ॥२॥ एवं कर्म्मोदयजैर्भावैः कर्म्मक्षयोपशमजैश्च। संसारसुखाचाहंन् सिद्धिं कर्म्मक्षयादेव ॥३॥ ज्ञानं सुमार्गदीपं तत्सम्यक्त्वं तदविप्रणाशाय। चारित्रमाश्रवघ्नं क्षपयति कर्म्माणि तु तपोऽग्निः॥४॥ एतेन भवति सिद्धिः सिद्धसंगचतुष्टयेन जिनवचने। न तु संवररहितस्य च सा स्यान्न ज्ञानमात्रेण ॥५॥ इत्येकान्तमसैकद्वीपं विविधं झषैकपातालं। अष्टग्राहं द्विग्यं चतुर्गवर्तं चतुष्फलं ॥६॥ त्रिमहावर्तं त्र्युदयं षड्वेगं चतुरशीतिनियतोर्म्मिं। संसारार्णवमात्मा नावा चतुरंगयोत्तरति ॥७॥

सम्प्रति वाचको निजाचार्यान्वयं द्विप्रकारमप्यावेदयते, तत्रायं प्रव्राजकान्वयः–शिवश्रीर्नामवाचकः पितामहः संग्रहकारस्य, तस्य शिष्यो घोषनंदिक्षमणस्तस्यायं संग्रहकारः शिष्यः, सम्प्रति वाचनाचार्यान्वयो–मुंडपादो नाम महावाचकः क्षमणः सोऽस्य पितामहः संग्रहकारस्य, तस्य शिष्यो मूलनामा वाचकः, तस्यायं संग्रहकारकः शिष्यः। सम्प्रत्यात्मीयजन्मान्वयस्थानगोत्रे–न्यग्रोधिका नाम ग्रामस्तत्र जातेन पाटलिपुत्रे कुसुमपुरनाम्नि विहरता कौभीषणिनेति गोत्राह्वानं स्वातितनये-

नेति पितुराख्यानं, वात्सीसुतेनेति गोत्रेण नाम्ना उमेति मातुराख्यानं, सम्प्रदायाविच्छेदनाय तमर्हद्वचनं सम्यगवधार्य शारीरैः मानसैश्च दुःखैरार्त्तं दुरागमैरैहिकसुखोपदेशप्रायस्त्रयीप्रभृतिभिः प्रमाणविपहनायामक्षमैर्विहतमतिं हतविज्ञानमवलोक्य लोकमुच्चैर्नागरवाचकेनेति स्वशाखासूचकं तत्त्वार्थाधिगमाख्यं शास्त्रं भव्यसत्त्वानुकंपया विरचितं स्फुटार्थं उमास्वातिनेति॥ तदेतच्छास्त्रं जीवतत्त्वार्थाधिगमार्थं योऽवभोत्स्यते सूत्रतोऽर्थतश्चानुष्ठास्यति तत्रोक्तं सोऽव्याबाधसुखलक्षणमनन्तमनुपमं परमार्थं मोक्षमचिरेण प्राप्स्यतीति॥ इति श्रीतत्त्वार्थटीकायां दशमोऽध्यायः संपूर्णः॥

इत्याचार्यहरिभद्रप्रारब्धायां यशोभद्रसूरिशिष्यनिर्वाहितायां तत्त्वार्थटीकायां दशमोऽध्यायः समाप्तः

॥ समाप्ता लघ्वी तत्त्वार्थटीका ॥



अर्हम्

वाचकाग्रणीश्रीमदुमास्वातिवाचकविहितं स्वोपज्ञभाष्ययुतं

# श्रीतत्त्वार्थसूत्रम्।

प्रकाशयित्री–श्रीरत्नपुरीय (रतलाम) श्रेष्ठि ऋषभदेवजीकेशरीमलजीजैनश्वेतांबरसंस्था.

इदं पुस्तकं 'मोहनलाल मगनलाल बदामी' इत्यनेन स्वकीये श्री जैनानंद प्रिं. प्रेस (दरीयामहेल सुरत.) इति मुद्रणालये मुद्रितं.

वीर संवत् २४६२
विक्रम संवत् १९९२

पण्यम् १–०–०

क्राइष्ट सन् १९३६
प्रतयः ७००

# भाष्यानुक्रमः



इति प्रथमोऽध्यायः



इति द्वितीयोऽध्यायः

इति सप्तमोऽध्यायः



इत्यष्टमोऽध्यायः





इति नवमोऽध्यायः





इति दशमोऽध्यायः



# जैनानन्दपुस्तकालये विक्रेयपुस्तकानि

| | | | | | |
|---|---|---|---|---|---|
| त्रिषष्टीपदेशनासंग्रहः ... | ०-८-० | नंदिआदिअकारादि, विषयानुक्रम | १-८-० | तत्त्वतरंगिणी ... | ०-८-० |
| दशवैकालिकचूर्णिः ... ... | ४-०-० | विचाररत्नाकरः ... ... | २-४-० | बृहत्सिद्धप्रभाव्याकरणं | २-८-० |
| उत्तराध्ययनचूर्णिः ... ... | ३-८-० | वंदारुवृत्तिः ... ... | १-४-० | आचारांगसूत्रवृत्तिः (लेजर) | ७-०-० |
| परिणाममाला (लेजर) ... | ०-१२-० | पयरणसंदोहो ... ... | ०-१२-० | भगवतीजी दानशेखरसूरिटीका | ५-०-० |
| ३५०, १५०, १२५ स्तवनानि | ०-८-० | अहिंसाष्टकः सर्वज्ञसिद्धि ऐन्द्रस्तुति | ०-८-० | पुष्पमाला मलधारीयहेमचंद्रकृत | ६-०-० |
| प्रवचनसारोद्धारः (संपूर्णः)... | ६-०-० | अनुयोगचूर्णिहारिभद्रीयवृत्तिश्च | १-१२-० | तत्त्वार्थहारिभद्रीयटीका सभाष्य | ६-०-० |
| पंचाशकादिशास्त्राष्टकं ... ... | ३-०-० | नंदीचूर्णिहारिभद्रीयवृत्तिः गाथाश्च | १-४-० | कल्पकौमुदी | यंत्रे |
| पंचाशकादिदशअकारादिक्रमः | ३-०-० | नवपदप्रकरणबृहद्वृत्तिः ... | ३-०-० | यतिदिनचर्या | ,, |
| ज्योतिष्करंडकटीका ... ... | ३-०-० | बारसा सूत्र (सचित्र) | १२-०-० | विचारामृतसंग्रह | ,, |
| पंचवस्तुः स्वोपज्ञटीकायुक्तः | २-४-० | ऋषिभाषितानि ... ... | ०-२-० | मध्यमसिद्धप्रभा (व्याकरण) | ०-८-० |
| द्रव्यलोकप्रकाशः ... ... | २-०-० | प्रव्रज्याविधानकुलकादि ... | ०-३-० | भाष्य ... ... | १-०-० |
| क्षेत्रलोकप्रकाशः ... ... | २-८-० | प्रत्याख्यान विशेषणवती वीशवीशी | १-८-० | भवभावनावृत्ति (पू. हेमचंद्रसूरि) | प्रेसमां |
| युक्तिप्रबोधः स्वोपज्ञः ... ... | १-८-० | विशेषावश्यकगाथानुक्रमादि | ०-३-० | विशेषावश्यक पयुपणादशशतकं | |
| दशपयन्ना छायायुक्त ... ... | १-८-० | ललितविस्तरा ... ... | ०-१०-० | (कोटयाचार्य कृतटीका) | ,, |

प्राप्तिस्थानं जैनानन्द पुस्तकालय गोपीपुरा, सुरत.

# वाचकाग्रणीश्रीउमास्वातिवाचकविहितं स्वोपज्ञभाष्ययुतं

## ॥ तत्त्वार्थाधिगमसूत्रम् ॥



॥ ॐ ॥

सम्यग्दर्शनशुद्धं यो ज्ञानं विरतिमेव चाप्नोति । दुःखनिमि-
त्तमपीदं तेन सुलब्धं भवति जन्म ॥१॥ जन्मनि कर्मक्लेशैरनुब-
द्धेऽस्मिंस्तथा प्रयतितव्यम् । कर्मक्लेशाभावो यथा भवत्येष परमार्थः
॥२॥ परमार्थलाभे वा दोषेष्वारम्भकस्वभावेषु ।कुशलानुबन्धमेव
स्यादनवद्यं यथा कर्म ॥३॥ कर्माहितमिह चामुत्र चाधमतमो नरः
समारभते । इहफलमेव त्वधमो विमध्यमस्तूभयफलार्थम् ॥४॥
परलोकहितायैव प्रवर्तते मध्यमः क्रियासु सदा । मोक्षायैव तु घटते
विशिष्टमतिरुत्तमः पुरुषः ॥५॥ यस्तु कृतार्थोऽप्युत्तममवाप्य धर्मं
परेभ्य उपदिशति । नित्यं स उत्तमेभ्योऽप्युत्तम इति पूज्यतम
एव ॥६॥ तस्मादर्हति पूजामर्हन्नेवोत्तमोत्तमो लोके । देवर्षिनरे-
न्द्रेभ्यः पूज्येभ्योऽप्यन्यसत्त्वानाम् ॥७॥ अभ्यर्चनादर्हे(रुह)तां
मनःप्रसादस्ततः समाधिश्च । तस्मादपि निःश्रेयसमतो हि तत्पूजनं
न्याय्यम् ॥८॥ तीर्थप्रवर्तनफलं यत् प्रोक्तं कर्म तीर्थकरनाम ।
तस्योदयात्कृतार्थोऽप्यर्हंस्तीर्थं प्रवर्तयति ॥९॥ तत्स्वाभाव्यादेव

प्रकाशयति भास्करो यथा लोकम्। तीर्थप्रवर्तनाय प्रवर्तते तीर्थकर एवम् ॥१०॥ यः शुभकर्मासेवनभावितभावो भवेष्वनेकेषु। जज्ञे ज्ञातेक्ष्वाकुषु सिद्धार्थनरेन्द्रकुलदीपः ॥११॥ ज्ञानैः पूर्वाधिगतैरप्रतिपतितैर्मतिश्रुतावधिभिः। त्रिभिरपि शुद्धैर्युक्तः शैत्यद्युतिकान्तिभिरिवेन्दुः ॥१२॥ शुभसारसत्त्वसंहननवीर्यमाहात्म्यरूपगुणयुक्तः। जगति महावीर इति त्रिदशैर्गुणतः कृताभिख्यः ॥१३॥ स्वयमेव बुद्धतत्त्वः सत्त्वहिताभ्युद्यताचलितसत्त्वः। अभिनन्दितशुभसत्त्वः सेन्द्रैर्लोकान्तिकैर्देवैः ॥१४॥ जन्मजरामरणार्त्तं जगदशरणमभिसमीक्ष्य निःसारम्। स्फीतमपहाय राज्यं शमाय धीमान् प्रवव्राज ॥ १५ ॥ प्रतिपद्याशुभशमनं निःश्रेयससाधकं श्रमणलिङ्गम्। कृतसामायिककर्मा व्रतानि विधिवत्समारोप्य ॥१६॥ सम्यक्त्वज्ञानचारित्रसंवरतपःसमाधिबलयुक्तः। मोहादीनि निहत्याशुभानि चत्वारि कर्माणि ॥१७॥ केवलमधिगम्य विभुः स्वयमेव ज्ञानदर्शनमनन्तम्। लोकहिताय कृतार्थोऽपि देशयामास तीर्थमिदम् ॥१८॥ द्विविधमनेकद्वादशविधं महाविषयममितगमयुक्तम्। संसारार्णवपारगमनाय दुःखक्षयायालम् ॥१९॥ ग्रन्थार्थवचनपटुभिः प्रयत्नवद्भिरपि वादिभिर्निपुणैः। अनभिभवनीयमन्यैर्भास्कर इव सर्वतेजोभिः ॥२०॥ कृत्वा त्रिकरणशुद्धं तस्मै परमर्षये नमस्कारम्। पूज्यतमाय भगवते वीराय विलीनमोहाय ॥२१॥ तत्त्वार्थाधिगमाख्यं बह्वर्थं संग्रहं लघुग्रन्थम्। वक्ष्यामि शिष्यहितमिममर्हद्वचनैकदेशस्य ॥ २२ ॥ महतोऽतिमहाविषयस्य दुर्गमग्रन्थभाष्यपारस्य। कः शक्तः प्रत्यासं जिनवचनमहोदधेः कर्तुम्? ॥२३॥ शिरसा गिरिं बिभित्सेदुच्चिक्षिप्सेच्च स क्षितिं दोर्भ्याम्। प्रतितीर्षेच्च समुद्रं मित्सेच्च पुनः कुशाग्रेण ॥२४॥ व्योम्नीन्दुं चिक्रमिषेन्मेरुगिरिं पाणिना चिकम्पयिषेत्। गत्याऽनिलं जिगीषेच्चरमसमुद्रं पिपासेच्च ॥२५॥ (नेयं व्याख्याता हरिभद्रीयवृत्तौ) खद्योतकप्रभाभिः सोऽभिबुभूषेच्च भास्करं मोहात्। योऽतिमहाग्रन्थार्थं जिनवचनं संजिघृक्षेत ॥२६॥ (शिरसेत्यादि खद्योत-

केत्यादि चार्याद्वयमन्यकर्त्तमिति हारि०) एकमपि तु जिनवचना-द्यस्मान्निर्वाहकं पदं भवति। श्रूयन्ते चानन्ताः सामायिकमात्रपदसिद्धाः ॥२७॥ तस्मात्तत्प्रामाण्यात् समासतो व्यासतश्च जिनवचनम्। श्रेय इति निर्विचारं ग्राह्यं धार्यं च वाच्यं च ॥२८॥ न भवति धर्मः श्रोतुः सर्वस्यैकान्ततो हितश्रवणात्। ब्रुवतोऽनुग्रहबुद्ध्या वक्तुस्त्वेकान्ततो भवति ॥२९॥ श्रममविचिन्त्यात्मगतं तस्माच्छ्रेयः सदोपदेष्टव्यम्। आत्मानं च परं च हि हितोपदेष्टाऽनुगृह्णाति ॥३०॥ नर्ते च मोक्षमार्गाद्धितोपदेशोऽस्ति जगति कृत्स्नेऽस्मिन्। तस्मात्परमिद(मय)मेवेति मोक्षमार्गं प्रवक्ष्यामि ॥३१॥

॥ इति सम्बन्धकारिकाः समाप्ताः ॥

## प्रथमोऽध्यायः।

सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः ॥१॥

सम्यग्दर्शनं सम्यग्ज्ञानं सम्यक्चारित्रमित्येष त्रिविधो मोक्षमार्गः, तं पुरस्ताल्लक्षणतो विधानतश्च विस्तरेणोपदेक्ष्यामः। शास्त्रानुपूर्वीविन्यासार्थं तूद्देशमात्रमिदमुच्यते। एतानि च समस्तानि मोक्षसाधनानि, एकतराभावेऽप्यसाधनानीत्यतस्त्रयाणां ग्रहणम्। एषां च पूर्वलाभे भजनीयमुत्तरं, उत्तरलाभे तु (लाभेऽपि ह.) नियतः पूर्वलाभः। तत्र सम्यगिति प्रशंसार्थो निपातः, समञ्चतेर्वा भावः (भावे ह०)। दर्शनमिति दृशेरव्यभिचारिणी सर्वेन्द्रियानिन्द्रियार्थप्राप्तिः, एतत्सम्यग्दर्शनं, प्रशस्तं दर्शनं सम्यग्दर्शनं, संगतं वा दर्शनं सम्यग्दर्शनम्। एवं ज्ञानचारित्रयोरपि ॥

तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् ॥२॥

तत्त्वानामर्थानां श्रद्धानं तत्त्वेन वाऽर्थानां श्रद्धानं तत्त्वार्थश्र-

द्धानं तत् सम्यग्दर्शनम्, तत्त्वेन भावतो निश्चितमित्यर्थः, तत्त्वानि जीवादीनि वक्ष्यन्ते, त एव चार्थास्तेषां श्रद्धानं- तेषु प्रत्ययावधारणम्। तदेवं प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याऽभिव्यक्तिलक्षणं तत्त्वार्थश्रद्धानं सम्यग्दर्शनमिति ॥

तन्निसर्गादधिगमाद्वा ॥३॥

तदेतत्सम्यग्दर्शनं द्विविधं भवति-निसर्गसम्यग्दर्शनमधिगमसम्यग्दर्शनं च, निसर्गादधिगमाद्वोत्पद्यत इति द्विहेतुकं द्विविधम् ॥ निसर्गः परिणामः स्वभावः अपरोपदेश इत्यनर्थान्तरम्। ज्ञानदर्शनोपयोगलक्षणो जीव इति वक्ष्यते। तस्यानादौ संसारे परिभ्रमतः कर्मत एव कर्मणः स्वकृतस्य बन्धनिकाचनोदयनिर्जरापेक्षं नारकतिर्यग्योनिमनुष्यामरभवग्रहणेषु विविधं पुण्यपापफलमनुभवतो ज्ञानदर्शनोपयोगस्वाभाव्यात् तानि तानि परिणामाध्यवसायस्थानान्तराणि गच्छतोऽनादिमिथ्यादृष्टेरपि सतः परिणामविशेषादपूर्वकरणं तादृग्भवति येनास्यानुपदेशात्सम्यग्दर्शनमुत्पद्यत इत्येतन्निसर्गसम्यग्दर्शनम् ॥ अधिगमः अभिगमः आगमो निमित्तं श्रवणं शिक्षा उपदेश इत्यनर्थान्तरम्, तदेवं परोपदेशाद्यत्तत्त्वार्थश्रद्धानं भवति तदधिगमसम्यग्दर्शनमिति ॥

अत्राह-तत्त्वार्थश्रद्धानं सम्यग्दर्शनमित्युक्तम्, तत्र किं तत्त्वमिति। अत्रोच्यते-

जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वम् ॥४॥

जीवा अजीवा आस्रवा बन्धः संवरो निर्जरा मोक्ष इत्येष सप्तविधोऽर्थस्तत्त्वम्। एते वा सप्त पदार्थास्तत्त्वानि। तांल्लक्षणतो विधानतश्च पुरस्ताद्विस्तरेणोपदेक्ष्यामः ॥

नामस्थापनाद्रव्यभावतस्तन्न्यासः ॥५॥

एभिर्नामादिभिश्चतुर्भिरनुयोगद्वारैस्तेषां जीवादीनां तत्त्वानां न्यासो भवति। विस्तरेण लक्षणतो विधानतश्चाधिगमार्थं न्यासो, निक्षेप इत्यर्थः, तद्यथा-नामजीवः स्थापनाजीवो द्रव्यजीवो भावजीव इति। नाम संज्ञा कर्म इत्यनर्थान्तरम्, चेतनावतोऽचेतनस्य

वा द्रव्यस्य जीव इति नाम क्रियते स नामजीवः । यः काष्ठपुस्तचित्रकर्माक्षनिक्षेपादिषु स्थाप्यते जीव इति स स्थापनाजीवो, देवताप्रतिकृतिवद्, इन्द्रो रुद्रः स्कन्दो विष्णुरिति। द्रव्यजीव इति गुणपर्यायवियुक्तः प्रज्ञास्थापितोऽनादिपारिणामिकभावयुक्तो जीव उच्यते, अथवा शून्योऽयं भङ्ग', यस्य ह्यजीवस्य सतो भव्यं जीवत्वं स्यात् स द्रव्यजीवः स्याद्, अनिष्टं चैतत्। भावतो जीवा औपशमिकक्षायिकक्षायोपशमिकौदयिकपारिणामिकभावयुक्ताः, उपयोगलक्षणाः संसारिणो मुक्ताश्च द्विविधा वक्ष्यन्ते ॥ एवमजीवादिषु सर्वेष्वनुगन्तव्यम् ॥

पर्यायान्तरेणापि नामद्रव्यं स्थापनाद्रव्यं द्रव्यद्रव्यं भावतो द्रव्यमिति। यस्य जीवस्य वा अजीवस्य वा नाम क्रियते द्रव्यमिति तन्नामद्रव्यम्। यत्काष्ठपुस्तचित्रकर्माक्षनिक्षेपादिषु स्थाप्यते द्रव्यमिति तत् स्थापनाद्रव्यं,देवताप्रतिकृतिवद्,इन्द्रो रुद्रः स्कन्दो विष्णुरिति। द्रव्यद्रव्यं नाम गुणपर्यायवियुक्तं प्रज्ञास्थापितं धर्मादीनामन्यतमत्, केचिदप्याहुः-यद् द्रव्यतो द्रव्यं भवति, तच्च पुद्गलद्रव्यमेवेति प्रत्येतव्यम्, अणवः स्कन्धाश्च, सङ्घातभेदेभ्य उत्पद्यन्त इति वक्ष्यामः। भावतो द्रव्याणि धर्मादीनि सगुणपर्यायाणि प्राप्तिलक्षणानि वक्ष्यन्ते,आगमतश्च प्राभृतज्ञो द्रव्यमिति भव्यमाह,द्रव्यं च भव्ये,भव्यमिति प्राप्यमाह,भू प्राप्तावात्मनेपदी, तदेवं प्राप्यन्ते प्राप्नुवन्ति वा द्रव्याणि॥ एवं सर्वेषामनादीनामादिमतां च जीवादीनां भावानां मोक्षान्तानां तत्त्वाधिगमार्थं न्यासः कार्य इति ॥

## प्रमाणनयैरधिगमः ॥ ६ ॥

एषां च जीवादीनां तत्त्वानां यथोद्दिष्टानां नामादिभिर्न्यस्तानां प्रमाणनयैर्विस्तराधिगमो भवति। तत्र प्रमाणं द्विविधं, परोक्षं प्रत्यक्षं च वक्ष्यते, चतुर्विधमित्येके, नयवादान्तरेण। नयाश्च नैगमादयो वक्ष्यन्ते ॥ किंचान्यत्—

निर्देशस्वामित्वसाधनाधिकरणस्थितिविधानतः॥ ७॥

एभिश्च निर्देशादिभिः षड्भिरनुयोगद्वारैः सर्वेषां भावानां जीवादीनां तत्त्वानां विकल्पशो विस्तरेणाधिगमो भवति, तद्यथा– निर्देशः–को जीवः ?, औपशमिकादिभावयुक्तो द्रव्यं जीवः, सम्यग्दर्शनपरीक्षायां किं सम्यग्दर्शनं ?, द्रव्य, सम्यग्दृष्टिर्जीवो-ऽरूपी नोस्कन्धो नोग्रामः। स्वामित्वं, कस्य सम्यग्दर्शनमिति, एतद् आत्मसंयोगेन परसंयोगेनोभयसंयोगेन चेति वाच्यम्, आत्मसंयोगेन जीवस्य सम्यग्दर्शनं, परसंयोगेन जीवस्याजीवस्य जीवयोरजीवयोर्जीवानामजीवानामिति विकल्पाः, उभयसंयोगेन जीवस्य नोजीवस्य जीवयोरजीवयोर्जीवानामजीवानामिति विकल्पा न सन्ति, शेषाः सन्ति। साधनं, सम्यग्दर्शनं केन भवति ?, निसर्गादधिगमाद्वा भवतीत्युक्तम्, तत्र निसर्गः पूर्वोक्तः, अधिगमस्तु सम्यग्व्यायामः, उभयमपि तदावरणीयस्य कर्मणः क्षयेणोपशमेन क्षयोपशमाभ्यामिति। अधिकरणं त्रिविधं–आत्मसन्निधानेन परसन्निधानेनोभयसन्निधानेनेति वाच्यम्, आत्मसन्निधानमभ्यन्तरसन्निधानमित्यर्थः, परसन्निधानं बाह्यसन्निधानमित्यर्थः, उभयसन्निधानं बाह्याभ्यन्तरसन्निधानमित्यर्थः, कस्मिन् सम्यग्दर्शनं ?, आत्मसन्निधाने तावत् जीवे सम्यग्दर्शनं जीवे ज्ञानं जीवे चारित्रमित्येतदादि, बाह्यसन्निधाने जीवे सम्यग्दर्शनं नोजीवे सम्यग्दर्शनमिति यथोक्ता विकल्पाः, उभयसन्निधाने चाप्यभूताः सद्भूताश्च यथोक्ताः भङ्गविकल्पा इति। स्थितिः, सम्यग्दर्शनं कियन्तं कालम् ?, सम्यग्दृष्टिर्द्विविधा–सादिः सपर्यवसाना सादिरपर्यवसाना च, सादि सपर्यवसानमेव च सम्यग्दर्शनम्, तज्जघन्येनान्तर्मुहूर्तं, उत्कृष्टेन षट्षष्टिः सागरोपमाणि साधिकानि, सम्यग्दृष्टिः सादिरपर्यवसाना, सयोगः शैलेशीप्राप्तश्च केवली सिद्धश्चेति। विधानं, हेतुत्रैविध्यात् क्षयादित्रिविधं सम्यग्दर्शनम्, तदावरणीयस्य कर्मणो दर्शनमोहस्य च क्षयादिभ्यः, तद्यथा–क्षयसम्यग्दर्शनं उपशमसम्यग्दर्शनं क्षयोपशमसम्यग्दर्शनमिति, अत्र चौपशमिकक्षायोपशमिकक्षायिकाणां परतः

परतो विशुद्धिप्रकर्षः ॥ किंचान्यत्—

सत्संख्याक्षेत्रस्पर्शनकालान्तरभावाल्पबहुत्वैश्च ॥८॥

सत् संख्या क्षेत्रं स्पर्शनं कालः अन्तरं भावः अल्पबहुत्व-मित्येतैश्च सद्भूतपदप्ररूपणादिभिरष्टाभिरनुयोगद्वारैः सर्वभावानां विकल्पशो विस्तराधिगमो भवति,कथमिति चेद्, उच्यते, सत्, सम्यग्दर्शनं किमस्ति नास्ति?,अस्तीत्युच्यते, क्वास्तीति चेदुच्यते —अजीवेषु तावन्नास्ति, जीवेषु तु भाज्यं, तद्यथा—गतीन्द्रियकाय-योगकषायवेदलेश्यासम्यक्त्वज्ञानदर्शनचारित्राहारोपयोगेषु त्रयो-दशस्वनुयोगद्वारेषु यथासम्भवं सद्भूतप्ररूपणा कर्तव्या। संख्या, कियत्सम्यग्दर्शनं?, किं संख्येयमसंख्येयमनन्तमिति ?, उच्यते, असंख्येयानि सम्यग्दर्शनानि, सम्यग्दृष्टयस्त्वनन्ताः। क्षेत्रम्, सम्यग्दर्शनं कियति क्षेत्रे ?, लोकस्यासंख्येयभागे। स्पर्शनम्, सम्यग्दर्शनेन किं स्पृष्टम् ?, लोकस्यासंख्येयभागः, सम्यग्दृष्टिना तु सर्वलोक इति। अत्राह—सम्यग्दृष्टिसम्यग्दर्शनयोः कः प्रतिवि-शेष इति,उच्यते,अपायसद्द्रव्यतया सम्यग्दर्शनम्,अपाय आभिनि-बोधिकं, तद्योगात्सम्यग्दर्शनं, तत् केवलिनो नास्ति, तस्मात् न केवली सम्यग्दर्शनी, सम्यग्दृष्टिस्तु भवति। कालः, सम्यग्दर्शनं कियन्तं कालमिति, अत्रोच्यते, तद् एकजीवेन नानाजीवैश्च परी-क्ष्यं, तद्यथा—एकजीवं प्रति जघन्येनान्तर्मुहूर्तं, उत्कृष्टेन षट्षष्टिः सागरोपमाणि साधिकानि, नानाजीवान् प्रति सर्वाद्धा। अन्त-रम्, सम्यग्दर्शनस्य को विरहकालः?, एकं जीवं प्रति जघ-न्येनान्तर्मुहूर्तं, उत्कृष्टेन उपार्धपुद्गलपरिवर्तः, नानाजीवान् प्रति नास्त्यन्तरम्। भावः, सम्यग्दर्शनमौपशमिकादीनां भावानां कतमो भावः?, उच्यते, औदयिकपारिणामिकवर्जं त्रिषु भावेषु भवति। अल्पबहुत्वम्, अत्राह—सम्यग्दर्शनानां त्रिषु भावेषु वर्तमानानां किं तुल्यसंख्यत्वमाहोस्विदल्पबहुत्वमस्तीति,उच्यते, सर्वस्तोकमौपशमिकं, ततः क्षायिकमसंख्येयगुणं, ततोऽपि क्षा-योपशमिकमसंख्येयगुणं, सम्यग्दृष्टयस्त्वनन्तगुणा इति। एवं

सर्वभावानां नामादिभिर्न्यासं कृत्वा प्रमाणादिभिरधिगमः कार्यः॥

उक्तं सम्यग्दर्शनम्, ज्ञानं वक्ष्यामः—

मतिश्रुतावधिमनःपर्यायकेवलानि ज्ञानम् ॥ ९ ॥

मतिज्ञानं श्रुतज्ञानं अवधिज्ञानं मनःपर्यायज्ञानं केवलज्ञानमित्येतत् मूलविधानतः पञ्चविधं ज्ञानं, प्रभेदास्त्वस्य पुरस्ताद्वक्ष्यन्ते ॥

तत्प्रमाणे ॥ १० ॥

तदेतत्पञ्चविधमपि ज्ञानं द्वे प्रमाणे भवतः,परोक्षं प्रत्यक्षं च॥

आद्ये परोक्षम् ॥ ११ ॥

आदौ भवमाद्यं, आद्ये सूत्रक्रमप्रामाण्यात् प्रथमद्वितीये शास्ति, तदेवमाद्ये मतिज्ञानश्रुतज्ञाने परोक्षं प्रमाणं भवतः, कुतः?, निमित्तापेक्षत्वात्,अपायसद्द्रव्यतया मतिज्ञानं, तदिन्द्रियानिन्द्रियनिमित्तमिति वक्ष्यते,तत्पूर्वकत्वात्परोपदेशजत्वाच्च श्रुतज्ञानम्॥

प्रत्यक्षमन्यत् ॥ १२ ॥

मतिश्रुताभ्यां यदन्यत् त्रिविधं ज्ञानं तत्प्रत्यक्षं प्रमाणं भवति। कुतः ?, अतीन्द्रियत्वात्, प्रमीयन्तेऽर्थास्तैरिति प्रमाणानि, अत्राह—इह अवधारितं 'द्वे एव प्रमाणे प्रत्यक्षपरोक्षे' इति, अनुमानोपमानागमार्थापत्तिसम्भवाभावानपि च प्रमाणानीति केचिन्मन्यन्ते 'तत्कथमेतदिति, अत्रोच्यते, सर्वाण्येतानि मतिश्रुतयोरन्तर्भूतानि, इन्द्रियार्थसन्निकर्षनिमित्तत्वात्, किंचान्यत्—अप्रमाणान्येव वा, कुतः ?, मिथ्यादर्शनपरिग्रहाद्विपरीतोपदेशाच्च, मिथ्यादृष्टेर्हि मतिश्रुतावधयो नियतमज्ञानमेवेति वक्ष्यते, नयवादान्तरेण तु यथा मतिश्रुतविकल्पजानि भवन्ति तथा परस्ताद्वक्ष्यामः॥ अत्राह—उक्तं भवता मत्यादीनि ज्ञानानि उद्दिश्य तानि विधानतो लक्षणतश्च परस्ताद् विस्तरेण वक्ष्याम इति, तदुच्यतामिति, अत्रोच्यते—

मतिः स्मृतिः संज्ञा चिन्ताऽभिनिबोध इत्यनर्थान्तरम् ॥ १३ ॥

आर्या म्लिशश्च ॥ १५ ॥

द्विविधा मनुष्या भवन्ति–आर्या म्लिशश्च ॥ तत्रार्याः षड्विधाः–क्षेत्रार्याः जात्यार्याः कुलार्याः कर्मार्याः शिल्पार्या भाषार्या इति, तत्र क्षेत्रार्याः पञ्चदशसु कर्मभूमिषु जाताः, तद्यथा–भरतेष्वर्धषड्विंशतिषु जनपदेषु जाताः, शेषेषु च चक्रवर्तिविजयेषु, जात्यार्या इक्ष्वाकवो विदेहा हरयोऽम्बष्ठाः ज्ञाताः कुरवो बुंबुनाला उग्रा भोगा राजन्या इत्येवमादयः, कुलार्याः कुलकराश्चक्रवर्तिनो बलदेवा वासुदेवा ये चान्ये आ तृतीयाद् आ पञ्चमाद् आ सप्तमाद्वा कुलकरेभ्यो वा विशुद्धान्वयप्रकृतयः, कर्मार्या यजनयाजनाध्ययनाध्यापनप्रयोगकृषिलिपिवाणिज्ययोनिपोषणवृत्तयः, शिल्पार्यास्तन्तुवायकुलालनापिततुन्नवायदेवटादयोऽल्पसावद्या अगर्हिताजीवाः, भाषार्या नाम ये शिष्टभाषानियतवर्णं लोकरूढस्पष्टशब्दं पञ्चविधानामप्यार्याणां (मार्याणां हा.) संव्यवहारं भाषन्ते। अतो विप(रतद्विप हा.)रीता म्लिशः, तद्यथा–हिमवतश्चतसृषु वि(तः प्राक् पश्चाच्च वि हा.)दिक्षु त्रीणि त्रीणि योजनशतानि लवणसमुद्रमवगाह्य चतसृणां मनुष्यविजातीनां चत्वारोऽन्तरद्वीपा भवन्ति त्रियोजनशतविष्कम्भाः, तद्यथा—एकोरुकाणामाभाषकाणां लाङ्गूलिकानां वैषाणिकानामिति। चत्वारि योजनशतान्यवगाह्य चतुर्योजनशतायामविष्कम्भा एवान्तरद्वीपाः, तद्यथा–हयकर्णानां गजकर्णानां गोकर्णानां शष्कुलीकर्णानामिति। पञ्च शतान्यवगाह्य पञ्चयोजनशतायामविष्कम्भा एवान्तरद्वीपाः, तद्यथा–गजमुखानां व्याघ्रमुखानामादर्शमुखानां गोमुखानामिति। षड् योजनशतान्यवगाह्य तावदायामविष्कम्भा एवान्तरद्वीपाः, तद्यथा–अश्वमुखानां हस्तिमुखानां सिंहमुखानां व्याघ्रमुखानामिति। सप्त योजनशतान्यवगाह्य तावदायामविष्कम्भा एवान्तरद्वीपाः, तद्यथा–अश्वकर्णसिंहकर्णहस्तिकर्णकर्णप्रावरणनामानः। अष्टौ योजनशतान्यवगाह्याष्टयोजनशतायामविष्कम्भा एवान्तरद्वीपाः, तद्यथा–उल्कामुखविद्युज्जिह्वमेघमुखविद्युद्दन्तनामानः, नव

योजनशतान्यवगाढा नवयोजनशतायामविष्कम्भा एवान्तरद्वीपा भवन्ति, तद्यथा-घनदन्तगूढदन्तविशिष्टदन्तशुद्धदन्तनामानः । एकोरुकाणामेकोरुकद्वीपः, एवं शेषाणामपि स्वनामभिस्तुल्यनामानो वेदितव्याः । शिखरिणोऽप्येवमेवेत्येवं षट्पञ्चाशदिति ॥

भरतैरावतविदेहाः कर्मभूमयोऽन्यत्र देवकुरूत्तरकुरुभ्यः ॥ १६ ॥

मनुष्यक्षेत्रे भरतैरावतविदेहाः पञ्चदश कर्मभूमयो भवन्ति अन्यत्र देवकुरूत्तरकुरुभ्यः, संसारदुर्गान्तगमकस्य सम्यग्दर्शनज्ञानचारित्रात्मकस्य मोक्षमार्गस्य ज्ञातारः कर्तार उपदेष्टारश्च भगवन्तः परमर्षयस्तीर्थकरा अत्रोत्पद्यन्ते, अत्रैव जाता सिध्यन्ति, नान्यत्र, अतो निर्वाणाय कर्मणः सिद्धिभूमयः कर्मभूमय इति । शेषास्तु विंशतिर्वंशाः सान्तरद्वीपा अकर्मभूमयो भवन्ति, देवकुरूत्तरकुरवस्तु कर्मभूम्यभ्यन्तरा अप्यकर्मभूमय इति ॥

नृस्थिती परापरे त्रिपल्योपमान्तर्मुहूर्ते ॥ १७ ॥

नरो नरा मनुष्या मानुषा इत्यनर्थान्तरम्, मनुष्याणां परा स्थितिस्त्रीणि पल्योपमानि अपरा अन्तर्मुहूर्तेति ॥

तिर्यग्योनीनां च ॥ १८ ॥

तिर्यग्योनिजानां च परापरे स्थिती त्रिपल्योपमान्तर्मुहूर्ते भवतो यथासङ्ख्यमेव, पृथक्करणं यथासङ्ख्यदोषविनिवृत्त्यर्थम्, इतरथा इदमेकमेव सूत्रमभविष्यद् उभयत्र चोभे यथासङ्ख्यं स्यातामिति ॥ द्विविधा चैषा मनुष्यतिर्यग्योनिजानां स्थितिः-भवस्थितिः कायस्थितिश्च, मनुष्याणां यथोक्ते त्रिपल्योपमान्तर्मुहूर्ते परापरे भवस्थिती, कायस्थितिस्तु परा सप्ताष्टौ वा भवग्रहणानि, तिर्यग्योनिजानां च यथोक्ते समासतः परापरे भवस्थिती, व्यासतस्तु शुद्धपृथिवीकायस्य परा द्वादश वर्षसहस्राणि, खरपृथिवीकायस्य द्वाविंशतिः, अप्कायस्य सप्त, वायुकायस्य त्रीणि, तेजःकायस्य त्रीणि रात्रिंदिनानि, वनस्पतिकायस्य दश वर्षसहस्राणि, एषा कायस्थितिरसङ्ख्येया अवसर्पिण्युत्सर्पिण्यो, वनस्पति-

कायस्यानन्ताः, द्वीन्द्रियाणां भवस्थितिर्द्वादश वर्षाणि, त्रीन्द्रियाणामेकोनपञ्चाशद्रात्रिंदिनानि, चतुरिन्द्रियाणां पण्मासाः, एषां कायस्थितिः सङ्ख्येयानि वर्षसहस्राणि, पञ्चेन्द्रियतिर्यग्योनिजाः पञ्चविधाः, तद्यथा–मत्स्या उरगाः परिसर्पाः पक्षिणश्चतुष्पदा इति, तत्र मत्स्यानामुरगाणां भुजगानां च पूर्वकोट्येव पक्षिणां पल्योपमासङ्ख्येयभागः चतुष्पदानां त्रीणि पल्योपमानि गर्भजानां स्थितिः,तत्र मत्स्यानां भवस्थितिः पूर्वकोटिस्त्रिपञ्चाशद् उरगाणां द्विचत्वारिंशद् भुजगानां द्विसप्ततिः पक्षिणां स्थलचराणां चतुरशीतिर्वर्षसहस्राणि संमूर्छिमानां भवस्थितिः, एषां कायस्थितिः सप्ताष्टौ भवग्रहणानि, सर्वेषां मनुष्यतिर्यग्योनिजानां कायस्थितिरप्यपरा अन्तर्मुहूर्तमेवेति ॥

इति तत्त्वार्थाधिगमे लोकप्रज्ञप्तिर्नामा

तृतीयोऽध्यायः समाप्तः ॥

## अथ चतुर्थोऽध्यायः ।

अत्राह—उक्तं भवता 'भवप्रत्ययोऽवधिर्नारकदेवाना'मिति, तथौदयिकेषु भावेषु देवगतिरिति, 'केवलिश्रुतसङ्घधर्मदेवावर्णवादो दर्शनमोहस्य' 'सरागसंयमादयो दैवस्य' 'नारकसम्मूर्च्छिनो नपुंसकानि,न देवाः' तत्र के देवाः? कतिविधा वेति?, अत्रोच्यते–

देवाश्चतुर्निकायाः ॥ १ ॥

देवाश्चतुर्निकाया भवन्ति, तान् परस्ताद्वक्ष्यामः ॥

तृतीयः पीतलेश्यः ॥ २ ॥

तेषां–चतुर्णां देवनिकायानां तृतीयो देवनिकायः पीतलेश्य एव भवति, कश्चासौ ?, ज्योतिष्क इति ॥

दशाष्टपञ्चद्वादशविकल्पाः कल्पोपपन्नपर्यन्ताः ॥३॥

ते च देवनिकाया यथाक्रममेवंविकल्पा भवन्ति, तद्यथा–दशविकल्पा भवनवासिनोऽसुरादयो वक्ष्यन्ते, अष्टविकल्पा व्यन्तराः किन्नरादयः, पञ्चविकल्पा ज्योतिष्काः सूर्यादयः, द्वादशविकल्पा वैमानिकाः कल्पोपपन्नपर्यन्ताः सौधर्मादिष्विति॥

इन्द्रसामानिकत्रायस्त्रिंशपारिषद्याऽऽत्मरक्षलोकपालानीकप्रकीर्णकाभियोग्यकिल्बिषिकाश्चैकशः ॥ ४ ॥

एकैकशश्चैतेषु देवनिकायेषु देवा दशविधा भवन्ति, तद्यथा–इन्द्राः सामानिकाः त्रायस्त्रिंशाः पारिषद्याः आत्मरक्षाः लोकपालाः अनीकानि अनीकाधिपतयः प्रकीर्णकाः आभियोग्याः किल्बिषिकाश्चेति, तत्रेन्द्रा भवनवासिव्यन्तरज्योतिष्कविमानानामधिपतयः,इन्द्रसमानाः सामानिकाः अमात्यपितृगुरूपाध्यायमहत्तरवत् ,केवलमिन्द्रत्वहीनाः, त्रायस्त्रिंशा मन्त्रिपुरोहितस्थानीयाः, पारिषद्या वयस्यस्थानीयाः, आत्मरक्षाः शिरोरक्षस्थानीयाः, लोकपाला आरक्षिकार्थचरस्थानीयाः, अनीकाधिपतयो दण्डनायकस्थानीयाः, अनीकानि अनीकस्थानीयान्येव, प्रकीर्णकाः पौरजनपदस्थानीयाः, आभियोग्या दासस्थानीयाः, किल्बिषिका अन्तस्थस्थानीया इति ॥

त्रायस्त्रिंशलोकपालवर्ज्या व्यन्तरज्योतिष्काः ॥ ५ ॥

व्यन्तरा ज्योतिष्काश्चाष्टविधा भवन्ति, त्रायस्त्रिंशलोकपालवर्ज्या इति ॥

पूर्वयोर्द्वीन्द्राः ॥६॥

पूर्वयोर्देवनिकाययोर्भवनवासिव्यन्तरयोर्देवविकल्पानां द्वौ द्वाविन्द्रौ भवतः, तद्यथा–भवनवासिषु तावद्द्वौ असुरकुमाराणामिन्द्रौ भवतः–चमरो बलिश्च, नागकुमाराणां धरणो भूतानन्दश्च, विद्युत्कुमाराणां हरिर्हरिसहश्च, सुपर्णकुमाराणां वेणुदेवो वेणुदारी च, अग्निकुमाराणामग्निशिखोऽग्निमाणवश्च, वातकुमाराणां वेलम्बः प्रभञ्जनश्च, स्तनितकुमाराणां सुघोषो महाघोषश्च, उदधिकुमाराणां जलकान्तो जलप्रभश्च, द्वीपकुमाराणां पूर्णो वशिष्टश्च, दिक्कुमारा-

णाममितोऽमितवाहनश्चेति ॥ व्यन्तरेष्वपि द्वौ किन्नराणामिन्द्रौ-किन्नरः किम्पुरुषश्च, किम्पुरुषाणां सत्पुरुषो महापुरुषश्च, महोरगाणामतिकायो महाकायश्च, गन्धर्वाणां गीतरतिर्गीतयशाश्च, यक्षाणां पूर्णभद्रो माणिभद्रश्च, राक्षसानां भीमो महाभीमश्च, भूतानां प्रतिरूपोऽतिरूपश्च, पिशाचानां कालो महाकालश्चेति । ज्योतिष्काणां तु बहवः सूर्याश्चन्द्रमसश्च । वैमानिकानामेकैक एव, तद्यथा—सौधर्मे शक्रः, ऐशाने ईशानः, सनत्कुमारे सनत्कुमार इति, एवं सर्वकल्पेषु स्वकल्पाह्वाः, परतस्त्विन्द्रादयो दश विशेषा न सन्ति, सर्व एव स्वतन्त्रा इति ॥

पीतान्तलेश्याः ॥ ७ ॥

पूर्वयोर्निकाययोर्देवानां पीतान्ताश्चतस्रो लेश्या भवन्ति ॥

कायप्रवीचारा आ ऐशानात् ॥ ८ ॥

भवनवास्यादयो देवा आ ऐशानात्कायप्रवीचारा भवन्ति, कायेन प्रवीचार एषामिति कायप्रवीचाराः, प्रविचारो नाम मैथुनविषयोपसेवनं, ते हि संक्लिष्टकर्माणो मनुष्यवन्मैथुनसुखमनुप्रलीयमानास्तीव्रानुशयाः कायसंक्लेशजं सर्वाङ्गीणं स्पर्शसुखमवाप्य प्रीतिमुपलभन्त इति ॥

शेषाः स्पर्शरूपशब्दमनःप्रवीचारा द्वयोर्द्वयोः ॥ ९ ॥

ऐशानादूर्ध्वं शेषाः कल्पोपपन्ना देवा द्वयोर्द्वयोः कल्पयोः स्पर्शरूपशब्दमनःप्रवीचारा भवन्ति यथासङ्ख्यम्, तद्यथा—सनत्कुमारमाहेन्द्रयोर्देवान् मैथुनसुखप्रेप्सूनुत्पन्नास्थान् विदित्वा देव्य उपतिष्ठन्ते, ताः स्पृष्ट्वैव च ते प्रीतिमुपलभन्ते विनिवृत्तास्थाश्च भवन्ति । तथा ब्रह्मलोकलान्तकयोर्देवानेवंभूतोत्पन्नास्थान् विदित्वा देव्यो दिव्यानि स्वभावभास्वराणि सर्वाङ्गमनोहराणि शृङ्गारोदाराभिजाताकारविलासान्युज्ज्वलचारुवेषाभरणानि स्वानि रूपाणि दर्शयन्ति, तानि दृष्ट्वैव ते प्रीतिमुपलभन्ते निवृत्तास्थाश्च भवन्ति । तथा महाशुक्रसहस्रारयोर्देवानुत्पन्नप्रवीचारास्थान् विदित्वा देव्यः श्रुतिविषयसुखानत्यन्तमनोहरान् शृङ्गारोदाराभिजातविला-

गाभिलापच्छेदतलतालाभरणरवमिश्रान् हसितकथितगीतशब्दानुदीरयन्ति, तान् श्रुत्वैव ते प्रीतिमुपलभन्ते निवृत्तास्थाश्च भवन्ति। आनतप्राणतारणाच्युतकल्पवासिनो देवाः प्रवीचारायोत्पन्नास्था देवीः संकल्पयन्ति, संकल्पमात्रेणैव ते परां प्रीतिमुपलभन्ते विनिवृत्तास्थाश्च भवन्ति। एभिश्च प्रवीचारैः परतः परतः प्रीतिप्रकर्षविशेषोऽनुपमगुणो भवति, प्रवीचारिणामल्पसंक्लेशत्वात्, स्थितिप्रभावादिभिरधिका इति वक्ष्यते॥

परेऽप्रवीचाराः ॥ १० ॥

कल्पोपपन्नेभ्यः परे देवा अप्रवीचारा भवन्ति, अल्पसंक्लेशत्वात् स्वस्थाः शीतीभूताः,(एवं हा.) पञ्चविधप्रवीचारोद्भवादपि प्रीतिविशेषादपरिमितगुणप्रीतिप्रकर्षाः परमसुखतृप्ता एव भवन्ति, (कथमेते न ब्रह्मचारिण एव?, उच्यते, चारित्रपरिणामाभावात्, अतोऽप्याशयात् शुभतरोऽयं, प्रत्यस्तमितसुखादिविकल्पः क्षायोमिकभेद एवेति भावनीयं, हारिभद्रीयायां)॥ अत्राह—उक्तं भवता 'देवाश्चतुर्निकाया' 'दशाष्टपञ्चद्वादशविकल्पा' इत्युक्ते निकायाः के? के चैषां विकल्पा इति?, अत्रोच्यते, चत्वारो देवनिकायाः, तद्यथा—भवनवासिनो व्यन्तरा ज्योतिष्का वैमानिका इति। तत्र—

भवनवासिनोऽसुरनागविद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीपदिक्कुमाराः ॥ ११ ॥

प्रथमो देवनिकायो भवनवासिनः, इमानि चैषां विधानानि भवन्ति, तद्यथा—असुरकुमारा नागकुमारा विद्युत्कुमाराः सुपर्णकुमारा अग्निकुमारा वातकुमाराः स्तनितकुमारा उदधिकुमारा द्वीपकुमारा दिक्कुमारा इति, कुमारवदेते कान्तदर्शनाः सुकुमारा मृदुमधुरललितगतयः शृङ्गाराभिजातरूपविक्रियाः कुमारवच्चोद्धतरूपवेषभाषाभरणप्रहरणावरणयानवाहनाः कुमारवच्चोल्बणरागाः क्रीडनपराश्चेत्यतः कुमारा इत्युच्यन्ते, असुरकुमारावासेष्वसुरकुमाराः प्रतिवसन्ति, शेषास्तु भवनेषु, महामन्दरस्य दक्षिणोत्तरयोर्दिग्विभागयो(र्भागयो हा.)र्बहीषु योजनशतसहस्रकोटीकोटी-

प्यावासा भवनानि च दक्षिणार्धाधिपतीनामुत्तरार्धाधिपतीनां च यथाम्यं भवन्ति, तत्र भवनानि रत्नप्रभायां बाहल्यार्धमवगाह्य मध्ये भवन्ति, भवनेषु वसन्तीति भवनवासिनः ॥

भवप्रत्ययाश्चैषामिमा नामकर्मनियमात्स्वजातिविशेषनियता विक्रिया भवन्ति, तद्यथा—गम्भीराः श्रीमन्तः काला महाकाया रत्नोत्कटमुकुटभास्वराश्चूडामणिचिह्ना असुरकुमारा भवन्ति, शिरोमुखेष्वधिकप्रतिरूपाः कृष्णश्यामा मृदुललितगतयः शिरस्सु फणिचिह्ना नागकुमाराः, स्निग्धा भ्राजिष्णवोऽवदाता वज्रचिह्ना विद्युत्कुमाराः, अधिकरूपग्रीवोरस्काः श्यामावदाता गरुडचिह्नाः सुपर्णकुमाराः, मानोन्मानप्रमाणयुक्ता भास्वन्तोऽवदाता घटचिह्ना अग्निकुमारा भवन्ति, स्थिरपीनवृत्तगात्रा निमग्नोदरा अश्वचिह्ना अवदाता वातकुमाराः, स्निग्धाः स्निग्धगम्भीरानुनादमहास्वनाः कृष्णा वर्धमानचिह्नाः स्तनितकुमाराः, ऊरुकटिष्वधिकप्रतिरूपाः कृष्णश्यामा मकरचिह्ना उदधिकुमाराः, उरःस्कन्धबाह्वग्रहस्तेष्वधिकप्रतिरूपाः श्यामावदाताः सिंहचिह्ना द्वीपकुमाराः, जङ्घाग्रपादेष्वधिकप्रतिरूपाः श्यामा हस्तिचिह्ना दिक्कुमाराः, सर्वे विविधवस्त्राभरणप्रहरणावरणा भवन्तीति ॥

व्यन्तराः किन्नरकिम्पुरुषमहोरगगान्धर्वयक्ष-
राक्षसभूतपिशाचाः ॥ १२ ॥

अष्टविधो द्वितीयो देवनिकायः, एतानि चास्य विधानानि भवन्ति, अधस्तिर्यगूर्ध्वं च त्रिष्वपि लोकेषु भवननगरेष्वावासेषु च प्रतिवसन्ति, यस्माच्चाधस्तिर्यगूर्ध्वं च त्रीनपि लोकान् स्पृशन्तः स्वातन्त्र्यात्पराभियोगाच्च प्रायेण प्रतिपतन्ति, अनियतगतिप्रचारा मनुष्यानपि केचिद् भृत्यवदुपचरन्ति विविधेषु च शैलकन्दरान्तरवनविवरादिषु प्रतिवसन्त्यतो व्यन्तरा इत्युच्यन्ते ॥

तत्र—किन्नरा दशविधाः, तद्यथा—किन्नराः किम्पुरुषाः किंपुरुषोत्तमाः किन्नरोत्तमा हृदयंगमा रूपशालिनोऽनिन्दिता मनोरमा रतिप्रिया रतिश्रेष्ठा इति । किम्पुरुषा दशविधाः,

तद्यथा–पुरुषाः सत्पुरुषा महापुरुषाः पुरुषवृषभाः पुरुषोत्तमा अतिपुरुषा मरुदेवा मरुतो मेरुप्रभा यशस्वन्त इति । महोरगा दशविधाः, तद्यथा–भुजगा भोगशालिनो महाकाया अतिकायाः स्कन्धशालिनो मनोरमा महावेगा महेष्वक्षा मेरुकान्ता भास्वन्त इति । गान्धर्वा द्वादशविधाः, तद्यथा–हाहा हूहूः तुम्बुरवो नारदा ऋषिवादिका भूतवादिकाः कादम्बा महाकादम्बा रैवता विश्वावसवो गीतरतयो गीतयशस इति । यक्षास्त्रयोदशविधाः, तद्यथा–पूर्णभद्रा माणिभद्राः श्वेतभद्रा हरिभद्राः सुमनोभद्रा व्यतिपातिकभद्राः सुभद्राः सर्वतोभद्रा मनुष्ययक्षा वनाधिपतयो वनाहारा रूपयक्षा यक्षोत्तमा इति । सप्तविधा राक्षसाः, तद्यथा–भीमा महाभीमा विघ्ना विनायका जलराक्षसा राक्षसराक्षसा ब्रह्मराक्षसा इति । भूता नवविधाः, तद्यथा–सुरूपाः प्रतिरूपा अतिरूपा भूतोत्तमा स्कन्दिका महास्कन्दिका महावेगाः प्रतिच्छन्ना आकाशगा इति । पिशाचाः पञ्चदशविधाः, तद्यथा–कूष्माण्डाः पटका जोषा आह्नकाः काला महाकालाश्चोक्षा अचौक्षास्तालपिशाचा मुखरपिशाचा अधस्तारका देहा महाविदेहास्तूष्णीका वनपिशाचा इति ॥

तत्र–किन्नराः प्रियङ्गुश्यामाः सौम्याः सौम्यदर्शना मुखेष्वधिकरूपशोभा मुकुटमौलिभूषणा अशोकवृक्षध्वजा अवदाताः । किम्पुरुषा ऊरुबाहुष्वधिकशोभा मुखेष्वधिकभास्वरा विविधाभरणभूषणाश्चित्रस्रगनुलेपनाश्चम्पकवृक्षध्वजाः । महोरगाः श्यामावदाता महावेगा सौम्याः सौम्यदर्शना महाकायाः पृथुपीनस्कन्धग्रीवा विविधानुविलेपना विचित्राभरणभूषणा नागवृक्षध्वजाः । गान्धर्वा रक्तावदाता गम्भीराः प्रियदर्शनाः सुरूपाः सुमुखाकाराः सुस्वरा मौलिधरा हारविभूषणास्तुम्बुरुवृक्षध्वजाः । यक्षाः श्यामावदाता गम्भीराः तुन्दिला वृन्दारकाः प्रियदर्शना मानोन्मानप्रमाणयुक्ता रक्तपाणिपादतलनखतालुजिह्वौष्ठा भास्वरमुकुटधरा नानारत्नविभूषणा वटवृक्षध्वजाः । राक्षसा अवदाता भीमा

भीमदर्शनाः शिरःकराला रक्तलम्बौष्ठास्तपनीयविभूषणा नानाभक्तिविलेपनाः खट्वाङ्गध्वजाः । भूताः श्यामा सुरूपाः सौम्या आपीवरा नानाभक्तिविलेपनाः सुलसध्वजाः कालाः । पिशाचाः सुरूपाः सौम्यदर्शना हस्तग्रीवासु मणिरत्नविभूषणाः कदम्बवृक्षध्वजाः । इत्येवंप्रकारस्वभावानि वैक्रियाणि रूपचिह्नानि व्यन्तराणां भवन्तीति ॥ तृतीयो देवनिकायः—

ज्योतिष्काः सूर्याश्चन्द्रमसो ग्रहनक्षत्रप्रकीर्णतारकाश्च (ताराश्च हा.) ॥ १३ ॥

ज्योतिष्काः पञ्चविधा भवन्ति, तद्यथा–सूर्याश्चन्द्रमसो ग्रहा नक्षत्राणि प्रकीर्णतारका इति पञ्चविधा ज्योतिष्का इति, असमासकरणमार्षाच्च सूर्यचन्द्रमसोः क्रमभेदः कृतः यथा गम्येत एतदेवैषामूर्ध्वनिवेश आनुपूर्व्यमिति, तद्यथा–सर्वाधस्तात्सूर्याः, ततश्चन्द्रमसः ततो ग्रहाः ततो नक्षत्राणि ततोऽपि प्रकीर्णताराः, (ग्रहाः पुनः हा.) ताराग्रहास्त्वनियतचारित्वात्सूर्यचन्द्रमसामूर्ध्वमधश्च चरन्ति, सूर्येभ्यो दशयोजनावलम्बिनो भवन्तीति, समाद्भूमिभागादष्टसु योजनशतेषु सूर्याः ततो योजनानामशीत्यां चन्द्रमसः ततो विंशत्यां तारा इति, द्योतयन्त इति द्योतींषि–विमानानि तेषु भवा ज्योतिष्का ज्योतिषो वा देवा ज्योतिरेव वा ज्योतिष्काः, मुकुटेषु शिरोमुकुटोपगूहितैः प्रभामण्डलकल्पैरुज्ज्वलैः सूर्यचन्द्रतारामण्डलैर्यथास्वं चिह्नैर्विराजमाना द्युतिमन्तो ज्योतिष्का भवन्तीति ॥

मेरुप्रदक्षिणानित्यगतयो नृलोके ॥ १४ ॥

मानुषोत्तरपर्यन्तो मनुष्यलोक इत्युक्तम् , तस्मिन् ज्योतिष्का मेरुप्रदक्षिणानित्यगतयो भ्रमन्ति (भवन्ति–हा.) मेरोः प्रदक्षिणा नित्या गतिरेषामिति मेरुप्रदक्षिणानित्यगतयः, एकादशस्वेकविंशेषु योजनशतेषु मेरोश्चतुर्दिशं प्रदक्षिणं चरन्ति, तत्र द्वौ सूर्यौ जम्बूद्वीपे लवणजले चत्वारो धातकीखण्डे द्वादश कालोदे द्वाचत्वारिंशत् पुष्करार्धे द्विसप्ततिरित्येवं मनुष्यलोके द्वात्रिंशत्सूर्य-

शतं भवति, चन्द्रमसामप्येष एव विधिः, अष्टाविंशतिर्नक्षत्राणि अष्टाशीतिर्ग्रहाः षट्षष्टिः सहस्राणि नव (च हा.) शतानि पञ्चा सप्ततानि ताराकोटाकोटीनामेकैकस्य चन्द्रमसः परिग्रहः। सूर्याश्चन्द्रमसो ग्रहा नक्षत्राणि च तिर्यग्लोके, शेषास्तूर्ध्वलोके ज्योतिष्का भवन्ति। अष्टचत्वारिंशद्योजनैकषष्टिभागाः सूर्यमण्डलविष्कम्भः चन्द्रमसः षट्पञ्चाशद् ग्रहाणामर्धयोजन गव्यूत नक्षत्राणा सर्वोत्कृष्टायास्तारायाः अर्धक्रोशो जघन्यायाः पञ्च धनुःशतानि, विष्कम्भार्धबाहल्याश्च भवन्ति सर्वे सूर्यादयो नृलोक इति वर्तते, बहिस्तु विष्कम्भबाहल्याभ्यामतोऽर्धं भवन्ति। एतानि च ज्योतिष्कविमानानि लोकस्थित्या प्रसक्तावस्थितगतीन्यपि ऋद्धिविशेषार्थमाभियोग्यनामकर्मोदयाच्च नित्यं गतिरतयो देवा वहन्ति, तद्यथा-पुरस्तात्केसरिणो दक्षिणतः कुञ्जरा अपरतो वृषभा उत्तरतो जविनोऽश्वा इति ॥

तत्कृतः कालविभागः ॥ १५ ॥

कालोऽनन्तसमयो वर्तनादिलक्षण इत्युक्तम्, तस्य विभागो ज्योतिष्काणां गतिविशेषकृतश्चारविशेषेण हेतुना, तैः कृतस्तत्कृतः, तद्यथा-अणुभागाश्चारा अंशाः कला लवा नालिका मुहूर्ता दिवसरात्रयः पक्षा मासा ऋतवोऽयनानि संवत्सरा युगमिति लौकिकसमो विभागः। पुनरन्यो विकल्पः-प्रत्युत्पन्नोऽतीतोऽनागत इति त्रिविधः, पुनस्त्रिविधः परिभाष्यते-सङ्ख्येयोऽसङ्ख्येयोऽनन्त इति ॥ तत्र-परमसूक्ष्मक्रियस्य सर्वजघन्यगतिपरिणतस्य परमाणोः स्वावगाहनक्षेत्रव्यतिक्रमकालः समय इत्युच्यते परमदुरधिगमोऽनिर्देश्यः, तं हि भगवन्तः परमर्षय केवलिनो विदन्ति, न तु निर्दिशन्ति, परमनिरुद्धत्वात्, परमनिरुद्धे हि तस्मिन् भाषाद्रव्याणा ग्रहणनिसर्गयोः करणप्रयोगासम्भव इति, ते त्वसङ्ख्येया आवलिका, ताः सङ्ख्येया उच्छ्वासस्तथा निःश्वासः, तौ बलवतः पट्विन्द्रियस्य कल्यस्य मध्यमवयसः स्वस्थमनसः पुंसः प्राणः, ते सप्त स्तोकः, ते सप्त लवः, ते अष्टात्रिंशदर्धं च नालिका,

ते द्वे मुहूर्तः, ते त्रिंशदहोरात्रम्, तानि पञ्चदश पक्षः, तौ द्वौ शुक्लकृष्णौ मासः, तौ द्वौ मासावृतुः, ते त्रयोऽयनम्, ते द्वे संवत्सरः, ते पञ्च चन्द्रचन्द्राभिवर्धितचन्द्राभिवर्धिताख्या युगम्, तन्मध्येऽन्ते चाधिकमासकौ, सूर्यसवनचन्द्रनक्षत्राभिवर्धितानि युगनामानि, वर्षशतसहस्रं चतुरशीतिगुणितं पूर्वाङ्गम्, पूर्वाङ्गशतसहस्रं चतुरशीतिगुणितं पूर्वम्, एवं तान्ययुतकमलनलिनकुमुदतुट्यटटावववहाहाहूहूचतुरशीतिशतसहस्रगुणाः सङ्ख्येयः कालः, अत ऊर्ध्वमुपमानियतं वक्ष्यामः, तद् यथा हि नाम योजनविस्तीर्णं योजनोच्छ्रायं वृत्तं पल्यमेकरात्राद्युत्कृष्टसप्तरात्रजातानामङ्गलोम्नां गाढं पूर्णं स्याद् वर्षशताद्वर्षशतादेकैकस्मिन्नुद्ध्रियमाणे यावता कालेन तद्रिक्तं स्यादेतत्पल्योपमम्, तद्दशभिः कोटाकोटिभिर्गुणितं सागरोपमम्, तेषां कोटाकोट्यश्चतस्रः सुषमसुषमा, तिस्रः सुषमा, द्वे सुषमदुष्षमा, द्विचत्वारिंशद्वर्षसहस्राणि हित्वा एका दुष्षमसुषमा, वर्षसहस्राणि एकविंशतिर्दुष्षमा, तावत्येव दुष्षमदुष्षमा, ता अनुलोमप्रतिलोमा अवसर्पिण्युत्सर्पिण्यौ, भरतैरावतेष्वनाद्यनन्तं परिवर्तेते अहोरात्रवत्, तयोः शरीरायुःशुभपरिणामानामनन्तगुणहानिवृद्धी अशुभपरिणामवृद्धिहानी, अवस्थितावस्थितगुणा चैकैकाऽन्यत्र, तद्यथा—कुरुषु सुषमसुषमा हरिरम्यकवासेषु सुषमा हैमवतहैरण्यवतेषु सुषमदुष्षमा विदेहेषु सान्तरद्वीपेषु दुष्षमसुषमा इत्येवमादिर्मनुष्यक्षेत्रे पर्यापन्नः कालविभागो ज्ञेय इति ॥

बहिरवस्थिताः ॥ १६ ॥

नृलोकाद्बहिर्ज्योतिष्का अवस्थिताः, अवस्थिता इत्यविचारिणोऽवस्थितविमानप्रदेशा अवस्थितलेश्याप्रकाशा इत्यर्थः, सुखशीतोष्णरश्मयश्चेति ॥

वैमानिकाः ॥ १७ ॥

चतुर्थो देवनिकायो वैमानिकाः, तेऽत ऊर्ध्वं वक्ष्यन्ते, विमानेषु भवा वैमानिकाः ॥

कल्पोपपन्नाः कल्पातीताश्च ॥ १८ ॥

द्विविधा वैमानिका देवाः—कल्पोपपन्नाः कल्पातीताश्च, तान् परस्ताद्वक्ष्याम इति ॥

उपर्युपरि ॥ १९ ॥

उपर्युपरि च यथानिर्देशं वेदितव्याः, नैकक्षेत्रे, नापि तिर्यगधो वेति ॥

**सौधर्मैशानसनत्कुमारमाहेन्द्रब्रह्मलोकलान्तकमहाशुक्रसहस्रारेष्वानतप्राणतयोरारणाच्युतयोर्नवसु ग्रैवेयेषु विजयवैजयन्तजयन्तापराजितेषु सर्वार्थसिद्धे च ॥२०॥**

एतेषु सौधर्मादिषु कल्पविमानेषु वैमानिका देवा भवन्ति, तद्यथा—सौधर्मस्य कल्पस्योपर्यैशानः कल्पः, ऐशानस्योपरि सनत्कुमारः, सनत्कुमारस्योपरि माहेन्द्र इत्येवमा सर्वार्थसिद्धादिति। सुधर्मा नाम शक्रस्य देवेन्द्रस्य सभा, सा तस्मिन्नस्तीति सौधर्मः कल्पः, ईशानस्य देवराजस्य निवास ऐशान इत्येवमिन्द्राणां निवासयोग्याभिख्याः सर्वे कल्पाः। ग्रैवेयास्तु लोकपुरुषस्य ग्रीवाप्रदेशविनिविष्टा ग्रीवाभरणभूताः, ग्रैवा ग्रीव्या ग्रैवेया ग्रैवेयका इति। अनुत्तराः पञ्च देवनामान एव, विजिता अभ्युदयविघ्नहेतव एभिरिति विजयवैजयन्तजयन्ताः, तैरेव विघ्नहेतुभिर्न पराजिता अपराजिताः, सर्वेष्वभ्युदयार्थेषु सिद्धाः सर्वार्थैश्च सिद्धाः सर्वे चैषामभ्युदयार्थाः सिद्धा इति सर्वार्थसिद्धाः। विजितप्रायाणि वा कर्माण्येभिरुपस्थितभद्राः परीषहैरपराजिताः सर्वार्थेषु सिद्धाः सिद्धप्रायोत्तमार्था इति विजयादय इति ॥

**स्थितिप्रभावसुखद्युतिलेश्याविशुद्धीन्द्रियावधिविषयतोऽधिकाः ॥ २१ ॥**

यथाक्रमं चैतेषु सौधर्मादिषूपर्युपरि देवाः पूर्वतः पूर्वत एभिः स्थित्यादिभिरर्थैरधिका भवन्ति। तत्र स्थितिः—उत्कृष्टा जघन्या च परस्ताद्वक्ष्यते, इह तु वचने प्रयोजनं येषामपि समा भवति तेषामप्युपर्युपरि गुणाधिका भवंतीति यथा प्रतीयेत। प्रभावतो-

ऽधिकाः, यः प्रभावो निग्रहानुग्रहविक्रियापराभियोगादिषु सौधर्मकाणां सोऽनन्तगुणाधिक उपर्युपरि, मन्दाभिमानतया त्वल्पतरसंक्लिष्टत्वादेते न प्रवर्तन्त इति। क्षेत्रस्वभावजनिताच्च शुभपुद्गलपरिणामात्सुखतो द्युतितश्चानन्त (असंख्येति हा.) गुणप्रकर्षेणाधिकाः। लेश्याविशुद्ध्याऽधिकाः, लेश्यानियमः परस्तादेषां वक्ष्यते, इह तु वचने प्रयोजनं यथा गम्येत यत्रापि विधानतस्तुल्यास्तत्रापि विशुद्धितोऽधिका भवन्तीति, कर्मविशुद्धित एव वाऽधिका भवन्तीति। इन्द्रियविषयतोऽधिकाः, यदिन्द्रियपाटवं दूरादिष्टविषयोपलब्धौ सौधर्मदेवानां तत् प्रकृष्टतरगुणत्वादल्पतरसंक्लेशत्वाच्चाधिकमुपर्युपरीति। अवधिविषयतोऽधिकाः सौधर्मैशानयोर्देवा अवधिविषयेणाधो रत्नप्रभां पश्यन्ति तिर्यगसङ्ख्येयानि योजनसहस्राण्यूर्ध्वमास्वभवनात्, सनत्कुमारमाहेन्द्रयोः शर्कराप्रभां पश्यन्ति तिर्यगसङ्ख्येयानि योजनशतसहस्राण्यूर्ध्वमास्वभवनात्, इत्येवं शेषाः क्रमशः, अनुत्तरविमानवासिनस्तु कृत्स्नां लोकनालिं पश्यन्ति, येषामपि क्षेत्रतस्तुल्योऽवधिविषयः तेषामप्युपर्युपरि विशुद्धितोऽधिको भवतीति ॥

गतिशरीरपरिग्रहाभिमानतो हीनाः ॥ २२ ॥

गतिविषयेण शरीरमहत्त्वेन महापरिग्रहत्वेनाभिमानेन चोपर्युपरि हीनाः, तद्यथा–द्विसागरोपमजघन्यस्थितीनां देवानामा सप्तम्यां (म्या हा.) गतिविषयस्तिर्यगसङ्ख्येयानि योजनकोटीकोटीसहस्राणि, ततः परतो जघन्य(न्याल्प हा.) स्थितीनामेकैकहीना भूमयो यावत्तृतीयेति, गतपूर्वाश्च गमिष्यन्ति च तृतीयां देवाः, परतस्तु सत्यपि गतिविषये न गतपूर्वा नापि गमिष्यन्ति, महानुभावक्रियातः औदासीन्याच्चोपर्युपरि देवा न गतिरतयो भवन्ति। सौधर्मैशानयोः कल्पयोर्देवानां शरीरोच्छ्रायः सप्त रत्नयः, उपर्युपरि द्वयोर्द्वयोरेका रत्निर्हीना आसहस्रारात्, आनतादिषु तिस्रः, ग्रैवेयकेषु द्वे, अनुत्तरे एका इति। सौधर्मे विमानानां द्वात्रिंशच्छतसहस्राणि, ऐशानेऽष्टाविंशतिः, सनत्कुमारे

द्वादश, माहेन्द्रेऽष्टौ, ब्रह्मलोके चत्वारि शतसहस्राणि, लान्तके पञ्चाशत्सहस्राणि, महाशुक्रे चत्वारिंशत्, सहस्रारे षट्, आनतप्राणतारणाच्युतेषु सप्त शतानि, अधो ग्रैवेयकाणां (त्र्याणां हा.) शतमेकादशोत्तरम्, मध्ये (मध्यमे हा.) सप्तोत्तरम्, उपर्येकमेव शतम्, अनुत्तराः पञ्चैवेति, एवमूर्ध्वलोके वैमानिकानां सर्वविमानपरिसंख्या चतुरशीतिः शतसहस्राणि सप्तनवतिश्च सहस्राणि त्रयोविंशानीति। स्थानपरिवारशक्तिविषयसंपत्स्थितिष्वल्पाभिमानाः परमसुखभागिन उपर्युपरीति ॥

उच्छ्वासाहारवेदनोपपातानुभावतश्च साध्याः॥

उच्छ्वासः सर्वजघन्यस्थितीनां देवानां सप्तसु स्तोकेषु (सप्त- स्तो.क.हा.) आहारश्चतुर्थकालः, पल्योपमस्थितीनामन्तर्दिवसस्योच्छ्वासो दिवसपृथक्त्वस्याहारः, यस्य यावन्ति सागरोपमाणि स्थितिस्तस्य तावत्स्वर्धमासेषूच्छ्वासस्तावत्स्वेव वर्षसहस्रेष्वाहारः। देवानां सद्वेदनाः प्रायेण भवन्ति, न कदाचिदसद्वेदनाः, यदि चासद्वेदना भवन्ति ततोऽन्तर्मुहूर्तमेव भवन्ति, न परतः, अनुबद्धाः सद्वेदनास्तूत्कृष्टेन षण्मासान् भवन्ति। उपपातः, आरणाच्युतादूर्ध्वमन्यतीर्थानामुपपातो न भवति, स्वलिङ्गिनां भिन्नदर्शनानामाग्रैवेयकेभ्य उपपातः, अन्यस्य सम्यग्दृष्टेः संयतस्य भजनीयं आ सर्वार्थसिद्धात्, ब्रह्मलोकादूर्ध्वमासर्वार्थसिद्धाच्चतुर्दशपूर्वधराणामिति। अनुभावो विमानानां सिद्धिक्षेत्रस्य चाकाशे निरालम्बस्थितौ लोकस्थितिरेव हेतुः, लोकस्थितिर्लोकानुभावो लोकस्वभावो जगद्धर्मोऽनादिपरिणामसन्ततिरित्यर्थः, सर्वे च देवेन्द्रा ग्रैवेयादिषु च देवा भगवतां परमर्षीणामर्हतां जन्माभिषेकनिष्क्रमणज्ञानोत्पत्तिमहासमवसरणनिर्वाणकालेष्वासीनाः शयिताः स्थिता वा सहसैवासनशयनस्थानाश्रयैः प्रचलन्ति, शुभकर्मफलोदयाल्लोकानुभावत एव वा, ततो जनितोपयोगास्तां भगवतामनन्यसदृशीं तीर्थकरनामकर्मोद्भवां परमविभूतिमवधिनाऽऽलोक्य संजातसंवेगाः सद्धर्मबहुमानात्केचिदागत्य भगवत्पा-

दमूलं स्तुतिवन्दनोपासनहितश्रवणैरात्मानुग्रहमाप्नुवन्ति, केचिदपि तत्रस्था एव प्रत्युपस्थापनाञ्जलिप्रणिपातनमस्कारोपहारैः परमसंविग्नाः सद्धर्मानुरागोत्फुल्लनयनवदनाः समभ्यर्चयन्ति ॥

अत्राह–त्रयाणां देवनिकायानां लेश्यानियमोऽभिहितः, अथ वैमानिकानां केषां का लेश्या इति?, अत्रोच्यते—

पीतपद्मशुक्ललेश्या द्वित्रिशेषेषु ॥ २३ ॥

उपर्युपरि वैमानिकाः सौधर्मादिषु द्वयोस्त्रिषु शेषेषु च पीतपद्मशुक्ललेश्या भवन्ति यथासङ्ख्यम्, द्वयोः पीतलेश्याः सौधर्मैशानयोः, त्रिषु पद्मलेश्याः सनत्कुमारमाहेन्द्रब्रह्मलोकेषु, शेषेषु लान्तकादिष्वा सर्वार्थसिद्धाच्छुक्ललेश्याः, उपर्युपरि तु विशुद्धतरेत्युक्तम् ॥ अत्राह–उक्तं भवता–द्विविधा वैमानिका देवाः कल्पोपपन्नाः कल्पातीताश्चेति, तत् के कल्पा इति?, अत्रोच्यते—

प्राग्ग्रैवेयकेभ्यः कल्पाः ॥ २४ ॥

प्राग्ग्रैवेयकेभ्यः कल्पा भवन्ति, सौधर्मादय आरणाच्युतपर्यन्ता इत्यर्थः, अतोऽन्ये कल्पातीताः ॥ अत्राह–किं देवाः सर्व एव सम्यग्दृष्टयो यद्भगवतां परमर्षीणामर्हतां जन्मादिषु प्रमुदिता भवन्ति इति?, अत्रोच्यते, न सर्वे सम्यग्दृष्टयः, किं तु सम्यग्दृष्टयः सद्धर्मबहुमानादेव तत्र प्रमुदिता भवन्त्यभिगच्छन्ति च, मिथ्यादृष्टयोऽपि च लोकचित्तानुरोधादिन्द्रानुवृत्त्या परस्परदर्शनात् पूर्वानुचरितमिति च प्रमोदं भजन्ते अभिगच्छन्ति च, लोकान्तिकास्तु सर्व एव विशुद्धभावाः सद्धर्मबहुमानात्संसारदुःखार्तानां च सत्त्वानामनुकम्पया भगवतां परमर्षीणामर्हतां जन्मादिषु विशेषतः प्रमुदिता भवन्ति, अभिनिष्क्रमणाय च कृतसंकल्पान् भगवतोऽभिगम्य प्रहृष्टमनसः स्तुवन्ति सभाजयन्ति चेति॥ अत्राह–के पुनर्लोकान्तिकाः ? कतिविधा वेति ?, अत्रोच्यते—

ब्रह्मलोकालया लोकान्तिकाः ॥ २५ ॥

ब्रह्मलोकालया एव लोकान्तिका भवन्ति, नान्यकल्पेषु, नापि परतः। ब्रह्मलोकं परिवृत्याष्टासु दिषु अष्टविकल्पा भवन्ति, तद्यथा–

सारस्वतादित्यवह्न्यरुणगर्दतोयतुषिताव्याबाधमरुतः (अरिष्टाश्च) ॥ २६ ॥

एते सारस्वताद्योऽष्टविधा देवा ब्रह्मलोकस्य पूर्वोत्तरादिषु दिक्षु प्रदक्षिणं भवन्ति यथासङ्ख्यम्, तद्यथा—पूर्वोत्तरस्यां दिशि सारस्वताः पूर्वस्यामादित्या इत्येवं शेषाः ॥

विजयादिषु द्विचरमाः ॥ २७ ॥

विजयादिष्वनुत्तरेषु विमानेषु देवा द्विचरमा भवन्ति, द्विचरमा इति ततश्च्युताः पर द्विर्जनित्वा सिध्यन्तीति, सकृत्सर्वार्थसिद्धमहाविमानवासिनः, शेषास्तु भजनीयाः (भाज्या हा.) ॥ अत्राह—उक्तं भवता जीवस्यौदयिकेषु भावेषु तिर्यग्योनिगतिरिति (२-६) तथा स्थितौ 'तिर्यग्योनीनां चे'ति (३-१८), आस्रवेषु च 'माया तैर्यग्योनस्ये'ति(६-१७)तत्के तिर्यग्योनय इति?, अत्रोच्यते—

औपपातिकमनुष्येभ्यः शेषास्तिर्यग्योनयः ॥ २८ ॥

औपपातिकेभ्यश्च नारकदेवेभ्यो मनुष्येभ्यश्च यथोक्तेभ्यः शेषा एकेन्द्रियादयस्तिर्यग्योनयो भवन्ति ॥ अत्राह—तिर्यग्योनिमनुष्याणां स्थि(०व्यस्थि०ह.), तिरुक्ता अथ देवानां का स्थितिरिति ?, अत्रोच्यते—

स्थितिः ॥ २९ ॥

स्थितिरित्यत ऊर्ध्वं वक्ष्यते (ति हा.) ॥

भवनेषु दक्षिणार्धाधिपतीनां पल्योपममध्यर्धम् ॥३०॥

भवनेषु तावद्भवनवासिनां दक्षिणार्धाधिपतीनां पल्योपममध्यर्धं परा स्थितिः, द्वयोर्द्वयोर्यथोक्तयोर्भवनवासीन्द्रयोः पूर्वो दक्षिणार्धाधिपतिः पर (अपर हा.) उत्तरार्धाधिपतिः ॥

शेषाणां पादोने ॥ ३१ ॥

शेषाणां भवनवासिष्वधिपतीनां द्वे पल्योपमे पादोने परा स्थितिः, के च (केवलं हा.) शेषाः?, उत्तरार्धाधिपतय इति ॥

असुरेन्द्रयोः सागरोपममधिकं च ॥ ३२ ॥

असुरेन्द्रयोस्तु दक्षिणार्धाधिपत्युत्तरार्धाधिपत्योः सागरोप-

ममधिकं च यथासङ्ख्यं परा स्थितिर्भवति ॥ (लाघवार्थिना वैमानिकस्थितिराख्यायते सिद्ध०) (सागरोपमास्थितिसाधर्म्यात् व्यन्तरज्योतिष्कौ विहायेदमाह हा०)

**सौधर्मादिषु यथाक्रमम् ॥ ३३ ॥**

मौधर्मगादिं कृत्वा यथाक्रममित ऊर्ध्वं परा स्थितिर्वक्ष्यते ॥

**सागरोपमे ॥ ३४ ॥**

मौधर्मे कल्पे देवानां परा स्थितिर्द्वे सागरोपमे इति ॥

**अधिके च ॥ ३५ ॥**

ऐशाने द्वे एव सागरोपमे अधिके परा स्थितिर्भवति ॥

**सप्त सनत्कुमारे ॥ ३६ ॥**

सनत्कुमारे कल्पे सप्त सागरोपमाणि परा स्थितिर्भवति ॥

**विशेषत्रिसप्तदशैकादशत्रयोदशपञ्चदशभिरधिकानि च ॥ ३७॥**

एभिर्विशेषादिभिरधिकानि सप्त माहेन्द्रादिषु परा स्थितिर्भवति, सप्तेति वर्तते, तद्यथा—माहेन्द्रे सप्त विशेषाधिकानि, ब्रह्मलोके त्रिभिरधिकानि सप्त, दशेत्यर्थः, लान्तके सप्तभिरधिकानि सप्त, चतुर्दशेत्यर्थः, महाशुक्रे दशभिरधिकानि सप्त, सप्तदशेत्यर्थः, सहस्रारे एकादशभिरधिकानि सप्त, अष्टादशेत्यर्थः, आनतप्राणतयोस्त्रयोदशभिरधिकानि सप्त, विंशतिरित्यर्थः, आरणाच्युतयोः पञ्चदशभिरधिकानि सप्त, द्वाविंशतिरित्यर्थः॥

**आरणाच्युतादूर्ध्वमेकैकेन नवसु ग्रैवेयकेषु विजयादिषु सर्वार्थसिद्धे च ॥ ३८ ॥**

आरणाच्युतादूर्ध्वमेकैकेनाधिका स्थितिर्भवति नवसु ग्रैवेयकेषु विजयादिषु सर्वार्थसिद्धे च, आरणाच्युते द्वाविंशतिर्ग्रैवेयकेषु पृथगेकैकेनाधिका,त्रयोविंशतिरित्यर्थः,एवमेकैकेनाधिका सर्वेषु नवसु, यावत् सर्वेषामुपरि नवमे एकत्रिंशत्,सा (नेतो०दितिपर्यन्तं हा०) विजयादिषु चतुर्ष्वप्येकेनाधिका द्वात्रिंशत्, साप्येकेनाधिका सर्वार्थसिद्धे त्रयस्त्रिंशदिति ॥ अत्राह—मनुष्यतिर्यग्योनिजानां (०योनी० हा०)

परापरे स्थिती व्याख्याते, अथौपपातिकानां किमेकैव स्थितिः?, परापरे न विद्येते इति?, अत्रोच्यते—

अपरा पल्योपममधिकं च ॥३९॥

सौधर्मादिष्वेव यथाक्रममपरा स्थितिः पल्योपममधिकं च, अपरा जघन्या निकृष्टेत्यर्थः, परा प्रकृष्टा उत्कृष्टेत्यनर्थान्तरम्, तत्र सौधर्मेऽपरा स्थितिः पल्योपममैशाने पल्योपममधिकं च॥

सागरोपमे ॥ ४० ॥

सनत्कुमारेऽपरा स्थितिर्द्वे सागरोपमे ॥

अधिके च ॥ ४१ ॥

माहेन्द्रे जघन्या स्थितिरधिके द्वे सागरोपमे ॥

परतः परतः पूर्वा पूर्वाऽनन्तरा ॥४२॥

माहेन्द्रात् परतः पूर्वा पराऽनन्तरा जघन्या स्थितिर्भवति, तद्यथा—माहेन्द्रे परा स्थितिर्विशेषाधिकानि सप्त सागरोमाणि सा ब्रह्मलोके जघन्या भवति, ब्रह्मलोके दश सागरोपमाणि परा स्थितिः सा लान्तके जघन्या, एवमा सर्वार्थसिद्धादिति, (विजयादिषु चतुर्षु परा स्थितिस्त्रयस्त्रिंशत्सागरोपमाणि,सा त्वजघन्योत्कृष्टा सर्वार्थसिद्ध इति)॥ (सर्वार्थसिद्धं यावत्,आङ् मर्यादायां विजयादिषु चतुर्षु विजयवैजयंतजयंतापराजितेषु परा स्थितिस्त्रयस्त्रिंशत्, एवं च परतः परतः पूर्वा पूर्वाऽनन्तरेति यावद् भवभयभवस्तावद् द्रष्टव्यम्, अत एतेष्वपि जघन्या एकत्रिंशदेव उत्कृष्टा त्रयस्त्रिंशत्, मुख्यवृत्त्यैव सूत्रेऽभिधानात्)

नारकाणां च द्वितीयादिषु ॥ ४३ ॥

नारकाणां च द्वितीयादिषु भूमिषु पूर्वा पूर्वा परा स्थितिरनन्तरा परतः परतोऽपरा भवन्ति, तद्यथा–रत्नप्रभायां नारकाणामेकं सागरोपमं परा स्थितिः सा जघन्या शर्कराप्रभायाम्, त्रीणि सागरोपमाणि परा स्थितिः शर्कराप्रभायां सा जघन्या वालुकाप्रभायामिति, एवं सर्वासु, तमःप्रभायां द्वाविंशतिः सागरोपमाणि परा स्थितिः सा जघन्या महातमःप्रभायामिति ॥

दश वर्षसहस्राणि प्रथमायाम् ॥ ४४ ॥

प्रथमायां भूमौ नारकाणां दश वर्षसहस्राणि जघन्या स्थितिः॥

भवनेषु च ॥ ४५ ॥

भवनवासिनां च दश वर्षसहस्राणि जघन्या स्थितिः ॥

व्यन्तराणां च ॥ ४६ ॥

व्यन्तराणां च देवानां दश वर्षसहस्राणि जघन्या स्थितिः॥

परा पल्योपमम् ॥ ४७ ॥

व्यन्तराणां परा स्थितिः पल्योपमं भवति ॥

ज्योतिष्काणामधिकम् ॥ ४८ ॥

ज्योतिष्काणां देवानामधिकं पल्योपमं परा स्थितिर्भवति ॥

ग्रहाणामेकम् ॥ ४९ ॥

ग्रहाणामेकं पल्योपमं परा स्थितिर्भवति ॥

नक्षत्राणामर्धम् ॥ ५० ॥

नक्षत्राणां देवानां पल्योपममर्धं परा स्थितिर्भवति ॥

तारकाणां चतुर्भागः ॥ ५१ ॥

तारकाणां च पल्योपमचतुर्भागः परा स्थितिः ॥

जघन्या त्वष्टभागः ॥ ५२ ॥

तारकाणां तु जघन्या स्थितिः पल्योपमाष्टभागः ॥

चतुर्भागः शेषाणाम् ॥ ५३ ॥

तारकाभ्यः शेषाणां ज्योतिष्काणां चतुर्भागः पल्योपमस्या- परा स्थितिः ॥

इति तत्त्वार्थधिगमाख्येऽर्हत्प्रवचनसङ्ग्रहे देवगति-प्रदर्शनो नाम चतुर्थोऽध्याय समाप्तः[1] ॥



१ आचार्यहरिभद्रोद्धृतायां चतुर्थोऽध्यायः। (हारि० वृत्तौ)

## अथ पञ्चमोऽध्यायः ॥

उक्ता जीवाः, अजीवान्वक्ष्यामः—

अजीवकाया धर्माधर्माकाशपुद्गलाः ॥ १ ॥

धर्मास्तिकायोऽधर्मास्तिकाय आकाशास्तिकायः पुद्गलास्तिकाय इत्यजीवकायाः, तान् लक्षणतः परस्ताद्वक्ष्यामः, कायग्रहणं प्रदेशावयवबहुत्वार्थमद्धासमयप्रतिषेधार्थं च ॥

द्रव्याणि जीवाश्च ॥ २ ॥

(ये हा.) एते धर्मादयश्चत्वारो प्राणिनश्च (जीवाश्च हा.) पञ्च द्रव्याणि च (नेदं हा.) भवन्तीति, उक्तं हि 'मतिश्रुतयोर्निबन्धो द्रव्येष्वसर्वपर्यायेषु' 'सर्वद्रव्यपर्यायेषु केवलस्ये'ति ॥

नित्यावस्थितान्यरूपाणि ॥ ३ ॥

एतानि द्रव्याणि नित्यानि भवन्ति, 'तद्भावाव्ययं नित्य'मिति वक्ष्यते। अवस्थितानि च, न हि कदाचित् पञ्चत्वं भूतार्थत्वं च व्यभिचरन्ति। अरूपाणि च, नैषां रूपमस्तीति, रूपं मूर्तिः, मूर्त्याश्रयाश्च स्पर्शादय इति ॥

रूपिणः पुद्गलाः ॥ ४ ॥

पुद्गला एव रूपिणो भवन्ति, रूपमेषामस्ति एषु वाऽस्तीति रूपिणः ॥

आ आकाशादेकद्रव्याणि ॥ ५ ॥

आ आकाशाद्धर्मादीन्येकद्रव्याण्येव भवन्ति, पुद्गलजीवास्त्वनेकद्रव्याणीति ॥

निष्क्रियाणि च ॥ ६ ॥

आ आकाशादेव धर्मादीनि निष्क्रियाणि भवन्ति, पुद्गलजीवास्तु क्रियावन्तः, क्रियेति गतिकर्माह ॥ अत्राह—उक्तं भवता प्रदेशावयवबहुत्वं कायसंज्ञमिति, तस्मात् क एषां धर्मादीनां प्रदे-

लक्ष्यते हि 'सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते' इति ॥ किं चान्यत्—

सुखदुःखजीवितमरणोपग्रहाश्च ॥ २० ॥

सुखोपग्रहो दुःखोपग्रहो जीवितोपग्रहो मरणोपग्रहश्चेति पुद्गलानामुपकारः, तद्यथा–इष्टाः स्पर्शरसगन्धवर्णशब्दाः सुखस्योपकारः, अनिष्टा दुःखस्य, स्नानाच्छादनानुलेपनभोजनादीनि विधिप्रयुक्तानि जीवितस्यानपवर्तनं चायुष्कस्य, विषशस्त्राग्न्यादीनि मरणस्यापवर्तनं चायुष्कस्य ॥ अत्राह–उपपन्नं तावदेतत् सोपक्रमाणामपवर्तनीयायुषाम्, अथानपवर्त्यायुषां कथमिति ?, अत्रोच्यते–तेषामपि जीवितमरणोपग्रहः पुद्गलानामुपकारः, कथमिति चेत्तदुच्यते, कर्मणः स्थितिक्षयाभ्याम्, कर्म हि पौद्गलमिति, आहारश्च त्रिविधः सर्वेषामेवोपकुरुते, किं कारणम् ?, शरीरस्थित्युपचयबलवृद्धिप्रीत्यर्थं ह्याहार इति ॥ अत्राह–गृह्णीमस्तावद्धर्माधर्माकाशपुद्गला जीवद्रव्याणामुपकुर्वन्तीति, अथ जीवानां क उपकार इति?, अत्रोच्यते—

परस्परोपग्रहो जीवानाम् ॥ २१ ॥

परस्परस्य हिताहितोपदेशाभ्यामुपग्रहो जीवानामिति॥ अत्राह–अथ कालस्योपकारः क इति ? अत्रोच्यते—

**वर्तना परिणामः क्रिया परत्वापरत्वे च कालस्य ॥२२॥**

तद्यथा–सर्वभावानां वर्तना कालाश्रया वृत्तिः, वर्तना उत्पत्तिः स्थितिः (अथ गतिः हा.) प्रथमसमयाश्रया इत्यर्थः । परिणामो द्विविधः–अनादिरादिमांश्च, तं परस्ताद्वक्ष्यामः। क्रिया गतिः, सा त्रिविधा–प्रयोगगतिर्विस्रसागतिर्मिश्रिकेति । परत्वापरत्वे त्रिविधे–प्रशंसाकृते क्षेत्रकृते कालकृते इति, तत्र प्रशंसाकृते परो धर्मः पर ज्ञानं अपरः अधर्मः अपरमज्ञानमिति, क्षेत्रकृते एकदिक्कालावस्थितयोर्विप्रकृष्टः परो भवति सन्निकृष्टोऽपरः, कालकृते द्विरष्टवर्षाद्वर्षशतिकः परो भवति, वर्षशतिकाद्विरष्टवर्षोऽपरो भवति। तदेवं प्रशंसाक्षेत्रकृते परत्वापरत्वे वर्जयित्वा वर्तनादीनि

(०द्यः मतं कालकृता द्वा०) कालस्योपकार इति। अत्राह–उक्तं भवता शरीरादीनि पुद्गलानामुपकार इति, पुद्गलानिति (०ला इति द्वा०) च तन्त्रान्तरीया जीवान् परिभाषन्ते, स्पर्शादिरहिताश्चान्ये, तत्कथमेतदिति, (स्पर्शेत्यादि न द्वा०) अत्रोच्यते, एतदादिविप्रतिपत्तिप्रतिषेधार्थं विशेषवचनविवक्षया चेदमुच्यते—

स्पर्शरसगन्धवर्णवन्तः पुद्गलाः ॥ २३ ॥

स्पर्शः रसः गन्धः वर्ण इत्येवंलक्षणाः पुद्गला भवन्ति, तत्र स्पर्शोऽष्टविधः–कठिनो मृदुर्गुरुर्लघुः शीत उष्णः स्निग्धः रूक्ष इति, रसः पञ्चविधः–तिक्तः कटुः कषायोऽम्लो मधुर इति, गन्धो द्विविधः–सुरभिरसुरभिश्च, वर्णः पञ्चविधः–कृष्णो नीलो लोहितः पीतः शुक्ल इति ॥ किंचान्यत्—

शब्दबन्धसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायातपोद्योतवन्तश्च ॥ २४ ॥

तत्र शब्दः षड्विधः–ततो विततो घनः शुषिरो घर्षो भाष इति। बन्धस्त्रिविधः–प्रयोगबन्धो विस्रसाबन्धो मिश्र इति, स्निग्धरूक्षत्वाद्भवतीति वक्ष्यते। सौक्ष्म्यं द्विविधम्–अन्त्यमापेक्षिकं च, अन्त्यं परमाणुष्वेव, आपेक्षिकं द्व्यणुकादिषु संघातपरिणामापेक्षं भवति, तद्यथा–आमलकाद्बदरमिति। स्थौल्यमपि द्विविधम्–अन्त्यमापेक्षिकं च, संघातपरिणामापेक्षमेव भवति, तत्रान्त्यं सर्वलोकव्यापिनि महास्कन्धे भवति, आपेक्षिकं बदरादिभ्य आमलकादिष्विति। संस्थानमनेकविधम्–दीर्घह्रस्वाद्यनित्थंत्वपर्यन्तम्। भेदः पञ्चविधः–औत्कारिकः चौर्णिकः खण्डः प्रतरः अनुतट इति। तमश्छायातपोद्योताश्च परिणामजाः। सर्व एवैते स्पर्शादयः पुद्गलेष्वेव भवन्तीत्यतः पुद्गलास्तद्वन्तः॥ अत्राह–किमर्थं स्पर्शादीनां शब्दादीनां च पृथक्सूत्रकरणमिति?, अत्रोच्यते, स्पर्शादयः परमाणुषु स्कन्धेषु च परिणामजा एव भवन्तीति, शब्दादयस्तु स्कन्धेष्वेव भवन्त्यनेकनिमित्ताश्चेत्यतः पृथक्करणम्॥ त एते पुद्गलाः समासतो द्विविधा भवन्ति, तद्यथा—

शावयवनियम इति?, अत्रोच्यते—सर्वेषां प्रदेशाः सन्ति अन्यत्र परमाणोः, अवयवास्तु स्कन्धानामेव, वक्ष्यते हि 'अणवः स्कन्धाश्च' 'संघातभेदेभ्य उत्पद्यन्त' इति ॥ तत्र—

असङ्ख्येयाः प्रदेशा धर्माधर्मयोः ॥ ७ ॥

प्रदेशो नामापेक्षिकः, सर्वसूक्ष्मस्तु परमाणोरवगाह इति ॥

जीवस्य च ॥ ८ ॥

एकजीवस्य चासङ्ख्येयाः प्रदेशा भवन्तीति ॥

आकाशस्यानन्ता ॥ ९ ॥

लोकालोकाकाशस्यानन्ताः प्रदेशाः, लोकाकाशस्य तु धर्माधर्मैकजीवैस्तुल्याः ॥

सङ्ख्येयासङ्ख्येयाश्च पुद्गलानाम् ॥ १० ॥

सङ्ख्येया असङ्ख्येया अनन्ताश्च पुद्गलानां प्रदेशा भवन्ति, अनन्ता इति वर्तते ॥

नाणोः ॥ ११ ॥

अणोः प्रदेशा न भवन्ति, अनादिरमध्योऽप्रदेशो हि परमाणुः ॥

लोकाकाशेऽवगाहः ॥ १२ ॥

अवगाहिनामवगाहो लोकाकाशे भवति ॥

धर्माधर्मयोः कृत्स्ने ॥ १३ ॥

धर्माधर्मयोः कृत्स्ने लोकाकाशेऽवगाहो भवतीति ॥

एकप्रदेशादिषु भाज्यः पुद्गलानाम् ॥ १४ ॥

अप्रदेशसङ्ख्येयासङ्ख्येयानन्तप्रदेशानां पुद्गलानामेकादिष्वाकाशप्रदेशेषु भाज्योऽवगाहः, भाज्यो विभाज्यो विकल्प्य इत्यनर्थान्तरम्, तद्यथा—परमाणोरेकस्मिन्नेव प्रदेशे, द्व्यणुकस्यैकस्मिन् द्वयोश्च, त्र्यणुकस्यैकस्मिन् द्वयोस्त्रिषु च, एवं चतुरणुकादीनां सङ्ख्येयासङ्ख्येयप्रदेशस्यैकादिषु सङ्ख्येयेष्वसङ्ख्येयेषु च, अनन्तप्रदेशस्य च ॥

असङ्ख्येयभागादिषु जीवानाम् ॥ १५ ॥

लोकाकाशप्रदेशानामसङ्ख्येयभागादिषु जीवानामवगाहो भ-

र्तते, आ सर्वलोकादिति ॥ अत्राह–को हेतुरसङ्ख्येयभागादिषु जीवानामवगाहो भवतीति?, अत्रोच्यते—

**प्रदेशसंहारविसर्गाभ्यां प्रदीपवत् ॥ १६ ॥**

जीवस्य हि प्रदेशानां संहारविसर्गाविष्टौ प्रदीपस्येव, तद्यथा–तैलवर्त्यग्न्युपादानप्रवृद्धः प्रदीपो महतीमपि कूटागारशालां प्रकाशयति अण्वीमपि माणिकावृतः माणिकां द्रोणावृतो द्रोणं आढकावृतस्तथाढकं प्रस्थावृतः प्रस्थं पाण्यावृतो पाणिमिति, एवमेव प्रदेशानां संहारविसर्गाभ्यां जीवो महान्तमणुं वा पञ्चविधं शरीरस्कन्धं धर्माधर्माकाशपुद्गलजीवप्रदेशसमुदायं व्याप्नोतीति, अवगाहत इत्यर्थः, धर्माधर्माकाशजीवानां परस्परेण पुद्गलेषु च वृत्तिर्न विरुध्यतेऽमूर्तत्वात् ॥ अत्राह–सति प्रदेशसंहारविसर्गसंभवे कस्मादसङ्ख्येयभागादिषु जीवानामवगाहो भवति, नैकप्रदेशादिष्विति?, अत्रोच्यते–सयोगत्वात् संसारिणां चरमशरीरत्रिभागहीनावगाहित्वाच्च (०हीनत्वाच्च हा०) सिद्धानामिति ॥ अत्राह–उक्तं भवता धर्मादीनस्तिकायान् परस्ताल्लक्षणतो वक्ष्याम इति, तत्किमेषां लक्षणमिति?, अत्रोच्यते—

**गतिस्थित्युपग्रहो धर्माधर्मयोरुपकारः ॥ १७ ॥**

गतिमतां गतेः स्थितिमतां च स्थितेः उपग्रहो धर्माधर्मयोरुपकारो यथासङ्ख्यम्, उपग्रहो निमित्तमपेक्षा कारणं हेतुरित्यनर्थान्तरम्, उपकारः प्रयोजनं गुणोऽर्थ इत्यनर्थान्तरम् ॥

**आकाशस्यावगाहः ॥ १८ ॥**

अवगाहिनां धर्माधर्मपुद्गलजीवानामवगाह आकाशस्योपकारः। धर्माधर्मयोरन्तःप्रवेशसंभवेन पुद्गलजीवानां संयोगविभागैश्चेति॥

**शरीरवाङ्मनःप्राणापानाः पुद्गलानाम् ॥ १९ ॥**

पञ्चविधानि शरीराण्यौदारिकादीनि वाङ्मनः प्राणापानाविति पुद्गलानामुपकारः, तत्र शरीराणि यथोक्तानि, प्राणापानौ च नामकर्मणि व्याख्यातौ, द्वीन्द्रियादयो जिह्वेन्द्रिययोगाद्भाषात्वेन गृह्णन्ति, नान्ये, संज्ञिनश्च मनस्त्वेन गृह्णन्ति, नान्य इति,

वक्ष्यते हि 'सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते' इति ॥ किं चान्यत्—

सुखदुःखजीवितमरणोपग्रहाश्च ॥ २० ॥

सुखोपग्रहो दुःखोपग्रहो जीवितोपग्रहो मरणोपग्रहश्चेति पुद्गलानामुपकारः, तद्यथा—इष्टाः स्पर्शरसगन्धवर्णशब्दाः सुखस्योपकारः, अनिष्टा दुःखस्य, स्नानाच्छादनानुलेपनभोजनादीनि विधिप्रयुक्तानि जीवितस्यानपवर्तनं चायुष्कस्य, विषशस्त्राग्न्यादीनि मरणस्यापवर्तनं चायुष्कस्य ॥ अत्राह—उपपन्नं तावदेतत् सोपक्रमाणामपवर्तनीयायुषाम्, अथानपवर्त्यायुषां कथमिति ?, अत्रोच्यते—तेषामपि जीवितमरणोपग्रहः पुद्गलानामुपकारः, कथमिति चेत्तदुच्यते, कर्मणः स्थितिक्षयाभ्याम्, कर्म हि पौद्गलमिति, आहारश्च त्रिविधः सर्वेषामेवोपकुरुते, किं कारणम् ?, शरीरस्थित्युपचयबलवृद्धिप्रीत्यर्थं ह्याहार इति ॥ अत्राह—गृह्णीमस्तावद्धर्माधर्माकाशपुद्गला जीवद्रव्याणामुपकुर्वन्तीति, अथ जीवानां क उपकार इति?, अत्रोच्यते—

परस्परोपग्रहो जीवानाम् ॥ २१ ॥

परस्परस्य हिताहितोपदेशाभ्यामुपग्रहो जीवानामिति॥ अत्राह—अथ कालस्योपकारः क इति ? अत्रोच्यते—

वर्तना परिणामः क्रिया परत्वापरत्वे च कालस्य ॥२२॥

तद्यथा—सर्वभावानां वर्तना कालाश्रया वृत्तिः, वर्तना उत्पत्तिः स्थितिः (अथ गतिः हा.) प्रथमसमयाश्रया इत्यर्थः । परिणामो द्विविधः—अनादिरादिमांश्च, तं परस्ताद्वक्ष्यामः। क्रिया गतिः, सा त्रिविधा—प्रयोगगतिर्विस्रसागतिर्मिश्रिकेति। परत्वापरत्वे त्रिविधे—प्रशंसाकृते क्षेत्रकृते कालकृते इति, तत्र प्रशंसाकृते परो धर्मः परं ज्ञानं अपरः अधर्मः अपरमज्ञानमिति, क्षेत्रकृते एकदिक्कालावस्थितयोर्विप्रकृष्टः परो भवति सन्निकृष्टोऽपरः, कालकृते द्विरष्टवर्षाद्वर्षशतिकः परो भवति, वर्षशतिकाद्द्विरष्टवर्षोऽपरो भवति। तदेवं प्रशंसाक्षेत्रकृते परत्वापरत्वे वर्जयित्वा वर्तनादीनि

(०द्यः सर्वं कालकृता हा०) कालस्योपकार इति। अत्राह–उक्तं भवता शरीरादीनि पुद्गलानामुपकार इति, पुद्गलानिति (०ला इति हा०) च तन्त्रान्तरीया जीवान् परिभाषन्ते, स्पर्शादिरहिताश्चान्ये, तत्कथमेतदिति, (स्पर्शेत्यादि न हा०) अत्रोच्यते, एतदादिविप्रतिपत्तिप्रतिषेधार्थं विशेषवचनविवक्षया चेदमुच्यते—

स्पर्शरसगन्धवर्णवन्तः पुद्गलाः ॥ २३ ॥

स्पर्शः रसः गन्धः वर्ण इत्येवंलक्षणाः पुद्गला भवन्ति, तत्र स्पर्शोऽष्टविधः–कठिनो मृदुर्गुरुर्लघुः शीत उष्णः स्निग्धः रूक्ष इति, रसः पञ्चविधः–तिक्तः कटुः कषायोऽम्लो मधुर इति, गन्धो द्विविधः–सुरभिरसुरभिश्च, वर्णः पञ्चविधः–कृष्णो नीलो लोहितः पीतः शुक्ल इति ॥ किंचान्यत्—

शब्दबन्धसौक्ष्म्यस्थौल्यसंस्थानभेदतम[1]छायातपोद्योतवन्तश्च ॥ २४ ॥

तत्र शब्दः षड्विधः–ततो विततो घनः शुषिरो घर्षो भाष इति। बन्धस्त्रिविधः–प्रयोगबन्धो विस्रसाबन्धो मिश्र इति, स्निग्धरूक्षत्वाद्भवतीति वक्ष्यते। सौक्ष्म्यं द्विविधम्–अन्त्यमापेक्षिकं च, अन्त्यं परमाणुष्वेव, आपेक्षिकं द्व्यणुकादिषु संघातपरिणामापेक्षं भवति, तद्यथा–आमलकाद्बदरमिति। स्थौल्यमपि द्विविधम्–अन्त्यमापेक्षिकं च, संघातपरिणामापेक्षमेव भवति, तत्रान्त्यं सर्वलोकव्यापिनि महास्कन्धे भवति, आपेक्षिकं बदरादिभ्य आमलकादिष्विति। संस्थानमनेकविधम्–दीर्घह्रस्वाद्यनित्थंत्वपर्यन्तम्। भेदः पञ्चविधः–औत्कारिकः चौर्णिकः खण्डः प्रतरः अनुतट इति। तम[1]छायातपोद्योताश्च परिणामजाः। सर्व एवैते स्पर्शादयः पुद्गलेष्वेव भवंतीत्यतः पुद्गलास्तद्वन्तः॥ अत्राह–किमर्थं स्पर्शादीनां शब्दादीनां च पृथक्सूत्रकरणमिति?, अत्रोच्यते, स्पर्शादयः परमाणुषु स्कन्धेषु च परिणामजा एव भवन्तीति, शब्दादयस्तु स्कन्धेष्वेव भवन्त्यनेकनिमित्ताश्चेत्यतः पृथक्करणम्॥ त एते पुद्गलाः समासतो द्विविधा भवन्ति, तद्यथा—

अणवः स्कन्धाश्च ॥ २५ ॥

उक्तं च—कारणमेव (॰मत्र हा॰) तदन्त्यं सूक्ष्मो नित्यश्च भवति परमाणुः। एकरसगन्धवर्णो द्विस्पर्शः कार्यलिङ्गश्च ॥१॥ इति। तत्राणवोऽबद्धाः, स्कन्धास्तु बद्धा एव ॥ अत्राह—कथं पुनरेतद्द्वैविध्यं भवतीति?, अत्रोच्यते—स्कन्धास्तावत्

संघातभेदेभ्य उत्पद्यन्ते ॥ २६ ॥

संघाताद्भेदात्संघातभेदादिति, एभ्यस्त्रिभ्यः (एभ्यो हा॰) कारणेभ्यः स्कन्धा उत्पद्यन्ते द्विप्रदेशादयः, तद्यथा—द्वयोः परमाण्वोः संघाताद् द्विप्रदेशः, द्विप्रदेशस्याणोश्च संघातात्त्रिप्रदेशः, एवं संख्येयानामसंख्येयानामनन्तानामनन्तानन्तानां च प्रदेशानां संघातात् (तु हा॰) तावत्प्रदेशाः। एषामेव भेदाद्द्विप्रदेशपर्यन्ताः। एत एव संघातभेदाभ्यामेकसामयिकाभ्यां द्विप्रदेशादयः स्कन्धा उत्पद्यन्ते, अन्यस्य संघातेनान्यतो भेदेनेति ॥ अत्राह—अथ परमाणुः कथमुत्पद्यत इति?, अत्रोच्यते—

भेदादणुः ॥ २७ ॥

भेदादेव परमाणुरुत्पद्यते, न संघातादिति (॰त् न संघातभेदात् हा॰) ॥

भेदसंघाताभ्यां चाक्षुषाः ॥ २८ ॥

भेदसंघाताभ्यां चाक्षुषाः स्कन्धा उत्पद्यन्ते, अचाक्षुषास्तु यथोक्तात्संघाताद्भेदात्संघातभेदाच्चेति ॥ अत्राह—धर्मादीनि सन्तीति कथं गृह्णीम इति?, अत्रोच्यते, लक्षणतः॥ किं च सतो लक्षणमिति?, अत्रोच्यते—

उत्पादव्ययध्रौव्ययुक्तं सत् ॥ २९ ॥

उत्पादव्ययौ ध्रौव्यं च युक्तं सतो लक्षणम्, यदुत्पद्यते यद्व्येति यच्च ध्रुवं तत्सत्, अतोऽन्यदसदिति ॥ (उत्पादव्ययौ ध्रौव्यं च सतो लक्षणम्, यदिह मनुष्यत्वादिना पर्यायेणाव्ययत आत्मनो देवत्वादिना पर्यायेणोत्पादः, एकान्तध्रौव्ये(ध्रुवे हा.) आत्मनि तत्तथैकस्वभावतयाऽवस्थाभेदानुपपत्तेः, एवं च संसाराप-

र्गभेदाभावः, कल्पितत्वेऽस्य निःस्वभावतयाऽनुपलब्धिप्रसङ्गात्, (०था तथानु हा.) कल्पितः, सस्वभावत्वे (तस्य) त्वेकान्तध्रौव्याभावलक्षण तथाभवनादिति, तत्तत्स्वभावतया विरोधाभावात्तथोपलब्धिसिद्धेः, तद्भ्रान्तत्वे प्रमाणाभावः, योगिज्ञानप्रमाणाभ्युपगमे त्वभ्रान्तस्तदवस्थाभेदः, इत्थं चैतत्, अन्यथा न मनुष्यादेर्देवत्वादीति, एवं यमादिपालनानर्थक्यम्, एवं च सन्ति अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमा इति आगमवचनं वचनमात्रम्, एवमेकान्ताध्रौव्येऽपि सर्वथा तदभावापत्तेः, तत्त्वतोऽहेतुकत्वमेवावस्थान्तरमिति सर्वदा तद्भावाभावप्रसङ्गः अहेतुकत्वाविशेषात्। (न हेतुस्वभावतयोर्ध्वं तद्भावः, तत्स्वभावतयैकान्तेन ध्रौव्यसिद्धेः न हा.) यदा हि हेतोरेवासौ स्वभावो यत्तदनन्तरं तद्भावस्तदा ध्रुवोऽन्वयस्तस्यैव तथाभवनात्, एवं च (एवमेव च हा.) तुलोन्नामावनामवद्धेतुफलयोर्युगपद्द्वयोरुत्पादसिद्धिरन्यथा न (०थाऽव्य हा.) तत्तद्व्यतिरिक्तेतरविकल्पाभ्यामयोगात् (तदयोगात् हा.) तन्न मनुष्यादेर्देवत्वमित्यायातं मार्गवैफल्यमागमस्येति, एवं (च हा.) सम्यग्दृष्टिः सम्यक्संकल्पः सम्यग्वाग् सम्यग्मार्गः सम्यगाजीवः सम्यग्व्यायामः सम्यक्स्मृतिः सम्यक्समाधिरिति वाग्वैयर्थ्यम्, एवं घटव्ययवत्या मृदः कपालोत्पादभावात् उत्पादव्ययध्रौव्ययुक्तं सदिति, एकान्तध्रौव्ये तत्तथैकस्वभावतयाऽवस्थाभेदानुपपत्तेः, समानं पूर्वेण, एवमेतद्व्यवहारतः तथा मनुष्यादिस्थितिद्रव्यमधिकृत्य दर्शितम्, निश्चयतस्तु प्रतिसमयमुत्पादादिमत्तथा भेदसिद्धेः, अन्यथा तदयोगात्, यथाह (०दा. हा.) सर्वव्यक्तिषु नियतं क्षणे क्षणेऽन्यत्वमथ च न विशेषः। सत्योश्चित्यपचित्योराकृतिजातिव्यवस्थानात् ॥१॥ नरकादिगतिविभेदो भेदः संसारमोक्षयोश्चैव। हिंसादिस्तद्धेतुः सम्यक्त्वादिश्च मुक्त्य इति ॥२॥ उत्पादादियुते खलु वस्तुन्येतदुपपद्यते सर्वम्। तद्रहिते तदभावात् सर्वमपि न युज्यते नीत्या ॥३॥ निरुपादानो

न भवत्युत्पादो नापि तादवस्थ्येऽस्य । तद्विक्रिययापि (तु हा.) तथा त्रितययुतेऽस्मिन् भवत्येषः ॥४॥ सिद्धत्वेनोत्पादो व्ययोऽस्य समारभावतः ज्ञेयः। जीवत्वेन ध्रौव्यं त्रितययुतं सर्वमेव (मेव खलु हा.) तु ॥५॥ इति हा०) अत्राह–गृह्णीमस्तावदेव लक्षणं (तत्र हा.) सदिति, इदं तु वाच्यं–तत्किं नित्यमाहोस्विदनित्यमिति?, अत्रोच्यते—

तद्भावाव्ययं नित्यम् ॥ ३० ॥

यत्सतो भावान्न व्येति न व्येष्यति तन्नित्यमिति ॥

अर्पितानर्पितसिद्धेः ॥ ३१ ॥

सच्च (तच्च हा.) त्रिविधमपि नित्य च उभे अपि अर्पितानर्पितसिद्धेः, अर्पितं व्यावहारिकमनर्पितमव्यावहारिकं चेत्यर्थः, तच्च (०त्र हा) सच्चतुर्विधम्, तद्यथा–द्रव्यास्तिकं मातृकापदास्तिकमुत्पन्नास्तिकं पर्यायास्तिकमिति, एषामर्थपदानि द्रव्यं वा द्रव्ये वा द्रव्याणि वा सत्, असन्नाम नास्त्येव द्रव्यास्तिकस्य। मातृकापदास्तिकस्यापि, मातृकापदं वा मातृकापदे वा मातृकापदानि वा सत्, अमातृकापदं वा अमातृकापदे वा अमातृकापदानि वा असत्। उत्पन्नास्तिकस्य, उत्पन्नं वोत्पन्ने वोत्पन्नानि वा सत्, अनुत्पन्नं वाऽनुत्पन्ने वाऽनुत्पन्नानि वाऽसत्। अर्पितेऽनुपनीते न वाच्यं सदित्यसदिति वा, पर्यायास्तिकस्य सद्भावपर्याये वा सद्भावपर्याययोर्वा सद्भावपर्यायेषु वा आदिष्टं द्रव्यं वा द्रव्ये वा द्रव्याणि वा सत्, (सती सन्ति हा.) असद्भावपर्याये वा असद्भावपर्याययोर्वा असद्भावपर्यायेषु वा आदिष्टं द्रव्यं वा द्रव्ये वा द्रव्याणि वाऽसत् (अतः स्यान्नास्ति), तदुभयपर्याये वा तदुभयपर्याययोर्वा तदुभयपर्यायेषु वा आदिष्टं द्रव्यं वा द्रव्ये वा द्रव्याणि वा न वाच्यं सदित्यसदिति वा, देशादेशेन विकल्पयितव्यमिति॥ अत्राह–उक्तं भवता 'संघातभेदेभ्यः स्कन्धा उत्पद्यन्त' इति,तत्किं संयोगमात्रादेव संघातो भवति?, आहोस्विदस्ति (०स्त्यत्र हा०) कश्चिद्विशेष (०त् प्रतिवि० हा०) इति?, अत्रोच्यते, सति संयोगे

बद्धस्य संघातो भवतीति ॥ अत्राह-अथ कथं बन्धो भवतीति?, अत्रोच्यते—

स्निग्धरूक्षत्वाद्बन्धः ॥ ३२ ॥

स्निग्धरूक्षयोः पुद्गलयोः स्पृष्टयोर्बन्धो भवतीति ॥ अत्राह—किमेष एकान्त इति?, अत्रोच्यते—

न जघन्यगुणानाम् ॥ ३३ ॥

जघन्यगुणस्निग्धानां जघन्यगुणरूक्षाणां च परस्परेण बन्धो न भवतीति ॥ अत्राह उक्तं भवता जघन्यगुणवर्जानां स्निग्धानां रूक्षेण रूक्षाणां न स्निग्धेन सह बन्धो भवतीति, अथ तुल्यगुणयोः किमत्यन्तप्रतिषेध इति?, अत्रोच्यते, न जघन्यगुणानामित्यधिकृत्येदमुच्यते—

गुणसाम्ये सदृशानाम् ॥ ३४ ॥

गुणसाम्ये सति सदृशानां बन्धो न भवति, तद्यथा—तुल्यगुणस्निग्धस्य तुल्यगुणस्निग्धेन तुल्यगुणरूक्षस्य तुल्यगुणरूक्षेणेति। अत्राह—सदृशग्रहणं किमपेक्षत इति?, अत्रोच्यते—गुणवैषम्ये सदृशानां बन्धो भवतीति ॥ अत्राह—किमविशेषेण गुणवैषम्ये सदृशानां बन्धो भवतीति?, अत्रोच्यते—

द्व्यधिकादिगुणानां तु ॥ ३५ ॥

द्व्यधिकादिगुणानां तु सदृशानां बन्धो भवति, तद्यथा—स्निग्धस्य द्विगुणाद्यधिकस्निग्धेन, द्विगुणाद्यधिकस्निग्धस्य स्निग्धेन, रूक्षस्यापि द्विगुणाद्यधिकरूक्षेण, द्विगुणाद्यधिकरूक्षस्य रूक्षेण, एकादिगुणाधिकयोस्तु सदृशयोर्बन्धो न भवति, अत्र तुशब्दो व्यावृत्तिविशेषणार्थः, प्रतिषेधं व्यावर्तयति बन्धं च विशेषयति॥ अत्राह—परमाणुषु स्कन्धेषु च ये स्पर्शादयो गुणास्ते किं व्यवस्थितास्तेषु आहोस्विदव्यवस्थिता इति ?, अत्रोच्यते—अव्यवस्थिताः, कुतः?, परिणामात् ॥ अत्राह—द्वयोरपि बध्यमानयोर्गुणवत्त्वे सति कथं परिणामो भवतीति?, उच्यते—

बन्धे समाधिकौ पारिणामिकौ ॥ ३६ ॥

बन्धे सति समगुणस्य समगुणः परिणामको भवति, अधिकगुणो हीनस्येति (हीनगुणस्येति हा.) ॥ अत्राह—उक्तं भवता 'द्रव्याणि जीवाश्चे'ति, तत् किमुद्देशत एव द्रव्याणां प्रसिद्धिः आहोस्विल्लक्षणतोऽपीति ?, अत्रोच्यते—लक्षणतोऽपि प्रसिद्धिः, तदुच्यते—

गुणपर्यायवद् द्रव्यम् ॥ ३७ ॥

गुणान् लक्षणतो वक्ष्यामः, भावान्तरं संज्ञान्तरं च पर्यायः, तदुभयं यत्र विद्यते तद् द्रव्यम्, गुणपर्याया अस्य सन्ति अस्मिन् वा सन्तीति गुणपर्यायवत् ॥

कालश्चेत्येके ॥ ३८ ॥

एके त्वाचार्या व्याचक्षते- कालोऽपि द्रव्यमिति ॥

सोऽनन्तसमयः ॥ ३९ ॥

स चैष कालोऽनन्तसमयः, तत्रैक एव वर्तमानसमयः, अतीतानागतयोस्त्वानन्त्यम् ॥ अत्राह—उक्तं भवता 'गुणपर्यायवद्द्रव्य'मिति, तत्र के गुणा इति ?, अत्रोच्यते—

द्रव्याश्रया निर्गुणा गुणाः ॥ ४० ॥

द्रव्यमेषामाश्रय इति द्रव्याश्रयाः, नैषां गुणाः सन्तीति निर्गुणाः॥ अत्राह—उक्तं भवता 'बन्धे समाधिकौ पारिणामिकौ' इति, तत्र कः परिणाम इति ?, अत्रोच्यते—

तद्भावः परिणामः ॥ ४१ ॥

धर्मादीनां द्रव्याणां यथोक्तानां च गुणानां स्वभावः स्वतत्त्वं परिणामः॥ स द्विविधः—

अनादिरादिमांश्च ॥ ४२ ॥

तत्रानादिररूपिषु (०पे हा.) धर्माधर्माकाशजीवेष्विति ।

रूपिष्वादिमान् ॥ ४३ ॥

रूपिषु तु द्रव्येषु आदिमान परिणामोऽनेकविधः स्पर्शपरिणामादिरिति ॥

योगोपयोगौ जीवेषु ॥ ४४ ॥

जीवेष्वरूपिष्वपि सत्सु योगोपयोगौ परिणामावादिमन्तौ भवतः, तत्रोपयोगः पूर्वोक्तः, योगस्तु परस्ताद्वक्ष्यते ॥

इति तत्त्वार्थाधिगमेऽर्हत्प्रवचनसङ्ग्रहे पञ्चमोऽध्यायः समाप्तः ॥

## अथ षष्ठोऽध्यायः ।

अत्राह–उक्ता जीवाजीवाः, अथास्रवः क इत्यास्रवप्रसिद्ध्यर्थमिदं प्रक्रम्यते—

**कायवाङ्मनःकर्म योगः ॥ १ ॥**

कायिकं कर्म वाचिकं कर्म मानसं कर्म इत्येष त्रिविधो योगो भवति, स एकशो द्विविधः–शुभश्चाशुभश्च, तत्राशुभो हिंसास्तेयाब्रह्मादीनि कायिकः, सावद्यानृतपरुषपिशुनादीनि वाचिकः, अभिध्याव्यापादेर्ष्यासूयादीनि मानसः। अतो विपरीतः शुभ इति॥

**स आस्रवः ॥ २ ॥**

स एष त्रिविधोऽपि योग आस्रवसंज्ञो भवति, शुभाशुभयोः कर्मणोरास्रवणादास्रवः सरःसलिलावाहनिर्वाहिस्रोतोवत् ॥

**शुभः पुण्यस्य ॥ ३ ॥**

शुभो योगः पुण्यस्यास्रवो भवति ॥

**अशुभः पापस्य ॥ ४ ॥** (नेदं हा०)

तत्र सद्वेद्यादि पुण्यं वक्ष्यते, शेषं पापमिति ॥ (सूत्रमिदं हा.)

**सकषायाकषाययोः साम्परायिकेर्यापथयोः ॥ ५ ॥**

स एष त्रिविधोऽपि योगः सकषायाकषाययोः साम्परायिकेर्यापथयोरास्रवो भवति, यथासङ्ख्यं यथासम्भवं च सकषायस्य योगः साम्परायिकस्य, अ(न्यो ऽ)कषायस्यैवैकसमयस्थितेः ॥

**अव्रतकषायेन्द्रियक्रियाः पञ्चचतुःपञ्चपञ्चविंशतिसङ्ख्याः पूर्वस्य भेदाः ॥ ६ ॥**

पूर्वस्येति सूत्रक्रमप्रामाण्यात्साम्परायिकस्याह, साम्परायिकस्यास्रवभेदाः पञ्च चत्वारः पञ्च पञ्चविंशतिरिति भवन्ति ॥ पञ्च हिंसानृतस्तेयाब्रह्मपरिग्रहाः प्रमत्तयोगात्प्राणव्यपरोपणं हिंसा इत्येवमादयो वक्ष्यंते। चत्वारः क्रोधमानमायालोभा अनन्तानुबन्ध्यादयो वक्ष्यन्ते। पञ्च प्रमत्तस्येन्द्रियाणि। पञ्चविंशतिः क्रियाः, तत्रेमे क्रियाप्रत्यया यथासङ्ख्यं प्रत्येतव्याः, तद्यथा–सम्यक्त्वमिथ्यात्वप्रयोगसमादानेर्यापथाः कायाधिकरणप्रदोषपरितापनप्राणातिपाताः दर्शनस्पर्शनप्रत्ययसमन्तानुपातानाभोगाः स्वहस्तनिसर्गविदारणानयनानवकाङ्क्षा आरम्भपरिग्रहमायामिथ्यादर्शनाप्रत्याख्यानक्रिया इति ॥

तीव्रमन्दज्ञाताज्ञातभाववीर्याधिकरणविशेषेभ्यस्तद्विशेषः ॥ ७ ॥

सांपरायिकास्रवाणां एषामेकोनचत्वारिंशत्साम्परायिकाणां(रिंशतां सा०) तीव्रभावात् मन्दभावाज्ज्ञातभावादज्ञातभावाद्वीर्यविशेषादधिकरणविशेषाच्च विशेषो भवति, लघुर्लघुतरो लघुतमस्तीव्रस्तीव्रतरस्तीव्रतम इति, तद्विशेषाच्च बन्धविशेषो भवति ॥ अत्राह–तीव्रमन्दादयो भावा लोकप्रतीताः, वीर्यं च जीवस्य क्षायोपशमिकः क्षायिको वा भाव इत्युक्तम्, अथाधिकरणं किमिति?, अत्रोच्यते—

अधिकरणं जीवाजीवाः ॥ ८ ॥

अधिकरणं द्विविधम्–द्रव्याधिकरणं, भावाधिकरणं च, तत्र द्रव्याधिकरणं छेदनभेदनादि शस्त्रं च दशविधम्, भावाधिकरणमष्टोत्तरशतविधम्, एतदुभयं जीवाधिकरणमजीवाधिकरणं च। तत्र–

आद्यं संरम्भसमारम्भारम्भयोगकृतकारितानुमतकषायविशेषैस्त्रिस्त्रिस्त्रिश्चतुश्चैकशः ॥ ९ ॥

आद्यमिति सूत्रक्रमप्रामाण्याज्जीवाधिकरणमाह, तत् समासतस्त्रिविधम्–संरम्भः समारम्भ आरम्भ इति। एतत्पुनरेकशः (रेकैकशः हा.) कायवाङ्मनोयोगविशेषात् त्रिविधं भवति, तद्यथा–कायसंरम्भः वाक्संरम्भः मनःसंरम्भः कायसमारम्भः वाक्समा-

रम्भः मनःसमारम्भः कायारम्भः वागारम्भः मनआरम्भ इति। एतदप्येकशः कृतकारितानुमतविशेषात् त्रिविधं भवति, तद्यथा-कृतकायसंरम्भः कारितकायसंरम्भः अनुमतकायसंरम्भः कृतवाक्संरम्भः कारितवाक्संरम्भः अनुमतवाक्संरम्भः कृतमनःसंरम्भः कारितमनःसंरम्भः अनुमतमनःसंरम्भः, एवं समारम्भारम्भावपि। तदपि पुनरेकशः कषायविशेषाच्चतुर्विधम्, तद्यथा-क्रोधकृतकायसंरम्भः मानकृतकायसंरम्भः मायाकृतकायसंरम्भः लोभकृतकायसंरम्भः क्रोधकारितकायसंरम्भः मानकारितकायसंरम्भः मायाकारितकायसंरम्भः लोभकारितकायसंरम्भः क्रोधानुमतकायसंरम्भः मानानुमतकायसंरम्भ मायानुमतकायसंरम्भः लोभानुमतकायसंरम्भः, एवं वाङ्मनोयोगाभ्यामपि वक्तव्यम्, तथा समारम्भारम्भौ। तदेवं जीवाधिकरणं समासेनैकशः षट्त्रिंशद्विकल्पं भवति, त्रिविधमप्यष्टोत्तरशतविकल्पं भवतीति॥ संरम्भः सकषायः परितापनया भवेत्समारम्भः। आरम्भः प्राणिवधः त्रिविधो योगस्ततो ज्ञेयः॥१॥ अत्राह-अथाजीवाधिकरणं किमिति?, अत्रोच्यते—

निर्वर्तनानिक्षेपसंयोगनिसर्गा द्विचतुर्द्वित्रिभेदाः परम् ॥ १० ॥

परमिति सूत्रक्रमप्रामाण्यादजीवाधिकरणमाह, तत् समासतश्चतुर्विधम्, तद्यथा-निर्वर्तना निक्षेप संयोगो निसर्ग इति। तत्र निर्वर्तनाधिकरणं द्विविधम्—मूलगुणनिर्वर्तनाधिकरणमुत्तरगुणनिर्वर्तनाधिकरणं च, तत्र मूलगुणनिर्वर्तना पञ्च शरीराणि वाङ्मनःप्राणापानाश्च, उत्तरगुणनिर्वर्तना काष्ठपुस्तचित्रकर्मादीनि। निक्षेपाधिकरणं चतुर्विधम्, तद्यथा-अप्रत्यवेक्षितनिक्षेपाधिकरणं दुष्प्रमार्जितनिक्षेपाधिकरणं सहसानिक्षेपाधिकरणमनाभोगनिक्षेपाधिकरणमिति। संयोगाधिकरणं द्विविधम्-भक्तपानसंयोजनाधिकरणमुपकरणसंयोजनाधिकरणं च। निसर्गाधिकरणं त्रिविधम्-कायनिसर्गाधिकरणं वाङ्निसर्गाधिकरणं मनोनिस-

